विशिष्टयोर्जीवब्रह्मशब्दार्थयोः परेणाभेदस्यात्यन्ताभेदस्य वा नाभ्युपगमाच्च । यदि च निर्विशेषाखण्डैकरसस्वयंप्रकाशचैतन्यमात्रेण जीवस्यात्यन्ताभावोऽङ्गीक्रियते; तदानीं जीवपदार्थस्यापि तथात्वावश्यम्भावेन पराङ्गीकृतावरणायोगात् । चैतन्यत्रैविध्यानुपपत्तेश्च । संसारतन्नियतदुःखित्वाद्यनुभवसिद्धतद्धर्मानुपलम्भापत्तेश्च तद्धर्मरहिताभिन्नस्य तद्धर्मराहित्यवत् निर्विशेषात्यन्ताभिन्नस्यापि जीवस्य निर्विशेषत्वावश्यम्भावात् । किञ्च ब्रह्मशब्दार्थे यथा यथा सर्वज्ञत्वाद्यौपाधिकधर्माः श्रुत्यावेदिताः तथा[१]विधर्मविशिष्टब्रह्मशब्दार्थेन जीवस्यात्यन्ताभेदे तस्यापि तथा तथा सर्वज्ञत्वाद्यनौपाधिकधर्मविशिष्टत्वावश्यम्भावेन, तद्वदेव ब्रह्मशब्दमुख्यार्थत्वापत्त्या अनुभवसिद्धजीवशब्दार्थस्यैवासत्त्वापत्त्या, तदधिकारिकवैदिकविधीनामनारम्भणीयत्वप्रसङ्गः । न हि वह्न्यभिन्नोऽर्थः वह्निनिष्ठयावद्धर्मवान्न भवतीत्यस्ति, तथाच भेदोपलम्भस्य दुर्वारतया, निरुक्तयोग्यानुपलब्धिसत्त्वेन, भेदस्य प्रत्यक्षत्वं दुर्वारम् । वस्तुतस्तु नानुपलब्धिरिन्द्रियसहकारिणी । तथाहि न तावदुपलम्भसामान्याभावो हेतुः शङ्खे शङ्खत्वेन शैत्यानुमितेः[२] सत्त्वदशायां, शङ्खः श्वेतो नेत्यभावभ्रमानुदयप्रसङ्गात् । न चोक्तरूपानुपलब्धिरभावप्रत्यक्षप्रमामात्रहेतुरिति वाच्यम् । गुञ्जापुञ्जे आरोपितेन वह्नित्वेनोष्णस्पर्शानुमितौ सत्यां, त्वचोष्णस्पर्शाभावप्रत्यक्षप्रमानुदयप्रसङ्गात् । नापि प्रमात्वविशेषितोक्तरूपोपलब्धिसामान्याभावोऽभावप्रमाहेतुः शुक्तौ रूप्यभ्रमे सत्यपि, रूप्यप्रमाभावस्य सत्त्वेन, रूप्यभावप्रमाप्रसङ्गात् । नापि प्रत्यक्षरूपोपलम्भविशेषाभावो हेतुः, मण्डूकवसाञ्जनदोषेण, वंशमुरगत्वेन चक्षुषा पश्यतः, त्वचोरुगत्वाभावप्रमानुदयप्रसङ्गात् । प्रत्यक्षशब्देनाभावग्राहकत्वेनाभिमतेन्द्रियकरणकज्ञानविवक्षायामपि, कपाले घटो नास्तीति चाक्षुषसाक्षात्कारस्य, विनश्यदवस्थापन्ने घट उत्पन्नत्वात् घटध्वंसानन्तरं चक्षुषा तद्ध्वंससाक्षात्कारो न स्यात् । तद्ध्वंससाक्षात्कारोत्पत्त्यपेक्षया पूर्वक्षणरूपे ध्वंसोत्पत्तिक्षण उक्तरूपघटसाक्षात्कारस्य स्थित्या तदभावरूपहेत्वभावात् ॥ तस्माद्भावसाक्षात्कारेऽभावानुपलब्धिरिवाभावसाक्षात्कारे भावानुपलब्धिः न सहकारिणी, किन्त्ववर्जनीयसन्निधिः ॥ तदुक्तं पद्धतौ— 'अनुपलब्धिस्त्ववर्जनीयसन्निधिरेवे'ति । किञ्च प्रतियोग्यनुपलम्भस्याभावप्रतीतिं प्रत्यनुपलम्भत्वेनैव हेतुत्वमभ्युपगम्यते, उत अभावप्रतीतौ प्रतियोग्युपलम्भस्य प्रतिबन्धकत्वमुपेत्य, तदभावत्वेन ॥ नाद्यः । उक्तरीत्या व्यभिचारेण तत्र तस्याहेतुत्वात् । प्रतियोग्युपलम्भदशायामप्यप्रामाण्यशङ्कासत्त्वे अभावज्ञानस्य जायमानतया व्यभिचाराच्च ॥ न च अप्रामाण्यशङ्काशून्यप्रतियोग्युपलम्भाभाव एव हेतुरिति न व्यभिचार इति वाच्यम् । लाघवेन प्रतियोग्युपलम्भकालीनाभावज्ञानत्वेन तदप्रामाण्यशङ्कात्वेन, कार्यकारणभावसम्भवे तद्विरहविशिष्टप्रतियोग्युपलम्भाभावत्वेन तदभावस्य हेतुत्वे मानाभावात् । अत एव न द्वितीयोऽपि, उक्तरीत्या

---

१. विविध ।   २. श्वेतत्वा.... ।

व्यभिचारेण प्रतिबन्धकाभावस्याहेतुत्वात् । अनुपलब्धित्वेनासाधारणरूपेण, हेतुत्वानभ्युपगमे अभावज्ञाने प्रत्यक्षादितो वैजात्यानुपपत्तेश्च । न हि सामग्रीवैजात्यं विना कार्यवैजात्यं सम्भवति, तस्मादभावप्रतीतौ व्यभिचारेणानुपलब्धेः कारणत्वस्यैवाभावेन पृथक्प्रामाण्यस्यैवाशक्यशङ्कतया, अभावज्ञानस्य यथायथं प्रत्यक्षादिजन्यत्वमावश्यकमिति जीवपरभेदज्ञानस्य साक्षिप्रत्यक्षत्वमप्रत्यूहम्[१] । एतेन किञ्च मनो न जीवब्रह्माभेदयोग्यमित्याद्यपि निरस्तम् । ब्रह्मणो मनोयोग्यत्वौपनिषदत्वयोः समर्थितत्वात् । अत एव किञ्च किमिदमीश्वरत्वमित्याद्यप्यपास्तम् । ईश्वरत्वस्य यत्किञ्चिद्रूपत्वेऽपि तद्विशिष्टाभेदोपलम्भापादनसम्भवस्योक्तत्वात् ॥ यद्यप्यहमिहेवास्मीति, परिच्छिन्नतयाऽनुभूयमाने जीवे भेदोऽनुभूयते, नाहमीश्वर इति, परिच्छिन्नत्वं चौपाधिकमेवेति तद्गतो भेदोऽप्यौपाधिक एवेति, तदपि न ॥ जीवपरिच्छिन्नत्वस्यौपाधिकत्वासिद्धेः । न च मध्यमपरिमाणत्वेऽनित्यत्वापत्त्याऽणुत्वे च, सर्वाङ्गीणसुखाद्यनुभवानुपपत्त्या चौपाधिकमेव परिच्छिन्नत्वमिति वाच्यम् ॥ जीवस्याणुत्वेऽपि सङ्कोचविकासात्मकसावयवान्तःकरणद्वारकसम्बन्धमादाय, सर्वाङ्गीणविरुद्धप्रदेशवर्तिसुखदुःखाद्युपलम्भोपपत्तेः । न च जीवस्याणुत्वे 'नित्यः सर्वगतः स्थाणुरि'ति सर्वगतत्वोक्तिविरोधः जीवराशेः सर्वगतत्वेन तदुपपत्तेः 'नित्यः सर्वगते विष्णावणुजीवो व्यवस्थित' इति । स्मृत्यनुसारेण सर्वगतस्थश्चासावणुश्चेत्यर्थपरत्वेनाविरोधोपपत्तेश्च । न च 'बुद्धेर्गुणेनात्मगुणेन चैवमाराग्रमात्रो ह्यपरोऽपि दृष्ट' इति श्रुतौ बुद्धिगुणेनाराग्रमात्रत्वम्, आत्मगुणेन तु विभुत्वमुक्तमिति वाच्यम् । 'तद्यथाऽणुनश्चक्षुषः प्रकाशो व्याप्त एवमेवास्य पुरुषस्य प्रकाशो व्याप्तो ह्यणुर्ह्येष पुरुष' इति श्रुत्यन्तरानुसारेण ज्ञानस्य बुद्धिगुणेनापरो व्यापारकः, आत्मगुणेन त्वाराग्रमात्र इत्यन्वयोपगमात् ॥ एतेन 'अङ्गुष्ठमात्रो रवितुल्यरूप' इति पूर्ववाक्योक्तमङ्गुष्ठमात्रत्वमपि व्याख्यातम् । न च जीवस्याणुत्वे सौभर्यादिरनेकशरीरेष्वहमिति प्रत्ययानुपपत्तिः । उक्तरीत्या अन्तःकरणव्याप्त्या प्रकाशव्याप्त्या वा, तदुपपत्तेः । न च प्रकाशस्याप्याश्रयं विहाय अन्यत्र गमनानुपपत्तिः, प्रदीपगुणभूतायाः प्रभाया, प्रदीपं विनाऽन्यत्र वर्तनवत्, वह्न्येकउष्णस्य तत्समीपे वर्तनवत् गन्धस्य द्रव्यं विनाऽन्यत्र वर्तनवत्, जातिसमवायादेर्धर्मितोऽन्यत्र वर्तनवच्चोपपत्तेः । विस्तृतं चैतदन्यत्र । तस्माज्जीवेश्वरभेदः स्वाभाविक एवेति । ननु जीवब्रह्मणोर्भेदो न स्वाभाविकः किन्त्वोपाधिक एव । तथाच श्रुतयः—

'यथा ह्ययं ज्योतिरात्मा विवस्वानपोभिन्ना बहुधैकोऽनुगच्छन् ।
उपाधिना क्रियते भेदरूपो देवक्षेत्रेष्वेवमजोऽयमात्मा ॥'

'न ह्यस्ति द्वैतसिद्धिरात्मैव सिद्धौ द्वितीये मायया ह्यन्यदिव'

१. प्रत्यूढम् ।

'एक एव तु भूतात्मा सर्वभूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥
कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ।
कार्यकारणताभिन्नो पूर्णबोधोऽवशिष्यते ॥'

इत्यादिकाः स एव च संसारादिव्यवस्थाहेतुश्चेति चेन्न ॥ 'यथा ह्ययमि'त्यादिश्रुतेर्ब्रह्मभेदौपाधिकत्वपरतया, जीवपरभेदौपाधिकत्वपरत्वासिद्धेः । अत एव तत्र देवात्मभूतात्मशब्दास्तेषां च परमात्मन्येव मुख्यत्वात् ॥ एवञ्च 'इन्द्रो मायाभिरि'त्यादिश्रुतिरप्यनुकूलिता भवति ॥ इन्द्रशब्दस्य योगरूढिभ्यां परब्रह्मण्येव मुख्यत्वात् । इन्द्रशब्दप्रवृत्तिनिमित्तस्य परमैश्वर्यस्य ब्रह्मण्येव सत्त्वात् । 'इन्द्रं मित्रं वरुणं अग्निमाहुः', 'यमिन्द्रमाहुर्वरुणं यमाहुरि'त्यादिश्रुतिस्मृतिभिरार्यप्रसिद्धिरूपरूढेरपि सिद्धेश्च । 'कार्योपाधिरयं जीव' इत्यत्र यद्यपि, जीवत्वमविद्याकार्यमन्तःकरणोपाधिकम्, ईश्वरत्वं कारणरूपाविद्योपाधिकं, उपाधिविनिर्मोके चापरिच्छिन्नचैतन्यमात्राविशेष इत्यर्थः प्रतीयते, तथापि नासौ तात्पर्यविषयः, अनादेर्जीवभावस्य साद्यन्तःकरणोपाधिसम्बन्धायोगात् । सु[१]प्तिदशायां जीवभावानापत्तेः । कृतहानादिप्रसङ्गाच्च । न च स्थूलान्तःकरणस्य सादित्वेऽपि तत्सूक्ष्मावस्थाया अनादित्वात् अनादिजीवोपाधित्वमन्तःकरणस्य न विरुद्धम् । 'सुषुप्तिकाले सकले विलीने मनः सर्वैर्ध्यानैः सहाप्येती'त्यादिश्रुतिरपि सुप्तावन्तःकरणस्थूलावस्थाविरलपरैवेति, न कृतहानादिप्रसङ्गोऽपीति वाच्यम् । तथापि कार्योपाधिरित्यस्यासङ्गतत्वापत्तेः ॥ अन्तःकरणसूक्ष्मावस्थाया अनादित्वात् । न च कार्यपदमवस्थावत्परमित्यदोष इति वाच्यम् । मुख्यार्थत्यागापत्तेः । अविद्याया अप्यवस्थावत्त्वेन, जीवः कार्योपाधिरीश्वरः । कारणोपाधिरिति विभागानुपपत्तेश्च । किञ्चान्तःकरणसूक्ष्मावस्था किमविद्यारूपा अतिरिक्ता वा । नाद्यः, जीवेशयोरेकोपाधिकत्वापातेन भेदानुपपत्तेः । न द्वितीयः 'षडस्माकमनादय' इति त्वदभ्युपगमविरोधात् । न च जीवो ब्रह्मविशुद्धचिदित्यत्र जीवपदेनोपाधिभूतान्तःकरणसूक्ष्मावस्थाया अपि ग्रहणाददोष इति वाच्यम् । ब्रह्मेत्यत्रापि ब्रह्मोपाधिभूताया अविद्याया अपि ग्रहणसम्भवेन तस्याः पृथग्ग्रहणानुपपत्तेः ॥ अनादित्वेन, सर्वसिद्धाविद्यां ब्रह्मपदेनोपादाय अनादित्वेन विप्रतिपन्नान्तःकरणसूक्ष्मावस्थाया एव पृथङ्निर्देशौचित्याच्च । नन्वन्तःकरणस्य सूक्ष्मावस्थाऽविद्यारूपैव न चैकोपाधिकत्वेन जीवेशभेदानुपपत्तिः, एकौपाधिकत्वेऽपि बिम्बप्रतिबिम्बभावेन भेदसम्भवात् । न चैवमविद्याप्रतिबिम्बो जीवः बिम्ब ईश्वर इति श्रुत्याकारापत्तिरिति वाच्यम् । अविद्याधीनस्य संसारस्य प्रतिबिम्बगतत्वज्ञापनायेश्वरस्य जगत्कारणत्वज्ञापनाय च 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः' इति

---

१. सुषुप्ति.. ।

श्रुत्याकारोपपत्तेः । एवञ्च 'जीवेशावाभासे न करोती'ति जीवेश्वरयोरविद्योपाधिकत्वप्रतिपादिका श्रुतिरप्यनुकूलिता भवतीति चेन्न । एवमर्थवर्णनस्य जीवेशभेदोपाधिकत्वनिर्वाह्यकत्वेन तद्भेदौपाधिकत्वे अस्य श्रुतेः प्रमाणत्वायोगात् । बिम्बप्रतिबिम्बभावस्य, वास्तवभेदव्याप्तत्वेन तेन तद्भेदौपाधिकत्वासिद्धेश्च । प्रपञ्चितश्चायमर्थः अद्वैतशिक्षायाम् ॥ 'जीवेशावाभासेन करोती'ति श्रुतेश्चायमर्थः– भासनं, भासो ज्ञानं, आभासः सम्यक् ज्ञानं तथाच आभासेन करोति जीवेशौ यथावज्ज्ञापयतीत्यर्थः । जीवेशयोरनादित्वेन मुख्यार्थस्य बाधेन त्वयाऽप्यनभ्युपगमात् । 'पपौ निमेषालसपक्ष्मपङ्क्तिरुपोषिताभ्यामिव लोचनाभ्यामि'त्यादौ पिबतेर्लोचनपदसन्निधानेन, दर्शनार्थकत्वलाभात् 'करोतेरपि ज्ञानवाचिपदसन्निधानेन ज्ञानरूपत्वलाभसम्भवात् । जीवेश्वरभेदे न प्रमाणान्तरापेक्षा, किन्तु जीवाश्रिताविद्यैव जीवं व्यामोहयन्ती तस्येश्वराद्भिन्नस्य ज्ञापिका भवति ॥ मायाविचित्रशक्तिश्च जीवाद्भिन्नेश्वरस्य स्वयमेव ज्ञापिका भवति ॥ मायाशब्दस्य शक्तिपरत्वं च, तान्यज्ञस्य मायया' इत्यादौ सुप्रसिद्धमिति । माया चाविद्या च स्वयमेव भवतीति वाक्यशेषार्थः । कथमेवं सति तवैतच्छ्रुतिरनुकूला ? प्रत्युत प्रतिकूलैव इति । कस्तर्हि कार्योपाधिरिति श्रुतेरर्थः 'कार्यं कृतिसाध्यं फलं तन्निमित्तीकृत्य प्रवर्तमानो जीवः, कारणजीवगतपुण्यादिमन्निमित्तीकृत्य प्रवर्तमान ईश्वरः अध्ययोपाधिनात्र स्थीयत' इत्यादावुपाधिशब्दस्य निमित्तेऽपि प्रयोगदर्शनात् । ननु जीवगतकर्मादिकमादायैवेश्वरः प्रवर्तत इति कुतोऽवसीयत इत्यत आह कार्यकारणतामिति कार्यकारणे हि क्वापि कर्म तज्जन्यफललेपाभावेऽपि यतः पूर्णबोधोऽवशिष्यते अतो युक्तमित्यर्थः । एवञ्च—

'न कर्मणा वर्धते नो कनीयान्  
न साधुना कर्मणा भूयान् नो वासाधुना कनीयान् ।  
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ॥'

'न मां कर्माणि लिम्पन्ति न मे कर्मफलस्पृहा ॥'

'सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥'

इति श्रुतिस्मृतिसूत्राण्यप्यनुकूलितानि भवन्ति ।

तस्मान्न जीवेश्वरभेद औपाधिकः किन्तु स्वाभाविक एवेति । किञ्च किमिदमौपाधिकत्वं न तावदुपाधिजन्यत्वं त्वयाऽप्यनङ्गीकारात् । नापि तज्ज्ञाप्यत्वम् । कौसुम्भाद्युपाधिज्ञाप्यवस्त्रभेदस्येव, स्वाभाविकत्वेनाप्युपपत्तेरिष्टत्वात् । नापि उपाध्यधीनस्थितिकत्वं अचेतनयोरनाद्योः परस्पराधीनताया एवायोगात् । नापि तन्निवृत्त्यधीननिवृत्तिप्रतियोगित्वं मानाभावात् । न च –

'विभेदजनके ज्ञाने नाशमात्यन्तिकं गते ।
आत्मना ब्रह्मणो भेदमसन्तं कः करिष्यति ॥'

'आमुक्तेर्भेद एव स्याज्जीवस्य [1]परमस्य च ।
मुक्तस्य च न भेदोऽस्ति भेदहेतोरभावतः ॥'

इत्यादिस्मृतिरेव तत्र मानमिति वाच्यम् । विभेदो भेदविरोधी अभेद इति यावत् । तज्जनके तज्ज्ञापके आत्यन्तिकं नाशं गते सति, जीवपरयोरसन्तमभेदं कः करिष्यति को वा ज्ञास्यतीत्यर्थपरत्वेनाप्युपपत्त्या त्वदुक्तार्थे प्रमाणत्वायोगात् । अमुक्तेर्भेद इत्यत्रापि भेदशब्दो न स्वरूपभेदपरः किन्तु बुद्धिभेदपरः, सामभेदादौ विरुद्धमतावपि भेदशब्दप्रयोगात् । तथाच मुक्तिपर्यन्तं जीवेश्वरयोः परस्परविरुद्धविषयक-मतिमत्वं मुक्तस्य तु तत्त्वसाक्षात्कारवतस्तु मतिविरोधो नास्ति, तद्धेतुभूतरागादि दोषाभावादित्यर्थ-परत्वेनास्यापि, तत्र प्रमाणत्वायोगाच्च । 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'त्यादौ जीवपरयोर्मुक्तावपि भेदश्रवणाच्च । औपाधिकभेदस्य स्वाभाविकभेदं प्रत्यविरोधित्वेन संसारदशाया-मप्यभेदोपलम्भप्रसङ्गाच्च । किञ्च न तावदविद्यादेर्दर्पणवदुपाधित्वम् । दर्पणे मुखमितिवदविद्यायामन्तः-करणे च चैतन्यमिति प्रतीत्यापत्तेः । नाप्याकाशे घटस्येवोपाधित्वं न[2]परिच्छिन्ननिष्प्रदेशे ब्रह्मणि परिच्छिन्नोपाधिसम्बन्धायोगात् आवयोर्मते आकाशस्यापि सावयवत्वेन दृष्टान्तासम्प्रतिपत्तेश्च ॥ नापि स्फटिकलौहित्ये जपाकुसुमस्येवोपाधित्वं, संसारादेरविद्यागतत्वापातात् ॥ न च लौहित्यस्य स्फटिकजपाकुसुमोभयगतत्ववदिष्टमिति वाच्यम् । लोहिते जपाकुसुममितिवदविद्यासंसारिणीति प्रती-त्यापत्तेः, स तत्र पर्येतीति जीवस्य मुक्तावपि कर्तृत्वश्रवणेन जीवगतकर्तृत्वस्यापि अविद्योपाधिक-त्वासम्भवाच्च ॥ एवं ईश्वरसार्वज्ञजगत्कर्तृत्वादिकमपि नाविद्योपाधिकम् ॥ 'स्वाभाविकी ज्ञानबलक्रिया च', 'देवस्यैष स्वभावोऽयमाप्ते'त्यादौ तत्स्वाभाविकत्वोक्तेः ॥ तस्माज्जीवत्वादिरनौपाधिकतया तद्गत-भेदोऽप्यनौपाधिक एवेति स्थितम् ॥

यदपि नाहमीश्वर इति प्रत्यक्षमनात्माहङ्कारविशिष्ट एव भेदं विषयीकरोतीति न निरुपाध्यात्मनोर्भेदे प्रत्यक्षं मानमिति, तन्न । ज्ञानसुखदुःखाद्याश्रयत्वेनोपलभ्यमानस्य अहमर्थस्यानात्मत्वे प्रमाणाभावात् ॥ न चाहङ्कारोऽनात्मा दृश्यत्वादित्यनुमानं मानमिति वाच्यम् । अहङ्कारशब्देनाहङ्कारतत्त्वान्तःकरणगर्वोक्तौ सिद्धसाधनात् । चैतन्यमात्रोक्तौ च बाधात् । अन्तःकरणविशिष्टचैतन्योक्तावपि सिद्धसाधनं, विशिष्टस्य पदार्थान्तरत्वात्, अपदार्थान्तरत्वे तु अंशतो बाधसिद्धसाधनापत्तिः । एतेनान्तःकरणधर्मातिरिक्ताह-

१. च परस्य च ।    २. अपरिच्छिन्न...... ।

मनुभवविशेष्यस्य पक्षत्वमित्यपास्तम् । चैतन्यातिरिक्तस्य अहमनुभवविशेष्यत्वे प्रमाणाभावात् । प्रत्युत— 'चिन्मात्रोऽहं सदाशिवः', 'अहमात्मा गुडाकेशः', 'त्वां ज्ञप्तिमात्रं पुरुषं भजाम्यहम्' इत्यादि श्रुतिस्मृतिभिश्चैतन्यमात्रस्यैवाहमर्थत्वावेदनेन च बाधतादवस्थ्यात् । दृश्यत्वं च न तावद्वृत्तिविषयत्वं, ब्रह्मणि व्यभिचारात् । नापि चिद्विषयत्वं ज्ञाततया साक्षिविषये ब्रह्मणि व्यभिचारतादवस्थ्यात् । नापि साक्षाच्चिद्विषयत्वं तत्, अहं सुखीत्यादिसाक्षिरूपज्ञानस्य सुखतदाश्रयाहमर्थचिद्विषयत्वेनोक्तदोषा-निस्तारात् । ब्रह्मणश्चरमवृत्तिप्रतिबिम्बितचैतन्यविषयत्वाच्च । अन्यथा तदज्ञानानिवृत्तिप्रसङ्गः । समान-विषयकयोरेव तयोर्निवर्त्यनिवर्तकभावात् । अन्यथा अतिप्रसङ्गात् । विस्तृतं चैतदस्माभिरामोदे । अनुकूलतर्काभावेनाप्रयोजकत्वाच्च । न च लाघवेन दृश्यत्वस्यानात्मत्वेन व्याप्तिः, आत्मपदार्थविलो-पापत्तेः । उक्तरीत्याऽदृश्यत्वस्यैव अप्रसिद्धत्वात् । ननु 'अथातोऽहङ्कारादेशः', 'अथात आत्मादेशः' इत्यहङ्कारमुपदिश्य आत्मनः पृथगुपदेश एव तस्यानात्मत्वे मानम् । न च आत्मशब्दः परमात्मपरः तत्र तस्य मुख्यत्वादिति वाच्यम् । यो वै भूमा तत्सुखमिति भूमानमुद्दिश्य स एवाधस्तादिति तस्यापि पृथगुपदेशादिति चेन्न । भूमाहङ्कारात्मानां त्रयाणामपि सर्वगतत्वोपदेशेन तदभिमतजीवाहङ्कारपरत्व-सिद्धेः । न चात्र सार्वात्म्यमेवोच्यते न सर्वगतत्वं, 'स एवेदं सर्वमि'त्यादिवाक्यशेषानुसारादिति वाच्यम् । सप्तमी पञ्चमी प्रथमान्तेभ्यो दिक् देशकालेष्वस्तातिरिति विहितस्यास्तादिप्रत्ययस्य नानार्थ-त्वेनानिर्णायकत्वात् । न च वाक्यशेषान्निर्णयः, जडाजडयोरभेदस्य त्वयाऽप्यनभ्युपगमात् । तद्व्यति-रेकेणासत्त्वपरत्वाङ्गीकारे च मुख्यार्थत्यागाविशेषः 'ब्राह्मणोऽस्य मुखमासीत्', 'राजा राष्ट्रमि'त्यादिवत् तज्जन्यत्वतदधीनत्वादिपरत्वस्यैवाङ्गीकर्तुमुचितत्वात् विस्तृतं चैतदन्यत्र । तस्माज्जीवेश्वरभेदो, नौपा-धिकः किन्तु स्वाभाविक एव । तत्र च प्रत्यक्षं प्रमाणमिति सिद्धम् । एवं जीवप्रतियोगिकेश्वरधर्मिको भेदः प्रत्यक्ष एव तस्यास्मदादिप्रत्यक्षाविषयत्वेऽपि भगवत्प्रत्यक्षविषयत्वात् । न च तत्र मानाभावः ॥ 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इत्यनुवादस्यैव मानत्वात् । एवं जीवानां परस्परभेदेऽपि 'नाहं देवदत्त' इत्यादि प्रत्यक्षं प्रमाणमिति ॥

*इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमत्सुरेन्द्रतीर्थपूज्यपादानां शिष्येण सर्वतन्त्रस्वतन्त्र-श्रीमद्विजयीन्द्रभिक्षुणा विरचिते भेदविद्याविलासे प्रत्यक्षपरिच्छेदः समाप्तः ॥*

★ ★ ★

॥ श्रीः ॥

# अनुमानपरिच्छेदः

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

एवमनुमानमपि जीवेश्वरभेदे मानम्, तथाहि— जडातिरिक्तोऽहमिति प्रतीयमानोऽर्थो ब्रह्मधर्मिकभेदप्रतियोगी तत्प्रतियोगिकभेदवान् वा परिच्छिन्नत्वादसर्वज्ञत्वाद्वा घटवत् ॥ न च आरोपितभेदमादाय सिद्धसाधनम् । ह्रदादावप्यारोपितवह्निसत्त्वेन बाधोच्छेदापत्तेः । सिद्धसाधनापत्तेश्च ॥ न च व्यावहारिकसाध्याभावो बाधः तादृशसाध्यसिद्धावेव हि सिद्धसाधनम् । एवञ्च न बाधोच्छेदः न वा सिद्धसाधनम्, भेदश्च व्यावहारिक एवेति सिद्धसाधनमिति वाच्यम् । व्यावहारिकस्याप्यारोपितविशेषत्वेनोक्तदोषानिस्तारात् । न च भेदमात्रसाधने त्वदभिमतभेदपारमार्थिकत्वसिद्धिः कथमिति वाच्यम् । औत्सर्गिकप्रामाण्यस्वतस्त्वेनैव विषयसत्त्वरूपपारमार्थिकत्वसिद्ध्युपपत्तेः । अन्यथा जीवब्रह्माभेदपारमार्थिकत्वासिद्धिप्रसङ्गात् । न हि तदभेदोऽपि पारमार्थिक इति काचन श्रुतिरस्ति तत्सत्त्वेऽपि श्रुतिप्रतिपन्नं पारमार्थिकत्वमारोपितमिति शङ्कायाः दुर्वारत्वेन दूरे गत्वा तदर्थं प्रामाण्यस्वतस्त्वस्यैवानुसरणीयत्वात् ॥

यद्वा अनौपाधिकत्वमिह साध्यभेदविशेषणं, एवञ्चानौपाधिको भेदः सिद्ध्यन् पारमार्थिक एव सिद्ध्यतीति नार्थान्तरम्, न वा सिद्धसाधनम्, नापि दृष्टान्ते साध्यवैकल्यम्, परेणापि जीवब्रह्मभेदस्येव जडचैतन्यभेदस्य औपाधिकत्वानङ्गीकारात् । न च अनात्माहङ्कारविशिष्ट एव भेदानुभवात्, अनौपाधिकत्वविशेषणे बाध इति वाच्यम् । जडातिरिक्तत्वेन पक्षविशेषणेनोक्तबाधशङ्कानुदयात् । अहमिति प्रतीतेरात्ममात्रविषयत्वस्योक्तत्वाच्च ॥

यद्वा ब्रह्म, स्वज्ञानाबाध्यजीवप्रतियोगिकभेदवत्, पदार्थत्वात् घटवत् । न च स्वज्ञानाबाध्येत्यत्र स्वपदेन ब्रह्मशब्दवाच्योक्तावसत्यत्वेनाप्युपपत्त्या अर्थान्तरम्, तल्लक्ष्योक्तौ तु दृष्टान्ते साध्यवैकल्यम्, सर्वस्य तज्ज्ञानबाध्यत्वादिति वाच्यम् । त्वदभिमतब्रह्मोक्तावपि बाधकाभावात् । न च उक्तदोषः, ब्रह्मजडभेदस्य बाध्यत्वे, तदभेदस्य पारमार्थिकत्वापत्त्या ब्रह्मणोऽपि जाड्यापत्तेः । प्रतियोगितदभावयोरेकस्य बाधे अन्यस्य पारमार्थिकत्वनियमात् । न च उक्तानुमानद्वयेऽपि जडत्वमुपाधिः । भेदस्य आरोपितत्वे लोकसिद्धसर्वव्यवस्थाभङ्गरूपविपक्षबाधकतर्केण हेतोः साध्यव्याप्यत्वे निश्चिते, तदव्यापकत्वेनोपाधेः साध्याव्यापकत्वात् । न च आरोपितभेदो व्यवस्था हेतुः, वह्नौ तद्भेदारोपेऽपि

दाहदर्शनात्, गुञ्जापुञ्जे वह्न्यभेदारोपेऽपि दाहादर्शनाच्च । व्यावहारिकत्वाद्यारोपितविशेषत्वेन ततोऽपि व्यवस्थानुपपत्तेश्च ॥

यद्वा जीवेश्वरभेदः, पारमार्थिकः अनिषेध्यत्वेन प्रमाविषयत्वात्, ब्रह्मवत् । न च असिद्धिः, 'नान्योऽतोऽस्ति द्रष्टे'त्यादिश्रुत्या भेदस्य निषिद्धत्वादिति वाच्यम् । अस्याः श्रुतेरीश्वरतुल्यद्रष्ट्रन्तरनिषेधपरत्वेन त्वदभिमतार्थपरत्वासिद्धेः । यथा चैतत् तथाग्रे वक्ष्यते ॥

यद्वा जीवो न ब्रह्माभिन्नः परिच्छिन्नत्वात् घटवदित्यनुमाने भेदाभावसिद्धौ अर्थान्तरादिशङ्कानुदयात् ॥ न च उक्तानुमानस्य सर्वस्यापि 'तत्त्वमसी'त्याद्यभेदश्रुतिबाधः शङ्क्यः, तस्या अन्यार्थपरत्वस्यानुपदमेव वक्ष्यमाणत्वात् । विस्तरस्तु अद्वैतशिक्षादौ द्रष्टव्यः । एतेन अन्तःकरणातिरिक्तोऽहमिति प्रतीयमानो जीवो न परस्माद्भिद्यते, चेतनत्वात्, पदार्थत्वात् वा ब्रह्मवत् इति निरस्तम् ॥ प्रत्यक्षाद्युक्तदूषणगणग्रासात् ॥

किञ्च अर्थापत्तिर्जीवपरभेदे मानम्, भेदं विना संसारित्वासंसारित्वादिव्यवस्थानुपपत्तेः । न च कल्पितभेदेन, तदुपपत्तिः, भेदकल्पितत्वस्याद्याप्यसिद्धेः, आरोपितभेदमादाय अब्राह्मणादेर्वेदाधिकारप्रसङ्गाच्च[1] । न च जीवादीश्वरस्य भेदेऽनात्मत्वापत्तिः, अहमनुभवे प्रकाशमानस्य घटादिवदनात्मत्वात्, तदतिरिक्तचैतन्यस्य जीवरूपत्वादिति वाच्यम् । अनात्मनोऽहमनुभवविषयत्वस्य निरस्तत्वात् । अहमर्थव्यतिरिक्तचैतन्यमात्रस्य जीवरूपत्वे प्रमाणाभावेनेश्वरस्याप्यात्मत्वसिद्ध्युपपत्तेश्च ॥ एवंविधदूषणस्यात्मैक्यसिद्ध्यधीनत्वेन अन्योऽन्याश्रयाच्च ॥

एवं जीवानां परस्परभेदेऽपि अनुमानं प्रमाणम् ॥ तथाहि— देवदत्तात्मा, यज्ञदत्तात्मप्रतियोगिकानौपाधिकभेदवान्, तद्दुःखाननुसन्धानत्वात्, घटवत् । न च अप्रयोजकत्वं, विपक्षे हेतुविच्छित्तिरेव बाधिकेति । चैत्रो मैत्रप्रतियोगिकतात्त्विकभेदवान्, तदनुभूतसर्वाननुभवितृत्वात्, घटवत् । न च सर्वपदस्यासिद्धिवारकत्वेन वैयर्थ्यं विमतम्, सुरभिधूमरहितं चन्दनप्रभववह्निरहितत्वादित्यादाविव सार्थक्योपपत्तेः । विमतो बन्धध्वंसः, स्वप्रतियोगितावच्छेदकावच्छिन्नाधारप्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदवन्निष्ठः, बन्धध्वंसत्वात्, सम्मतवत् ॥ जीवः, स्वज्ञानाबाध्यजीवप्रतियोगिकभेदवान्, पदार्थत्वात् घटवत् । सर्वत्राप्यनौपाधिकभेदाभावे सुखदुःखानुसन्धानाननुसन्धानादिव्यवस्थानुपपत्तेर्नाप्रयोजकत्वम् । न चौपाधिकभेदेन व्यवस्थोपपत्तिः, करचरणाद्युपाधिभेदेऽपि बाल्ययुवादिशरीरभेदेऽपि च तद्गतसुखदुःखानुसन्धानदर्शनात् ॥

---

१. ब्राह्मणादेर्वेदानधिकारप्रसङ्गाच्च ।

यत्तु देवदत्तसुखानुसन्धानं, यज्ञदत्तात्मनो नापादनीयम्, इष्टापत्तेः । सिद्धान्ते आत्मभेदाभावेन तदनुसन्धानस्यैव तदीयत्वात् ॥ नापि देहस्य तदापाद्यं जडत्वादिति, तन्न ॥ देवदत्तशरीरेणापि तज्ज्ञानात्प्रवृत्तिप्रसङ्गात् । न च तच्छरीरप्रवृत्तौ तच्छरीरावच्छिन्नात्मप्रदेशसमवायिज्ञानं, कारणं, मृतशरीरे प्रवृत्त्यदर्शनादिति वाच्यम् । एवं विशिष्यकार्यकारणाभावे प्रमाणाभावात् । न च हस्ताव-च्छेदेन ज्ञानसत्त्वे पादाद्यवच्छेदेन प्रवृत्तिप्रसङ्गः, इष्टसाधनताज्ञानसत्त्वे तस्येष्टत्वात् । एवं कल्पन-स्यात्मभेदसिद्ध्यधीनत्वेनान्योन्याश्रयात् । आत्मसम्बन्धाभावादेव वा मृतशरीरे यातनाशरीरज्ञानमादाय प्रवृत्त्यभावोपपत्तेश्च ॥ न च यन्मनोजन्यं ज्ञानं तन्मनोजन्यप्रवृत्तौ तज्ज्ञानं कारणं अतो नोक्तदोष इति वाच्यम् ॥ एतन्मनसैव यज्ञदत्तादिशरीरे प्रवृत्तिप्रसङ्गस्याप्यापादनात् । एकस्यानेकान्तःकरणसद्भावे प्रमाणाभावेन भेदेन परिहारासम्भवाच्च । एतेन सिद्धान्तेऽन्तःकरणस्यैव सुखाद्यनुसन्धातृत्वात् तस्य च भिन्नत्वान्नातिप्रसङ्ग इति निरस्तम् । अन्तःकरणोपादेयस्यापि तस्यात्मवृत्तित्वेनातिप्रसङ्गतादवस्थ्याच्च ॥

यदपि च बालादिशरीरम्, न भिद्यते, प्रत्यभिज्ञानात्, तन्नाशकाभावाच्च । प्रथमशरीरे [1]क्लृप्त-शरीरादिव्यापाराभावात् । द्वितीयादिशरीरस्य ब्राह्मण्यादेरनुपपत्तौ जातिकुलगोत्रादिव्यवस्थासम्भवात्, परिमाणभेदस्यानिर्वचनीयस्याङ्गुल्यग्रहृदयाद्यवच्छिन्नशरीरे सङ्कुचित विस्तृतपटादिपरिमाणभेदवदाश्रय-भेदानियतत्वादिति । तदपि न ॥ प्रत्यभिज्ञयैक्यासिद्धेः ॥ नाहं बालः, किन्तु युवेत्यादिभेदप्रतीति-समानकालीनप्रत्यभिज्ञायाः सोऽयं कुन्तलकलाप इत्यादिवज्जातिविषयत्वात् ॥ शरीरभेदे व्यवच्छेद्यात्मा भेदविषयत्वोपपत्तेश्च । न च नाशकाभावः, युवशरीरोत्पादकस्यैव तन्नाशकत्वात् । न च द्वितीयादि-शरीरस्य ब्राह्मण्यादेरनुत्पत्तौ कुलगोत्रादिव्यवस्थानुपपत्तिः ॥ सर्गाद्यकालीनब्राह्मण्यवद्विश्वामित्रब्राह्मण्य-वच्चोपपत्तेः । युवादिशरीरस्यापि बालशरीरोपादानोपादेयत्वेन सर्वव्यवस्थोपपत्तेश्च ॥ न च तदुपादेयत्वे मानाभावः, यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति व्याप्तिबलादेव तत्सिद्धेः । परिमाणभेदेन तदाश्रयशरीरभेदस्याप्यावश्यकत्वाच्च । न च अनिर्वचनीयस्य तस्याङ्गुल्यग्राद्यवच्छिन्नशरीरपरिमाण-भेदवन्न भेदकत्वमिति वाच्यम् । अस्य स्वाभाविकैक्यसिद्ध्यधीनत्वेन अन्योन्याश्रयात् ॥

किञ्चौपाधिकभेदेन व्यवस्थेति न युज्यते । उपाधिभेदव्यतिरिक्तौपाधिकभेदस्याप्रतीतेरसम्भवाच्च । स्वाभाविकप्रदेशविशेषाभावे परिच्छिन्नोपाधिसम्बन्धस्यायोगात् । एतेनावच्छेदकभेदप्रयुक्तावच्छिन्नभेद एव व्यवस्थापकः, स्थूलसूक्ष्मादिघटावच्छिन्नस्य विंशतिपदार्थाश्रयस्य नभसः स्वरूपकार्यभेदानुभव इति प्रत्युक्तम् ॥ आकाशेऽपि स्वाभाविकप्रदेशसत्त्वेन दृष्टान्तासम्प्रतिपत्तेः । एतेनैव संयोगतदभावा-धिकरणयोरौपाधिकभेदाभावे मूलत्वाग्रत्वयोरुभयोरप्युभयसामानाधिकरण्यनियमेनैकतरावच्छेदेनैक-

१. जनक.... ।

तरस्यानुभवो न स्यादिति प्रत्युक्तम् । संयोगतदभावयोरपि स्वाभाविकप्रदेशावृत्तित्वात् । न चैवमवच्छेदकवैयर्थ्यं सदृशवस्तु[1]द्वयभेदक[2]कौसुम्भाद्यवच्छेदकवदवैयर्थ्योपपत्तेः ॥

एतेन सर्वेषामेव भेदहेतूनां 'नान्योऽतोऽस्ति द्रष्टा', एको देवः सर्वभूतेषु' इत्यादिश्रुत्या 'आकाशमेकं हि यथा घटादिषु पृथग्भवेत् तथाप्येकोऽप्यनेकः स्यात् जलाधारेष्विवांशुमानि'ति याज्ञवल्क्यवचनेन 'ममान्तरात्मा तव च ये चान्ये देहसंज्ञिताः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचिदि'त्यादि भारतवचनेन च बाध इति प्रत्युक्तम् । श्रुतेर[3]र्थस्य वक्ष्यमाणत्वात् । 'एको देव' इति श्रुतौ भारतवचनेन च जीवभेदमङ्गीकृत्य अन्तर्याम्यैक्यस्यैव प्रतिपादनेन त्वदभिमतार्थासिद्धेश्च । याज्ञवल्क्यवचनस्यापि 'एक एव तु भूतात्मे'त्यादिवत् परमात्मविषयत्वात् । यथा चैतत् तथोक्तमधस्तात् ॥

यदपि, किञ्च जीवो, नाणुः, सर्वाङ्गव्याप्तसुखादेर्युगपद्विच्छिन्नदेहद्वये प्रयत्नादेश्चानुभवप्रसङ्गात् । नापि विभुः, त्वयानङ्गीकारात् । तस्माज्जीवाणुत्वविभुत्वयोरयोगात् स्वतो मध्यमपरिमाणत्वेऽनित्यत्वापत्तेः, सर्वात्मनो ब्रह्मणः श्रुत्यादिसिद्ध औपाधिकप्रदेश एव जीव इति, न जीवानामपि भेद इति तदपि न जीवस्यौपाधिकब्रह्मप्रदेशनिरसनपूर्वकं स्वाभाविकाणुत्वस्य समर्थितत्वात् । तथाच उक्तानुमानेन, भेदसिद्धिरविकलैव । एतेन ध्वंसाप्रतियोगिदेवदत्ताहमनुभवविशेष्यं न भौतिकातिरिक्तयज्ञदत्ताहमनुभवविशेष्यप्रतियोगिकानौपाधिकभेदवत्, कार्यकारणातिरिक्तत्वे सत्यहमनुभवविशेष्यत्वात् । स्वावृत्तिज्ञानविषयत्वाद्वा यज्ञदत्तवत्, व्याप्तिग्रहौपाधित्वाच्च । स्वावृत्तीति न व्यर्थं, सर्वेषामास्तिकानां सङ्घातद्वयातिरिक्तात्मा, सिद्ध इति न पक्षे हेत्वसिद्धिः । वृत्तिरपि आत्माध्यस्तैवात्मविषयेति न सिद्धान्ते द्वितीयहेत्वसिद्धिरिति निरस्तम् ॥ तत्र ध्वंसाप्रतियोगीति विशेषणं व्यर्थम्, आत्मातिरिक्तस्य [4]अहमनुभवविशेषणत्वेऽपि मतद्वयेऽप्यहमनुभवस्य साक्षिरूपतया वैयर्थ्यतादवस्थ्यात्, एवं साध्ये हेतौ च भौतिकातिरिक्तत्वकार्यकारणातिरिक्तत्वविशेषणेऽपि व्यर्थे च उक्तरीत्या सिद्धसाधनव्यभिचारयोः असम्भवात् ॥

यद्यपि गौरोऽहमित्यहमनुभवे, शरीरादिकमपि विषयः । तथाऽप्यात्मन एव तत्र विशेष्यत्वमित्यदोषः । परमते वृत्तेरन्तःकरणाश्रिततया द्वितीयहेतोरप्यसिद्धिः । न च वृत्तेरात्मन्यध्यस्तत्वान्नासिद्धिरिति वाच्यम् । आध्यासिकसम्बन्धस्य वृत्तिनियामकत्वाभावात् सर्वस्याप्यात्मन्यध्यस्ततया स्वावृत्तिज्ञानाप्रसिद्धिश्च । न च चैतन्यमेव स्वावृत्ति, प्रसिद्धं तस्यावृत्तित्वादिति वाच्यम् । आत्मानं जानामीत्यनुभवानुसारेण तस्यापि स्ववृत्तित्वावश्यम्भावात् । अन्यथा आत्मनोऽपि स्वावृत्तिचैतन्य-

---

१. ..वस्त्र.. । २. द्रयव्यञ्जक.. । ३. श्रुतेरन्यपरत्वस्य । ४. अहमनुभवविशेष्यत्वस्य निरस्तत्वात् ।

विषयत्वेनासिद्ध्यापातात् । न च स्वावृत्तिवृत्त्यविषयत्वं विवक्षितम् । अन्तःकरणस्य स्वाश्रयवृत्ति-विषयत्वेऽप्युक्तहेतुसत्त्वेन व्यभिचारात्, यज्ञदत्तसुखाद्यत्यन्ताभावाधिकरणत्वस्योपाधित्वाच्च ॥

एतेन न च यज्ञदत्तसुखाद्यभावाधिकरणत्वमुपाधिः, सुषुप्तिकालीने तच्छरीरानवच्छिन्ने च तस्मिन् साध्याव्यापकत्वात्, यदवच्छेदेन साध्यं तदवच्छेदेनोपाध्यङ्गीकारे पक्षे साध्यसत्त्वेऽप्यविरोधादिति निरस्तम् ॥ आत्मनोऽणुत्वेन शरीरावच्छिन्नप्रदेशशून्यत्वात् । सुषुप्तिकाले सुखाद्यत्यन्ताभावाभावेन उपाधेः साध्याव्यापकत्वासिद्धेः । नाहं यज्ञदत्त इत्यादि बाधितत्वाच्च ॥ 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामानि'त्यादिश्रुतिबाधितत्वाच्च । न च श्रुतिर्विशिष्टभेदविषया निरुपाध्यात्मनि भेदनिषेधकश्रुतेरप्रसक्तप्रतिषेधपरिहाराय निरुपाध्यात्मभेदविषयत्वावश्यम्भावात् । अनुकूलतर्काभावेन अप्रयोजकत्वाच्च । न च अभेदश्रुत्यप्रामाण्यप्रसङ्गो बाधकः अर्थान्तरत्वेऽपि तत्प्रामाण्योपपत्तेरिति ॥

*इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमत्सुरेन्द्रतीर्थपूज्यपादानां शिष्येण सर्वतन्त्रस्वतन्त्र-श्रीमद्विजयीन्द्रभिक्षुणा विरचिते भेदविद्याविलासे अनुमानपरिच्छेदः समाप्तः ॥*

★ ★ ★

॥ श्रीः ॥

# श्रुतिपरिच्छेदः

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

एवं श्रुतिरपि जीवपरभेदे मानम् । अत्र नवीनाः श्रुतिर्न भेदे प्रमाणम्, तस्य प्रत्यक्षसिद्धत्वेन श्रुतितात्पर्यागोचरत्वात् । तात्पर्यविषयीभूतार्थ एव शब्दस्य प्रमाणत्वात् । तथाहि— अस्ति हि श्रुति-प्रतिसन्धानविरहिणामपि नाहमीश्वर इति भेदप्रतीतिः ततश्चानुभवसिद्धे न श्रुतितात्पर्यं कल्पनीयम्, श्रुतितात्पर्यं विनापि प्रमाणाभावप्रयुक्ततदसत्त्वशङ्कायाः व्यावृत्तितत्वात् श्रुतिसिद्धमेव भेदं प्रत्यक्षादि-रनुवदतीति विपरीतमेवास्त्विति चेन्न ॥ यस्य यत्प्रमाणाधीनाऽसत्त्वशङ्काव्यावृत्तिः तत्तत्प्रमेयं, भेदश्च निरपेक्षानुभवव्याप्तिबलप्रवृत्तानुमानाभ्यामेवासद्व्यावृत्ततया सिद्धो न बहुसापेक्षकविलम्बितप्रवृत्तिक-श्रुत्येति श्रुतेरनुवादः । न च अनुभवाद्यगोचरस्तात्त्विकभेदः श्रुतिगोचर इति वाच्यम् । जीवे भेदद्वयस्य बाधितत्वात् । न च तस्यैव[1] भेदस्य तात्त्विकत्वं श्रुत्यर्थ इति वाच्यम् । पामराणामपि तत्तात्त्विकत्वबुद्धेः सत्त्वात्, परन्तु साधिष्ठानचैतन्यनिष्ठेत्यस्माभिरुच्यते । त्वया तु भेदस्यैवेति किं श्रुत्या ? न च श्रुतिबलादेवास्माभिर्भेदप्रत्यक्षस्य तात्त्विकविषयत्वं कल्पितमिति न भेदश्रुतिवैयर्थ्यमिति वाच्यम् । श्रुतेरिव प्रत्यक्षादीनामपि परस्य स्वतःप्रमाणत्वात् । यावद्व्यवहारं घटादिवद् बाधाभावाच्च । अत एव सिद्धान्त्यभिमतमिथ्यात्वं श्रुतिबाधितमिति निरस्तम् । परस्य श्रुतिसमानप्रामाण्यकप्रत्यक्षेणैव तत्सिद्धेः । तस्मान्न प्रत्यक्षादिसिद्धेः श्रुतेस्तात्पर्यमिति ॥

तन्न । तत्र न तावत् त्वद्रीत्या श्रुतेः प्रत्यक्षसिद्धभेदानुवादित्वं त्वन्मते अहमर्थविशिष्ट एव भेदानुभवेन निरुपाध्यात्मनि भेदस्य प्रत्यक्षाप्राप्ततया तत्र तद्बोधकत्वेनानुवादित्वोपपत्तेः । भेदनिषेध-श्रुतेरप्रसक्तप्रतिषेधत्वपरिहाराय श्रुत्यैव तत्र भेदस्य प्रसञ्जनीयत्वाच्च त्वन्मते प्रत्यक्षस्य श्रुत्यपेक्षया दुर्बलत्वेन, श्रुतिप्रतिपन्नभेदमिथ्यात्वबाधने सामर्थ्याभावात् । तत्प्रतिप्रसवार्थत्वेन भेदश्रुतेः प्रवृत्ति-सम्भवाच्च । किञ्च प्रत्यक्षसिद्धातात्त्विकभेदातिरिक्तभेदविषयत्वान्न श्रुतेरनुवादित्वम् ॥ न चातिरिक्त-भेदविषयत्वे प्रमाणाभावः, अनुवादत्वेन नैरर्थक्याद्विषयान्तरकल्पने न वैयर्थ्यपरिहारस्योचितत्वात् । 'द्वयोः प्रणयन्ती'त्यादौ तथा तद्दर्शनाच्च । न च जीवे भेदद्वयस्याननुभवो दोषः, एकस्य श्रुत्यैकगम्यतया तदननुभवस्यादोषत्वात् ॥

---

१. न चास्यैवेति ।

नाप्यस्मद्रीत्या भेदश्रुतेरनुवादित्वं दोषः, तस्य याथार्थ्यरूपप्रामाण्याविरोधित्वेनादोषत्वात् ॥ यत्तन्नेत्यादिनिषेधलिङ्गाभावेन 'अनश्नन्नन्योऽभिचाकशीती'ति कर्मफलानशनेऽप्यभितः प्रकाशमान-त्वादिरूपविधेयान्तरसत्त्वेन च, विधानार्थमनुवादेऽपि स्वार्थपरत्वाक्षतेश्च । किञ्च प्रतिजीवं भेदस्य प्रत्यक्षसिद्धत्वेऽपि जीवत्वावच्छिन्ने तदप्राप्त्या श्रुतेरनुवादित्वमुपपद्यते । किञ्चौपनिषदस्य ब्रह्मणः प्रमाणान्तरेणाप्राप्ततया तद्धर्मिकस्य तत्प्रतियोगिकस्य वा, भेदस्य कथं शास्त्रनिरपेक्षप्रत्यक्षादिना प्राप्तिः । न च शास्त्रसापेक्षत्वाप्राप्त्या शास्त्रस्यानुवादकता । न च श्रुतिप्रतिसन्धानविरहिणामपि भेदप्रतीतेर्न शास्त्रसापेक्षत्वमिति वाच्यम् । प्रतियोग्युपस्थितिं विना तद्भेदप्रतीतेरसम्भवात् । न च भेदप्रत्यक्षस्य 'यः सर्वज्ञः स सर्वविदि'त्यादि प्रतियोगिग्राहकश्रुतिसापेक्षत्वेऽपि, न भेदश्रुतिसापेक्ष-त्वमिति वाच्यम् । यत्प्रमाणं यद्विषये यमुपजीवन्नेव प्रवर्तते, तस्य तद्विषये तस्य तज्जातीयस्य वा, अनुवादत्वानापादकत्वात् । अन्यथा तवापि 'तत्त्वमसी'त्यादेरननुवादित्वं न स्यात् । श्रुत्या तदर्थस्य, ब्रह्मत्वावगत्यनन्तरमहमस्मीति तदर्थब्रह्माभेदस्य प्रत्यक्षसिद्धत्वात् । तस्माच्छ्रुतेरननुवादित्वेन भेदे तात्पर्यमित्युक्तम् ॥

एतेनाहमर्थे प्रतीयमानस्य भेदस्यौपाधिकत्वात्, मिथ्यात्वेन, न तत्त्वावेदकश्रुतितात्पर्यविषयत्व-मिति निरस्तम् ॥ भेदौपाधिकत्वस्य निरस्तत्वात् । श्रुतितात्पर्यविषयत्वेनैव, तस्य तात्त्विकत्व-सिद्धेश्च । न च तात्त्विकत्वसिद्धिं विना तात्पर्यविषयत्वं दुर्ज्ञेयमिति वाच्यम् । ब्रह्मणोऽपि श्रुति-तात्पर्यसिद्धेः प्राक्तात्त्विकत्वासिद्ध्या, तत्त्वावेदकश्रुतितात्पर्यासिद्धिप्रसङ्गात् ॥ न च भेदस्य निषिद्धत्वेन तात्त्विकत्वानिश्चयान्न श्रुतितात्पर्यविषयत्वमिति वाच्यम् । अलक्षणमित्यादिना ब्रह्मणोऽपि निषिद्ध-त्वात् । भेदनिषेधश्रुतेरन्यपरत्वस्य वक्ष्यमाणत्वाच्च ॥

यदपि भेदज्ञानादनवद्यपुमर्थाभावेन तस्य श्रुतिजन्यत्वायोगाच्च न तत्परत्वं युज्यते ॥ प्रत्युत— 'उदरमन्तरं कुरुते अथ तस्य भयं भवति, मृत्योः स मृत्युमाप्नोति, य इह नानेव पश्यती'ति भेद-ज्ञानस्यानर्थहेतुत्वमेव श्रूयते । 'अथ येऽन्यथातो विदुरन्यराजानस्तेऽक्षय्यलोका भवन्ति, अथ योऽन्यां देवतामुपास्ते, अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरि'त्यादिना भेदस्य निन्दितत्वाच्च श्रुतितात्पर्यम् । 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नात्र काचन भिदास्ती'त्यादिना वाक्येनानधिगताबाधितप्रयोजनवद्भेदाभावस्य प्रतिपादितत्वाच्च, न भेदः सत्यः न वा श्रुत्यर्थः । न चेदं वाक्यं ईश्वरस्यैव भेदं प्रतिषेधतीति वाच्यम् । द्रष्टृसामान्यभेदस्यैव प्रतिषिद्धत्वात् । श्रोत्रादिभेदनिषेधस्य प्रसिद्धं जीवं विहाय अन्यत्रासम्भवाच्च । भेदं प्रतिषिध्य 'एष त आत्मान्तर्याम्यमृत' इत्यभेदप्रतिपाद-नाच्च । ईश्वरनानात्वस्य च अप्रसक्तत्वात्, निषेध इति ॥

तदपि न । 'पृथगात्मानं प्रेरितारञ्च मत्त्वा, जुष्टस्ततस्तेनामृतत्वमेति, जुष्टं यदा पश्यत्यन्य-मीशमस्य महिमानमिति वीतशोक' इत्यादिश्रुत्या 'यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्, स सर्वविद्भजति मां सर्वभावेन भारत' इत्यादिस्मृत्या च भेदज्ञानस्य पुमर्थसम्बन्धित्वावगमात् । न च उदाहृतश्रुतिद्वयेऽपि कार्यकारणसङ्घातान्यत्वमेवोच्यते, न तु जीवेश्वरयोः परस्परभिन्नत्वमिति वाच्यम् । पदन्यायेन तद्वाक्योपात्तयोरेव भेदप्रतियोगित्वेन अन्वयसम्भवे, अन्यविषयकत्वकल्पनायोगात् । 'आत्माऽप्यनीशः सुखदुःखहेतोः यः कारणानि निखिलानि तानि, कालात्मयुक्तान्यधितिष्ठत्येकज्ञाज्ञौ द्वावजावीशानीशावि'ति पूर्वोत्तरवाक्यपर्यालोचनया च, पृथगात्मानमित्यस्य जीवेश्वरभेदपरत्वस्यैव न्याय्यत्वाच्च ॥

ऐक्यमात्रस्य प्रतिपिपादयिषितत्वे चशब्दपृथक्शब्दयोर्वैयर्थ्याच्च । आत्मानं मत्त्वेत्येतावतैव विवक्षितार्थसिद्धेः । वस्तुतः तव जीवेशभेदवत् । जडेश्वरभेदस्यापि बाध्यत्वेन, तज्ज्ञानस्यापि पुमर्थ-सम्बन्धित्वायोगाच्च । न च 'उदरमन्तरं कुरुते अथ तस्य भयं भवती'त्यादौ भेदज्ञानस्यानर्थहेतुत्व-मावेद्यत इति वाच्यम् । उदरं अल्पमेव, मिथ्याभूतमेव, अन्तरं, भेदबुद्धिं, यस्तु करोति, तस्य भयं भवतीति, मिथ्याभूतभेददर्शिन एव भयावेदनात् । 'य इह नानेव पश्यती'त्यस्यापि नानेवालीकं अल्पं वा भेदं यः पश्यति, स मृत्युमाप्नोतीत्यर्थपरत्वात् ॥

वस्तुतस्तु वाक्यद्वयमपीश्वरे स्वगतस्वप्रतियोगिकभेददर्शिनिन्दापरमिति, न ततः परस्येष्टसिद्धिः । 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, मनसैवेदमाप्तव्यमिति पूर्ववाक्ये परमेश्वरस्य प्रस्तुतत्वात् । 'अथ येऽन्यथातो विदुरि'त्यस्यापि 'स एवेदं सर्वं अहमेवेदं सर्वं आत्मैवेदं सर्वमि'ति सामानाधिकरण्यनिर्देशलब्धं, यत्सर्वनियामकत्वसर्वकारणत्वादि, अतोऽन्यथा तद्विरुद्धाकारेण ये जानते तन्मात्रनिन्दापरत्वेन, त्वदभिमतार्थपरत्वासिद्धेः । 'अथ योऽन्यां देवतामि'-त्यस्य योऽन्यो जीवोऽन्यां, विलक्षणां, देवतामुपास्ते किमिति, अन्योऽसौ परमात्माहमस्मीति, 'न स वेद यथा पशुरि'ति, जीवपराभेदोपासनानिन्दापरत्वेन, त्वदिष्टासिद्धेः । न च व्यवहितान्वयो दोषः सन्निधानाद्योग्यतायाः प्रबलत्वात् ॥

यद्वा अन्योऽसावन्योऽहमस्मीत्येवोपासनाकारः सा चोपासना परदेवताविषयिण्येव कार्या, यस्तु परदेवतान्यां देवतामुपास्ते न स वेद यथा पशुः, तथाच ब्राह्मणं, 'वासुदेवं परित्यज्य योऽन्यं देवमुपा-सते । तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिरि'ति । न चैवं 'नान्योऽतोऽस्ति द्रष्टे'त्यादिना भेदं प्रति-षिध्य 'एष त आत्मान्तर्याम्यमृत' इत्यभेदप्रतिपादनानुपपत्तिः । 'एषोऽन्तर्यामी ते आत्मा स्वरूपमि'ति तदर्थप्रतीतेरिति वाच्यम् । 'सदा पश्यन्ति सूरय' इत्यादि द्रष्ट्रनेकत्वप्रतिपादकश्रुतिविरोधेन, द्रष्टृ-

सामान्यभेदनिषेधपरत्वायोगात् । अत इत्यनेन प्रस्तुतं सर्वनियन्तारं परामृश्य 'अतोऽन्यो द्रष्टा नास्ति' इत्युक्ते अस्मिन्ग्रामे अयमेव सर्वनियामको नान्यः पुरुषोऽस्ति इत्यादावन्यशब्दस्य प्रस्तुतसदृशान्यपरतया व्युत्पन्नत्वेनेहापि सर्वनियामकद्रष्ट्रन्तरनिषेधस्यैवोचितत्वाच्च । द्रष्टृभेदस्य प्रत्यक्षसिद्धत्वेन तदविरोधाय, तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिरित्यादौ दृशेदूरे धूमदर्शनार्थकत्ववत् द्रष्टृपदस्यापीश्वरतुल्यद्रष्ट्रर्थकत्वोपपत्तेश्च ॥

एतेन 'नान्यदतोऽस्ति द्रष्टृ'त्याद्यक्षरब्राह्मणमपि व्याख्यातम् । न च श्रोतृत्वादेर्जीवादन्यत्र असम्भवः श्रोत्रेन्द्रियादिनियतज्ञानस्यैव श्रोत्रादिपदवाच्यतया, ईश्वरस्यापि श्रोतृत्वाद्युपपत्तेः । न च ईश्वरस्य श्रोत्रादिसद्भावे मानाभावः 'सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् । सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठती'ति श्रुतिस्मृत्योरेव तत्र प्रमाणत्वात् । अपाणिपाद इत्यादि निषेधस्तु अस्मदादिवन्नियतदेशवृत्तिपाण्यादिनिषेधपर इति न विरोधः । न च ईश्वरतुल्यद्रष्ट्रन्तरस्याप्रसक्ततया, निषेधानुपपत्तिः । 'न तत्समश्चाभ्यधिकश्च दृश्यते', 'यस्मात्परतरं न', 'मत्तः परतरं नास्ती'त्यादिवदुपपत्तेः । तथाच 'नान्योऽतोऽस्ति द्रष्टे'ति न जीवपरभेदप्रतिषेधः ॥

न च वाक्यशेषेण तदभेदः प्रतिपाद्यते । 'एष आत्मा पृथिव्यादिनियामकत्वेन, प्रस्तुत आत्मा तेऽन्तर्यामी पृच्छ्यपृच्छकभावेन त्वत्सम्बन्धी, त्वया पृष्टोऽन्तर्यामीति यावत् । अन्तर्यामिणं ब्रूही'ति प्रश्नानुरोधात्, प्राथम्याच्च । प्रस्तुतात्मोद्देशेनैवाऽन्तर्यामित्वविधानस्यैव न्याय्यत्वाच्च । 'य आत्मनि तिष्ठन्नि'त्याद्युपक्रमानुसारेण अस्य प्रकरणस्य जीवपरभेदपरत्वावश्यम्भावाच्च । तथाच सूत्रम्— 'शारीरश्चोभयोऽपि हि भेदेनेनमधीयत' इति । तस्मात् 'द्वा सुपर्णे'त्यादि श्रुतेर्जीवपरभेदपरत्वे, न किञ्चिद्बाधकमिति ॥

यत्तु 'द्वा सुपर्णे'त्यादिना जीवेशभेदपरं, तद्धि, 'तयोरन्यः पिप्पलं स्वाद्वत्ती'त्यहङ्कारतादात्म्यापन्नजीवमनूद्य 'अनश्नन्नन्योऽभिचाकशीति' तमेव ततो निष्कृष्य भोक्तृतया दर्शयति, विशिष्टानुवादश्च, निष्कृष्टाहङ्कारस्य तस्याभोक्तृत्वं प्रतिपादयितुमेव, तथासति ह्यनुभवविरोधः परिहृतः स्यात् ॥ अन्यथा 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातमि'ति उपक्रमस्य 'अन्या वाचो विमुञ्चथे'ति भेदवाङ्निषेधस्य 'ब्रह्मैवेदमि'ति पूर्ववाक्यस्य 'ब्रह्म वेद ब्रह्मैव भवति' इत्युपसंहारस्य च, बाधः स्यादिति ॥

तन्न । 'स्वाद्वत्ती'त्यस्यान्तःकरणतादात्म्यापन्नचैतन्यपरत्वे प्रमाणाभावात् ॥ न च 'विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च', 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः', 'अहङ्कारविमूढात्मा कर्ताहमिति मन्यते, शोकहर्षभयक्रोधलोभमोहस्पृहादयः, अहङ्कारस्य दृश्यन्ते जन्ममृत्युश्च नात्मन'

इत्यादिश्रुतिस्मृत्यनुसारेण अन्तःकरणस्यैव कर्तृत्वावसायेन, तत्तादात्म्यं विना, जीवस्य कर्तृत्वायोगात् 'स्वाद्वत्ती'त्यस्य विशिष्टपरत्वावश्यकमिति वाच्यम् । 'विज्ञानं देवाः सर्वे । ब्रह्म ज्येष्ठमुपासत' इति वाक्यशेषेण सर्वदेवोपास्यतयाऽवगतस्य ब्रह्मतयाऽन्तःकरणरूपत्वासिद्धेः । 'विज्ञानाद् ह्येव खल्विमानि भूतानी'त्यत्रापि विज्ञानं ब्रह्मैव जगत्कारणमिति श्रवणात् । विस्तरस्त्वद्वैतशिक्षायां द्रष्टव्यः ॥

'अहङ्कारविमूढे'त्यस्याहङ्कारेण, गर्वेण, विमूढात्माऽपहृतज्ञान अहं कर्तेति मन्यते ईश्वरगतमेवानन्याधीनकर्तृत्वं स्वात्मनि बुध्यत इत्यर्थपरत्वेनान्तःकरणस्य कर्तृत्वासिद्धेः । ततोऽहङ्कारस्य दृश्यन्त इत्यस्यापि शोकादौ जनयितव्येऽन्तःकरणस्य सहकारित्वमात्रप्रतिपादनपरत्वादित्यन्यत्र विस्तरः ॥

एतेन 'तयोरन्यः पिप्पलं स्वाद्वत्ती'त्यहङ्कारविशिष्टचैतन्यमनूद्य 'अनश्नन्नन्य' इति निष्कृष्टस्य चैतन्यस्याभोक्तृत्वमुच्यते, तथासति ह्यनुभवविरोधः परिहृतः स्यादिति, विशिष्टानुवादप्रयोजनकथनमपि प्रत्युक्तम् ॥ जीवातिरिक्तेश्वरस्यैव कर्तृत्वाभावोक्त्याऽनुभवविरोधाप्रसराच्च । न च 'द्वा सुपर्णे'त्यस्य जीवेश्वरभेदपरत्वे 'कस्मिन्नु भगव' इत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधः । अन्यज्ञानेनान्यज्ञानासम्भवादिति वाच्यम् । त्वयापि जडचेतनयोर्भेदाङ्गीकारेण साम्यात् । जडस्य मिथ्यात्वेऽपि, तस्य ईश्वरस्वरूपत्वानङ्गीकारात् । न च ब्रह्मज्ञानेन सर्वं तत्त्वतो ज्ञातं, अध्यस्तं प्रति अधिष्ठानस्यैव तत्त्वरूपत्वादिति वाच्यम् । जगदध्यस्तत्वस्याद्याप्यसिद्धेः । तत्त्वं ह्यनारोपितं रूपं तच्चाध्यस्तस्याध्यस्तत्वमेव । अन्यथाऽनध्यस्तत्वप्रसङ्गादिति, जगत्तत्त्वस्य ब्रह्मरूपत्वासिद्धेश्च । न च ब्रह्मज्ञानेन जगदध्यस्तत्वज्ञानात् सर्वस्यापि तत्त्वतो ज्ञातत्वमविरुद्धमिति वाच्यम् । अन्यज्ञानेनान्यज्ञानायोगस्य त्वयैवोक्तत्वात् । प्रधाने ज्ञाते अप्रधानं ज्ञातफलं भवति इत्यर्थपरत्वेनोपक्रमस्याविरोधाच्चेत्यन्यत्र विस्तरः ॥

एतेन 'अन्या वाचो विमुञ्चथे'ति परामर्शोऽपि व्याख्यातः ॥ तत्र परमात्मन एव मुख्यज्ञेयत्वस्य अन्येषाममुख्यज्ञेयत्वस्योक्त्याऽविरोधात् । अन्यथा 'नारायणं महाज्ञेयं, द्वे ब्रह्मणी वेदितव्ये' इत्याद्यसङ्गतं स्यात् । 'नास्त्यकृतः कृतेन, तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदि'त्युपक्रमानुसारेणान्या वाच इत्यस्य क्षयिष्णुफलकर्मबोधकवाङ्निषेधपरत्वेनाविरोधाच्च । न च 'ब्रह्मैवेदमि'ति सामानाधिकरण्यानुपपत्तिः, 'सर्वं खल्विदं ब्रह्म', 'तज्जलानिति शान्त उपासीत', 'विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति', 'सर्वं समाप्नोषि ततोऽसि सर्व' इत्यादिश्रुतिस्मृतिभिरेव तद्गतेरुक्तत्वात् ॥

न चैवं 'ब्रह्मविद्ब्रह्मैव भवती'ति विदुषो ब्रह्मभावापत्तिप्रतिपादनपरत्वात् तद्विरोधः । 'स यो ह वै तत्परममि'ति ज्ञेयस्य परत्वेन विशेषिततया, इह परब्रह्मभावापत्तेः प्रतिपिपादयिषितत्वे, परं ब्रह्मैव

भवतीत्याकारत्वापातेन, जीव एव भवतीत्यर्थस्य विज्ञातव्यत्वात् 'द्वे ब्रह्मणी'त्यादौ जीवेऽपि ब्रह्म-शब्दप्रयोगदर्शनात् । न च जीवभावस्य स्वतःसिद्धतया ज्ञानफलत्वानुपपत्तिः, ब्रह्मभावस्य, स्वतः-सिद्धतया तवापि साम्यात् । न च औपाधिकरूपनिरसनेन निजरूपाविर्भाव एव सज्ज्ञानसाध्य इति वाच्यम् । ममापि साम्यात् । आविर्भावस्यापि तव ब्रह्ममात्रतयोक्तदोषानिस्ताराच्च । 'ब्रह्मविदाप्नोति परमि'ति श्रुत्यन्तरानुसारेण, 'परात्परं पुरुषमुपैति दिव्यमि'ति पूर्ववाक्यानुसारेण च 'ब्रह्मैव भवति ब्रह्मैव प्राप्नोती'त्यर्थपरत्वाच्च । भवतीति परस्मैपदस्य व्यत्ययेनाप्युपपत्तेः । एतेन 'ब्रह्मैव सन् ब्रह्माप्नोती'-त्यादिश्रुतिरपि व्याख्याता ॥

यदपि 'द्वा सुपर्णे'त्यस्य जीवेश्वरभेदपरत्वे 'तयोरन्यः पिप्पलं स्वाद्वत्ती'ति सत्त्वम्, 'अनश्नन्नन्यो अभिचाकशीतीत्यनश्नन्नन्यो अभिपश्यति यस्तदेतत्सत्त्वं येन स्वप्नं पश्यति अथ योऽयं शरीररूपद्रष्टा स क्षेत्रज्ञ' इति पैङ्गिरहस्यब्राह्मणविरोध इति ॥ तदपि न । सत्त्वशब्दस्य 'द्रव्यासु व्यवसायेषु सत्त्व-मस्तीति जन्तुषु' इत्यभिधानानुसारेण 'वन्यान्विनेष्यन्निव दुष्टसत्त्वानि'त्यादिप्रयोगानुसारेण च जीव-परत्वेनाविरोधोपपत्तेः ॥ क्षेत्रज्ञशब्दस्यापि 'क्षेत्रज्ञोऽक्षर एव च, क्षेत्रज्ञं चापि मां विद्धी'त्यादौ परमा-त्मन्यपि प्रयोगाच्च ॥

'आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः, संन्यासयोगाद्यतयः शुद्धसत्त्वा' इत्यादौ अन्तःकरणे सत्त्वशब्दस्य जीवपरमात्मनोर्मध्ये जीवात्मा क्षेत्रज्ञ इति विज्ञायत इत्यादौ क्षेत्रज्ञशब्दस्य जीवे प्रयोगो दृश्यत इति चेत् भ्रान्तोऽसि । वयमन्यत्र प्रयोगं न निषेधामः । किन्त्विह तयोर्जीव-परमात्मविषयत्वे नाविरोधमेव ब्रूमः । न च 'येन स्वप्नं पश्यति तत्सत्त्वमि'ति, जीवो येन करणेन स्वप्नं पश्यति तत्सत्त्वमिति सत्त्वशब्दार्थस्य जीवातिरिक्तत्वोक्तिविरोधः येन जीवेन सहितः परमात्मा स्वप्नं पश्यति तत्सत्त्वमिति जीवस्यैव सत्त्वोक्तेः । न च परमात्मनः स्वप्नद्रष्टृत्वे मानाभावः, भ्रान्तत्वप्रसङ्ग-श्चेति वाच्यम् । 'अथ रथान् रथयोगान् पथस्सृजत कामं कामं पुरुषो निर्ममाण' इत्यादौ परमात्मन एव स्वप्नपदार्थस्रष्टृत्वोक्त्या स्वसृष्टपदार्थद्रष्टृत्वस्याभ्रान्तत्वस्य चोपपत्तेः । 'अथ योऽयं शरीर उपद्रष्टे'-त्युत्तरवाक्ये परमात्मन एव जीवापेक्षया अधिकद्रष्टृत्वोक्तेश्च । 'उपोधिके चे'ति पाणिनिस्मरणात् । न चात्र क्षेत्रज्ञशब्दो जीवपर एव शारीरत्वोक्तेरिति वाच्यम् । शरीरे स्थित्वा नियामकत्वेन परमात्मनोऽपि शारीरत्वोक्त्यविरोधात् ॥ शारीरपदस्य जीवपरत्वेऽपि शारीरे जीवे स्थित्वा उपद्रष्टेत्यर्थपरत्वेनाविरोधो-पपत्तेश्चेति दिक् ॥

एतेन 'जुष्टं यदा पश्यत्यन्यमीशमि'त्यत्र कार्यकारणसङ्घातान्यत्वमेवार्थः इति प्रत्युक्तम् । 'द्वा सुपर्णे'त्यादि पूर्ववाक्यानुसारेण 'पुरुषो निमग्न' इति 'पुरुषपदस्वारस्येन' अस्य महिमानमि'ति वीतशोक

इति मोक्षफलभोक्तृत्वेन च प्रस्तुतजीवान्यत्वस्यैव न्याय्यत्वात्, एवं 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'ति जीवेश्वरभेदे मानम् ॥ सहभावस्य भेदगर्भितत्वात् । मुक्तौ विद्यमानस्य भेदस्य मायिकत्वानुपपत्तेश्च । यत्तु 'सोऽश्नुत' इत्येतन्न मुक्तौ भेदप्रतिपादनपरं विदितब्रह्मरूपेण युगपत्सर्वानन्दानुभवस्यैव तदर्थत्वात्, मुक्तौ तदितरभोगस्यासम्भवात् । अन्यथा सहयुक्तेऽप्रधान इति ब्रह्मणो गुणत्वभोगयोः प्रसङ्गात् । तदुक्तं स्कान्दे— सोऽश्नुते सकलान् कामान् क्रमेण सुरर्षभान्नः, विदितब्रह्मरूपेण जीवन्मुक्तो न संशय' इति तन्नाविदितब्रह्मरूपेण युगपत्सर्वानन्दावाप्तिरर्थ इत्यत्र प्रमाणभावात् । न च 'इत्थम्भावलक्षणा तृतीयै'व मानमिति वाच्यम् । सहपदयोगे सहार्थतृतीयाया एव न्याय्यत्वात् ॥ इत्थम्भावलक्षणतृतीयाश्रयणे तु विपश्चिद्ब्रह्मप्राप्त इति ब्रह्मत्वं प्राप्त इति वा ब्रह्मविपश्चित्वं ब्रह्मज्ञानं प्राप्त इति वा तदर्थः स्यात् । नाद्यः प्राप्यप्रापकभावस्य भेदं विना अयोगात् । न द्वितीयः तव ब्रह्मत्वस्य स्वतःसिद्धत्वेन तत्प्राप्त्युक्त्ययोगात् । नान्त्यः ब्रह्मज्ञानवतः सकलकामावाप्तेर्भेदेऽप्युपपन्नत्वादिष्टासिद्धेः । सहशब्दवैय्यर्थ्याच्च । न च तस्य यौगपद्यमर्थः व्यवहितान्वयप्रसङ्गात् । न च सहार्थतृतीयाङ्गीकारे ब्रह्मणः अप्राधान्यं भोगश्च स्यादिति वाच्यम् । सहयुक्तेऽप्रधान इति सहयुक्तस्य प्राधान्ये गम्यमाने तृतीयायाविहितत्वेन गम्यमानस्य च वास्तवप्राधान्याविरोधित्वेन न शब्दतो प्राधान्यस्यैवेष्टत्वात् । परमात्मनः सर्वसारभोक्तृत्वेन भोगप्रसङ्गस्यापीष्टत्वाच्च ॥

न च सिद्धान्तेऽपि मुक्तस्येतरभोगासम्भवः, 'स तत्र पर्येति जक्षन् क्रीडन् रममाण' इत्यादौ भोगान्तरस्यापि श्रवणात् । न चोत्कृष्टब्रह्मानन्देऽनुभूयमाने भोगान्तरकामना न सम्भवतीति वाच्यम् । ब्रह्मानन्दस्य मुक्तानुभाव्यत्वासिद्धेः स्वरूपानन्दस्य चानुभूयमानत्वेऽपि विषयाभिव्यक्तसुखस्य प्रागननुभूतत्वेन कामनोपपत्तेः । न च अज्ञानस्य निवृत्तत्वेन तस्याननुभूतत्वमसिद्धमिति वाच्यम् । तन्निवृत्तावपीश्वरेच्छाया आवरकत्वेन तदननुभवोपपत्तेः । एवं उपबृंहणमपि नेयम् । एवं 'परात्परं पुरिशयं पुरुषमीक्षत', 'यदा पश्यः पश्यते रुक्मवर्णमि'त्यादिश्रुतिप्रतिपन्नद्रष्टृदृश्यभावोऽपि जीवपरभेदे मानम् । न च तस्य कल्पितभेदेन निर्वाहः वह्नौ वह्निभेदकल्पनेऽपि दाहादिदर्शनेन तस्य व्यवस्थाहेतुत्वायोगस्योक्तत्वात् । श्रुतेरतत्त्वावेदकत्वापत्तेश्च । न च तात्पर्यविषयीभूतस्य शुद्धचैतन्यस्याबाधात् नातत्त्वावेदकत्वमिति वाच्यम् । द्रष्टृदृश्यभावस्यापि मानान्तराप्राप्ततया तात्पर्यविषयत्वावश्यंभावात् । अभेदश्रुतेरपि कल्पिताभेदविषयत्वेनोपपत्त्या तात्त्विकाभेदासिद्धिप्रसङ्गात् अभेदस्य कल्पितत्वेऽपि श्रुतितात्पर्यगोचरस्य चिन्मात्रस्य सत्यत्वेन तत्प्रामाण्योपपत्तेश्च ॥

न च अनुभूयमानभेदविरोधेन श्रुतिपरिचयहीनानामभेदज्ञानाभावेन तदेकवेद्यस्य मिथ्यात्वे तदप्रामाण्यप्रसङ्गेन च प्रातीतिकस्य व्यावहारिकस्य वा, भेदस्यायोगात् अभेदश्रुतेः पारमार्थिकाभेद-

परत्वस्यावश्यकत्वमिति वाच्यम् । यजमानप्रस्तराभेदस्यापि तात्त्विकत्वापत्तेः । तत्राप्यनुभूयमान-भेदविरोधेन 'यजमानः प्रस्तर' इत्यादिश्रुतिपरिचयहीनानामभेदज्ञानाभावेन तदेकवेद्यस्य तस्य मिथ्यात्वे तदप्रामाण्यप्रसङ्गेन च प्रातीतिकस्य वा व्यावहारिकस्य वा भेदस्यायोगात् श्रुतेः पारमार्थिकाभेद-परत्वमावश्यकमिति सुवचत्वात् ॥ ययोरभेदः भेदनिषेधो वा श्रुत्या बोध्यते । तद्भेदस्यादिश्रुत्यैक-समधिगम्यतया, भेदस्य कल्पितत्वे तदप्रामाण्यापत्तेश्च । अभेदश्रुतेरन्यपरत्वेन वोपपत्त्या अभेद-परत्वासिद्धेश्च ॥

न चैवं श्रुतहीनादिकं दोषः। मुख्यस्यासम्भवे तस्य सह्यत्वात्। त्वयापि विशिष्टाभेदपरत्वमपहाय चिन्मात्राभेदपरत्वस्वीकाराच्च। न च अभेदज्ञानस्य पुमर्थसम्बन्धित्वादभेदस्य श्रुतितात्पर्यविषयत्वमिति वाच्यम् । 'यो वेद अहं ब्रह्मास्मि, स इदं सर्वं भवती'त्यादौ अभेदज्ञानस्य दुःखिजडात्मकत्व-प्रतिपादनमुखेन निन्दिततया तस्य पुमर्थसम्बन्धित्वासिद्धेः । भेदज्ञानस्यापि पुमर्थसम्बन्धित्वोक्त्या अभेदश्रुतीनामपि भेदे तात्पर्यस्य दुर्वारत्वाच्च॥ प्रत्युत 'सोऽबिभेत्', 'तस्मादेकाकी न रमत' इत्यभेदस्य भयहेतुत्वस्यैवावेदनात् । न चात्र निरुपचरितैक्यज्ञानस्य न भयहेतुत्वमावेद्यते, किन्तु द्वितीयवस्तु-सम्भावनाया एव अत एव 'कस्मान्नु बिभेमि यन्मदन्यन्नास्ती'त्युत्तरवाक्यमभिसङ्गच्छत इति वाच्यम्। स्वभिन्नत्वेन निश्चितप्रियादेर्भयहेतुत्वादर्शनेन विरोधिद्वितीयस्य भयहेतुत्वदर्शनेन च द्वितीयवस्तु-सम्भावनामात्रस्य भयहेतुत्वोक्त्ययोगात् । एवञ्च 'कस्मान्नु बिभेमि यन्मदन्यद्विरुद्धं नास्ती'ति वा वाक्यशेषार्थ इति न तद्विरोधोऽपि ॥

एतेन 'द्वितीयाद्वै भयं भवती'त्याद्यपि व्याख्यातम् । न च 'तत्त्वमसी'त्यादेरभेदपरत्वाभावे एकविज्ञाने सर्वज्ञान-वाचारम्भणमृदादिदृष्टान्त-परमात्मप्रवेशादिभिः तदुपपादनवैयर्थ्यमिति वाच्यम् । एकविज्ञानेन सर्वज्ञानप्रतिज्ञाया अभेदोपपादनपरत्वस्य निरस्तत्वेन मृत्पिण्डादिदृष्टान्तस्यापि तदुप-पादनपरत्वासिद्धेः 'तत्सृष्ट्वा तदेवानुप्राविशदि'ति श्रुत्युक्तप्रवेशोऽपि परमात्मन एव सृष्ट्यनन्तरभावि-प्रवेशस्य अनादिजीवभावरूपत्वायोगात् ॥ न च व्यापकस्य परमात्मनः प्रवेशानुपपत्तिः, अन्तः-प्रवेशावच्छेदेन सृष्टपदार्थसम्बन्धस्यैतत्प्रवेशरूपत्वोपगमात् ॥

न च श्रुतेरभेदपरत्वाभावे 'सदेव सोम्येऽदमग्र आसीत्। आत्मा वा इदमेक एवाग्र आसीदि'-त्यभेदोपक्रमाद्यनुपपत्तिः । सृष्टेः प्राक्कालेऽप्यनादिजीवाविद्याकामकर्मादिः सृष्ट्युपयोगिनः सत्त्वेन अभेदोपक्रमत्वासिद्धेः । न च इतरसत्त्वस्य ब्रह्मेतरसकलनिषेधविरोधित्वेऽपि नाभेदविरोधित्वमिति न तदुपक्रमत्वाद्यनुपपत्तिरिति वाच्यम्। त्वदभिमताभेदस्यापि ब्रह्मण्यतिरेकेणासत्त्वरूपतया विरोधस्य

दुर्वारत्वात् । एवं जीवानां परस्परं भेदे श्रुतिरपि प्रमाणम्, 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां परामृतात्परिमुच्यन्ति सर्वे जहात्येनां भुक्तभोगामजोऽन्यः सदा पश्यन्ति सूरय' इत्यादिका ॥

*इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमत्सुरेन्द्रतीर्थपूज्यपादानां शिष्येण सर्वतन्त्रस्वतन्त्र-श्रीमद्विजयीन्द्रभिक्षुणा विरचिते भेदविद्याविलासे श्रुतिपरिच्छेदः समाप्तः ॥*



॥ श्रीः ॥

# भेदस्वरूपसमर्थनम्

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

ननु तथापि जीवपरयोर्जीवानां च भेदोऽनुपपन्नः तत्स्वरूपस्य दुर्वचत्वात् । तथाहि— न तावद्विभागः पृथक्त्वं वा तद्भेदः तयोर्धर्मिद्वयप्रत्यक्षाधीनप्रत्यक्षत्वात् । प्रत्यक्षातिरिक्तं च भेदे न किञ्चित्प्रमाणमित्युक्तम् । नापि वैलक्षण्यम् । विविधलक्षणस्यैकस्मिन्नपि सत्त्वात् । विरुद्धलक्षस्यातिरिक्तभेदतद्ग्रहाधीनग्रहत्वात्, अहङ्कारातिरिक्तात्मनि ब्रह्मविलक्षणत्वे प्रमाणभावाच्च । अहङ्कारश्च नात्मेत्युक्तम् । तस्मादन्योन्याभावस्वरूपो वा भेदो वाच्यः तत्र न तावदन्योन्याभावः सम्भवति । तत्प्रतियोगिप्रमाणयोरभावात् तत्र न परमते घटादिः प्रतियोगी, अभेदविरोधिभेदस्य तदभावतया तदयोगात् । न च घटादिरेव अभेदः, तदधिकरणे तद्भेदाभावप्रसङ्गात् । तादाम्यं भेदप्रतियोगीति चेन्न, तावत्तादात्म्यं घटस्वरूपातिरिक्तं, तत्र न तावद्घट इति बुद्धिः प्रमाणम् । घटो घटाभिन्न इति बुद्धिस्तद्विषया, तस्याः भेदभावविषयत्वात्, स एव तादात्म्य इति चेत्, तर्हि भेदतादात्म्ययोरन्योन्यज्ञानाधीनज्ञानतया नैकमप्यनुभूयेत । न च घटाभावाभावो घट इव भेदाभावोऽपि अभावोपस्थितिं विनैव ज्ञायत इति वाच्यम्, घटे घटत्वस्येव विधिरूपस्य भेदाभावे अन्यस्याभावात् । न च तत्रापि कश्चिद्धर्मोऽस्त्विति वाच्यम् । अभिन्न इति बुद्धेः, तदन्यस्य तद्विषयज्ञानस्यादर्शनाच्च । न च घट इति बुद्धेरेव तादात्म्यमपि बाधकाभावाद्विषयोऽस्त्विति वाच्यम्, घटत्वस्मृतिजन्यघटज्ञाने तस्य प्रकारतया भानायोगात् । औपाधिकधर्मस्य निर्विकल्पकायोगात्, घटत्वस्मरणजन्यघटज्ञानसमानाकारस्य ज्ञानस्य तदन्यस्यापि तदधिकविषयत्वायोगात्, घटत्वस्मरणजन्यघटज्ञानाधीनभेदज्ञानस्य तदभावाविषयत्वप्रसङ्गाच्च । अत एव तादात्म्यमप्यखण्डो धर्मः कश्चिद्घटादिनिर्विकल्पकविषय इति घटप्रत्यक्षे तदपि प्रकारतया प्रतीयत इति प्रत्युक्तम् । शाब्दघटज्ञानाद्भेदज्ञानाभावप्रसङ्गात्, तस्य घटशब्दादनुपस्थितेर्जात्यतिरिक्ताखण्डधर्माभ्युपगमे तेनैव सर्वव्यवहारोपपत्तौ जात्यभावप्रसङ्गाच्च । अनित्यस्याखण्डस्य रूपादावयोगात्, घटत्वान्यस्याखण्डधर्मस्य घटत्वादिसमानतया तादात्म्यात्यन्ताभावस्य घटाद्यप्रतियोगितया तद्भेदत्वानुपपत्तेश्च, न ह्यन्याभावेऽन्यः प्रतियोगीति ॥

उच्यते— न तावद्भेदस्वरूपं तत्प्रतीतिर्वा निराकर्तुं शक्यते, तयोस्त्वयाऽप्यङ्गीकारात् । भेदप्रतीतौ तन्निरासासम्भवात् । तन्निवृत्त्यर्थं श्रवणादौ प्रवृत्त्यभावप्रसङ्गात्, 'अन्या वाचो विमुञ्चथ,

नान्यः पन्था, अन्यद्युष्माकमन्तरं बभूव, नान्यच्छ्रेयो वेदयन्ते प्रमूढा 'इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ' समानमितरच्छेदेन, चार्थे द्वन्द्व, उत्तमः पुरुषस्त्वन्यः, भेदव्यपदेशाच्चान्यः' इत्यादि श्रौतस्मार्तसौत्रव्यवहारानुपपत्तेः । 'नानृषेयं वृणीते, नानुयाजेष्वि'त्यादौ, 'सुडनपुंसकस्ये'त्यादौ च नञः पर्युदासार्थत्वानाश्रयणीयत्वप्रसङ्गाच्च । न चेष्टापत्तिः, एकवाक्यताभङ्गप्रसङ्गात् । अत्र नञः किं प्रसज्यप्रतिषेधोऽर्थः, उत पर्युदासोऽर्थ इति संशयानुपपत्तेश्च । नञः प्रतिषेधमात्रार्थत्वेन कोट्यन्तराप्रसिद्धेः, भेदमात्रस्याप्रामाणिकत्वे जैमिनिना तद्विशेषकर्मभेदे शब्दान्तरादेः प्रमाणत्वेनानुपन्यासापत्तेश्च । दूष्यदूषणयोः प्रमाणतदभासयोः, वेदबाह्यागमयोः, अन्नानन्नयोः, सुरापयसोः, मातृकलत्रयोश्च भेदाभावेन बहुविप्लवापाताच्च । नित्यानित्यवस्तुविवेकासम्भवेन तव श्रवणादावनधिकारापाताच्च ॥

न हि वयं भेद एव नास्तीति ब्रूमः, किन्तु, बिम्बप्रतिबिम्बादिभेदवन्मायिक इति, अतः सर्वापि व्यवस्था उपपद्यत इति चेन्न, मायिकस्य कल्पितत्वेन व्यवस्थापकत्वासम्भवस्य बिम्बप्रतिबिम्बादि भेदस्वाभाविकत्वस्य चोक्तत्वात्, मायिकस्यापि तस्य त्वदुक्तन्यायेन प्रतियोग्याद्यसम्भवेनासम्भवाच्च । भिन्नतया धर्मिप्रतियोगिज्ञानसाध्यत्वेन त्वदुक्तानवस्थापाताच्च । मायासामर्थ्यादनवस्थादिग्रस्तमपि न दूष्यत इति चेन्न, ईश्वरसामर्थ्यात् तथेत्यापातात्, अनुपपत्तिमात्रस्यादोषत्वापाताच्च । माययैव सर्वस्य व्यवस्थोपपत्तौ तत्तद्व्यवस्थासिद्ध्यर्थं व्यवस्थापकान्तराभ्युपगमप्रसङ्गाच्च । न च मायिकभेदस्य साक्षिप्रत्यक्षविषयतया नानवस्थेति वाच्यम्, सत्यत्वपक्षेऽपि साम्यात्, जीवपरभेदस्य साक्षिवेद्यत्वेऽपि घटपटादिभेदस्य त्वयापि साक्षिवेद्यत्वस्यानभ्युपगमाच्च । अनन्यथासिद्धभेदप्रतीतिरूपफलसिद्धौ अबाधितत्वकादाचित्कत्वयोर्निर्वाहाय विषयतत्सामग्र्योः कल्प्यत्वेन विशिष्टतदनिर्वचनेऽपि दोषाभावाच्च ॥

न च तदनिर्वचनमपि । तथाहि— अस्तु तावद्विभागः पृथक्त्वं वा भेदः । न च तयोर्धर्मिद्वयप्रत्यक्षाधीनप्रत्यक्षतया प्रत्यक्षप्रमाणकत्वोपपत्तिः, अनुमानस्य श्रुतेर्वा तत्प्रमाणत्वसम्भवात् । उक्तभेदस्य प्रमाणान्तराप्ततया भेदश्रुतेस्तत्र तात्पर्योपपत्तेश्च, वैलक्षण्यं वा भेदोऽस्तु । न च तस्यातिरिक्तभेदग्रहाधीनग्रहत्वेन भेदप्रतीतिव्यवहारविषयत्वानुपपत्तिः, परस्परविरहरूपत्वे तद्व्याप्यत्वरूपविरुद्धधर्मवत्त्वरूपस्य वैलक्षण्यस्यातिरिक्तभेदनियतत्वेऽपि तद्ग्रहाधीनग्रहत्वे प्रमाणाभावात् । न गव्यश्वत्वाभावग्रहेऽश्वभेदग्रहोऽपि कारणम्, येन तथा स्यात् । वैलक्षण्यमेव भेद इति वदन्तं प्रति तस्य भेदग्रहाधीनग्रहत्वादित्युक्तेरेवायोगाच्च । न च भेदाभावे विरुद्धधर्मवत्त्वमपि न स्यादित्यावश्यकत्वात् । तदतिरिक्त एव भेद इति वाच्यम् । आपाद्यापादकयोरभेदापातात्, प्रत्युत भेदग्रहस्य धर्मिप्रतियोगितावच्छेदकज्ञानसाध्यत्वेन वैपरीत्यापत्तेश्च । न चाहमर्थातिरिक्तस्य जीवस्य ब्रह्मविलक्षणत्वे मानाभावः,

अहमर्थस्यैव जीवतया तत्र किञ्चिज्ज्ञत्वादिग्राहकप्रत्यक्षादेरेव प्रमाणत्वात्, यथा चाहमर्थो नान्तःकरणविशिष्टस्तथोक्तमधस्तात् ॥

अन्योन्याभावो वा भेदोऽस्तु । न च तत्प्रतियोगिप्रमाणयोरसम्भवः, घटादेः प्रतियोगिनः प्रत्यक्षादेः प्रमाणस्य च सत्त्वात्, न चाभेदविरोधित्वेन प्रतीयमानस्य भेदस्य घटादिप्रतियोगित्वानुपपत्तिः । पटः घटो नेति घटप्रतियोगिकत्वतदभेदविरोधित्वयोरुभयोरप्यनुभवेन तदुभयोपपत्तेः । घटः पट इति प्रतीताभेदस्यैव प्रतियोगित्वमनुभूयते, न घटस्येति चेन्न ॥ भूतले घट इति प्रतीतौ संसर्गस्यैव संसर्गाभावप्रतियोगित्वापत्त्या घटादेस्तत्प्रतियोगित्वासिद्ध्यापातात् । 'नेह नाने'ति श्रुत्या प्रपञ्चमिथ्यात्वासिद्धिप्रसङ्गाच्च । यदि च संसर्गितयारोप्यस्य घटादेरेव प्रतियोगित्वं, न संसर्गस्य, तर्ह्यभिन्नतयाऽरोप्यस्य घटस्यैव प्रतियोगित्वं, नाभेदस्येति समम्, अस्तु वा अभेद एव तत्प्रतियोगि, तथापि न नो हानिः, अभेदस्यापि घटस्वरूपत्वात् । न चैवं घटो घटाभिन्न इति तद्धर्मत्वानुभवविरोधः प्रमेयत्वं प्रमेयं, घटः प्रतियोगी घटात्यन्ताभावे घटो न, मिथ्यात्वं मिथ्येत्यादिवदुपपत्तेः । न च तदनुभवस्य स्वरूपमात्रं विषयः न तद्धर्मत्वमपीति वाच्यम् । अभेदानुभवेऽपि साम्यात् । न चैवं घटवति भूतले तद्भेदानुपपत्तिः तस्य भेदविरोधित्वादिति वाच्यम् । न ह्यन्योन्याभावस्याभेद[1]सामानाधिकरण्यं विरुद्धं किन्तु तत्स्वरूपवृत्तित्वं, तथैवानुभवात् ॥

न चैवं भेदस्य प्रतियोगिसामानाधिकरण्याङ्गीकारेऽभावमर्यादातिलङ्घनप्रसङ्गः, तस्य प्रतियोग्यसमानाधिकरणस्वभावत्वादिति वाच्यम् । संयोगाभाववत्प्रागभावादिव त्वदभिमतप्रपञ्चमिथ्यात्वघटकाभाववच्च प्रतियोगिसामानाधिकरण्येऽप्यभावमर्यादानतिलङ्घनोपपत्तेः । न च प्रागभावादेरेकावच्छेदेन न प्रतियोगिसामानाधिकरण्यं, मिथ्यात्वघटकाभावस्यापि न स्वतुल्यसत्त्वप्रतियोगिसामानाधिकरण्यन्, तथापि एकावच्छेदेन स्वतुल्यसत्त्वप्रतियोग्यसामानाधिकरण्यमेवाभावस्य स्वभाव इति नोक्तदोष इति वाच्यम्, लाघवेन प्रतियोग्यसामानाधिकरण्यस्यैव अभावस्वभावतया उक्तदोषानिस्तारात् । यदि च प्रतियोगिसमानाधिकरणेऽप्यभावत्वानुभवादेवं कल्प्यते, तदा प्रकृतेऽपि दीयतां दृष्टिः ॥

यद्वा— अभावस्य प्रतियोगिसामानाधिकरण्यमात्रं न विरुद्धम्, घटवत्यपि भूतले सम्बन्धान्तरेण तदभावानुभवात् । किन्तु आरोप्यसम्बन्धेन प्रतियोगिसामानाधिकरण्यं अन्योन्याभावे च तादात्म्यमेव आरोप्यसम्बन्ध इति न भेदस्य प्रतियोगिसामानाधिकरण्यानुपपत्तिः । न च तादात्म्यं स्वरूपमेव, नातिरिक्तं, मानाभावात्, स्वरूपञ्च संसर्गः तस्यैवारोप्यत्वादिति वाच्यम्, घटत्वस्यैव तादात्म्यरूपतया

---

१. स्वरूप ।

स्वरूपत्वासिद्धेः, ष्यञः प्रवृत्तिनिमित्तभावा[1]र्थकत्वाच्च । न च व्यक्तिभिन्नस्य घटत्वादेर्घटादितादात्म्यरूपत्वानुपपत्तिः, तद्भिन्नस्य तदात्मकत्वानुपपत्तेरिति वाच्यम्, तद्भिन्नस्य तत्स्वरूपापत्तिर्विरुद्धा, न तद्वृत्तिधर्मत्वमपि तादात्म्यं च तद्वृत्तिधर्म इत्युक्तम् ॥

न च घटत्वादिरूपतादात्म्यस्य संसर्गत्वे प्रमाणाभावः, भूतलं घट इत्यारोपे सत्यपि तस्य प्रकारतयाऽसंसर्गत्वादिति वाच्यम् । घटो रूपी[2] समवायवांश्चेत्यादाविव संसर्गस्यापि प्रकारत्वोपपत्तेः । एतेन तादात्म्यं भेदप्रतियोगीति चेदित्यादि, न ह्यन्योन्याभावेऽन्यप्रतियोगीत्यन्तं निरस्तं वेदितव्यम् । भेदे तादात्म्यप्रतियोगित्वस्य घटत्वाद्यतिरिक्ततादात्म्यस्य चानभ्युपगमात् ॥

यदपि घटत्वात्यन्ताभाव एव भेद इति मतान्तरमुपन्यस्य तत्र दूषणमुक्तं, तस्य घटाप्रतियोगिकत्वेन तद्भेदत्वानुपपत्तेः । तस्यैव स्वाभावानधिकरणघटभेदानाधारतया घटत्वाधारत्वप्रसङ्गाच्च । अभावस्येव भावस्यापि विरुद्धत्वेन स्वाभावानधिकरणत्वात् । न च विरुद्धयोरैकाधिकरण्यमेव विरुद्धम् । न त्वाधाराधेयत्वमिति वाच्यम् । अभावे तदभावस्यापि क्लृप्तत्वात् । किञ्च अभावाधिकरणत्वयोग्यस्य भूतलस्य घटाधारतादशायां तदभावानाधारत्वं तदनधिकरणत्वयोग्यघटाधारत्वप्रयुक्तमेव । न चैवं घटे घटो नास्तीति प्रतीतिर्न स्यादिति वाच्यम् । अभाव इव तद्बुद्धेराधारत्वांशेऽप्रमात्वात् । घटबुद्धिविषये घटत्वाधिकरणे तदभावविषयतया अभावान्तरविषयतया वा प्रतीत्युपपत्तेश्च । भूतले घटो नास्तीति बुद्धिस्तु बाधकाभावाद्घटाभावविषया । न चैवं तत्र घटसत्त्वप्रसङ्गः । घटाभावानधिकरणाभाव इव तत्रापि तदभावाभावेऽपि तदनधिकरणत्वोपपत्तेः । उभयाधिकरणत्वयोग्य एव अन्यतराभावेऽन्यतरविधिनियमात् । अपि च घटत्वमिह नास्ति नायं घट इति प्रतीत्योरवैषम्यप्रसङ्गः । किञ्च घटत्वात्यन्ताभावः पटाधिकरणकोऽपि न पटधर्मिकघटतादात्म्यविरोधीति कथं तस्य तद्भेदत्वं स्यात् ? तदुभयनिरूपिताभेदविरोधिन एव तद्भेदत्वात् । तदभेदश्च तर्कितः परमते । अतो वृक्षस्याग्रत्वाभाव इव तदधिकरणाभेदेऽपि घटत्वाभावोऽप्युपपन्न इति न स भेदः तर्किताभेदविरोधीति ॥

तदपि न घटाप्रतियोगिकस्यापि घटत्वात्यन्ताभावस्य घटभेदप्रतीतिव्यवहारविषयत्वे दोषाभावात् । घटत्वात्यन्ताभाव एव घटभेदप्रतीतिविषय इति वदता तस्य घटप्रतियोगिकत्वानङ्गीकाराच्च । न चैवं घटे प्रतियोगित्वानुभवविरोधः । न हि घटमात्रे प्रतियोगित्वमनुभूयते । किन्तु घटत्वविशिष्टे । तथाच सविशेषणे हीति न्यायात् घटत्वविषय एव अनुभवोऽस्तु । अतिरिक्तभेदविषयत्वे गौरवात् ।

---

१. भानार्थक.... । २. रूप ।

न च घटत्वस्यापि स्वाभावानधिकरणतया घटाभेदापत्तिः । घटभेदानधिकरणत्वस्य तुल्यत्वादिति वाच्यम् । प्रतियोगितदभावयोरेकस्याभावेऽन्यस्य सत्त्वनियमेनाभावानधिकरणत्वासिद्धेः । न चात्यन्ताभावे उभयानधिकरणत्वमपि क्लृप्तमिति वाच्यम् । घटात्यन्ताभावे घटो नास्तीत्यबाधितप्रतीत्या स्वस्यापि स्वाधिकरणत्वेन तदसम्प्रतिपत्तेः । न चैवमात्माश्रयः सिद्धविषयत्वेनास्यादोषत्वात् ॥

एतेनाभावाधिकरणत्वयोग्यभूतलस्य घटाधारतादशायां तदभावानाधारत्वं तदनधिकरणत्वयोग्यघटाधारत्वप्रयुक्तमेव । अन्यथा घटसत्त्वदशायामपि तत्र तदभावापत्तेः । तथाच कथमभावस्य प्रतियोगिवृत्तित्वमिति निरस्तम् । न ह्यभावाधिकरणतायां भूतलत्वमवच्छेदकम् । तस्य प्रतियोगिमत्यपि सत्त्वेनातिप्रसक्तत्वात् । किन्तु प्रतियोगिसंसर्गकालान्यकालीनत्वविशिष्टम् । एवञ्च घटाधारतादशायां अयोग्यत्वादेवास्य तदनाधारत्वोपपत्तौ न तदर्थम् । प्रतियोगिनस्तदनधिकरणत्वयोग्यत्वं स्वीकार्यम् । अस्तु वा भूतलत्वेनैव तदाधारत्वयोग्यता, तथापि न प्रतियोगिनः तदनधिकरणत्वयोग्यत्वं स्वीकार्यम् । न चैवं घटसत्त्वदशायामपि तदभावापत्तिः । योग्यतायाः कादाचित्कफलसम्बन्धेऽप्युपपत्त्या आपादकत्वाभावाधिकरणत्वयोग्यभूतलसम्बन्धेन प्रतियोगिनः तदधिकरणत्वयोग्यत्वापाताच्च । न च प्रतियोगिनः तदधिकरणत्वयोग्यत्वमपि घटे घटो नास्तीति अबाधितप्रतीत्या तदधिकरणत्वस्यैव सिद्धेः । न च घटस्य तदादाधारत्वांशे भ्रमः घटाभावस्य स्वाधारत्वांश एवेति वाच्यम् । बाधकाभावाद्दृष्टान्तासम्प्रतिपत्तेश्च । भूतले घटो नास्तीत्यत्रापि भूतलस्य तदाधारत्वांशे भ्रमत्वापाताच्च । न च प्रतियोग्यवृत्तित्वस्यान्योन्याभावे क्लृप्तत्वादिहापि तथेति वाच्यम् । तद्वदेव प्रतियोगिसादेश्याद्यापत्तेः ॥

एतेन घटे घटो नास्तीति प्रतीतिः घटबुद्धिविषयघटत्वरूपाधिकरणे घटाभावविषयतया घटनिरूपितसम्बन्धाभावविषयत्वेनैवोपपत्तेः । अतः न प्रतियोगिनोऽभावाधिकरणत्वसिद्धिरिति निरस्तम् । भूतले घटो नास्तीत्यत्रापि संसर्गाभावविषयत्वापाताच्च । बाधकाभावस्योभयत्र तुल्यत्वात् । एतेन उभयाधिकरणत्वयोग्य एवान्यतराभावेऽन्यतरनियमविधिरित्यपास्तम् । प्रतियोगितदभावोभयनिषेधस्य व्याहतत्वेनासम्भवात् । उभयाधिकरणत्वयोग्येत्यस्य गौरवेण व्यर्थत्वाच्च । एतेन प्रतियोगिसत्त्वं नाभावविरोधि किन्तु निरूपकत्वमात्रं लाघवात् । प्रतियोगिवत्प्रतियोगितावच्छेदकमपि अभावनिरूपकमिति न तस्मिन्नभाववृत्तिः सम्भावयितुं शक्यते । एवमभावसत्त्वमपि न प्रतियोगिसत्त्वविरोधि, किन्तु लाघवान्निरूप्यसत्त्वमात्रम् । अभाववदभावत्वमपि निरूप्यमेवेति नाभावे प्रतियोगिसत्त्वप्रसक्तिरपीत्येतदपास्तम् । न हि प्रतियोगितावच्छेदकमेव अभावनिरूपकमिति नियमः । किन्तु फलीभूताभावज्ञाने प्रतियोगिदिशि यत्प्रकारतया भासते तत्सर्वं एवञ्च घटत्वं घटातिरिक्तवृत्तिद्रव्यत्वं च पृथुबुध्नोदराकारवत्पदार्थमात्रवृत्तीति भ्रमदशायां द्रव्यमिह नास्तीति प्रतीयमानघटाभावस्य भूतलादि-

वृत्तित्वाभावप्रसङ्गेन प्रतियोगिसत्त्वमेवाभावसत्त्वविरोधीत्यकामेनापि स्वीकार्यमिति कथं प्रतियोगिनः स्वाभावानाधारत्वम् । एतेन घटत्वाभाव एव घटभेदश्चेत् घटत्वमिह नास्ति नायं घट इति प्रतीत्योरवैषम्यप्रसङ्ग इति निरस्तम् । नायं घटः घटपटयोरभेदो नास्तीति प्रतीत्योरवैषम्यप्रसङ्गेन तवापि भेदस्याभेदाभावरूपत्वं न स्यादिति साम्यात् । यदि च नायं घट इति प्रतीत्यनन्तरं अनयोरभेदो नास्तीति विवरणादवैषम्यमिष्टम्, तदा भेदस्य घटत्वात्यन्ताभावरूपत्वेऽपि तुल्यम् । अभेदस्य प्रतियोगिवृत्त्यसाधारणधर्मरूपतया तद्विवरणस्यैवैतद्विवरणरूपत्वात् ॥

यदपि किञ्च घटत्वाभावः घटाधिकरणेऽपीत्यादि तदपि न, अव्याप्यवृत्तित्वेन धर्मिग्राहकमानसिद्धयोः संयोगतदभावयोः स्वाश्रयाभेदाविरोधित्वेऽपि धर्मिग्राहकमानेन व्याप्यवृत्तितया सिद्धस्य घटत्वाभावस्य तर्कितघटपटाभेदविरोधित्वेनोक्तदोषाप्रसरात् । वस्तुतस्तु घटत्वाभावो न घटभेदः अयं घट इति ज्ञानानन्तरं पटादौ नायं घट इति तद्भेदाननुभवप्रसङ्गात् । निष्प्रकारकप्रतियोगिज्ञानस्याकारणत्वेन घटत्वाभावप्रतीत्यसम्भवात् इति ॥

यदपि किञ्च भूतलं घटो नेति धियः समवायसम्बन्धेनाभावो विषयोऽस्तु इति क्वान्योन्याभावः । येन सम्बन्धेन यत्प्रतियोगी यत्र वर्तते तदतिरिक्तसम्बन्धारोप्यकतदभावस्यैव तद्भेदप्रतीतिविषयत्वादिति तदपि न, उक्ताभावस्य घटेऽपि सत्त्वेन भेदानुभवप्रसङ्गात् । नायं घटः घटो नास्तीति विलक्षणप्रतीत्योरेकसंसर्गाभावविषयत्वासम्भवाच्च । न च तव भूतलघटसंसर्गवैरूप्येण विना नञर्थांशे कियतोऽपि वैलक्षण्यस्याभावात् । तदपि न स्यात्, उभयत्र भूतलस्य घटाभाववत्त्वं प्रतीयत इति अभ्युपगमादिति वाच्यम् । अभेदसंसर्गस्योक्ततया वैलक्षण्योपपत्तेः । नञर्थेऽप्यभेदविरोधित्वानुभवेन तद्वैलक्षण्येनापि प्रतीतिवैलक्षण्योपपत्तेश्च । यथा चाभेदात्यन्ताभाव एव न भेदस्तथोक्तमधस्तात् ॥

एतेन न च अन्योन्याभाववत्त्वं प्रतीयत इति वैलक्षण्यमिति वाच्यम् । इदमिदं नेति प्रतीत्यभावे अन्योन्याभावत्ववैशिष्ट्यस्याप्रतीतेः तस्य नञर्थत्वाभावात् । इदमिदं नेति प्रतीतिविषयस्य एतौ भिन्नावेतयोरभेदो नास्तीति विवेचनात् । न च तयोरप्यन्योन्याभाववत्त्वं प्रतीयत इति वाच्यम् । विभक्ताविति प्रतीतिवद्भिन्नाविति प्रतीतेरुभयाश्रितैकभेदविषयत्वेन त्वदभिमताविषयत्वात् । किञ्च भेदप्रतीत्या विदारणरूपोऽभेदाभावो विषयीक्रियते । न त्वदभिमतघटाभावः । अतो नेदमिदमिति प्रतीतेः तव मते वैलक्षण्यं न सिद्ध्यतीति परास्तम् । संसर्गनञर्थवैलक्षण्ययोरुक्तत्वात् । इदमिदं नेति प्रतीत्या अन्योन्याभाववत्त्वस्य विषयीकरणाच्च । न च तत्प्रतीतिविषयस्यैतयोरभेदो नास्तीति विवेचनान्नान्योन्याभाववत्त्वं विषय इति वाच्यम् । बुद्ध्यारोहाय विवेचनस्य व्याप्यधर्मोपन्यासपरत्वात् । अन्यथा अनुभवसिद्धप्रतीतिवैलक्षण्यानिर्वाहात् । भिन्नाविति प्रतीत्यापि भेदसिद्धेश्च । न च विभक्ताविति

प्रतीतिवदुभयाश्रितैकभेदविषयतया न त्वदभिमतभेदविषयत्वं तस्या इति वाच्यम् । इदमस्माद्भिन्नमित्येकत्रापि पर्याप्यवृत्तितानुभवेनैकस्योभयाश्रितत्वासिद्धेः । परस्परप्रतियोगिकभेदस्यैव परस्परवृत्तित्वानुभवेन तथाविधप्रतीत्युपपत्तेश्च । विभागादेरपि प्रत्येकं परिसमाप्ततया दृष्टान्तासम्प्रतिपत्तेश्च भेदस्य प्रतियोगिवृत्तित्वे स्वात्मविदारणप्रसङ्ग इव विभागादेरुभयवृत्तित्वे बाधकाभावाच्च ।

यदपि किञ्चेत्यादि तदपि न । अभेदविरोधित्वमात्रस्यानुभवेऽपि तदभावत्वासिद्धेः ॥ न च विरोधित्वमेव प्रतियोगित्वं सम्बन्धान्तरारोप्यकाभावप्रतियोगिन्यसत्त्वात् । न च आरोप्यसम्बन्धेन विरोधित्वं तत्राप्यस्तीति वाच्यम् । अत्राप्यभेदस्यैवारोप्यसम्बन्धतया तेन सम्बन्धेन घटस्यापि भेदविरोधित्वात् । किञ्चेदमिदं नेति प्रतीतेरन्योन्याभाव एव विषयः । न च अतिरिक्तान्योन्याभावो दुर्वचः । इदमिह न इदमिदं नेति प्रतीतिव्यवहारयोर्वैलक्षण्यस्य सर्वानुभवसिद्धत्वेन विषयवैलक्षण्यं विना तन्निर्वाहायोगेन तस्य इक्षुक्षीरादिमाधुर्यवद्विशिष्य दुर्वचत्वेऽप्यभ्युपेयत्वात् ॥

निर्वचनाभावस्य पुरुषाशक्तिप्रयुक्तत्वेन तस्य पुरुषदोषत्वेऽपि सर्वानुभवसिद्धार्थपलापासमर्थत्वात् । अन्यथा तत्तद्विशेषार्थिनां तत्तदनुभवानन्तरं निष्कम्पप्रवृत्त्यभावप्रसङ्गात् । निर्वचनासामर्थ्येनार्थव्यतिरेकस्यानिश्चितत्वात् । न हि निर्वचनव्यतिरेकमात्रेण मिथ्यात्वसिद्धिः । ब्रह्मणोऽपि मिथ्यात्वप्रसङ्गात् । तस्यापि खण्डनयुक्त्या जगत्कारणत्वादिखण्डनमुखेन दुर्वचनत्वात् । न हि कस्यापि धर्मस्वरूपस्य खण्डनं धर्मखण्डनं विना सम्भवति, तटस्थलक्षणखण्डनसम्भवेऽपि स्वरूपलक्षणखण्डनाभावेन ब्रह्मणः सच्चिदानन्दरूपत्वे च ब्रह्मातिरिक्तस्यापि तन्न्यायेन प्रमाणसिद्धसद्रूपत्वाद्युपपत्तेः । किञ्चान्योन्याभावत्वं अभावमात्रे अभावत्ववत् भावमात्रे भावत्ववत् संसर्गाभावत्व-प्रागभावत्व-प्रध्वंसाभावत्ववच्च अखण्डोपाधिरेव । न च तत्र मानाभावः । भूतले घटो न, चत्वरे घटो न इत्याद्यनुगतप्रतीत्या घटाभावे अभावत्ववत् भूतलं घटो न, स्तम्भादिर्घटो न इत्याद्यनुगतप्रीत्या अन्योन्याभावत्वशब्दितस्यानुगतस्य धर्मस्य सिद्धौ लाघवेन तस्याखण्डत्वसिद्ध्युपपत्तेः । घटपटादिषु पृथुबुध्नोदराकारत्वादिसमनियतधर्मसत्त्वेऽपि घटत्वादिवत् अन्योन्याभावे समनियतधर्मान्तरसत्त्वेऽपि अन्योन्याभावत्वस्याखण्डधर्मत्वानपायोपपत्तेः ॥

न चैवमतिरिक्तजात्यनङ्गीकारप्रसङ्गः । अखण्डोपाधिनैव तत्र तत्र तत्तत्प्रतीतिव्यवहारोपपत्तेरिति वाच्यम् । अभावेष्वभावत्वरूपाखण्डधर्मस्वीकारेऽपि ब्राह्मण्यादि जातिवदन्योन्याभावेऽन्योन्याभावत्वरूपाखण्डधर्मस्वीकारेऽपि घटादौ घटत्वादिजातिसिद्ध्यवैकल्योपपत्तेः । न हि गुणकर्मादिकमखण्डमित्येतावता ब्राह्मण्यादिजात्यपलापो भवति ततोऽस्तु एतावान् विशेषः । जातिवद्गुणकर्मणोरखण्डत्वेऽपि गुणकर्मणी अननुगते अनित्ये च जातिपदार्थर्थस्त्वनुगतो नित्यश्चेति । किञ्च विलक्षण-

प्रतीतिव्यवहारयोः सत्त्वेऽपि यदि विषयभेदो न स्यात् अत्यन्ताभावेनैव तत्प्रतीतिव्यवहारनिर्वाहश्च क्रियते, तदा प्रौढप्रकाशयावत्तेजःसंसर्गाभावसमनियतोऽभावरूपोऽन्धकारपदार्थोऽपि तव न स्यात्। तत्प्रतीतिव्यवहारयोरपि तादृशाभावालम्बनत्वेन निर्वाहोऽपपत्तेः। अपि च प्रपञ्चमिथ्यात्ववादिनस्तव मिथ्यात्वशरीरघटकतया प्रविष्टेन ब्रह्मस्वरूपरूपेणेवाभावेन सर्वाभावप्रतीतिव्यवहारोपपत्तावनुपलब्धि-प्रमाणका[१]तिरिक्तघटाद्यभावास्वीकारप्रसङ्गः। एकस्याप्यज्ञानस्य पृथुबुध्नोदराकाराऽतानवितानात्मक-रूपव्यक्तिविशेषसम्बन्धेन घटोऽयं पटोऽयमित्यादिविलक्षणप्रतीतिव्यवहारविषयत्ववदेकस्यैव ब्रह्म-स्वरूपरूपाभावस्य घटपटादिरूपप्रतियोगिविशेषसम्बन्धेन भूतले घटाभावश्चत्वरे घटाभावः भूतले पटो नास्ति चत्वरे पटाभावः भूतले घटो न भूतले पटो नेत्यादिविलक्षणप्रतीतिव्यवहारविषयत्वोपपत्तेश्च।

अपि चैवं जडे त्वद्रीत्या क्लृप्तेन ज्ञानाभावेनैव चैतन्येऽपि नास्ति, प्रकाशते इति विलक्षण-प्रतीतिव्यवहारोपपत्तेः। तत्र तदभावरूपाज्ञानस्वीकारोऽपि न स्यात्। न चैवं सादृश्यादिरप्यखण्डधर्मः स्यात् विलक्षणप्रतीतिव्यवहारानुसारादिति वाच्यम्। केतकगन्धसदृशः सर्वगन्ध इति अबाधितप्रतीति-व्यवहारनिर्वाहाय तस्याखण्डस्यावश्याङ्गीकार्यत्वेनेष्टापादनात्। तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वादि-रूपस्य तस्योपाधिरूपस्य सत्त्वेऽपि पृथुबुध्नोदराकारत्वेन घटत्वस्येव तेनाखण्डसादृश्यव्यक्त्यभ्युपगमेन तस्य तदभ्युपगमाविरोधित्वात्। एतेन नेत्याकारप्रतीतेरभावत्वान्योन्याभावत्वरूपधर्मद्वयवैशिष्ट्या-विषयत्वेन तस्याभावविषयत्वे प्रमाणाभावाच्च। न हि तदभावत्वसाधकमिदमिदं नेति प्रतीतिव्यतिरिक्तं किञ्चिदस्ति। भेदान्योन्याभावशब्दयोः पर्यायत्वेन भेदबुद्धेरपि अखण्डविषयतया तदसाधकत्वादिति निरस्तम्। नेति नञ्मात्रजन्यप्रतीतेरभावत्वमात्रवैशिष्ट्यावगाहित्वेऽपि भूतले घटो नेति प्रात्यक्षिकप्रतीतेः संसर्गाभावत्वविषयत्ववदिदमिदं नेति प्रात्यक्षिकप्रतीतेरन्योन्याभावशब्दिताभाववृत्त्यखण्डधर्मविषय-त्वसम्भवात्। न हि वयं नेति प्रतीतिमात्रस्याभावत्वान्योन्याभावत्वरूपधर्मद्वयवैशिष्ट्यविषयत्वमभ्यु-पगच्छामः। येनानुभवानुसार्यस्मदभ्युपगमो न स्यात्। अन्यथा नेति प्रतीत्या प्रतीयमानस्याभावस्य संसर्गाभावत्वमत्यन्ताभावत्वं वा न सिद्ध्येत्। तवाभावत्वस्येव संसर्गाभावत्वस्यात्यन्ताभावत्वस्य चाखण्डधर्मत्वाभावात्। अखण्डधर्मत्वेऽपि संसर्गाभावान्योन्याभावसाधारणाभावत्वमात्रस्य नञ्शब्द-प्रवृत्तिनिमित्तत्वेन तस्य तन्मात्रप्रकारकप्रतीतिजनकत्वेन संसर्गाभावत्वात्यन्ताभावत्वान्योन्याभावत्व-प्रकारकप्रतीत्यजनकत्वेन त्वयाऽपि तत्सिद्धेः। प्रत्यक्षबलेनैव स्वीकार्यत्वात्। न च संसर्गाभावत्वा-दिकमेव नञ्पदप्रवृत्तिनिमित्तं लाघवेनाभावत्वस्यैव तत्पदप्रवृत्तिनिमित्तत्वात्। प्रतीतेरेकाकारत्वेऽपि न जानामीति प्रतीतेर्जडे ज्ञानाभावविषयत्ववच्चैतन्ये भावरूपाज्ञानविषयत्ववद्याग इष्टसाधनमिति

१. प्रमाणा...।

प्रतीतेरिष्टसाधनाभेदविषयत्ववत् इष्टसाधनत्वसंसर्गविषयत्वाच्च नेति प्रतीतेरप्यभावत्वसंसर्गाभावत्वान्योन्याभावत्वात्यन्ताभावत्वरूपधर्मवैशिष्ट्यविषयत्वोपपत्तेश्च ॥

किञ्च प्रतियोगिविशेषानुल्लेखिनी नेत्याकारकप्रतीतिरेवानुभवपराहता । इदमिह न इदमिदं नेति प्रतीत्योश्चैकाकारत्वमसिद्धमिति यत्किञ्चिदेतत् भूतले घटो न चत्वरे घटाभावो नेति प्रतीत्योर्नञर्थांशे एकाकारत्वेऽपि भावाभावोभयविषयत्ववदिदमिंह न इदमिदं नेति प्रतीत्योरपि नञर्थांशे एकाकारत्वेऽपि संसर्गाभावत्वान्योन्याभावत्वविशिष्टाभावद्वयविषयत्वोपपत्तेश्च । न चेदमिदं नेति प्रतीतेर्भेदत्वान्योन्याभावत्वशब्दिताखण्डधर्मवैशिष्ट्यविषयत्वे तदाश्रयस्य सप्तमपदार्थत्वरूपाभावत्वसिद्धिरेव न स्यादिति वाच्यम् । अयं घट इति प्रत्यक्षे दोषाभावदशायां सत्त्वद्रव्यत्वपृथिवीत्ववत् इदमिदं नेति प्रत्यक्षे अन्योन्याभावत्वस्येव दोषाभावदशायां योग्यत्वेनाभावत्वरूपाखण्डधर्मभानोपपत्तेः । संसर्गाभावत्वादिकमेव नञ्पदप्रवृत्तिनिमित्तमित्यङ्गीकुर्वतापि नञ्पदवाचकत्वग्रहार्थं प्रत्यक्षत एव तदुपस्थितेरेव अवश्यमभ्युपेयत्वाच्च । अन्योन्याभावः संसर्गाभावविशेष इति वदता त्वयापि तदभावत्वसिद्धेः प्रत्यक्षेणोपगन्तव्यत्वाच्च । एवमिदमिदं नेति प्रतीत्या इदमिह नेति प्रतीतिविषयतो विलक्षणविषये सिद्धे तत्रैव भेदान्योन्याभावशब्दयोरनादिवृद्धव्यवहारेण तुल्यार्थत्वप्रसिद्धेस्ताभ्यामपि तत्प्रतीतिजननोपपत्तेश्च । अन्योन्याभावशब्दस्य 'यू स्त्र्याख्यौ नदी'तिवत् परिभाषात्वेऽपि भेदशब्दवत् तस्याभावविशेषप्रत्यायकत्वमप्रत्यूहमिति किमनुपपन्नम् ॥

अपि चैवं प्रपञ्चनिवृत्तिः संसारापादकाविद्यानिवृत्तिश्चात्यन्ताभावातिरिक्ता न सिद्ध्येत् प्रागभाववत् । न चेष्टापत्तिः, अत्यन्ताभावस्यासाध्यत्वेन निवृत्तेरपि तद्रूपत्वे श्रवणादिरूपपुरुषप्रयत्नासाध्यत्वेन प्रपञ्चनिवृत्तेरविद्यानिवृत्तेश्चापुरुषार्थत्वप्रसङ्गात् । श्रवणाद्युपायानुसरणं च विफलं स्यात् । आद्यसमयसम्बन्धित्वेनात्यन्ताभावस्यैव पराभिमतप्रागभावकार्यकारित्ववत् तस्यैव चरमसमयसम्बन्धित्वेन पराभिमतध्वंसकार्यकारित्वोपपत्तेरतिरिक्तध्वंसापरनामकपराभिमतनिवृत्तेरनभ्युपेयत्वात् । समयविशेषसंसर्गात्यन्ताभावेनैव प्रागभावप्रध्वंसाभावाङ्गीकारप्रयोजनसिद्धेः । कृतमतिरिक्तप्रागभावप्रध्वंसाभावाङ्गीकारेणेति वदता त्वया तन्निर्वाहाय काले आद्यसमयत्व चरमसमयत्वरूपाखण्डोपाध्योरवश्याभ्युपेयत्वाच्च । प्रागभावमनभ्युपगच्छता तदवच्छिन्नसमयत्वरूपस्य समयाद्यत्वस्यानभ्युपेयत्वात् ॥

अपि चैवमतिरिक्तात्यन्ताभावोऽपि न स्यात् । न चैवमभावप्रतीतिव्यवहारानुपपत्तिः । आवश्यकसमयविशेषणेनैव तदुपपत्तेः । समयविशेषे संसर्गत्ववत् फलबलेनाभावत्वस्यापि कल्पनोपपत्तेः । अपि चैवं समयविशेषेणैव प्रागभावस्यान्यथासिद्धौ तेनैव घटादिकार्यनिर्वाहोपपत्तेः, दण्डादिरपि घटादिकारणं न स्यात् । तदन्वयव्यतिरेकयोस्तादृशकालविशेषे कारणतावच्छेदकग्रहोपयुक्तत्वेनान्यथासिद्धेः

सुवचत्वात् । तस्यैकस्यैव कारणत्वाङ्गीकारे लाघवाच्च । वस्तुतस्त्वत्यन्ताभावस्यानादिनित्यत्वमभ्युपगच्छता त्वयापि प्रागभावप्रध्वंसाभावाववश्यमङ्गीकार्यौ, ताभ्यां विना अनादिनित्यत्वस्यैव दुर्वचनत्वात् । अनादित्वं हि प्रागभावाप्रतियोगित्वं नित्यत्वञ्च ध्वंसाप्रतियोगित्वमिति । किञ्चाद्यसमयेनैव प्रागभावकार्यनिर्वाहात् । अतिरिक्तप्रागभावो नाभ्युपेय इति न तत्समयोत्पन्नानेकपदार्थानामेकत्वापत्तेः । सामग्रीभेदाभावात्प्रागभावभेदस्यैव सामग्रीभेदप्रयोजकत्वात् ॥

एवमेव पाकघटितैकसामग्रीजन्यरूपरसगन्धरूपकार्यभेदोऽपि प्रागभावे प्रमाणम् । न हि तत्तत्प्रागभावभेदं विना सामग्रीभेदः सम्भवति । तदसम्भवे च कार्यभेद आकस्मिक एव स्यात् । न च तत्तद्रूपरसाद्यारम्भकसमानाधिकरणरूपरसादिध्वंसभेदात् तत्तत्सामग्रीभेदः सम्भवति इति वाच्यम् । पूर्वरूपादिनाशोत्तरं रूपाद्युत्पत्त्योः पौर्वापर्ये प्रमाणाभावेन तन्नाशतदुत्पत्त्योर्यौगपद्ये सामग्रीभेदासिद्धेरित्यलम् । तस्मादत्यन्ताभाववत्प्रागभावप्रध्वंसाभावान्योन्याभावा अपि साधकसद्भावाद्बाधकाभावाच्चाकामेनापि स्वीकार्या इति सिद्धम् ॥

किञ्च घटत्वपटत्वादिसामान्यमज्ञानातिरिक्तं न तच्चाज्ञानमेकमेवेत्यभ्युपगच्छता कथं घटपटयोर्भेदोऽतिरिक्तो नाभ्युपेयः । न हि तेन विना घटः पटो नेति सर्वानुभवसिद्धप्रतीतिरुपपादयितुं शक्या, घटपटादिसाधारणस्याज्ञानस्य घटत्वपटत्वव्यपदेशभाजो घटमात्रवृत्तित्वाभावेन तदत्यन्ताभावमादाय भेदप्रतीत्युपपादनासम्भवात् । अपिचात्यन्ताभावान्योन्याभावयोः प्रतियोगिवृत्त्यवृत्तित्वरूपासाधारणधर्माक्रान्तत्वेन भेदो दुर्निवारः । न च तत्र मानाभावः घटे घटो नेत्यबाधितप्रतीतेर्घटो घटो नेत्यप्रतीतेश्च । न चैतावता तयोर्वैधर्म्यमेव सिद्ध्यति । न तु भेद इति वाच्यम् । भेदाभावे वैधर्म्यस्यैवानुपपत्तेः । इदमस्माद्भिन्नं तदवृत्तिधर्मवत्त्वादिति वैधर्म्येण भेदसाधनानुपपत्तेश्च । न हि तदेव साध्यं तदेव साधनमिति सम्भवति । अपि च घटत्वपटत्वादिधर्माणां घटपटाद्यसाधारणधर्मत्वं सर्वसम्प्रतिपन्नम्, तेषां तदसाधारणधर्मत्वञ्च तन्मात्रवृत्तित्वं तच्च तदितरावृत्तित्वे सति तद्वृत्तित्वरूपमेव । न हि तत् तदाश्रयभेदं विना सुनिरूपं न च घटत्वस्य घटासाधारणधर्मत्वं घटत्वात्यन्ताभाववदवृत्तित्वमेव । अतो न भेद आवश्यक इति वाच्यम् । घटत्वात्यन्ताभावस्य घटत्वनिरूपणं विना निरूपयितुमशक्यत्वेनात्माश्रयात् । न च घटत्वं घटत्वात्यन्ताभाववदवृत्तित्वव्यतिरेकेण निरूपयितुमशक्यम् । तस्मादत्यन्ताभावातिरिक्तोऽन्योन्याभावशब्दितो भेदः सर्वथा दुर्निवारः ॥

एतेन न च प्रतियोग्यधिकरणवृत्त्यभावत्वमन्योन्याभावत्वं तत्प्रतीतिविषय इति वाच्यम् । घटादिनिष्ठभूतलादिभेदबुद्धेस्तद्विषयत्वादित्यादि तर्हि तदत्यन्ताभावोऽपि तत्रास्त्येवेत्यन्तं, प्रत्यूढम् । तत्प्रतीतिविषयस्यासाधारणस्यानिरूपणात् । अत एव न च प्रतियोगिसमानाधिकरणाभाववृत्त्यभाव-

त्वव्याप्यधर्मोऽन्योन्याभावत्वमिति वाच्यम् । तस्यैवाखण्डस्य निरस्तत्वादित्यादि, तस्मान्न कथमपि तव प्रतीतिवैलक्षण्यमुपपद्यत इत्यन्तं प्रत्युक्तम् । अत्यन्ताभावस्य प्रतियोगिवृत्तित्वे प्रमाणस्योक्तत्वात् । कालादिभेदस्य कालादिवृत्तित्वे मानाभावेन प्रतियोग्यवृत्त्यभावत्वस्य तत्राप्यनपायात् । न हि कालः कालभिन्नः इति प्रतीतिरस्ति । न चैवं तस्य जगदाधारता न स्यादिति वाच्यम् । तत्र प्रमाणाभावेन तदतिरिक्तजगदाधारत्वस्यैवोपगमात् । जगदाधारताप्रयोजकसम्बन्धातिरिक्तसम्बन्धेन प्रतियोग्यवृत्त्यभावत्वमन्योन्याभावत्वमिति विवक्षितत्वाद्वा नोक्तदोषावसरः ॥

यत्तु घटाधिकरणे भूतलं घटो नेति प्रतीतेर्विलक्षणोऽभाव इत्ययुक्तम् । तस्या एव त्वन्मते घटाभाववत् भूतलमित्याकारतया अघटं भूतलमिति प्रतीतिवत् तत्रानुदयप्रसङ्गात् । प्रतियोगिवैलक्षण्यं विनाऽभावबुद्धेर्वैलक्षण्यायोगात् । ससम्बन्धिकपदार्थस्य सम्बन्धिभेदाभावे तदयोगात् । अत्यन्ताभावातिरिक्तप्रागभावादिरप्यन्योन्याभावतुल्य एवेति तन्न ॥ घटवति भूतले भूतलं घटो नेति प्रतीतेः घटाभाववद्भूतलमित्याकारत्वासिद्धेः । घटवति भूतलं घटो नेति प्रतीतेः सर्वानुभवसिद्धत्वात् । घटवति घटरहितं भूतलमिति प्रतीत्यभावेऽपि घटवति भूतले घटभिन्नत्वप्रतीतेर्दुरपह्नवत्वात् । प्रतीतिवैलक्षण्यस्यानुभवसिद्धत्वेन तन्निर्वाहाय विषयवैलक्षण्यस्यावश्याङ्गीकर्तव्यत्वात् ॥

यदपि ससम्बन्धिकपदार्थभेदस्य सम्बन्धिभेदनियतत्वात् । अभावस्यापि ससम्बन्धिकत्वेन सम्बन्धिभेदाभावे तद्भेद एव न स्यादिति, तदपि न । एकस्मिन्नेव विषये नानाज्ञानसत्त्वेन व्यभिचारात् । न हि ज्ञानं ससम्बन्धिकः पदार्थो नेत्यस्ति न चैकस्मिन् घटे नानाज्ञानानि न भवन्तीत्यस्ति एकस्यैव घटस्य प्रागभावाद्यनेकाभावसत्त्वेन व्यभिचारात् । न हि प्रागभावादिः[1] ससम्बन्धिकपदार्थो नेत्यस्ति न च प्रागभावादौ मानाभावः । श्रौतब्रह्मानाद्यनन्तत्वनिर्वाहाय तस्यावश्याभ्युपेयत्वात् । एकपाकानन्तरभाव्येकघटसमवेतरूपरसादिकार्यभेदान्यथानुपपत्तेश्च । न च ब्रह्मणोऽनादित्वमनन्तत्वञ्च सकलकार्यापेक्षया पूर्वकालसम्बन्धित्वं सकलकार्याभावसमयवृत्तित्वमिति वाच्यम् । प्रागभावं विना काले पूर्वत्वस्यैव दुर्वचत्वात् । ध्वंसातिरिक्ताभावेनानन्तत्वनिर्वाहासम्भवाच्च । न च पूर्वत्वमनन्तत्वञ्च अखण्डो धर्मः तस्य त्वयाऽनभ्युपगमात् । न चैवं ससम्बन्धिकपदार्थभेद आकस्मिकः स्यादिति वाच्यम् । तस्य सम्बन्धितावच्छेदकभेदप्रयोज्यत्वात् । न च अन्योन्यात्यन्ताभावयोर्भेदौ न स्यात्, तस्य सम्बन्धितावच्छेदकभेदाभावादिति वाच्यम् । सम्बन्धितावच्छेदकभेदशब्देन प्रतियोगितावच्छेदकभेदशब्देन च प्रकृते आरोप्यसम्बन्धभेदस्यैव विवक्षितत्वात् । अत एवात्यन्ताभावान्योन्याभावप्रतीत्योः प्रतियोगिप्रतियोगितावच्छेदकसंसर्गारोपरूपसामग्रीभेदाद्वैचित्र्यमिति वदन्ति ॥

---

१. प्रागभावादिरभावः ।

एतेन यत्त्वारोपवैचित्र्यात्तज्जन्याभावधीवैचित्र्यमिति तन्न प्रमेयभेदं विना प्रत्यक्षानुमा[1]नजन्याभावधीवद्वैलक्षण्यायोगात् । स्वतो भाववैचित्र्यं विना तस्य तज्जन्यत्वज्ञानासम्भवाच्च । अभावधीपूर्वं प्रतियोगिज्ञानादिघटिताभावधीसामग्र्यां सत्यां आरोपसद्भावे प्रमाणाभावाच्च । प्रमेयवैलक्षण्यादृते अभावधीवैलक्षण्यासम्भवेन ततस्तदसिद्धेः दोषाभावेन आरोपासम्भवाच्च जन्यारोपमात्रे दोषस्य हेतुत्वात् । अन्यथा तदप्रामाण्यस्य परतस्त्वानुपपत्तेः । न चेच्छैव दोषः, धर्मिज्ञानसाध्येच्छाया आरोपात्प्रागसम्भवाद्धर्मिज्ञानस्य च तवारोपरूपस्येच्छासाध्यत्वात् । अन्यवैशिष्ट्यज्ञानेच्छाया अन्यवैशिष्ट्यज्ञानाहेतुत्वात् न च सामान्येन भूतले घटज्ञानमस्त्विति इच्छया आरोप इति वाच्यम् । उपस्थितदेशान्तरं विहायात्रैव तदारोपे तस्यानिमित्तत्वात् । किञ्चाप्रतियोगिनो घटत्वस्यारोपो न हेतुः । घटवति न च घटारोपः, अप्रसिद्धिप्रकारत्वाभ्यां घटत्वं न संसर्ग इत्युक्तम् । इष्टसाधनत्वज्ञानं विना आरोपेच्छाया अयोगाच्च । न चैवं क्वचिदप्याहार्यारोपो न स्यादिति वाच्यम् । मनो ब्रह्मेत्यादि शास्त्रानिमित्ततदभावस्येष्टत्वात् । प्रतारकवाक्यादेरैच्छिकसंसर्गज्ञानं विनापि सम्भवादिति निरस्तम् । इदमिह न इदमिदं नेति चाक्षुषप्रत्यक्षप्रतीत्योरयं घटोऽयञ्च पट इति चाक्षुषप्रत्यक्षप्रतीत्योरिव सर्वानुभवसिद्धवैलक्षण्यस्य विषयवैचित्र्येणैवोपपादनीयत्वात् । अन्यथा घटपटविषयकतादृशप्रतीतिभ्यां घटपटयोर्भेदो न सिद्ध्येत् । कार्यवैचित्र्यस्य क्वचित्सामग्रीवैचित्र्यमात्रकल्पकत्वेन विषयवैचित्र्याकल्पकत्वेऽपि एकजातीयप्रत्यक्षवैचित्र्यस्य विषयवैचित्र्यकल्पकत्वानपायात् । तेन विना स्वात्मलाभासम्भवात् । विषयभेदस्यापि सामग्रीशरीरप्रविष्टत्वात् । स्वतोऽप्यभाववैलक्षण्यस्योक्तत्वाच्च । स्वतोऽपि प्रमेयवैलक्षण्यस्य प्रमाणप्रवृत्तिं विना दुर्ज्ञानत्वेनानन्यथासिद्धप्रतीतिवैचित्र्यस्यैव प्रमेयवैचित्र्यकल्पकत्वेनानुसरणीयत्वाच्च उक्तरीत्या विषयवैलक्षण्यस्य सिद्धौ तद्विषयकप्रत्यक्षत्वावच्छेदेन आरोपविशेषजन्यत्वग्रहसम्भवाच्च ॥

न च प्रतियोगिज्ञानादिघटिताभावधीसामग्र्यामारोपविशेषस्य प्रवेशे मानाभावः । भूतले घटो नेति प्रात्यक्षिकप्रतीतेस्तथाविधशाब्दप्रतीतेश्च विशेषाभावेन शाब्दनिषेधबुद्धेरिव प्रात्यक्षिकतद्बुद्धेरपि प्रसक्तिपूर्वकत्वावश्यम्भावेनाभावाधिकरणे प्रतियोग्यारोपस्यापि तत्प्रतीतिसामग्रीनिवेशोपपत्तेः । लाघवेन यद्विशेषयोरिति न्यायेन च प्रतियोग्युपरक्तनिषेधबुद्धित्वस्यैव तादृशारोपजन्यतावच्छेदकत्वाच्च । न च भेदप्रतीतिस्थलेऽप्रतियोगिघटत्वारोपस्याकिञ्चित्करत्वात् प्रतियोगिनश्च तत्र विद्यमानत्वेनारोपासम्भवात्तद्धेतुत्वासम्भव इति वाच्यम् । घटत्वसम्बन्धेन घटस्यैवारोपाभ्युपगमेनोक्तदोषाभावात् । यथाच प्रकारस्यापि घटत्वस्य संसर्गत्वं तथोक्तमधस्तात् ॥

---

१. प्रत्यक्षानुमानादिजन्या.. ।

न च दोषाभावादारोपासम्भवः । कारणत्वेनारोपे सिद्धे तन्निर्वाहाय दोषस्यापि कल्प्यत्वात् । न हि जात्यैव कश्चिद्दोषोऽस्ति क्वचित्कश्चिन्न दोष इत्यभ्युपगमात् । इच्छाया एव दोषत्वसम्भवाच्च । न चेच्छातः पूर्वं धर्मिज्ञानाद्यभावेन तदनुपपत्तिः भूतलघटसंसर्गज्ञानरूपसामान्यप्रत्यासत्त्या भाविज्ञानस्याप्युपस्थितिसम्भवेन तस्येष्टसाधनज्ञानसम्भवेनेच्छासम्भवात् । न च तत्प्रणाड्यां मानाभावः, आरोपहेतुत्वस्यैव मानत्वात् । तवाप्यन्नादौ ब्रह्मदृष्ट्यभावप्रसङ्गाच्च । न च तत्र वाक्यजन्यस्यान्ने ब्रह्मत्वज्ञानस्य धर्मिणः सत्त्वेन तज्ज्ञानसम्भवाद्वैषम्यमिति वाच्यम् । तथापि तस्यारोपत्वनिर्वाहायेच्छादोषजन्यत्वस्यावश्यकत्वेनास्मदुक्तप्रणाड्या त्वयाऽप्यवश्यानुसरणीयत्वात् ।

यदपि किञ्चास्य प्रतियोगिनः स्वतो न भेद इत्यादिना भेदस्य प्रतियोगिनः सकाशाद्भेदो न स्वयमेव स्वावृत्तित्वाद्भेदो भिन्न इति प्रतीत्योरवैलक्षण्यापाताच्च । स्वस्यैव स्वं प्रति विशेषणत्वविशेष्यत्वयोरयोगात् । भेदान्तरञ्चाधिकरणभेदमात्रानुपपन्नं प्रतियोगिभेदं तदवच्छेदकभेदञ्च अविनाभावभेदेऽतिप्रसङ्गात् । तथात्वे वा अबाधाविनिगमकाभ्यां पटेऽपि स स्यादिति एकस्यैकत्र भेदद्वयं स्यात् । एवं तृतीयोऽपि । अन्यथा द्वितीयस्य घटाद्भेदायोगात् । न च प्रथमस्येव द्वितीयवृत्तित्वसम्भवान्न तृतीयोऽङ्गीकार्य इति वाच्यम् । युगपत्स्वविशेषणं प्रति स्वस्य विशेषणत्वायोगात् । अन्यथैतौ प्रथमद्वितीयभेदौ घटाद्भिन्नाविति प्रतीत्ययोगात् । यदि च विशेषणत्वविशेष्यत्वयोर्विरोधेऽप्येकवृत्तित्वं तर्हि किमपराद्धं, श्रौतेन जीवब्रह्माभेदेन अयमप्यबाधाविनिगमाभ्यां प्रथमादिवत् पटादिवृत्तिः स्यादतश्चतुर्थादिरपि सकलवृत्तिः स्यादित्येकैकस्यानन्ताप्रामाणिकभेदः एवं तेषामप्यन्योन्यं तथाभेदात् धर्मिप्रतियोगिनोरपि यदि च धर्मिभूतभेदस्वरूपस्यैव भेदप्रतियोगिकभेदबुद्धिविषयत्वं तदा तत्रैव क्लृप्तत्वात् सर्वत्र स्वरूपस्यैव भेदबुद्धिविषयत्वमस्तु, किमन्योन्याभावेन ॥

न च अन्योन्याभावस्वरूपस्यैव भेदधीगोचरत्वसिद्ध्युत्तरकालीनत्वात् अस्याः कल्पनायाः कथं तदपलाप इति वाच्यम् । घटाद्भिन्नः पट इति प्रतीतिकाल एव घटपटयोर्भेदात् भेदानवगमे तं प्रति तयोर्विशेषणविशेष्यभावेन प्रतीत्ययोगात् । स्वरूपमेव तद्भेदधीगोचरत्वेन क्लृप्तमिति स्वरूपस्य भेदधीगोचरत्वकल्पनाया अन्योन्याभावस्वरूपस्य भेदबुद्धिगोचरत्वसिद्ध्युत्तरकालीनत्वासिद्धेः । अन्योन्याभावमनपेक्ष्यैवात्यन्ताभावप्रतियोगिनि घटादौ स्वरूपस्यैवाभावप्रतियोगिकाभावाभावेन भेदबुद्धिगोचरत्वेन क्लृप्तत्वाच्च । वस्तुतस्तु भेदप्रतियोगिकभेदो न घटादिर्भेदनिरूपिताभेदविरोधिन एव भेदभेदधीगोचरत्वात् । घटादेश्च तदविरोधित्वात् । किन्तु तदभेदस्यात्यन्ताभाव एव भेदप्रतियोगिकभेदधीगोचरः । न च घटादिरेव भेदाभेदात्यन्ताभावोऽस्त्विति वाच्यम् । भेदसमानाधिकरणघटादेर्भेदस्वरूपभूताभेदात्यन्ताभावत्वानुपपत्तेः । एवं घटपटभेदयोर्भेदाभावात् सर्वोऽपि भेद एक एव स्यादिति

तदपि गन्धर्वनगरनिर्माणतुल्यं भेदधर्मिकभेदस्य भेदस्वरूपत्वात् । न च स्ववृत्तित्वं[१] दोषः भेदो भिन्न इत्यबाधितानुभवेन स्वस्य स्ववृत्तिसम्भवात् । न च अभेदस्यासम्बन्धत्वं विशिष्टप्रतीतिबलादेव तस्य सम्बन्धत्वसिद्धेः । अन्यथा मेरुमन्दरयोः सम्बन्धादर्शनात् । भिन्नयोरपि सम्बन्धो न स्यात् । यदि च विशिष्टप्रतीतिस्थले सम्बन्धः स्वीक्रियते, तर्ह्यभेदस्थलेऽप्यस्तु अविशेषात् । न च भेदः भेदो भिन्न इति प्रतीत्योरवैलक्षण्यापातः, भेदमात्रविषयत्वतद्वत्त्वविषयत्वाभ्यामेव वैलक्षण्योपपत्तेः । न च भेदो भिन्न इति प्रतीत्या अभेदत्वेन भेदत्वस्याविषयीकरणात् कथं अभेदस्य सम्बन्धत्वं इति वाच्यम् । न हि भेदो भिन्न इति प्रतीत्या भेदस्य सम्बन्धत्वमभ्युपगच्छामः, किन्त्वतिरिक्तभेदाङ्गीकारे भेदानन्त्यमप्रमाणिकं स्यादिति न चैकस्यैव विशेषणत्वविशेष्यत्वयोरयोगः । विशिष्टप्रतीतिबलेन प्रमेयत्वादिवत् तयोरुपपत्तेः । न च प्रमेयत्वादिकमपि नाना, मानाभावात् ईश्वरप्रमाविषयत्वस्य एकत्वाच्च ॥

अस्तु वा तत्र भेदान्तरं न च अधिकरणभेदमात्रात् तदुपपत्तिः[२] घटाद्यभावस्य भूतलब्रह्मरूपाधिष्ठानरूपाधिकरणभेदेन भेदस्य त्वयाऽपि स्वीकारात् । प्रागभावादेरधिकरणभेदेनैव भेदाभ्युपगमाच्च । त्वयैव ग्रन्थान्तरे अधिकरणभेदेनाभावभेदे अन्यस्यैव दृष्टान्तत्वोक्तेश्च । न चैवमबाधाविनिगमनाभ्यां तस्य पटादावपि सत्त्वेनैकस्यैकत्र भेदद्वयापत्तिः । प्रागभावादेर्भूतलाद्यवृत्तित्ववदुपपत्तेः । सामान्यप्रतीतेः किञ्चिद्विशेषविषयत्वोपपत्त्या आपादकत्वाभावाच्च । न चैवं तृतीयादेरपि आपत्त्याभेदानन्त्यप्रसङ्गः । प्रथमद्वितीययोः प्रमेयत्वाभिधेयत्ववत्परस्परवृत्तित्वसम्भवेन परस्परविशेषणविशेष्यत्वोपपत्त्या च तदप्रसङ्गात् । उभयत्र विशिष्टत्वात् । न चैवं विरुद्धयोरपि जीवपरयोरभेदापत्तिः । इह विशिष्टप्रतीतिवत् तत्राभेदबोधकस्य प्रमाणस्याभावात् । न च 'तत्त्वमस्यादि'वाक्यमेव प्रमाणं तस्य भेदबुद्धिविरोधेन अभेदबोधकत्वायोगात् । प्रतिपादितश्चायमर्थः प्रागेव । एवञ्चैकस्य भेदद्वयमेवाङ्गीक्रियत इति न भेदानन्त्यम् । यदपि धर्मिभूतभेदस्वरूपस्यैव भेदबुद्धिविषयत्वमित्यादि तदपि न, अस्याः कल्पनाया अन्योन्याभावस्वरूपस्य भेदधर्मिकभेदप्रतीतिविषयत्वसिद्ध्युत्तरकालीनत्वेनोपजीव्यविरोधित्वेन तदपलापासम्भवात् । न च घटाद्भिन्नः पट इति प्रतीतिकाल एव घटपटयोर्भेदात् भेदानवगमे तं प्रति तयोर्विशेषणविशेष्यभावेन प्रतीत्ययोगात् । भेदप्रतियोगिकभेदबुद्धेर्घटपटादिस्वरूपगोचरत्वं तत्रैव क्लृप्तमित्यस्याः कल्पनाया अन्योन्याभावसिद्ध्युत्तरकालीनत्वमसिद्धमिति वाच्यम् । भेदप्रतीतिं प्रति धर्मिप्रतियोगिनोर्भेदात् भेदावगमस्य परस्पराश्रयेण कारणत्वस्यासम्भवात् । न च विशेषणविशेष्यभावेन प्रतीत्यनुपपत्तिः, भेदानवगमेऽपि तत्तत्प्रातिस्विकरूपेणोपस्थितयोः तथाभानोपपत्तेः । न च अन्योन्याभावमनपेक्ष्यापि अत्यन्ताभावात् भेदस्य प्रतियोगिस्वरूपत्वं क्लृप्तमिति सर्वत्र स्वरूपस्यैव

---

१. स्वरूपत्वं । २. अनुपपत्तिः ।

भेदबुद्धिविषयत्वं युक्तमिति वाच्यम् । तत्रापि स्वरूपस्य भेदबुद्धिविषयत्वकल्पनस्याभावप्रतियोगिका-भावाभावेनेत्येवंरूपबाधकोपस्थित्यधीनतया अन्योन्याभावज्ञानाधीनत्वानपायात् । क्वचिद्बाधकबलात् स्वरूपस्य भेदबुद्धिविषयत्वेऽपि बाधकाभावस्थले तदपलापासम्भवाच्च । अन्यथा त्वदभिमतात्यन्ता-भावोऽपि न सिद्ध्येत् । अत्यन्ताभावबुद्धेः प्रतियोगिस्वरूपविषयत्वस्य क्लृप्ततया सर्वत्र धर्मादि-स्वरूपस्यैव विषयत्वसम्भवे किमत्यन्ताभावेनेति वक्तुं शक्यत्वात् । त्वदुक्तन्यायेन भूतले घटो नास्तीति प्रतीतिकाल एव घटस्य तदभावत्वाज्ञाने अभावविरहात्मत्वरूपप्रतियोगित्वज्ञानासम्भवेन स्वरूप-विषयत्वस्य क्लृप्ततया अत्यन्ताभावसिद्ध्युपजीव्यत्वासिद्धेश्च । अत्यन्ताभावमनपेक्ष्यैव भेदात्यन्ता-भावबुद्धेः प्रतियोगितावच्छेदकारोप्यसम्बन्धावच्छिन्नप्रतियोगिस्वरूपविषयत्वस्य क्लृप्तत्वेन सर्वत्र स्वरूपस्यैव तद्बुद्धिविषयत्वसम्भवे किं संसर्गाभावेनेति वैपरीत्यापाताच्च ॥

यदपि वस्तुतस्तु भेदप्रतियोगिकभेदो न घटादिरित्यादि तदपि न, घटादेरेव तदभेदविरोधित्वात् । अन्यथा घटतत्प्रतियोगिकभेदयोरभेदापातात् । न चैवं भेदस्य घटसामानाधिकरण्यं न स्यादिति वाच्यम् । न हि सहानवस्थानमेव विरोधः । किन्तु परस्परानात्मकत्वमपि, तच्च समानाधिकरणयोरप्यस्ति । इयांस्तु विशेषः संसर्गाभावप्रतियोगिनोरुभयविधोऽपि विरोधोऽस्ति, भेदप्रतियोगिनोस्त्वेक एवेति । न चैवं घटपटयोरविरोधव्यवहारोच्छेदप्रसङ्गः, सहानवस्थानलक्षणविरोधाभावस्य तदालम्बनत्वोपपत्तेः । न हि कश्चिदपि तयोः परस्परात्मकत्वं व्यवहरति । यथा च तदभेदविरोध्यत्यन्ताभावो न तद्भेदबुद्धिगोचरः तथोक्तमधस्तात् । एतेन एवं घटपटभेदयोर्भेदाभावेनेत्येतदपास्तम् । तयोरेव परस्परभेदत्वस्योक्त-रीत्योपपत्तेः ॥

यद्यप्यन्यैरुक्तम् । अपि चायं यत्रकुत्रास्तु न तावद्भिन्न आत्माश्रयात् । नाप्यभिन्ने व्याघातात् । अथ यत्र प्रतीयते तत्रास्तीति चेत् प्रतीतेः प्रतियोगिन्यपि सत्त्वेन तत्रापि तद्भेदापातात् । अथ यत्र प्रमीयते तर्हि प्रमात्वस्यार्थसत्त्वगर्भत्वेन यत्रास्ति तत्रास्त्वित्युक्तं स्यात् । क्वास्त्वीति प्रश्ने किमुत्तरं किञ्चैवमपि प्रतियोगिन्यपि भेदापत्तिः । तत्रापि प्रतीयमानसम्बन्धस्याबाधेन प्रतीतेः प्रमात्वात् । न हि घटस्य तस्य वा स्वरूपं कश्चिद्बाधते । जायमानोऽपि वा बाधो प्रमा स्यात् । अबाधितस्वरूपे बाधकरत्वात् अविनिगमो वा ॥ ननु स्वरूपमात्रं न सम्बन्धः, येन प्रतियोगिन्यपि सा प्रमा स्यात् । किन्तु पटस्वरूपं तच्च घटे नास्तीत्यप्रमेति चेन्न, कुड्यादौ भेदज्ञानस्य भ्रमत्वापत्तेः । न पटस्वरूपमेव सम्बन्धः । किन्तु कुड्यादिस्वरूपमपि अतो नातिप्रसङ्ग इति चेत्, तर्हि भेदप्रमाविषयवैशिष्ट्यस्या-ननुगतपटादिस्वरूपत्वेन घटेऽपि यथा ज्ञानं तस्याबाधोपपत्तेः । न हि प्रतियोगिनि भेदज्ञाने सम्बन्धत्वेन पटादिस्वरूपमेव भासत इति नियन्तुं शक्यम् । येन बाधः स्यात् । न च घटातिरिक्तस्वरूपं तत्संसर्गः

अतिरेकस्योपलक्षणत्वे स एव दोषः विशेषणत्वे च न स्वरूपमेव संसर्गः घटेऽप्युक्तन्यायेन भेदप्रतीतेरबाधेन विशेषणस्य व्यर्थत्वाच्च । नाप्यन्यः सम्बन्धः । तस्यापि नियताधिकरणसंसर्गस्य स्वरूपत्वे उक्तदोषानतिवृत्तेः । न च संसर्गस्य संसर्गो भेद एव । अतो नोक्तदोष इति वाच्यम् । परस्पराश्रयेण नियम्यनियामकत्वायोगात् । यदि च तत्राप्यन्य एव संसर्गस्तदाऽनवस्थापत्तिः । ननु प्रथमादिभेदस्य द्वितीयादिभेद एव संसर्गः सम्भवतीति भेदानन्त्यपक्षे नैवं दोषः प्रसज्यत इति चेत्, सर्वेषामनादित्वेन पूर्वापरीभावस्यासम्भवात् । न चैकस्य तदतिरिक्तभेदाः सर्वे संसर्ग इत्यदोष इति वाच्यम् । नियामकाभावात् । एकस्यापि भेदस्य भेदसंसर्गतयाननुभवेनानन्तभेदस्य भेदसंसर्गत्वस्या[1]नुभवपराहतत्वात् । एतेन घटत्वात्यन्ताभावस्तद्विशिष्टो वा तदधिकरणभेदसंसर्ग इति निरस्तम् । घटत्वात्यन्ताभावस्याप्याश्रयः क इति पृष्टः, यदि घटभिन्न इति ब्रूयात् तदा परस्पराश्रयापत्तिः । यदि च घटत्वरहित इति तदा आत्माश्रयापत्तिरित्यादि दोषप्रसरादिति ॥

तदपि न । त्वदभिमताभेदेऽप्यस्य सर्वस्यापि साम्यात् । न द्वितीयः विरोधात् । अथ यत्र प्रतीयते अभेदप्रतीतेर्भिन्नेऽपि सत्त्वात् । अत यत्र प्रमीयते तर्हि यत्रास्ति तत्रास्त्वित्यादेरपि सुवचत्वात् । यदि च स्वयोग्याधिकरणे वर्तते, योग्यता च प्रमितरूपा कार्योन्नेयेति, तर्हि प्रकृतेऽपि तथास्तु, एवं स्वपक्षदोषाभावः परपक्षदूषणं ब्रह्मनिर्विशेषत्वञ्च किं तद्व्रति तदभावयति वेत्यादिविकल्प्य दूषणमूहनीयम् । एवंविधदूषणं स्वव्याघातकत्वात् । उपेक्ष्यञ्चास्तु वा स्वरूपमेव संसर्गः । न चातिप्रसङ्गः । फलोन्नेयस्य तस्य अनतिप्रसक्तफलेनैवानतिप्रसक्त्योपपत्तेः । फलानतिप्रसक्तिरपि कथमिति चेत्, अनुभवं पृच्छ नास्मान् । अतिरिक्तो वा संसर्गोऽस्तु । न च तस्यापि नियताधिकरणसंसर्गस्य अतिरिक्तत्वेनानवस्थापत्तिः । प्राथमिकभेदस्यैव तत्संसर्गत्वात् । न च परस्पराश्रयतया नियाम्यनियामकाभावानुपपत्तिः । अस्योत्पत्त्याद्यप्रतिबन्धकत्वेन वनसिंहन्यायेनादोषत्वात् । एतेन यदि च तत्राप्यन्य एव संसर्गस्तदानवस्थापत्तिरित्यन्तमपास्तम् ।

नन्वित्यादिः एतेनेत्यतःप्राक्तनग्रन्थस्तु अनभिमतपक्षदूषणत्वादेव उपेक्ष्यः । यदप्येतेनेत्यादिना घटत्वात्यन्ताभावस्य भेदसम्बन्धत्वे दूषणमुक्तं, तदप्यत एवापास्तम् । परस्पराश्रयस्य परिहृतत्वात् । न च घटत्वात्यन्ताभावस्य भेदसम्बन्धत्वेन भेदस्य तत्सम्बन्धत्वेन वाऽननुभवो दोषः । न हि घटत्वात्यन्ताभावत्वेन भेदत्वेनोपस्थितस्य भेदस्य तत्सम्बन्धत्वमुच्यते । किन्तु विशिष्टप्रतीतिनिर्वाहकत्वेन सिद्धे सम्बन्धेऽनवस्थापरिहाराय प्रमाणसिद्धयोस्तयोरेव परस्परसम्बन्धत्वं कल्प्यते । अतो नानुभवो दोषः । यौक्तिकानुभवस्य सत्त्वात् ॥

---

१. अननुभव.. ।

यदपि किञ्च तस्यैतस्माद्भेदसंशयव्यतिरेकनिश्चयदशायां अस्य ततो न भेदनिश्चय इति सर्वजनसिद्धमिति तस्यैतद्भेदनिश्चयोऽस्य ततो भेदनिश्चये कारणम् । यत्संशयव्यतिरेकनिश्चयो यत्र प्रतिबन्धकौ तन्निश्चयस्य तद्धेतुत्वात् । एवं तस्यैतस्माद्भेदनिश्चयेऽप्यस्य ततो भेदनिश्चयो हेतुरित्यन्योन्याश्रयः । न च घटधर्मिकभेदः परमते तत्प्रतियोगिको भवति येन तस्य ग्राह्यतया तत्संशयादिरप्रतिबन्धकः स्यात् । अयं स न भवतीति ज्ञानस्य विशेष्यतया विशेषणतया वा तद्भेदविषयत्वायोगाच्च । तस्येन्द्रियासन्निकृष्टत्वात् । अयं स भवति न वेति संशयदशायां नियमेन स एतस्माद्भिन्न इति दर्शनेन प्रतिबन्धकत्वानुभवात् । न च प्रतियोगिनः धर्मितावच्छेदकाभावनिश्चय एव तद्धेतुरिति वाच्यम् । विनिगमकाभावात् मूलवृक्षे अग्रत्वाभावनिश्चयेऽप्यग्रवृक्षे मूलवृक्षभिदानिश्चयेनाभेदभ्रमदशायां तस्मिन् सत्यपि तददर्शनात् । अभेदनिश्चयस्य तत्प्रतिबन्धकत्वे च भेदसंशयस्यापि तथात्वात् । भेदज्ञानस्यापि हेतुत्वं वाच्यम् । तदत्यन्ताभावज्ञानमपि तदाश्रयभेदज्ञानं विना न सम्भवति । घटत्वादेः तन्निरूपणं विना अनिरूपणात् । प्रतियोगितावच्छेदकस्यैतद्वृत्तित्वाभावनिश्चयादिदशायां प्रतियोगिन्येव तद्धर्माभावानिश्चयाच्चेति ॥

तदपि न । एकस्य परस्माद्भेदज्ञानस्यापरस्मिन् स्वभेदज्ञानसामग्रीनियतत्वेन एकैकस्माद्भेदनिश्चये तस्यापि ततोऽन्यस्माद्भेदनिश्चय इति युगपदेवोभयनिश्चयेनान्योन्याश्रयानवकाशात् ॥ एतावांस्तु विशेषः । यत्र धर्मिद्वयं प्रत्यक्षं तत्रोभयत्रापि तद्भेदज्ञानं लौकिकं यत्र त्वेकमयोग्यं विप्रकृष्टं वा तत्र त्वेकत्रालौकिकमिति । एकत्र भेदसंशये अपरभेदसंशयौचित्योपार्जित इति नापरभेदसंशयस्य नैकभेदनिश्चयप्रतिबन्धकत्वम् । अतो न यत्संशयेत्यादिव्याप्तिबलादपि नैकभेदनिश्चयस्यापरभेदनिश्चयहेतुत्वम् । अतोऽपि नान्योन्याश्रयावकाशः । त्वदुक्तन्यायेनैकस्यापराभेदनिश्चये अपरस्मिन्नेतदभेदज्ञानस्य कारणत्वापत्त्या स्वव्याघातप्रसङ्गाच्च । एतेनायं स न भवतीति ज्ञानस्य विशेष्यतया विशेषणतया वा तद्भेदविषयत्वायोगाच्च तस्येन्द्रियासन्निकर्षादिति निरस्तम् । तदंशेऽप्यलौकिकसन्निकर्षस्योक्तत्वात् । एतेनैव, न च घटधर्मिको भेदः परमते तत्प्रतियोगिको भवति । येन तस्य ग्राह्यतया तत्संशयादिप्रतिबन्धकः स्यादिति अनभिमतपक्षनिराकरणमप्यपास्तम् ॥

यदपि अयं स न वेत्यादिना ग्राह्यसंशयस्यापि प्रतिबन्धकत्वमुपपादितं तदप्यत एवापास्तम् । ग्राह्यसंशयस्य प्रतिबन्धकत्वेऽपि ग्राह्यनिश्चयस्य तन्निश्चयासाध्यतयाऽन्योन्याश्रयाप्रसरात् । न चैवं यत्संशयेत्यादिव्याप्तेः तत्रैव व्यभिचारः । इष्टत्वात् । ग्राह्यातिरिक्तत्वेन विशेषणाद्वेत्यन्यत्र विस्तरः । एतेनैव, न च प्रतियोगिनीत्यादितद्धर्माभावानिश्चयाच्चेत्यन्तमपास्तम् । अनभ्युपगमात् । एतेन तस्मिन्नेतद्भेदविषयकग्राह्यातिरिक्तसंशयस्य प्रतिबन्धकत्वेऽपि तन्निश्चयस्याहेतुत्वे व्याप्तिनिश्चयस्याप्यनु-

मितिहेतुत्वं न स्यात् । प्रतिबन्धकीभूतव्याप्तिसंशयाद्यभावस्यैव हेतुत्वं स्यादित्यपास्तम् । व्याप्तिसंशयाद्यभावमात्रहेतुत्वे अगृहीतव्याप्तेरप्यनुमितिप्रसङ्गरूपबाधकस्येवेह बाधकस्याभावेन तस्मात् एतद्भेदनिश्चयं प्रति तस्मिन्नेतद्भेदनिश्चयस्य हेतुत्वे प्रमाणाभावात् । वस्तुतस्तु न व्याप्तिसंशयोऽनुमितिप्रतिबन्धकः, संशयानुमित्यभावस्य व्याप्तिनिश्चयाभावप्रयुक्तत्वोपपत्तेः । अत एव शाब्दपरामर्शानन्तरं प्रत्यक्षतो व्याप्तिव्यतिरेकनिश्चयेऽप्यनुमितेः व्याप्तिज्ञानविघटनस्य तत्रासम्भवात् । किन्तु व्याप्तिनिश्चये प्रतिबन्धकः । तत्र व्याप्तिनिश्चयो न हेतुरिति नोक्तरूपाव्याप्तिः ॥

यदपि प्रतिबन्धकसंशयादिस्थले निश्चयाभावस्यापि सत्त्वेन तस्यापि विनिगमकाभावेन प्रतिबन्धकत्वात् । निश्चयाभावरूपस्तस्मिन्नेतद्भेदनिश्चयोऽपि प्रतिबन्धकाभावतयैव हेतुरित्यन्योन्याश्रयो दुर्वार इति । तदपि न । प्रतिबन्धककालीनत्वमात्रेण न तस्य प्रतिबन्धकत्वम् । अतिप्रसङ्गात् । किन्तु संशयाभावदशायां निश्चयाभावेन कार्याभावस्य प्रमाणसिद्धत्वे तस्य प्रतिबन्धकत्वं कल्प्यम् । न चैतदस्ति । किञ्च प्रतिबन्धकसंशयादिस्थले निश्चयाभावस्यापि सत्त्वेनेत्येतदप्ययुक्तम् । तस्मिन्नेतद्भेदनिश्चयेऽपि तत्राप्रामाण्यशङ्कायामप्येतस्मिन् तद्भेदनिश्चयाभावेन तत्र त्वभिमतनिश्चयाभावस्याभावात् । न च अप्रामाण्यशङ्काशून्यनिश्चयाभाव एव प्रतिबन्धकः । स च तत्राप्यस्तीति वाच्यम् । लाघवेनावश्यकत्वेन च संशयस्यैव प्रतिबन्धकत्वोपपत्तेः । यदपि एवं भेदनिरूपकप्रतियोगित्वादिज्ञानस्यापि भेदज्ञानाधीनतयाऽन्योन्याश्रयः । स्तम्भात्कुम्भस्य भेद इति प्रतियोगित्वादिविशिष्टस्तम्भादीन्निरूप्यभेदप्रतीतेः स्तम्भादौ तत्प्रतियोगित्वज्ञानाधीनत्वादिति ॥

तदपि न । भेदज्ञाने प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्यैव हेतुतया प्रतियोगित्वज्ञानस्याहेतुत्वात् । न च विशेषणज्ञानतया तस्यापि हेतुत्वमावश्यकमिति वाच्यम् । न हि यद्यद्विशेषणतया भासते तस्य सर्वस्यापि ज्ञानं कारणम् किन्तु यद्विशेषणज्ञानं विना यद्विशिष्टज्ञानं न भवति तद्विशेषणज्ञानमात्रं तत्र कारणम् । एवञ्च अभावत्वप्रतियोगित्वयोरभाववृत्तिवेद्ययोर्ज्ञानं न कारणम् । किन्तु प्रतियोगिज्ञानमात्रं तद्विना प्रतियोगित्वादिवैशिष्ट्यबुद्धेरभावात् । एतेन प्रतियोगित्वांशे ज्ञानातिरिक्तसन्निकर्षाभावादपि परस्य तत्कारणमिति विधान्तरेणान्योन्याश्रयोक्तिरपि प्रत्युक्ता । प्रतियोगिज्ञानस्यैव तदंशेऽपि प्रत्यासत्तित्वोपपत्तेः । न च अन्यज्ञानस्यान्यप्रत्यासत्तित्वे अतिप्रसङ्गः, तद्विशिष्टज्ञानजनकत्वस्य नियामकत्वात् । यदपि प्रतियोगित्वज्ञानस्य कारणत्वे हेत्वन्तरमुक्तं धर्मिणः सकाशात् प्रतियोगिनो भेदाननुभवे प्रतियोगित्वाननुभवादिति, तदप्यत एवापास्तम् । भेदतत्प्रतियोगित्वयोरेकवृत्तिवेद्यत्वस्योपपादित्वात् ॥

यदपि अपिच घटात्पटो भिन्न इत्यत्र मत्वर्थो भाति घटस्य भेद इत्यत्र षष्ठ्यर्थः तदुभयज्ञान[1]ञ्च सम्बन्धिनोर्भेदज्ञानाधीनं तदज्ञानदशायां नियमेन तदप्रतीतेः । न च वस्तुसद्भेदसत्तैवापेक्षिता, तदभावेऽपि तज्ज्ञानदशायां तत्प्रतीतेस्तत्सत्त्वेऽपि तदज्ञानदशायां यमजयोस्तदप्रतीतेश्च । न च यमजयोः सादृश्या[2]दभेदभ्रमात् सम्बन्धज्ञानाभावो न भेदाज्ञानादिति वाच्यम् । सत्यपि सादृश्ये भेदज्ञानदशायां सम्बन्धधीदर्शनात् । भेदाज्ञानमेव भ्रमादिप्रयोजकमिति दोषतयाऽपि तस्यैव वाच्यत्वात् । तत्र तदज्ञानातिरिक्तदोषकल्पनायां प्रमाणाभावात् । एवं विशेषणविशेष्यत्वज्ञानमपि तदधीनम् । अन्यथा विरुद्धयोर्ज्ञानासम्भवात् । तथाच भेदज्ञाने भेदज्ञानान्तरमपेक्षणीयमिति तद्भेदज्ञानाय तद्भेदज्ञानान्तरापेक्षायामनवस्थेति तदपि गलहस्तितम् । घटात्पटस्य भेद इति विशेष्यतया भेदप्रतीत्यनन्तरमेव पटो घटाद्भिन्न इति विशेषणतया प्रतीत्यभ्युपगमेन तत्र तत्सम्बन्धप्रतीतौ बाधकाभावात् । न च यत्र विशेष्यतया प्रतीयते तत्र तत्सम्बन्धज्ञानस्यानवस्थादुस्थत्वापत्तिः । विशेषणविशेष्यभानसामग्र्या एव सम्बन्धभानसामग्रीत्वेन तत्र च भेदज्ञानस्य सामग्रीप्रवेशाभावस्योपपादितया अनवस्थानवकाशात् । यत्र सम्बन्धित्वादिना सम्बन्धो भासते तत्रैव सम्बन्धि[3]ज्ञानस्य कारणत्वेन इह संसर्गमर्यादयैव तस्य भानेन इह भेदज्ञानहेतुत्वासिद्धेश्च । यत्र द्वयोः प्रतियोगित्वेन भानं तत्रैव सम्बन्धिद्वयज्ञानस्य कारणत्वं इह तु भेदस्य अनुयोगित्वेन तज्ज्ञानस्य हेतुत्वासिद्धेश्च । अत एव पुरुषज्ञानाभावेऽपि दण्डप्रकारकपुरुषविशेष्यकज्ञानं सर्वसिद्धमुपपद्यते ॥

यदपि न च वस्तुसद्भेदसत्तैवापेक्षतेत्यादि तदपि न । यमजयोर्भेदसम्बन्धाप्रतीतिं प्रति सादृश्यस्यैवाभेदभ्रमद्वारा तज्ज्ञानभावप्रयोजकत्वेन भेदाज्ञानस्य तत्प्रयोजकत्वासिद्धेः । न च सत्यपि सादृश्ये भेदज्ञानदशायामभेदभ्रमादर्शनात् तस्यैव प्रयोजकत्वमिति वाच्यम् । भेदग्रहाभावे सत्यपि विसदृशयोरभेदभ्रमादर्शनेन सादृश्यस्याप्यावश्यकत्वात् । न हि विसदृशयोः सर्वदा भेदग्रहेण भाव्यमिति नियमोऽस्ति । न वा अभेदग्रहेण । यदप्येवं विशेषणविशेष्यत्वज्ञानमित्यादि तदपि न । प्राथमिकसविकल्पकेऽपि गौरयमित्याद्याकारे विशेषणविशेष्यभावविषयत्वस्य त्वयाप्यङ्गीकारेण तस्य भेदज्ञानाधीनत्वासिद्धेः । एतेन क्लृप्तकारणा[4]भावे तु कार्ये स्वप्नरथादीव मायिकमेवेति निरस्तम् । एवमपि यत्र कारणं क्लृप्तं तस्यामायिकत्वोपपत्तेः त्वदुक्तन्यायेन कारणकल्पनस्य क्वाप्यसम्भवापातेन क्लृप्तकारणाभाव इत्यादि वाचोयुक्तेरयुक्तत्वाच्च ॥

वस्तुतस्तु स्वरूपमेव भेदो नान्योऽभावः । प्रमाणाभावात् न च घटः पटो न भवतीत्यादिबुद्धिः प्रमाणम् । अत्र हि घटस्य पटात्मकताविरोधी नञर्थः प्रतीयते । तच्च स्वरूपमेव अन्यथा तस्य

---

१. भानञ्च ।   २. सादृश्यदोषात् ।   ३. सम्बन्धज्ञानस्य ।   ४. कारणत्वा.. ।

पटात्मकतापत्तेः । त्वदभिमतान्योन्याभावस्यापि तत्सम्बन्धासिद्धेश्च । अतिरिक्तभेदमङ्गीकुर्वतापि प्रतियोग्यादितो भेदस्य स्वरूपरूपत्वाङ्गीकाराच्च । न चैवं घटात्पटो भिन्न इति धर्मधर्मिभावेन प्रतीत्यनुपपत्तिः भेदाभावेऽपि तत्प्रतिनिधेर्विशेषस्य विद्यमानत्वेन तदुपपत्तेः । तदुक्तं— 'भेदहीने त्वपर्यायशब्दान्तरनियामकः । विशेषो नाम कथितः सोऽस्ति वस्तुष्वशेषतः' इति । विस्तरस्त्वन्यत्र द्रष्टव्यः । न चैवं संसर्गाभावोऽपि न सिद्ध्येत्, आवश्यकभूतलादिनैव तत्प्रतीतिव्यवहारोपपत्तेः । अभावाधिकरणभूतलादेरेव प्रतियोगिविरोधित्वात् । त्वदभिमतसंसर्गाभावस्यापि नियताधिकरणसम्बन्धासिद्धिप्रसङ्गाच्चेति वाच्यम् । अस्माभिः प्रामाणिकपदार्थमात्रस्यात्यन्ताभावानभ्युपगमात् । न चैवमपि असत एवात्यन्ताभावोऽधिकरणात्मा किं न स्यादिति वाच्यम् । अतीतानागतवर्तमानानन्तपदार्थानामभावत्वकल्पनापेक्षया एकस्यैवाङ्गीकारे लाघवात् । न चैवमपि प्रागभावादेरधिकरणात्मकत्वप्रसङ्गः । कार्योत्पत्त्यन्तरं ध्वंसात्पूर्वमपि यथापूर्वमधिकरणस्य सत्त्वेन प्राक्ध्वंसाभावप्रतीतिप्रसङ्गात् । न चैवं भेदस्याधिकरणात्मकत्वे कश्चिदतिप्रसङ्गोऽस्ति । त्वयैव भेदबुद्धेरन्तस्स्वरूपविषयत्वाङ्गीकाराच्च । अस्मन्मते त्वत्यन्ताभावस्यापि प्रामाणिकत्वेन तस्यात्यन्ताभावो नास्त्येवेति न तद्बुद्धेः प्रतियोगिस्वरूपविषयत्वप्रसक्तिः । एतेन स्वरूपभेदपक्षोऽपि न युक्तः । भेदस्य विशेषणविशेष्यतयैव प्रतीतेः तत्र च दोषस्योक्तत्वादिति निरस्तम् ॥

यदपि अपिचाभेदविरोधिपदार्थ एव भेदपदात् प्रतीयते । न च घटादिस्वरूपं भेदः, पटादिमात्रात्मकतदभेदविरोधी तस्य तदुभयसामानाधिकरण्यधर्मधर्मिभावसत्त्वात् । न च परस्य घटपटादिनिरूपितोऽन्यो भेदोऽस्ति । सप्रतियोगिकभेदस्य निष्प्रतियोगिकस्वरूपत्वानुपपत्तेः, घटभेदयोर्धर्मधर्मिभावानुपपत्तेश्चेति, तदपि न । भेदपदात्पटाद्यभेदविरोधित्वेन घटादिस्वरूपस्यैव प्रतीतेः । न च तदुभयसामानाधिकरण्यादिदर्शनाद्विरोधानुपपत्तिः । सामानाधिकरण्येऽपि परस्परान्नात्मकत्वलक्षणविरोधस्य सत्त्वेनादोषत्वात् ॥

यद्वा अभेदनिषेध एव भेदप्रतीतिव्यवहारगोचरोऽस्तु, भेदपदात् प्रतीतेः स चाभेदो न पटादिमात्रात्मक इत्यदोषः । न चैवं तस्याप्रामाणिकत्वेन तन्निषेधरूपभेदस्याप्यप्रामाणिकत्वापत्तिः । रूप्यस्य द्वैतस्यात्यन्तासतश्च अप्रामाणिकत्वेन बाधगोचरस्य रूप्याभावस्य अद्वैतस्यासद्वैलक्षण्यस्य च अप्रामाणिकत्वापातात् । न च निष्प्रतियोगिकस्य स्वरूपस्य सत्प्रतियोगिक[1]त्वानुपपत्तिः । त्वयापि ब्रह्मणः प्रपञ्चाभावत्वाङ्गीकारेण स्वव्याघातकत्वात् । यदि चाद्वैतश्रुतिबलात् प्रपञ्चाभावस्य ब्रह्मरूपत्वमभ्युप-

१. भेदत्वा.. ।

गम्यते, तर्हि प्रतीतिबलादुदाहृतस्मृतिबलाच्च प्रतीतस्य भेदस्यानवस्थापरिहाराय स्वरूपत्वमस्तु, दृश्यते चैकस्यैवं देवदत्तादेर्देवदत्तत्वादिना ज्ञाने तु जनकाद्यपेक्षत्वम्, पुत्रत्वादिना ज्ञाने तु तदपेक्षत्वं चेति यत्किञ्चिदेतत् तस्मात् भेदस्वरूपस्य सुनिरूपत्वात् जीवेश्वरादिभेदः सत्य एव ॥

यदपि स्वमते भेदप्रतीतिविषयोपपादनं अभेदनिषेध एव भेदः, इदमिदं नेति प्रतीतावभेदाविरोधित्वेनैव तदनुभवात् । स च अभेदाधिष्ठानभूतसद्रूपचैतन्यमेव घटपटयोरिदं सदित्यनुवृत्तसदाकारणप्रतीतेरात्मैवेदं सर्वमिति सदात्मन एव सर्वप्रपञ्चस्वरूपत्वावगमाच्च । न च सदिदमित्यादौ सत्तेव प्रतीयते, न सद्रूपं चैतन्यमिति वाच्यम् । 'सदेव सोम्येदमग्र आसीदि'त्यादि श्रुत्या असम्भावितबाधतया च प्रतिपन्नचैतन्यस्वरूपसद्व्यतिरिक्तसत्तायां प्रमाणाभावात् । तस्य च घटाद्युपादानतया श्रुतिसिद्धत्वेन घटाद्यनुगतायास्तत्र तद्बुद्धिविषयत्वोक्तेश्चेति, तदपि न । इदमिदं नेति निषेध्यत्वेन प्रतिपन्नाभेदस्य वस्त्वात्मस्वरूपत्वायोगात् । न च अत एव निषेधस्य मायिकत्वमिति वाच्यम् । तस्याः कल्पनाया अभेदस्यात्मस्वरूपत्वसिद्ध्यधीनत्वेन अन्योन्याश्रयात् ।

न च सदिदमिति प्रत्यक्षेणेदं सर्वमित्यादिश्रुत्या च तत्सिद्धिः, औपनिषदस्य ब्रह्मणः प्रत्यक्षविषयत्वासम्भवात् । श्रुतेश्च तदधीनत्वाद्यर्थपरत्वेनोपपत्त्या त्वदभिमताभेदपरत्वासिद्धेश्च । प्रत्यक्षस्य सत्ताविषयत्वेनाप्युपपत्तेश्च ॥

न च चैतन्यातिरिक्तसत्तायां प्रमाणाभावः, सदिदमित्यादिबुद्धेरेव तत्प्रमाणत्वात् । न च अस्याः सत्स्वरूपब्रह्मविषयत्वेनाप्युपपत्तेर्न सत्तासाधकत्वमिति वाच्यम् । 'सदेव सोम्येदमग्र आसीदि'त्यादिरेव सत्पदशक्तिग्रहणाय सत्त्वग्राहिप्रत्यक्षसापेक्षत्वेन तया प्रत्यक्षविषयसमर्पणायोगात् । वैपरीत्यस्यैव न्याय्यत्वाच्च । वस्तुतस्तु तव ब्रह्म सद्रूपमपि न स्यात् । सत्त्वरहितत्वात् । न च सत्त्ववत् तद्रहितस्यापि सद्रूपत्वमविरुद्धमिति वाच्यम् । सत्तासतीत्यादिप्रतीतेः सत्त्वस्यापि स्ववृत्तित्वेन सत्त्वरहितत्वासिद्धेः । त्वन्मते सत्त्वादिशब्दानां नैरर्थक्यप्रसङ्गाच्च, भावप्रत्ययार्थस्य बाधितत्वात् । न च प्रकृत्यर्थ एव भावप्रत्ययस्याप्यर्थः सर्वथा निरर्थकप्रत्ययस्य क्वाप्यव्युत्पन्नत्वात् । 'दारा' इत्यादौ बहुवचनस्य क्वचिदर्थोऽस्त्येव । एतेन अत एव सत्त्वविशिष्टमेव सदित्यपास्तम् । सत्त्वस्य तद्भेदे असत्त्वापत्तेरिति परास्तम् । सत्त्वस्यापि स्ववृत्तित्वस्योक्तत्वात् ॥

एतेन एवञ्च घटपटादिनिरूपिताभेदात्यन्ताभावो अविद्यया क्लृप्तो घटपटाश्रितो घटः पटो न भवतीति प्रतीयते । जीवपरयोरिव बिम्बप्रतिबिम्बयोरिव च स एव घटात्पटो भिन्न इत्यपि प्रतीयते । उभयाश्रितविभाग इवेदमस्माद्विभक्तमितीति निरस्तम् । विभागस्यापि प्रत्येकपरिसमाप्ततया उभया-

श्रितत्वे मानाभावात् । न च विभक्ताविति प्रतीतिरेव मानमिति वाच्यम् । प्रत्येकपरिसमाप्तपरस्पर-निरूपितविभागद्वयविषयत्वेनापि तदुपपत्तेः । दूरदेशवर्तिपदार्थद्वयवृत्तिविभागस्योभयाश्रितत्वे तद्वृत्ति-रूपादेरतथात्वप्रसङ्गाच्च । तथाच भेदोऽपि परस्परनिरूपितः परस्परवृत्तिभिन्न एव एवञ्च यत्संशये-त्यादिनोक्तदोषास्त्वन्मतेऽपि प्रसज्जेरन् । एतेन एवं सति यत्संशयेत्यादिदोषोऽपि नावतरति, ग्राह्य-संशयातिरिक्तभेदसंशयस्य प्रतिबन्धकत्वादिति निरस्तम् । उभयाश्रितैकभेदस्य निरस्तत्वात् । यदपि भेदश्चास्माकं साक्षिभास्य इति न तत्र प्रतियोगित्वादिज्ञानापेक्षा धर्मिप्रतियोगिस्वरूपस्य तत्स्वरूपत्वाच्च नातिप्रसङ्ग इति, तदपि न । अज्ञातघटादिपदार्थस्य घटादिभेदप्रतीत्यदर्शनेन साक्षिणो भेदविषयत्वेऽपि प्रतियोगित्वादिज्ञानस्य सहकारितया अवश्यवाच्यत्वेनोक्तदोषानतिवृत्तेः प्रतियोगित्वादेर्धर्म्यादिस्वरूप-त्वेऽपि त्वदुक्तन्यायेन भेदनिरूपकत्वादिना रूपेण ज्ञेयत्वेन त्वदुक्तदोषानतिनिवृत्तेश्चेति सर्वमनवद्यम् ॥

तस्मान्नाहमसंसारीत्येवमादिप्रमाणतः ।
जीवेभ्योऽत्यन्तभिन्नोऽयं नृसिंहः स्वस्तिदोऽस्तु नः ॥ १ ॥

आस्तामन्यप्रमाणत्वं भेदे सर्वस्य वस्तुनः ।
भेदं विदूषयन्नेव भवान् भेदस्य साधकः ॥ २ ॥

*इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमत्सुरेन्द्रतीर्थपूज्यपादानां शिष्येण सर्वतन्त्रस्वतन्त्र-श्रीमद्विजयीन्द्रभिक्षुणा विरचिते भेदविद्याविलासे भेदस्वरूपसमर्थनं नाम चतुर्थः परिच्छेदः समाप्तः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥

॥ समाप्तोऽयं ग्रन्थः ॥

★ ★ ★

॥ श्रीगुरुराजो विजयते ॥

# भेदविद्याविलासस्य श्रुतिप्रदर्शिनी

## अ

| *श्रुतिः* | |
|---|---|
| अजोऽन्यः | श्वेता. ४/५ महाना. ८/५ + ना.पू.ता.५/५ |
| अतोऽन्यो द्रष्टा नास्ति | |
| अथ तस्य भयं भवति | तैति. २/७ |
| अथ येऽन्यथातो विदुः | |
| अथ योऽन्यां देवतां | बृह. ९/४/१० |
| अथ योऽयं शरीर उपद्रष्टा स क्षेत्रज्ञः | |
| अथ रथान् रथयोगान् पथः सृजत कामं कामं पुरुषो निर्ममाणः | |
| अथातोऽहङ्कारादेशः | छां.उ. ७/२५/१ |
| अनश्नन्नन्यः | मुण्ड. ३/१/१ + ऋ.सं. ३/३/१७ मं. १/१६४/२० + श्वेता.४/६ |
| अनश्नन्नन्योऽभिपश्यति | पैङ्गिरहस्यब्राह्मण |
| एतत्सत्त्वं येन स्वप्नं पश्यति | |
| अनृतेन हि प्रत्यूढाः | छां.उ. ८/३/२ |
| अन्यद्युष्माकमन्तरं बभूव | |
| अन्यराजानस्ते | छां.उ. ७/२५/२ |

| श्रुतिः | |
|---|---|
| अन्या वाचो विमुञ्चथ | मुण्ड. २/२/५ |
| अन्योऽसावन्योऽहमस्तीति | ना.प. ९/१ |
| अङ्गुष्ठमात्रोरवितुल्यरूपः | श्वेता. ५/८ |
| अपाणिपादः | श्वेता.३/१९ + ना.प. ९/१४ + भवसं. २/४५ + कैव. २१ |
| अविदितब्रह्मरूपेण जीवन्मुक्तो न संशयः | |
| अस्य महिमानमिति वीतशोकः | अथर्व. |
| अहमात्मा गुडाकेशः | भ.गी. १०-२० |
| अहमीश्वरः सर्वज्ञः | |
| अहमेवेदं सर्वं | छां.उ. ७/२५/१ |
| अहङ्कारविमूढात्मा | भ.गी. ३/२७ |
| अहङ्कारस्य दृश्यन्ते | |
| अहं ब्रह्मास्मि | बृ.उ. १/४/१०, १० + त्रि.म.ना, ७/१०, शु.र. २/२ + पैङ्गलो ३/१ |
| अज्ञानेनावृतं ज्ञानं | भ.गी. ५/१५ |
| आकाशमेकं हिं यथा घटादिषु पृथग्भवेत् | याज्ञवल्क्य |
| आचार्यवान् पुरुषो वेद | छां.उ. ६/१४/२ |
| आत्माऽप्यनीशः | श्वेता. १/२ |
| आत्मा वा इदमेक एव अग्र आसीत् | २ ऐत. १/१ |
| आत्मैवेदं सर्वं | छां.उ. ७/२५/२. |

| *श्रुतिः* | |
|---|---|
| आत्मैव सिद्धौ द्वितीये मायया ह्यन्यदिव | नृसिंहो. ९/१ |
| आमुक्तेर्भेद एव स्यात् | पाञ्चरात्र भामति कोट् माडिद्दारे. |
| आहारशुद्धौ सत्त्वशुद्धिः | छां.उ. ७/२६/२ |
| औपनिषदः पुरुषः | |
| **इ** | |
| इतरेण तु जीवन्ति | कठो. ५/५ |
| इन्द्रो मायाभिः | बृह.२/५/१५ + ऋक्सं.अ. ४/७/३३ मं. ६/४७/१८ |
| इन्द्रं मित्रं वरुणमग्निमाहुः | ऋ.सं. १/१६४/४६, नि. ७/१८ अथर्व. ९/१०/२८ |
| इन्द्रियाणां मनश्चास्मि | भ.गी. १०/२२ |
| इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः | भ.गी. १३/६ |
| **उ** | |
| उत्तमः पुरुषस्त्वन्यः | भ.गी. १५/१७ |
| उदरमन्तरं कुरुते | तैत्ति. २/७ |
| उपोऽधिके च | पाणिनि.सू. १/४/८७ |
| **ए** | |
| एक एव तु (हि) भूतात्मा सर्वभूते (भूते भूते) व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥ | त्रि.ता. ५/१२ + ब्र.बिं. ११ |
| एको बहूनां | ऋक्सं.अ. ८/३/१९ मं.१०/८४/४ वनदु. ११० |
| एको बहूनां यो विदधाति कामान् | कठो. ५/१, + श्वेता. ६/१३ गो.पू. ३/३३०-१७, |

| श्रुतिः | |
|---|---|
| एको देवः | श्वेता. ६/११, + ब्रह्मो. १६ + गोपालो. ३/१९ |
| एकस्तथा सर्वभूतान्तरात्मा | कठो. ५/९, १०/११ |
| एष आत्मा पृथिव्यादिनियामकत्वेन ........ अन्तर्यामिणं ब्रूहि | |
| एष त आत्मान्तर्याम्यमृत | बृह. ३/७/३ + ४/२/३ |
| एषोऽन्तर्यामी ते आत्मा स्वरूपं | सुबालो. ५/१५ रामो. २/४ |
| **क** | |
| कर्मेन्द्रियन्तु पाय्वादि | अमर. |
| कस्मान्नु बिभेमि | बृह. |
| कस्मिन्नु भगव | मुण्ड. १/१/३ |
| करोतेरपि तान्यत्वस्य मायया | |
| कामः सङ्कल्पः | बृह. १/५/३ + मैत्रा. ६/३० |
| कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः | त्रि.म.ना. ४/८ + शु.र. ३/१२ |
| कार्यकारणताभिन्नो पूर्णबोधोऽवशिष्यते | शु.र. ३/१२ |
| कालात्मयुक्तान्यधितिष्ठ | ना.प. ९/२, श्वेता. १/३ |
| **च** | |
| चार्थे द्वन्द्वः | पाणिनि २/२/२९ |
| चिन्मात्रोऽहं सदाशिवः | कैव. १८ |
| **ज** | |
| जलाधारेष्विवांशुमान् | याज्ञवल्क्य ? |

*श्रुतिः*

| | |
|---|---|
| जहात्येनां भुक्तभोगाम् | श्वेता. ४/५ + महाना. ८/५ + ना.पू.ता. ५/५ |
| जीवेशावाभासेन करोति | नृसिंह. ९ |
| जुष्टं यदा पश्यत्यन्यमीशम् | श्वेता. ४/७ + मुण्ड. ३/१/२ |

### त

| | |
|---|---|
| तज्जलानिति शान्त उपासीत | |
| ततस्तु निष्कलं ध्यायमानः | मुण्ड. ३-१-८ |
| तत्सृष्ट्वा तदेवानुप्राविशत् | तैत्ति. २/६ |
| तत्त्वमसि | छां.उ. ६/८/७ + ६/९/४ – ६/१४/३ शु.र. २/३ + पैङ्गलो. ३/१ |
| तथाऽप्येकोऽप्यनेकः स्यात् | याज्ञवल्क्य |
| तद्यथाणुनश्चक्षुषः प्रकाशो व्याप्त एवमेवास्य पुरुषस्य प्रकाशो व्याप्तो ह्यणुर्ह्येष पुरुषः | |
| तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् | मुण्ड. १/२/१२ |
| तन्त्वौपनिषदं पुरुषं पृच्छामि | बृह. ३/१२/६ |
| तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिः | |
| तस्याज्ञानं कुतोऽभवत् | |
| तयोरन्यः पिप्पलं स्वाद्वत्ती | मुण्ड.३/१/१+ मं.१/१६४/२० ऋ.अ. २/१/१७ + अथर्व. ९/९/२० |
| तेन मुह्यन्ति जन्तवः | भ.गी. ५/१५ |
| त्वां ज्ञप्तिमात्रं पुरुषं भजाम्यहम् | (अ.प्र.श्रु.) ? |

श्रुतिः

## द

| | |
|---|---|
| देवस्यैष स्वभावोऽयमाप्त | माण्डूक्य. |
| देवक्षेत्रेष्वेवमजोयमात्मा | |
| द्वयोः प्रणयन्ति | ? |
| द्वा सुपर्णा | ऋ.अ.२/३/१७ मं.१/१६४/२० + श्वेता ४/६, ना.उ.ता. १/१ + मुण्ड.३/१/१ + भवसं.२/२ अथर्व. ९/९/२० + नि. १४/३० |
| द्वितीयाद्वै भयं भवति | बृह. १/४/२ |
| द्वे ब्रह्मणी वेदिततव्ये | त्रि.ता. ४/१७ + मैत्रा. ६/२२ |
| दृश्यते त्वग्र्यया बुद्ध्या | कठो. ३/१२ |
| द्रव्यसुव्यवसायेषु तत्त्वमस्तीति जन्तुषु | अमर. |

## न

| | |
|---|---|
| न कर्मणा वर्धते नो कनीयान् | इतिहा.२० + बृह.उ. ४/४/२३ |
| न तत्समश्चाभ्यधिकश्च दृश्यते | श्वेता. ६/८ + भवसं. २/४४ |
| न मां कर्माणि लिम्पन्ति | भ.गी. ४/१४ |
| न लिप्यते लोकदुःखेन बाह्यः | कठो. ५/११ |
| न स वेद यथा पशुः | बृह. १/४/१० |
| न साधुना कर्मणा भूयान्नो वा साधुना कनीयान् | कौ.त. ३/९ |
| न ह्यस्ति द्वैतसिद्धिः आत्मैव सिद्धौ द्वितीये मायया ह्यन्यदिव | नृसिंहो. ९/१ |

| श्रुतिः | |
|---|---|
| नात्र काचन भिदाऽस्ति | म.वा.र. ४ |
| नानुयाजेषु | |
| नानृषेयं वृणीते | |
| नान्यच्छ्रेयो वेदयन्ते प्रमूढा | मुण्ड. १/२/१० |
| नान्यः पन्थाः | महावा.३ + चित्यु. १२/७ + लक्ष्म्युप. ७ |
| नान्यदतोऽस्ति द्रष्टा | बृह. ३/८/११ |
| नान्योऽतोऽस्ति द्रष्टा | बृह. ३/७/२३ |
| नान्योऽतोऽस्ति श्रोता | बृह. ३/७/२३ |
| नारायणं महाज्ञेयं | महाना. ९/३ |
| नास्त्यकृतः कृतेन | मुण्ड. १/२/१२ |
| नाहमीश्वरः ? | |
| नित्यो नित्यानां | कठो. ५/१३, श्वेता. ६/१३ + भवसं. २/४८, गो.पू. ३/३ |
| नित्यः सर्वगतः स्थाणुः | भवसं. २/२९, भ.गी. २/२४ |
| नित्यः सर्वगते विष्णावणुजीवो व्यवस्थितः | |
| नीहारेण प्रावृता जल्प्या च | ऋग्वेद १०/८२/७ |
| नेह नानास्ति किञ्चन | कठो. ४/११ + बृ.उ. ४/४/१९ + त्रि.म.ना. ३/३ + अध्यात्मो ६३ + निरालं ११ |

*श्रुतिः*

## प

| | |
|---|---|
| पपौ निमेषालसपक्ष्मपङ्क्तिः | रघुवंश |
| परात्परं पुरुषमुपैति दिव्यं | मुण्ड. ३/२/८ |
| परात्परात्परिमुच्यन्ति सर्वे | महाना. १२/१५ |
| परात्परं पुरिशयं पुरुषमीक्षते | |
| प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः | भ.गी. ३/२७ |
| पृथगात्मा तं प्रेरितारं च मत्वा | श्वेता. १/६ |
| पुरुषो निमग्न | |

## ब

| | |
|---|---|
| बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यपरोऽपि दृष्टः | श्वेता. ५/८ |
| ब्रह्मविदाप्नोति परं | तैत्ति. २/१/१ + भस्मजा. २/७ |
| ब्रह्मविद्ब्रह्मैव भवति | |
| ब्राह्मणोऽस्य मुखमासीत् | चित्यु. १२/५, सुबलो. १/४<br>ऋ.अ. ८/४/१९ =<br>मं. १०/९०/१२ वा.सं. ३१/१ |
| ब्रह्मैवेदं | मुण्ड. २/२/११ |
| ब्रह्मैव भवति ब्रह्मैव प्राप्नोति | शरभो. ३७ |
| ब्रह्मैव सन् ब्रह्माप्नोति | सुबा. ३/३ + बृह. ४/४/६<br>नृसिंहो. ५/२, ५/५, ५/८<br>+ सहवै. २ |
| ब्रह्म वेद ब्रह्मैव भवति | |

*श्रुतिः*

## भ

| | |
|---|---|
| भवत्यभेदे भेदश्च | विष्णुपुराण |
| भेदव्यपदेशाच्चान्यः | ब्रह्मसूत्र १/७/२१ |

भेदहीने त्वपर्यायशब्दान्तरनियामकाः ।
विशेषो नाम कथितः सोऽस्ति वस्तुष्वशेषतः ॥

## म

| | |
|---|---|
| मत्तः परतरं नान्यत् (नास्ति) | भ.गी. ७/७ |
| मनसैवानुद्रष्टव्यः | बृह. ४/४/१९ |
| मनसैवेदमाप्तव्यम् | कठो. ४-१९ |
| मनःसर्वैर्ध्यातैः | कौ.त. ३/३ |

ममान्तरात्मा तव च ये चान्ये देहसंज्ञिताः ।
सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित्क्वचित् ॥

| | |
|---|---|
| माययापहृतज्ञानाः | भ.गी. ७/१५ |
| मृत्योः स मृत्युमाप्नोति | बृह. ४/४/१९<br>कठो. ४/२० + आ.प्र. ९ |

## य

| | |
|---|---|
| य आत्मनि तिष्ठन् | श.प. १४/५/३० |
| य इह नानेव पश्यति | कठो. ४/१० +<br>बृ.उ. ४/४/१९ + आ.प्र. १ |

यजमानः प्रस्तरः

*श्रुतिः*

| | |
|---|---|
| यथा ह्ययं ज्योतिरात्मा विवस्वान्<br>अपो भिन्ना बहुधैकोऽनुगच्छन् ।<br>उपाधिना क्रियते भेदरूपो<br>देवक्षेत्रेष्वेवमजोऽयमात्मा | (ब्रह्मसूत्रे शाङ्करभाष्ये<br>उदाहृतेयं श्रुतिः) |
| यदा पश्यः पश्यते रुग्मवर्णं | मुण्ड. ३-९-३ |
| यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्ये-<br>ऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते | तैत्ति. २/७ |
| यन्मनसा न मनुत | केनो. १/६ |
| यमिन्द्रमाहुर्वरुणं यमाहुः | |
| यस्मात्परतरं न | श्वेता. ३/९, महाना. ८/१३ ? |
| यस्मिन्नेतावुपश्रितौ | कठो. ५/५ |
| येन स्वप्नं पश्यति तत्सर्वं | योगिरहस्यब्राह्मण |
| यो मामेवमसम्मूढो | भ.गी. १५/१९ |
| यो वेद | तैत्ति. २/९/९ +<br>ना.उ.ता. १/७ |
| यः कारणानि निखिलानि तानि | ता.प. ९/२ + श्वेता. १/३ |
| यः सर्वज्ञः सर्ववित् | मुण्ड. १/१/९ |

र

राजा राष्ट्र

ल

लाङ्गलं जीवनम्

व

वन्यान्विनेष्यन्निव दुष्टसत्त्वान्

*श्रुतिः*

| | |
|---|---|
| वासुदेवं परित्यज्य योऽन्यं देवमुपासते । | |
| तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः ॥ | (ब्राह्मणम्) |
| विभेदजनके ज्ञाने नाशमात्यन्तिकं गते । | |
| आत्मना ब्रह्मणो भेदमसन्तं कः करिष्यति ॥ | जा.द. ४/६३ |
| विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च। | तैत्ति. २/५ |
| विज्ञानं देवाः सर्वे ब्रह्मज्येष्ठमुपासते | तैत्ति. २/५ |
| विज्ञानाद्ध्येव खल्विमानि भूतानि | तैत्ति. २/५ |
| विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति | महाता. ९/२ + महो. १/६ तै.ता.उ. ११/१ |

## श

| | |
|---|---|
| शारीरश्चोभयेऽपि हि भेदेनैवमधीयते | (ब्रह्मसूत्र १/२/५१) |
| शोकहर्षभयक्रोधलोभमोहस्पृहादयः | |

## ष

षडस्माकमनादयः

## स

| | |
|---|---|
| स एवेदं सर्वं | छां.उ. ७/२५/१ |
| स तत्र एव पर्येति जक्षन् क्रीडन् रममाणः | छां.उ. ८/१२/३ |
| सदा पश्यन्ति सूरयः | |
| सदेव सोम्येदमग्र आसीत् | छां.उ. ६/२/१ + पैङ्गलो. १/१ |
| संन्यासयोगाद्यतयः शुद्धसत्त्वाः | मुण्ड. ३/२/६, महाना.१२/१५ |
| समानमितरच्छेदेन | |
| स यो ह वै तत्परं | रुद्रहृ. ५२ |

| *श्रुतिः* | |
|---|---|
| सर्वतः पाणिपादं तत्-<br>सर्वतोऽक्षिशिरोमुखम् | श्वेता. ३/१६ + भ.गी. १३/१४ |
| सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति | श्वेता. ३/१६ + भ.गी. १३/१४ |
| सर्वं खल्विदं ब्रह्म | त्रि.म.ना. १/३ + निरालं. ११<br>गान्धर्वो. ६ + छां.उ. ३/१४/१ |
| सर्वं समाप्नोषि | भ.गी. ११/४० |
| सर्वे वेदा यत्पदमामनन्ति | कठो. २/१५ + गुह्यका. ३९ |
| स सर्वविद्भजति मां सर्वभावेन भारत | भ.गी. ११/४० |
| सो बिभेत्तस्मादेकाकी (नरमति) बिभेति | बृह. १/४/२ |
| सोऽश्नुते सर्वान् कामान्<br>सह ब्रह्मणा विपश्चिता | तैत्ति. २/१/१ |
| सोऽश्नुते सकलान् कामान् क्रमेण सुरर्षभान्नः | (स्कान्दपुराण) |
| सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् | ब्रह्मसूत्र १/२/३९ |
| स्मरामि न साक्षात्करोमि | |
| स्वाभाविकी ज्ञानबलक्रिया च | श्वेताश्व. |
| स्वाद्वत्ती | मुण्ड. ३/१/१<br>+ ऋ.अ. २/३/१७<br>= मं. १/१६४/२०<br>अथर्व. ९/९/२० |
| सुडनपुंसकस्य | पाणिनि १/१/४७ |
| सुषुप्तिकाले सकले विलीने | वराहो. २/६२ + कैवल्यो. १३ |

**क्ष**

| | |
|---|---|
| क्षेत्रज्ञोऽक्षर एव च | वि.स.ना. ४ |
| क्षेत्रज्ञं चापि मां विद्धि | भ.गी. १३/३ |

॥ ॐ शान्तिः शान्तिः शान्तिः ॐ ॥

॥ श्रीः ॥

# श्रीविजयीन्द्रभिक्षुविरचितः
# भाष्यतत्त्वप्रकाशिकावाक्योद्धाररूपो
# मुकुरः

सर्वज्ञं सर्वकर्तारं सर्वजीवजडात्मकात् ।
प्रपञ्चाद्वस्तुतोऽत्यन्तभिन्नं श्रीनृहरिं भजे ॥ १ ॥

तं पाणिपल्लवं बाहुशाखं सद्द्विजसेवितम् ।
विद्याहासलतारूपं मध्वकल्पतरुं भजे ॥ २ ॥

मध्वशास्त्रमहाचापमनुद्धार्यमपीतरैः ।
उद्धृत्य कीर्तिं यो लेभे तं जयार्यमहं भजे ॥ ३ ॥

यो व्यासमुनिदावाग्निः सच्छास्त्रमरुता सह ।
ददाह कुमतारण्यं प्रकाशाय तमाश्रये ॥ ४ ॥

श्रीसुरेन्द्रगुरोः पादपद्मे रागस्य पीडनात् ।
रक्ते नखदलोपेते सेवे शिष्यालिसेविते ॥ ५ ॥

श्रीमदानन्दतीर्थीयभाष्यभावज्ञसूक्तितः ।
टीकावाक्योद्धाररूपो मुकुरः क्रियते मया ॥ ६ ॥

यत्संसृतिविमोकस्य नेशाते येऽल्पबुद्धयः ।
तज्ज्ञप्त्यै विजयीन्द्रस्य कृतिरेषा प्रवर्तते ॥ ७ ॥

द्वापरान्ते व्यासत्वेनावततार । तदनन्तरमुत्सन्नं वेदं व्यञ्जयंश्चतुर्धा व्यभजत् । .......... .......... ............................................................................ प्रेक्षावदुपादेयत्वरूपा ........................................... ........................... विष्णुभक्तिपूर्वकाध्ययन शान्तिदान्त्युपरतितितिक्षासमाधानविष्णुपादैर..................................त् ब्रह्मतः मोक्षरूपफल-साधनज्ञानरूपप्रयोजनसद्भावाद्वा ब्रह्मणोऽनन्तगुणस्य ....... 'सुखमेव मे सदा स्याद्दुःखं मनागपि मा भूदि'ति सर्वापेक्षितः स च ब्रह्मशब्दितस्य विष्णोः परमप्रसादादेव भवतीति तादृशश्च प्रसादः न ज्ञानं विना भवितुमर्हति । न च ब्रह्मजिज्ञासां विना ब्रह्मापरोक्षज्ञानं भवति । ब्रह्म चानन्तकल्याणगुणपूर्णत्वात् सम्यग् अज्ञातत्वेन सन्दिग्धं ........ अतो ब्रह्मजिज्ञासा कर्तव्येति भावः ॥

जीववैलक्षण्यज्ञापनायोक्तं ब्रह्मपदप्रयोगबलप्राप्तमनन्तगुण....... ....पत्तिः । ईक्षणीयत्वं प्रमाणेनैव ............. शेषः । 'यतो वाचः' इत्यादिश्रुतयस्तु साकल्येना ......... परा इति भावः । (ग्रन्थपातः)

## ५. ईक्षत्यधिकरणम्

उक्तमाक्षिप्य समादधति— **गौणश्चेन्नात्मशब्दात्** । ईक्षतिश्रुतौ दृश्यत्वेनोक्त आत्मा गौण-त्रिगुणबद्धो जीवः, न तु निर्गुणं ब्रह्म, अतो दृश्यत्वाज्जीव एव वाच्य इति चेन्न; 'अज आत्मा महान् ध्रुवः'; 'तमेव धीरो विज्ञायीत, आत्मन्येवात्मानं पश्येत्' इत्यादौ तस्मिन्नीक्षणीये आत्मशब्द-श्रवणादित्यर्थः । 'द्वे वा व ब्रह्मणो रूपे आत्मा चैवानात्मा च, तत्र यः स आत्मा स नित्यशुद्धः केवलो निर्गुणश्चे'त्यादिना निर्गुणस्यैवात्मपदवाच्यत्वात् ईक्षणीयत्वं च तस्येति भावः ।

नन्वात्मशब्दो गौणेऽपि मुख्य एव । श्रुतौ आत्मानात्मशब्दौ जीवजडपरौ, शुद्धत्वादिकं तु स्वरूपापेक्षया । अत आत्मा जीवो दृश्यो वाच्यश्चेत्यत आह— **तन्निष्ठस्य मोक्षोपदेशात्** । 'यस्यानुवित्तः प्रतिबुद्ध आत्मा' इत्यादिना आत्मनिष्ठस्य पुरुषस्य मोक्षोपदेशान्न गौण आत्मपद-मुख्यार्थ इत्यर्थः । गुणबद्धात्मविज्ञानाद्गुणनिवृत्तिरूपमोक्षो न युक्त इति भावः । युक्त्यन्तरेणात्मशब्दस्य गौणपरत्वं पराकरोति— **हेयत्वावचनाच्च** । 'तमेवैकं जानथ आत्मानम्' इत्येतावता सगुणो न किन्तु निर्गुणः; 'अन्या वाचो विमुञ्चथ' इति गौणे हेयत्ववचनवदात्मनि हेयत्ववचनाभावात् । तद्दृष्टान्तेन ईक्षतिश्रुत्युक्तोऽपि निर्गुण एवेति स एव दृश्यो वाच्यश्चेत्यर्थः । अन्यथा अन्यावाचो विमुञ्चथेति स्यादिति भावः ।

युक्त्यन्तरेण निर्गुणस्य वाच्यत्वं प्रतिपादयति— **स्वाप्ययात्** । अत्र आदौ श्रुत्युक्तत्वादित्युप-स्कर्तव्यम् । ततश्च ब्रह्माशब्दं न श्रुत्युक्तत्वाच्च श्रुत्युक्ते च 'स आत्मन आत्मानमुद्धृत्यात्मन्येव

विलापयत्यथात्मैव भवति' इत्यादौ स्वस्यैव स्वस्मिन्नप्ययवचनादित्यर्थः । गौणस्य चान्यत्रैव लयात् 'पूर्णमदः पूर्णमिदं' इति पूर्णब्रह्मण्येव स्वस्मिन् स्वस्य लयश्रवणादिति भावः । रुद्रादीनां जगज्जन्मादि-कारणत्वमप्रसिद्धशाखासु प्रतिपादितं किं न स्यात् इत्याशङ्क्य सिंहावलोकनन्यायेन परिहरति— **गतिसामान्यात्** । 'सर्वे वेदा युक्तयः सुप्रमाणाः ब्राह्मं ज्ञानं परमं त्वेकमेव । प्रकाशन्ते न विरोधः कुतश्चिद्वेदेषु सर्वेषु तथेतिहास' इति पैङ्गिश्रुतौ गतेः सर्वशाखोत्पाद्यज्ञानस्यैकविधत्वकथनान्न कासुचि-च्छाखास्वन्यथोच्यते । ...............प्तिरिति भावः । पुनश्च युक्त्यन्तरेण निर्गुणस्य ब्रह्मणो वाच्यत्वं प्रतिपादयति— **श्रुतत्वाच्च** । 'केवलो निर्गुणश्च' इति निर्गुणपदेनैव श्रुतत्वात् ब्रह्मशब्दावाच्यत्वं नेत्यर्थः । ब्रह्मणः सर्वशब्दावाच्यत्वे लक्ष्यत्वगौणत्वासम्भवात् तच्छब्दानां निर्विषयत्वेन अप्रामाण्यं स्यादिति भावः ॥

## ६. आनन्दमयाधिकरणम्

'तत्तु समन्वयादि'ति प्रतिज्ञातं शास्त्रस्य ब्रह्ममात्रपरत्वं शास्त्रीयशब्दानां प्रतिवाक्यग्रहणेनोप-क्रमादिप्रदर्शनेन च प्रकाशयति, अतःपरमस्मिन्नध्याये अत्र अन्यत्रप्रसिद्धानाम्, उभयत्रप्रसिद्धानाम्, अन्यत्रैवप्रसिद्धानां नामात्मकानां लिङ्गात्मकानां च शब्दानां मध्ये नामात्मकानां अन्यत्रप्रसिद्धानां शब्दानां ब्रह्मणि समन्वयं प्रतिपादयति प्रथमेऽस्मिन्पादे । तैत्तिरीयश्रुतौ 'तस्माद्वा एतस्माद्विज्ञान-मयात्, अन्योऽन्तर आत्माऽऽनन्दमयः' इत्यानन्दमयः श्रूयते । स च हिरण्यगर्भः । 'अस्ति ब्रह्मे'ति ब्रह्मशब्दात् शतानन्दसमानार्थत्वाच्च आनन्दमयशब्दस्य रुद्रो वाऽऽनन्दमयः 'यश्चासावादित्य' इति सूर्यस्थितत्वोक्तेः । रुद्रस्यादित्याद्यष्ट[१]प्रतिमाकत्वेन प्रमाणसिद्धत्वात् । इन्द्रबृहस्पत्यादयो वा आनन्द-मयाः सूर्याधिष्ठातृत्वादेव । चित्प्रकृतिर्वा आनन्दमयः, ब्रह्मशब्दात् । 'मम योनिर्महद्ब्रह्म' इति तस्यां ब्रह्मपदप्रयोगात् । 'महती ब्रह्मणी द्वे तु प्रकृतिश्च महेश्वरः । योनिर्भार्या तथा स्थानं योनिः कारणमित्यपि' इत्यनेन भार्यारूपमहद्ब्रह्मत्वं तस्या एव । 'बहु स्यां प्रजायेय' इति बहुभावश्रवणाच्च चित्प्रकृतेस्तदभि-मानित्वात् ।

अचित्प्रकृतिर्वा आनन्दमयः । बहुभावादेव 'तत्तद्देहगतसर्वजीवा वा आनन्दमयः, ब्रह्मशब्दात् । बृह जातिजीवकमलासनशब्दराशिषु इति धातोः । ब्रह्म तु नानन्दमयः, ब्रह्म पुच्छं प्रतिष्ठा' इति ब्रह्मण आनन्दमयावयवत्वश्रवणात् । अन्नमय-प्राणमय-मनोमय-विज्ञानमय-शब्दास्तावद् विकारवाचिमयटा युक्तत्वान्न ब्रह्मवाचकाः । ततस्तत्प्रायपठितानन्दमयशब्दस्य ब्रह्मवाचकत्वासिद्धेरित्यत आह—

१. सूर्यो जलं मही वह्निः वायुराकाशमेव च ।
दीक्षितो ब्राह्मणः सोम इत्येतास्तनवः क्रमात् ॥ *इति विष्णुपुराणे ।*

**आनन्दमयोऽभ्यासात्** । ब्रह्मैवेति वर्तते । उपलक्षणमेतत् । अन्नमयः प्राणमयो मनोमयो विज्ञानमय आनन्दमयः ब्रह्मनामको विष्णुरेव । 'येऽन्नं ब्रह्मोपासते, ये प्राणं ब्रह्मोपासते, आनन्दं ब्रह्मणो विद्वान्, विज्ञानं ब्रह्म चेद्वेद, अस्ति ब्रह्मेति चेद्वेद' इति तेषु क्रमेण ब्रह्मशब्दाभ्यासादित्यर्थः । 'एतमेव ब्रह्मेत्याचक्षते', 'तदेवं ब्रह्म परमं कवीनाम्' इत्यादौ ब्रह्मशब्दस्य विष्णावेव प्रसिद्धत्वात् । हिरण्यगर्भादीनां च अपूर्णत्वेन ब्रह्मशब्दमुख्यार्थत्वाभावात् । मुख्ये सम्भवत्यमुख्यायोगादिति भावः । उक्तार्थमाक्षिप्य समादधति **विकारशब्दान्नेति चेन्न प्राचुर्यात्** इति । अन्नमयादिषु, पञ्चस्वपि विकारवाचिमयट्प्रयोगात् नान्नमयादि ब्रह्म । निर्विकारत्वादिति चेन्न, मयटां प्राचुर्यार्थत्वादित्यर्थः । 'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा' इत्युभयत्र प्रयोगेऽपि, मयटः प्रकृते ब्रह्मशब्दसामर्थ्यादिव प्राचुर्यार्थत्वेनान्नमयादिशब्दानां प्रचुरान्नादिरेवार्थ इति भावः । हेत्वन्तरेणानन्दमयस्य ब्रह्मत्वमुपपादयति— **तद्धेतुव्यपदेशाच्च** । आनन्दमयो ब्रह्मेति वर्तते । तस्मिन्नानन्दमयप्रकरणे आकाशाख्यब्रह्मणः पूर्णानन्दत्वे 'को ह्येवान्यात्कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्' इति लोकचेष्टकत्वाख्यहेतोर्व्यपदेशाच्च विष्णुरेव पूर्णानन्दतया आनन्दमय इत्यर्थः । अन्यथा तद्व्यपदेशो व्यर्थः स्यादिति भावः ।

ननु ब्रह्मण आनन्दमयावयवत्वोक्तिरूपबाधकेन ब्रह्मशब्दामुख्यार्थः आनन्दमयः किं न स्यादिति शङ्कां परिहरन् हेत्वन्तरेण विष्णोरानन्दमयत्वमुपपादयति— **मान्त्रवार्णिकमेव च गीयते** । ब्रह्मेति वर्तते । अन्नमयादिशब्दपञ्चकेनेति शेषः । 'सत्यं ज्ञानमनन्तं ब्रह्म' इति मन्त्रवर्णोक्तं परं ब्रह्मैव अन्नमयादिशब्दपञ्चकेन गीयते । न त्वपरं ब्रह्म, अतश्च अन्नमयादि विष्णुरेवेत्यर्थः । 'ब्रह्मविदाप्नोति परम्' इति प्रतिज्ञातं परं ब्रह्म लक्ष्यत्वार्थब्रह्मपदेन परामृश्य लक्षणार्थमुक्तानां सत्यज्ञानानन्तपदानां अन्नमयादिपदानां चार्थानुसन्धाने सत्येकार्थत्वप्रतीतेः । 'स शिरः स दक्षिणः पक्षः स उत्तरः पक्षः स आत्मा स पुच्छमि'ति श्रुतावयविन एवावयवत्वोक्तेः नावयवत्वोक्तिः बाधिकेति भावः ।

ननु हिरण्यगर्भादिरपि प्राप्तेरुत्क्रान्तः स एव अन्नमयादिः किं न स्यादित्यत आह— **नेतरोऽनुपपत्तेः** । आनन्दमय इति वर्तते । विष्णोरितरो हिरण्यगर्भादिरन्नमयादिशब्दवाच्यो न, 'ब्रह्मविदाप्नोति परम्' इत्यत्रोक्तस्यान्नमयादिज्ञानेन, मोक्षस्यानुपपन्नत्वादित्यर्थः । 'नान्यः पन्था विद्यत' इति हिरण्यगर्भादिज्ञानस्य मोक्षसाधनत्वनिषेधादिति भावः । हेत्वन्तरेण हिरण्यगर्भादीनामानन्दमयत्वं निराकरोति— **भेदव्यपदेशाच्च** । नेतर आनन्दमय इति च वर्तते । हिरण्यगर्भादिरानन्दमयो न, हिरण्यगर्भादिरानन्दमयस्य च भेदव्यपदेशादित्यर्थः । आनन्दमयस्तावत् अपरिमितानन्दवत्तया 'यतो वाचो निवर्तन्ते', 'आनन्दं ब्रह्मणो विद्वान्' इत्यादिना प्रतीयते । 'ते ये शतं प्रजापतेरानन्दाः' इत्यादौ

हिरण्यगर्भरुद्रेन्द्रादीनां शताद्यानन्दत्वोक्तिः[१], 'अदृश्येऽनात्म्ये' इत्यानन्दमये प्रकृत्याद्ययोग्यस्वातन्त्र्योक्तिः । 'स यश्चायं पुरुषे, यश्चासावादित्ये' इत्यानन्दमयस्य योग्यसर्वजीवनिष्ठत्वमुच्यते । एतादृशो भेदव्यपदेशो न स्यादिति भावः ।

नन्वानन्दमयाख्यब्रह्मणो हिरण्यगर्भादिर्भेदाङ्गीकारे विमतानि शरीराणि मद्भोगायतनानि, शरीरत्वान्मच्छरीरवत् इत्यनुमानविरोधः स्यादित्यत आह— **कामाच्च नानुमानापेक्षा** । चोऽवधारणे । अदृष्टार्थ इति शेषः । अदृष्टार्थे श्रुतिप्रत्यक्षाननुगृहीतानुमानस्यापेक्षा नास्ति । तस्य कामगामित्वादेवेत्यर्थः । श्रुत्याद्यननुकूलस्यादृष्टार्थसाधकत्वे सदादयश्चेतनादिवस्तुत्वादित्यादेरपि साधकत्वं स्यात् । प्रकृते चाद्वैतश्रुत्यादिकं नास्तीति भावः ।

ननु तर्हि भेदो व्यावहारिकोऽस्त्विति शङ्कां परिहरन् हेत्वन्तरेण आनन्दमयस्य हिरण्यगर्भादिकत्वं निराकरोति— **अस्मिन्नस्य च तद्योगं शास्ति** । श्रुतिर्मुक्तावपीति शेषः । 'नेतरोऽनुपपत्तेरित्यत्र इतरशब्दप्रसक्तो जीवोऽस्येति परामृश्यते । 'सोऽश्नुते सर्वान् कामान् सह', 'ब्रह्मणा विपश्चितेति', 'अनिलयने', 'एतमानन्दमयमात्मानमुपसङ्क्रामति', इत्यादिश्रुतिरस्मिन्प्रकरणे अस्य हिरण्यगर्भादिजीवस्य मुक्तावपि तद्योगं तेनानन्दमयेन सम्बन्धं शास्ति अतश्चानन्दमयोऽनन्तः इत्यर्थः । हिरण्यगर्भादिसम्बन्धस्य भेदसापेक्षत्वान्मुक्तिकालीनभेदस्य च पारमार्थिकत्वान्न व्यावहारिकत्वमिति ब्रह्मण एव आनन्दमयत्वं सिद्धमिति भावः ।

## ७. अन्तःस्थत्वाधिकरणम्

स्यादेतत् । 'अन्तःप्रविष्टं कर्तारमेतम्, अन्तश्चन्द्रमसि मनसा चरन्तं, सहैव सन्तं न विजानन्ति देवाः' इत्यत्र प्रतीयमानोऽन्तस्स्थस्तावदिन्द्रः, 'इन्द्रो राजा जगतो य ईशे' इति श्रुतेः । सूर्यो वान्तस्थः, 'सप्त युञ्जन्ति रथमेकचक्रमि'ति लिङ्गात् । वरुणो वाऽन्तस्थः, 'अपां नेतारमि'ति लिङ्गात् । त्वष्टा वान्तस्थः, 'त्वष्टारं रूपाणि विकुर्वन्तं' इति त्वष्टृश्रुतेः ।

विष्णुरन्तस्थो नैव प्रापकाभावात् । तथाच विष्णुरन्यस्येन्द्राद्यन्यतरस्य अन्तःस्थस्य 'सहैव सन्तं न विजानन्ति देवाः' इत्यत्रादृश्यत्वं प्रतीयते, तच्चादृश्यत्वं 'अदृश्येऽनात्म्येऽनिरुक्ते', इति श्रुतौ आनन्दमयस्यापि प्रतीयते । अत आनन्दमयो न विष्णुः, किन्तु अन्य एव अदृश्यत्वादन्तःस्थवदिति प्राप्ते सिद्धान्तयति— **अन्तस्तद्धर्मोपदेशात्** । ब्रह्मैवेति वर्तते । श्रूयमाणमिति शेषः । 'अन्तःप्रविष्टं कर्तारमि'ति श्रुतौ अन्तः श्रूयमाणो विष्णुरेव । 'अन्तःसमुद्रे मनसा चरन्तम् । ब्रह्मान्वविन्दद् दश-

१. प्रतीयते इति पूर्वतः योजनीयमिति भाति ।

होतारमर्णे', 'समुद्रेऽन्तः कवयो विचक्षते मरीचीनां पदमिच्छन्ति वेधसः', 'यस्याण्डकोशꣳशुष्ममाहुरि'त्यादौ समुद्रस्थत्वब्रह्माण्डवीर्यत्वादिविष्णुधर्माणां अन्तःस्थनिष्ठतयोपदेशादित्यर्थः। धर्माणां च वैष्णवत्वप्रसिद्धेरिति भावः।

ननु यद्येवं निरवकाशलिङ्गादन्तःस्थो विष्णुस्तदेन्द्रादिप्रापकसद्भावादिन्द्रादिरपि स्यात्, अत एवान्तःस्थेन विष्णुना इन्द्रादेरभेदोऽप्यस्तु, इत्यत आह— **भेदव्यपदेशाच्चान्यः।**

अन्तःश्रूयमाण इति वर्तते। इन्द्रादिभ्य इति शेषः। चोऽवधारणे। 'इन्द्रस्यात्मा निहितः पञ्च होता, वायोरात्मानं कवयो निचिक्युः', 'अन्तरादित्ये मनसा चरन्तमि'त्यादौ इन्द्राद्यन्तर्यामित्वेन्द्रान्तःस्थत्वयोर्भेदनियतयोरन्तःश्रूयमाणे व्यपदेशादन्तःश्रूयमाणः इन्द्रादिभ्योऽन्य एव न तु तदैक्येन शङ्कनीयः इत्यर्थः। इन्द्रादिप्रापकाणामिन्द्रादिश्रुत्यादीनां विष्णौ सावकाशत्वात्। नामात्मकानामिन्द्रादिबहुशब्दानां विष्णौ समन्वयलाभादन्तःस्थत्वलिङ्गसमन्वये प्रतिपादितेऽपि पादविरोधो नास्तीति सिद्धमिति भावः।

## ८. आकाशाधिकरणम्

'अस्य लोकस्य का गतिराकाश इति होवाच' इति छान्दोग्ये श्रुतस्तावदाकाशो न विष्णुः, किन्तु भूताकाश एव, तत्राकाशपदस्य रूढत्वात्। 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति' इत्यत्र भूतोत्पत्तितल्लयाधिकरणत्वलिङ्गाच्च, 'आकाशाद्वायुरि'त्यादिना तस्य तल्लिङ्गत्वनिश्चयात्। अत एवाकाशो नावकाशः। तथाच 'को ह्येवान्यात्' इत्यत्रापि भूताकाश एवाकाशः, तस्यैव लोके चेष्टकत्वमानन्दमयत्वं चाभिमानिव्यपेक्षया युज्यते। अतो भूताकाशावयवब्रह्मणो जिज्ञास्यता न युज्यत इति प्राप्ते सिद्धान्तयति— **आकाशस्तल्लिङ्गात्।** विष्णुरेवेति वर्तते। 'स एव परोवरीयानुद्गीथः स एषोऽनन्तः' इत्यत्र सर्वोत्तमत्वानन्तत्वयोर्विष्णुलिङ्गयोश्छान्दोग्योक्ताकाशे श्रवणात् आकाशो विष्णुरेवेत्यर्थः। 'परो मात्रया', 'अनन्तो भगवान् ब्रह्म' इत्यादिना तयोर्विष्णुलिङ्गत्वनिश्चयात्। सर्वभूतोत्पत्तिलयाधिकरणत्वस्य विष्णावेव सम्भवात्। 'नामानि सर्वाणि यमाविशन्ति' इत्यादिना आकाशादिपदानां विष्णौ रूढत्वाच्च। आधिभौतिकसर्वशब्दोपलक्षिताकाशशब्दवाच्यो विष्णुरेवेति। स एव लोकचेष्टक आनन्दमयश्चेति सिद्धमिति भावः।

## ९. प्राणाधिकरणम्

अथापि स्यात्, 'तद्वै त्वं प्राणो अभवः, महान् भोगः' इत्यत्र श्रुतः प्राणस्तावन्न विष्णुः, किन्तु मुख्यप्राण एव, प्राणशब्दस्य तस्मिन्नेव रूढत्वात्। विष्णुरूढत्वे विशेषप्रमाणाभावात्। प्राणपद-

प्रवृत्तिनिमित्तस्य जीवनस्य मुख्यप्राणे 'यत्प्राप्तिर्यत्परित्याग उत्पत्तिर्मरणं तथा' इति प्रसिद्धत्वाच्च । तस्मिन् प्राणे महाभोगस्वरूपानन्दत्वं प्रतीयत इति स एवानन्दमयः । प्राणावयवब्रह्मणो जिज्ञासा न युक्तेति प्राप्ते सिद्धान्तयति— **अत एव प्राणः** । विष्णुरेवेति वर्तते । 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ' इत्यत्र श्रीलक्ष्मीपतित्वरूपस्य सर्वथाऽन्यत्र अवकाशरहितस्य लिङ्गस्य श्रवणादेव स प्राणो विष्णुरेवेत्यर्थः । 'ईशानः प्राणदः प्राणः' इति विशेषप्रमाणात्, 'न प्राणेन नापानेन मर्त्यो जीवति कश्चन, इतरेण तु जीवन्ति' इति श्रुतिसिद्धजीवनत्वाच्च विष्णुरेवाध्यात्मिकसर्वशब्दोपलक्षणकप्राणशब्दवाच्य-आनन्दमयश्चेति सिद्धमिति भावः ।

## १०. ज्योतिरधिकरणम्

अथापि स्यात्, 'वि मे कर्णा पतयतो विचक्षुर्वी३दं ज्योतिर्हृदय आहितं यत् वि मे मनश्चरति दूर आधीः । किंस्विद्वक्ष्यामि किमु नू मनिष्य' इत्यृचा प्रतीयमानं ज्योतिस्तावन्न विष्णुः, किं त्वग्निः, ज्योतिःशब्दस्य तत्र रूढत्वात्, अस्या ऋच अग्निसूक्तत्वाच्च । तस्मिन् ज्योतिषि हृदय आहितमिति हृदयाहितत्वं प्रतीयते । तच्च 'यो वेद निहितं गुहायां' इति मन्त्रवर्णात् हृदयाहितत्वम् आनन्दमयस्य प्रतीयते । मन्त्रवर्णोक्तस्यैवानन्दमयशब्दवाच्यत्वात् । अत आनन्दमयोऽप्यग्निरेवेति नाग्न्यवयवब्रह्मणो जिज्ञासा युक्तेति प्राप्ते सिद्धान्तयति— **ज्योतिश्चरणाभिधानात्** । विष्णुरेवेति वर्तते । चरणसामान्येन विरुद्धचरणं विवक्षितम् । मे कर्णौ विरुद्धं पतयतः चरतः, चक्षुश्च विरुद्धं चरति मनश्चातीव विरुद्धं चरतीति कर्णादीनां ज्योतिर्विरुद्धचरणाभिधानेनार्थात्सिद्धस्य कर्णादिविदूरत्वलिङ्गस्याभिधानात् ऋचि ज्योतिर्विष्णुरेवेत्यर्थः । 'परो मात्रये'ति श्रुतौ मीयन्ते विषयाः अनेन इति मात्रा इन्द्रियगणः, तस्मात्परस्तद्विदूर इति कर्णादिविदूरत्वलिङ्गस्य विष्णावेव सिद्धत्वाज्ज्योतिश्शब्दस्य विष्णौ रूढत्वाच्च ज्योतिर्हृदय आहितश्चानन्दमयश्च विष्णुरेवेति सिद्धमिति भावः ।

## ११. गायत्र्यधिकरणम्

अथापि स्यात् 'गायत्री वा इदं सर्वम्' इति छन्दोगश्रुतौ प्रतीयमाना गायत्री तावन्न विष्णुः । किन्तु छन्दोविशेषः । तस्मिन् गायत्रीशब्दस्य रूढत्वात् वाग्वै गायत्रीति वाक्त्वभिधानाच्च तथाच 'अथ यदतः परो दिवो ज्योतिर्दीप्यत' इति उत्तरवाक्येऽपि गायत्र्या एव ज्योतिष्ट्वमुच्यत इति वक्तव्यम् । 'तेजो वै ब्रह्मवर्चसं गायत्री'ति गायत्र्या ज्योतिःशब्दसमानार्थतेजःशब्दप्रयोगदर्शनाच्च । अतः छन्दोविशेष एव गायत्री ज्योतिश्च हृदय आहितश्च आनन्दमयश्चेति छन्दोविशेषावयवब्रह्मणो न जिज्ञास्यतेति प्राप्ते पूर्वपक्षानुवादनिषेधपूर्वकं सिद्धान्तयति— **छन्दोऽभिधानान्नेति चेन्न, तथा चेतोऽर्पणनिगदात्तथाहि दर्शनम्** ।

विष्णुरिति वर्तते। ज्योतिस्तावत् गायत्रीपदेन पूर्वमुपक्रान्तम्। गायत्री न विष्णुः, गायत्रीपदेन छन्दोविशेषाभिधानात्। अतो ज्योतिर्विष्णुर्नेति पूर्वपक्षभागार्थः, इति चेन्न, गायत्री च न विष्णुरिति न, किन्तु गायत्री विष्णुरेव। न च गायत्रीपदप्रयोगवैयर्थ्यम्, तथा गायत्रीत्वेन गायत्रीशब्दार्थगुणस्वरूपत्वेनेति यावत्। चेतोऽर्पणार्थं मुमुक्षूणां विष्णूपासनार्थे निगदगायत्रीपदेन कथनात्। 'गायति च त्रायति च या वै सा गायत्रीति' दर्शनं श्रुतिः। तथा गायत्रीपदार्थो विष्णुरेवेति भावेन गायत्रीपदार्थस्य छन्दोविशेषायोग्यगानत्राणकर्तृत्वेनैव गायत्रीपदवाच्यत्वं वदन्ति। हि प्रसिद्धेत्यर्थः। अत एव विष्णुच्छन्दोविशेषयोरैक्येनोभयत्र गायत्रीपदप्रयोग इति निरस्तम्; 'सर्वछन्दोऽभिधो ह्येषः' इति वामनश्रुतौ गायत्रीपदस्य विष्णौ श्रुतत्वं (शक्तत्वं) च ज्ञायते। वाक्यविधानं च विष्णावेव सम्भवत्युपासनार्थमेव। अतो ज्योतिर्विष्णुरिति भावः। हेत्वन्तरेण गायत्र्या विष्णुत्वं समर्थयति **भूतादिपादव्यपदेशोपपत्तेश्चैवम्**। विष्णावेवेति शेषः। भूतं विश्वं आदिर्यस्य स्वरूपत्रयस्य तद्भूतादि भूतं स्वरूपत्रयं चेति यावत्। तदेव पाद इति व्यपदेशः। तस्योपपत्तेरिति विग्रहः। 'पादोऽस्य सर्वा भूतानि, त्रिपादस्यामृतं दिवि' इति गायत्रीविषयस्य भूतादिपादव्यपदेशस्य विष्णावेवोपपत्तेश्च एवं गायत्री विष्णुरित्यर्थः। भूतादिपादत्वस्यान्यत्रानुपपन्नत्वात् पुरुषसूक्तोक्तत्वाच्च विष्णुलिङ्गत्वमिति भावः।

उक्तमाक्षिप्य समादधति— **उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्**। एवमिति वर्तते। 'त्रिपादस्यामृतं दिवि' इति गायत्र्या द्युस्थितत्वमुच्यते। 'परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु इति ज्योतिषो द्युपरत्वं विश्वतः दीव्यत्वं सर्वतः दीव्यत्वं चोच्यते। अतो गायत्रीज्योतिषोरुपदेशभेदः। अतो विरुद्धधर्माधिकरणत्वान्न तयोरैक्यम्। तथाच न तयोर्विष्णुत्वनिर्णय इति पूर्वपक्षभागार्थः। यद्यप्येतदधिकरणारम्भकपूर्वपक्षाननुकूलं ततश्च तत्रैव परिहर्तव्यम्, तथापि सिद्धान्तस्याप्यननुकूलत्वादत्राशङ्क्यत इति द्रष्टव्यमिति चेन्न, गायत्रीज्योतिषोर्विरुद्धधर्माधिकरणत्वेन भिन्नत्वादविष्णुत्वम्, न पूर्वस्मिन् परस्मिन्नुपदेशे विरोधाभावादित्यर्थः। भूर्भुवःस्वरिति लोकत्रयात्मकाः सप्तोऽर्ध्वलोका इति प्रसिद्धम्। तत्र भूर्भुवरिति द्वौ लोकौ, स्वरिति अन्तरिक्षोर्ध्वलोका ग्राह्याः। भूलोकाल्लक्षयोजनोच्छ्रितान्तरिक्षोपरितनश्वेतद्वीपानन्तासनवैकुण्ठानां द्युत्वात् तत्स्थानि नारायणवासुदेववैकुण्ठाख्यानि विष्णुरूपाणि पूर्वोपदेशे द्युस्थितत्वेनोच्यन्ते। 'पृथिव्यां द्यौर्महामेरुः आकाशे सूर्यमण्डलम्। दिवीन्द्रसदनं चैव तत्परे तु दिवापर' इत्यत्र मेरुसूर्यमण्डलेन्द्रसदनानां द्युत्वमुच्यते। अनन्तासनं मेरोः परं, श्वेतद्वीपश्च सूर्यमण्डलात्परः, वैकुण्ठं चेन्द्रसदनात्परमिति श्वेतद्वीपानन्तासनवैकुण्ठस्थानां विष्णुरूपाणामेव द्युपरत्वमुच्यते। एवं सर्वतः पृष्ठत्वं सर्वलोकोच्चत्वं विवक्षितम्। तदपि क्रमेण तथा च भूलोकोच्चत्वमनन्तासनस्य, अन्तरिक्षलोकोच्चत्वं श्वेतद्वीपस्य, सर्वलोकोच्चत्वं वैकुण्ठ-

स्येति तत्स्थानामेव सर्वतः पृष्ठत्वं युज्यते। विश्वतः पृष्ठत्वं च ब्रह्मसदनोच्चत्वमेव विवक्षितम्। 'पृथिव्यां ब्रह्मणे मेरुर्जयन्तं त्वन्तरिक्षगम्। तृतीयं सत्यलोके च सदनं त्रिविधं स्मृतम्। तेभ्योऽनन्तासनाद्यत्तत्परो विश्वतः परः' इति वचनाद्विष्णुरूपाणामेव तद्विश्वतः पृष्ठत्वं युज्यते। अतो द्युस्थत्वादिधर्माणां मिथो विरोधाभावाद्विष्णुरेव गायत्री ज्योतिर्हृदय आहितं आनन्दमयश्चेति सिद्धमिति भावः।

## १२. पादान्त्यप्राणाधिकरणम्

अथापि स्यात् 'ता वा एताः शीर्षं श्रियः श्रिताः चक्षुः श्रोत्रं मनो वाक् प्राणः' इत्यैतरेये प्रतीतः प्राणस्तावन्न विष्णुः किन्तु वाय्वादिः एतत्प्राणस्येन्द्रियगणपठितत्वात्। अतः प्राणपदार्थत्वाविशेषात् 'तद्वै त्वं प्राणोऽभवः' इत्यत्रोक्तः प्राणो महाभोग आनन्दमयश्च स एवेति न तदवयवब्रह्मजिज्ञासा युक्तेति प्राप्ते सिद्धान्तयति— **प्राणस्तथानुगमात्**। विष्णुरेवेति वर्तते। अनुगच्छत्यनुवर्तत इत्यनुगमोऽभ्यासः। यथा 'तद्वै त्वं प्राणोऽभवः' इति श्रुतौ, तथात्रापि प्राणो विष्णुरेव, 'तं देवाः प्राणयन्त' इति देवैः प्रशिष्येषु प्रकर्षेण नीतत्वरूपदेवतोपदेश्यत्वं, 'तं भूतिरिति देवा उपासांचक्रिरे' इति भूतित्वेन देवोपास्यत्वं, 'ता वा एताः सर्वा ऋचः सर्वे वेदाः' इति सर्ववेदोक्तत्वं अथ देहरथस्थत्वं प्राणोऽधितिष्ठति देहरथत्वमुच्यते। एतेषां विष्णुलिङ्गानां अस्मिन्प्राणेऽभ्यासात् 'एतत् ब्रह्म ब्रह्मणो लोको ब्रह्मेमं पुरुषं उदरं ब्रह्मे'ति ब्रह्मशब्दाभ्यासाच्चेत्यर्थः। विष्णुमेवानयने वा 'विष्णुं' भूतिमुपासते स एव सर्ववेदोक्तस्तद्रथो देह उच्यते, तदेव ब्रह्म परमं कवीनाम्' इत्यादि लिङ्गानां ब्रह्मशब्दस्य वैष्णवत्वमेवेति भावः।

उक्तमाक्षिप्य समादधति— **न वक्तुरात्मोपदेशादिति चेद् अध्यात्मसम्बन्धभूमा ह्यस्मिन्**। प्राणो विष्णुरिति वर्तते। चेन्नेति शेषः। वक्तुरिति कर्मणि षष्ठी। 'तमिन्द्र उवाच प्राणो वा अहमस्म्यृषे' इति बृहतीसहस्रवक्तारं विश्वामित्रं प्रतीन्द्रेण स्वात्मानमेव प्राणतयोपदेशान्न विष्णुः प्राण इति पूर्वपक्षार्थः इति चेन्न। उपदेशाश्च कोऽयं प्राण इति न, उपदेशस्यान्यपरत्वात्, हि यस्मादन्यस्मिन् प्रकरणे अध्यात्मनः अधिकात्मनः परमात्मनः सम्बन्धस्य भूमा बाहुल्यं सर्वदेहगतत्वमिति यावत्। प्राणो वा अहमस्म्यृषे प्राणः त्वं प्राणः सर्वाणि भूतानि व्यपदिश्यत इत्यर्थः। अन्यथा त्वामेव जानीयामिति पृष्टे प्राणस्त्वमित्यादेरसम्बन्धः स्यादिति भावः। अथवा अध्यात्मसम्बन्धभूमा हीत्यावर्त्य प्रकारान्तरेण व्याख्येयम्। अस्मिन्निन्द्रे परमात्मसम्बन्धस्य भूमा बाहुल्यं यस्मादस्ति अतः प्राणो वा अहमस्म्यृष इति स्वनिष्ठपरमात्मनः प्राणत्वेनोपदेशः। तत्कुतः ? हि यस्मात् प्राणस्त्वं प्राणः सर्वाणि भूतानीति। प्राणस्याध्यात्मं च सम्बन्धभूमा च अन्तर्यामित्वं स हि सर्वगतत्वमिति यावत्। व्यपदिश्यत इत्यर्थः। अन्यथा त्वामेव जानीयामिति ज्ञातपूर्वेन्द्रस्य मुनेः प्रश्नस्यैवासम्भवाद्विष्णुपरत्वे

त्विन्द्रतेजो विशेषेणेन्द्राभिन्नमनुमाय न वा कोऽसौ कीदृश इति प्रश्नद्वये प्राणो वा अहमिति प्राणस्त्वं प्राणः सर्वाणि भूतानीति क्रमेण परिहारोपपत्तेरिति भावः ।

नन्वत्र यदि प्राणोऽन्तर्यामी तर्हि मयि प्राण इत्यादि प्रयोगः स्यात् न तु प्राणो वा अहमित्यादि, तथा क्वाप्यदर्शनादित्याशङ्कां परिहरति— **शास्त्रदृष्ट्या तूपदेशो वामदेववत्** । उपपद्यत इति शेषः । तद्योगादित्यावर्तनीयम् । तत्र पुंसामिति शेषः । तुरप्यर्थे । वामदेवमुनेः 'अहं मनुरभवं सूर्यश्च' इत्याद्युपदेशे इव इन्द्रस्योपदेशोऽपि शास्त्रस्य शासकस्य अन्तर्नियामकस्य विष्णोर्दृष्ट्या ज्ञानि-वामदेवर्षेर्मन्वादीनां चैक्यस्य प्रमाणबाधितत्वेन दृष्टान्तवैषम्याभावात् । शास्त्रपदप्रयोगेण सूचिताया 'तत्तन्नाम्नोच्यते विष्णुः सर्वशास्तृत्वहेतुतः' इति स्मृतेश्चैवेति भावः ।

पुनरुक्तमाक्षिप्य समादधाति— **जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वा-दिह तद्योगात्** । शास्त्रदृष्ट्योपदेश इति वर्तते । 'प्राणो ह्येष य एष तपति तं शतं वर्षाण्यभ्यार्च्यत् तस्माच्छतं वर्षाणि पुरुषायुषो भवन्ति' इत्यादौ शतायुष्ट्वस्य 'शतायुर्वै पुरुषः' इति श्रुतिसिद्धस्य जीव-लिङ्गस्य सत्त्वात् 'अहमुक्थमस्म्यहमुक्थमस्मि' इत्यादौ प्राणस्येन्द्रियैः सह संवादादीनां 'अथ ह प्राणा अहं श्रेयसे व्यूदिरे' इत्यादि श्रुतिसिद्धानां मुख्यप्राणलिङ्गानां च सत्त्वाज्जीवमुख्यप्राणावेव प्राण इति न शास्त्रदृष्ट्येन्द्रस्योपदेशः, अतोऽत्र न प्राणो विष्णुरिति पूर्वपक्षार्थ इति चेत्, अत्र प्राणो जीवमुख्यप्राणौ न; जीवमुख्यप्राणलिङ्गानां तस्मिन् तदन्तर्यामिणि योगोपपत्तेः । अवश्यं चान्तर्यामी वेदेन कथनीयः । भगवतः उपासनानां त्रैविध्यात् । अन्तर्गतबहिर्गतसर्वगतत्वेन त्रिविधत्वात् । अन्तर्गतोपासनाय 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत' इत्युक्त्या सर्वगतोपासनाय 'स एतमेव पुरुषं ब्रह्म ततम-पश्यत्' इत्युक्त्या, बहिर्गतोपासनाय एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेय' इत्युक्त्या च इह प्रकरणे आश्रितत्वादुपासात्रैविध्यस्याङ्गीकृतत्वात् । तद्योगात् पुरुषाणां तत्तदुपासानां योग्यत्वादित्यर्थः । उपासात्रैविध्यानङ्गीकारे 'केषाञ्चित्सर्वगत्वेन केषाञ्चित् हृदये हरिः । केषाञ्चिद् बहिरेवासावुपास्यः पुरुषोत्तमः' इति प्रमाणविरोधः । अथ कारणविशेषानङ्गीकारे 'अग्नौ क्रियावतां विष्णुः योगिनां हृदये हरिः । प्रतिमास्वप्रबुद्धानां सर्वत्र विदितात्मनाम्' इति प्रमाणविरोधः । इहाप्यन्तर्गतादिकथनवैयर्थ्यं च स्यात् । अतः प्राणो महाभोगो आनन्दमयश्च ब्रह्मात्मको विष्णुरिति सिद्धमिति भावः ॥

*इति श्रीविजयीन्द्रभिक्षुणा कृते भाष्यतत्त्वप्रकाशिकावाक्योद्धाररूपे मुकुरनाम्नि ग्रन्थे प्रथमाध्यायस्य प्रथमः पादः ॥*



# अथ प्रथमाध्यायस्य द्वितीयः पादः

## १. सर्वगतत्वाधिकरणम्

लिङ्गात्मकापरपर्यायाणां धर्मविशिष्टधर्मिवाचिनां शब्दानां समन्वयं प्रतिपादयत्यस्मिन् पादे । ऐतरेयके 'सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते' इति कस्यचित्सर्वगतत्वं प्रतीयते । तत् आदित्यस्यैव तस्यैतस्य 'असावादित्यो रस' इत्यादौ बह्वादित्यश्रुतेः, सर्वगतस्य चेन्द्रस्येतमित्यादिवदादित्यस्थ-त्वानुक्तेः । 'जीवो वा सर्वगतः, चक्षुर्मयः श्रोत्रमयः' इति तल्लिङ्गश्रवणात्, तत्सर्वगतत्वं ब्रह्मततममिति प्राणे श्रूयते । अतः सोऽप्यादित्य महाभोगादानन्दमयश्च । अत आदित्यावयवस्य ब्रह्मणो न जिज्ञा-स्यत्वमिति प्राप्ते सिद्धान्तयति— **सर्वत्र प्रसिद्धोपदेशात्** । वक्ष्यमाण इति शेषः । अवधारणार्थे सप्तमी । विष्णुरेवेति । विष्णौ प्रसिद्धस्य ब्रह्मशब्दस्य 'एतमेव ब्रह्मेत्याचक्षते' इति सर्वगते उपदेशात्, सर्वगतो विष्णुरेवेत्यर्थः । 'तदेव ब्रह्म परमं कवीनां, परमं यो महद्ब्रह्म' इति विष्णावेव ब्रह्मपदप्रसिद्धिरिति भावः । युक्त्यन्तरेण विष्णोः सर्वगतत्वं प्रतिपादयति— **विवक्षितगुणोपपत्तेश्च** । वक्तुं योग्याः विवक्षिताः । सर्वगतो योऽश्रुतोऽगतो इत्यत्र अश्रुतत्वादिगुणाः श्रूयन्ते । तेषां विष्णावेवोपपत्तेश्च सर्वगतो विष्णुरेवेत्यर्थः । ये गुणा यत्र वक्तुं योग्यास्ते तत्रैव वाच्याः अन्यथा नोपपद्यन्ते 'सोऽश्रुतः सोऽदृष्टो योऽचक्षुरित्यादिना विष्णावेवाश्रुतत्वादयो वाच्याः । नादित्यादौ, अश्रुतत्वादिरिति भावः ।

नन्वादित्यश्रुतेश्चक्षुर्मयत्वादिलिङ्गात् सर्वगतः आदित्यो जीवो वा किं न स्यादित्यत आह— **अनुपपत्तेस्तु न शारीरः** । शारीरः शरीरसम्बन्धीति आदित्यो जीवो वा, 'सर्वेषु भूतेष्वेतमेव' इत्युक्तस्य सर्वशरीरत्वस्य तत्रानुपपत्तेरेवेत्यर्थः । जीवानामणुत्वादादित्यस्य ब्रह्मादिशरीरेष्वभावादनुप-पत्तिरिति भावः । युक्त्यन्तरेण जीवस्यात्रोक्तसर्वगतत्वं पराकरोति— **कर्मकर्तृव्यपदेशाच्च** । कर्म-कर्त्रिति भावप्रधानः । 'आत्मानं परस्मै शंसती'त्यादौ सर्वगतस्य कर्मत्वेन जीवस्य कर्तृत्वेन व्यपदेशाच्च सर्वगतो न शारीर इत्यर्थः । उत्सर्गतः कर्तृकर्मणो भिन्नत्वादत्रापवादाभावादिति भावः ।

ननु विष्णोरयोग्यं चक्षुर्मयत्वादि सर्वगते श्रूयते । अतो जीव एव सर्वगतः । तथाच ब्रह्मशब्दादिकं कथञ्चित्तत्रैव योज्यमित्यत आह— **शब्दविशेषात्** । 'एतमेव ब्रह्मेत्याचक्षत' इति ब्रह्मशब्देऽव-धारणाख्यविशेषश्रवणात् सर्वगतो न शारीर इत्यर्थः । सावधारणब्रह्मशब्दस्य मुख्यपूर्णत्वैकवाचक-त्वात् तस्य च जीवेऽनुपपत्तिरिति भावः ।

स्मृतिसमाख्ययापि विष्णुरेवात्रोक्तं सर्वगतमिति साधयति— **स्मृतेश्च** । 'अहमात्मा गुडाकेश सर्वभूताशयस्थितः' इत्यादिस्मृतेश्च सर्वगतो विष्णुरेव । उक्तार्थमाक्षिप्य समादधाति— **अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च** । अर्भकमल्पमोकः स्थानं यस्य स तथा तस्य भावः तस्मात् विष्णोस्तावदपरिच्छिन्नत्वं चक्षुर्मयत्वादिजीवधर्माभावश्च अङ्गीक्रियते । सर्वगते च 'सर्वेषु भूतेष्वि'ति अर्भकौकस्त्वं श्रूयते । चक्षुर्मयत्वादिजीवलिङ्गम् । आदित्यश्रुतिश्च श्रूयते । अतः सर्वगतस्यार्भकौकस्त्वात्तस्य जीवस्य चक्षुर्मयत्वादिना व्यपदेशात् आदित्याख्यजीवस्यादित्यश्रुत्या व्यपदेशाच्च सर्वगतो न विष्णुः । किन्तु जीव आदित्यो वेति चेन्न, विष्णुरेव सर्वगतः । विष्णोरप्यपरिच्छिन्नव्योमवदर्भकौकस्त्वात् । उपलक्षणमेतत् । इन्द्रियस्वामिकत्वेन चक्षुर्मयत्वाच्च । एवमर्भकौकस्त्वेन चक्षुर्मयादित्वेन च सर्वगतस्य विष्णोर्ज्ञेयत्वादित्यर्थः । 'सर्वेन्द्रियमयो विष्णुः सर्वप्राणिषु च स्थितः । सर्वनामाभिधेयश्च सर्ववेदोदितश्च सः' इति स्मृतौ सर्वप्राणिषु स्थितत्वनिमित्तेन सर्वेन्द्रियमयत्वस्य सर्वेन्द्रियमयस्य चोक्तत्वाच्चक्षुर्मयादित्वमादित्यस्थितत्वेनादित्यश्रुतिवाच्यत्वं च विष्णावेव युज्यते । अत एव श्रुतौ अश्रुतमप्यादित्यनामधेयत्वमिति वाक्यमर्थात्सिद्ध्यतीति भावः ।

पुनरुक्तमाक्षिप्य समादधति— **सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्** । विष्णोरिति शेषः । जीवस्य वा तच्छरीरस्थितत्वेन तत्तच्छरीरप्रयुक्तसुखदुःखयोः सम्यक् साक्षात्काररूपो भोगोऽस्ति । सम्यक्त्वं च जीवविकारविशेषहेतुत्वम् । तथाच विष्णुः सर्वगतत्वेन तथात्वे शरीरस्थत्वाविशेषाद्विष्णोरपि सम्भोगस्य प्राप्तिः । सम्भोगः आपद्यत इति यावत्, इति चेन्न, विष्णोः सामर्थ्ये वैशेष्याज्जीवादपि विशेषसद्भावादित्यर्थः । 'सर्वज्ञाल्पज्ञताभेदात् सर्वशक्त्यल्पशक्तितः । स्वातन्त्र्यपारतन्त्र्याभ्यां सम्भोगो नेशजीवयोः' इति स्मृतेर्जीवस्यैव सम्भोगो नेश्वरस्य, अग्निस्तम्भनवतोऽग्निशब्दाभाव इति सिद्धमिति भावः ।

## २. अत्तृत्वाधिकरणम्

अथापि स्यात् । बृहदारण्यके 'स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्ती'ति तददितेरदितित्वमित्यत्र अत्तृत्वं प्रतीयते । तच्चादितिदेवताया एव, अदितिश्रुतेः । 'पुलिङ्गेनोच्यते स्त्री च पुंवच्छक्तिमति क्वचिदि'ति स्मृतेः इति पुलिङ्गो युज्यते । तथाच जन्माद्यस्य यत इत्युक्तं ब्रह्मणो जगत्संहर्तृत्वं लक्षणमतिव्याप्तमिति प्राप्ते सिद्धान्तयति **अत्ता चराचरग्रहणात्** । वक्ष्यमाणमात्मेति वर्तते ।

सर्वं वा अत्तीत्यत्र भक्ष्यत्वेन सर्वगृहीतं सर्वं चराचरम् । सङ्कोचे कारणाभावात् । ततश्चात्र चराचरस्याद्यतया ग्रहणादत्ता विष्णुरेवेत्यर्थः । 'यमप्येति भुवनं साम्पराये स नो हरिरि'ति श्रुतेः 'स्रष्टा पाता तथैवात्ता' इति स्मृतेश्च विष्णोरेवात्तृत्वम् । 'सर्वाणि नामानि यमाविशन्ती'त्यदितिशब्दवाच्यत्वं चेति भावः ।

प्रकरणेनापि विष्णोरत्रात्तृत्वं प्रतिपादयति— **प्रकरणाच्च** । अत्र प्रकरणे 'आपोऽजायन्त, संवत्सरोऽभवत्, तं जातमभिव्याददात्, सभाणमकरोदित्यपि सृष्टिः संवत्सरादनोद्यमश्च प्रतीयन्ते । अत एवास्य विष्णुप्रकरणत्वात् तद्बलाच्चात्ता विष्णुरेवेत्यर्थः । 'सोऽत्मनो मनसाऽस्राक्षीदप एव जनार्दनः । तत्र संवत्सरं नाम ब्रह्माणमसृजत् प्रभुः । तमत्तुं व्याददादास्यम्' इति स्मृतावायसृष्ट्यादि विष्णोरेव । अतो न लक्षणमतिव्याप्तमिति सिद्धमिति भावः ।

## ३. गुहाधिकरणम्

अथापि स्यात् । काठके 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ' इत्यत्र ऋतं पिबन्ताविति कर्मपातृत्वशब्दवाच्यं कर्मफलादातृत्वं प्रतीयते । पिबन्ताविति द्विवचनं तावद्भेदव्याप्यद्वित्ववाचकम् । द्वयोर्मध्ये पातृत्वान्यथानुपपत्त्यैको जीवः । द्वितीयः सजातीयत्वात् परमात्मैव । कर्मफलपानायोग्येऽपि परमात्मनि छत्रिन्यायेन पातृजीवसाहित्यात् पातृत्वोपचारः । तथाच जीवसहितस्यैव विष्णोः कर्मफल-पातृत्वमिति नेश्वरस्यैव सर्वात्तृत्वम् । अतो लक्षणं न युक्तमिति प्राप्ते सिद्धान्तयति— **गुहां प्रविष्टा-वात्मानौ हि तद्दर्शनात्** । पिबन्ताविति वक्तव्ये गुहां प्रविष्टावित्युक्त्वा पिबतोर्ग्रहणं गुहां प्रविष्टत्वादिति युक्तिसूचनार्थम् । पिबन्तावात्मानौ विष्णुरूपे एव, गुहां प्रविष्टत्वात्, हि 'यो वेद निहितं गुहायामि'ति तस्य विष्णावेव प्रसिद्धत्वात् । तद्दर्शनात् तस्य रूपद्वयेन गुहां प्रविष्टत्वस्य, 'घर्मा समन्ता त्रिवृतं व्यापतुरित्यत्र घर्मो दीप्तौ विष्णू समन्तात् सर्वं त्रिवृतं शरीरं विशेषेण हृदयस्थान इति यावत्, व्यापतुरिति दर्शनादित्यर्थः । 'निविष्टो हृदये नित्यं रसं पिबति कर्मजम् । शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत्' इति स्मृतिबलेन जीवलक्षणकर्मफलपानस्य सिद्धत्वान्न कोऽपि दोषः इति भावः ।

एवं निरवकाशलिङ्गस्य सावकाशश्रुतितोऽपि प्राबल्याद्विष्णोर्भोक्तृत्वसम्भवाच्च । स एव पातेति सिद्ध्यति । किमु निरवकाशश्रुत्यापीममर्थं प्रतिपादयति— **विशेषणाच्च** । 'यः सेतुरीजानानामक्षरं ब्रह्म तत्परम्' इत्यत्र पिबतोरेकवचनेन विशेषणात् ब्रह्मत्वविशेषणाच्चैको विष्णुरेव रूपद्वयेन व्याकर्तेत्यर्थः । एकत्वेऽपि द्विवचनविषयकस्य च विष्णावेव सम्भवाद्विष्णुभिन्ने जीवे समन्वयाप्रसक्त्या च नात्र पाता जीवोऽतो लक्षणं युक्तमिति सिद्धमिति भावः ।

## ४. अन्तराधिकरणम्

अथापि स्यात् छान्दोग्ये 'य एषोऽन्तरक्षिणि पुरुषो दृश्यते' इत्यत्र अक्षिस्थत्वं प्रतीयते । 'आदित्यश्चक्षुर्भूत्वा अक्षिणी प्राविशत्' इति श्रुते अक्ष्यादित्ययोरेकविधत्वात् 'य एष आदित्ये पुरुषः' इत्यादिना आदित्यस्थितत्वस्याग्निधर्मत्वात् अत्र अक्षिस्थितत्वमप्यग्नेरेव । 'अथ ह्यग्नयः समूदिर' इत्यादावत्रापि बह्वग्निश्रुतिसम्भवाच्च । अतोऽक्ष्यादित्यस्थोऽग्निरेवेति 'यश्चासावादित्य' इति तैत्तिरीयोक्तादित्यस्थस्याग्नित्वादानन्दमयोऽप्यग्निरेवेति नाग्न्यवयवब्रह्मजिज्ञासा कर्तव्या । 'एवंविदि पापं कर्म न श्लिष्यत' इत्यग्निज्ञानादेव मोक्षश्रवणात्, विष्णुज्ञानादेव मोक्ष इत्यपि बाधितमिति प्राप्तम् । यथापि छान्दोग्ये अक्षिस्थोऽग्निरेव ह्यग्निश्रुत्यादेः, तथाच तैत्तिरीये आदित्यस्थोऽप्यग्निः अक्ष्यादित्ययोरेकविधत्वादिति पूर्वपक्षः कार्यः । न त्वसङ्गत इव वक्रमार्गेणेति तथाप्यादित्यस्थत्वलिङ्गसमन्वयार्थमेवमिति द्रष्टव्यम् ।

सिद्धान्तयति— **अन्तर उपपत्तेः** । आत्मेति वर्तते । चक्षुष इति शेषः । 'एतदमृतमभयमेतद्ब्रह्म' इत्यक्षिस्थले श्रुतानाममृतत्वाभयत्वलिङ्गब्रह्मशब्दानां विष्णावेवोपपत्तेश्चक्षुरन्तरे विष्णुरेवेत्यर्थः । 'त्रिपादस्यामृतं दिवि, अभयं तितीर्षतां पारं, तदेव ब्रह्म परमं कवीनाम्' इति श्रुतिभ्योऽमृतत्वादीनां वैष्णवत्वमिति भावः ।

युक्त्यन्तरेण विष्णोश्चक्षुरन्तरत्वं साधयति— **स्थानादिव्यपदेशाच्च** । स्थानपदं स्थानशक्त्युपलक्षकम् । आदिपदेनात्मशक्तिः । 'सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छती'त्यक्षिसंस्थानस्थ चक्षुषः सर्पिराद्यसङ्गाख्यशक्तिः व्यपदिश्यते । 'एष उ एव वामनिरेष हि सर्वाणि वामानि नयति एष उ एव भामनिः । एष हि सर्वेषु लोकेषु भाति' स्वरूपशक्तिर्व्यपदिश्यते । अपश्चाक्षिस्थो विष्णुरेवेत्यर्थः । 'यदिदं चक्षुषि सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति स वामनः, स भामनः, स आनन्दः सोऽच्युत' इति श्रुतिरत्र प्रमाणमिति भावः ।

प्रकरणबलाच्च विष्णोरक्षिस्थत्वं प्रतिपादयति— **सुखविशिष्टाभिधानादेव च** । विशिष्टं सुखं सुखविशिष्टम्, पूर्णसुखमिति यावत् । अस्मिन् प्रकरणे 'कं ब्रह्म खं ब्रह्मे'ति कस्य सुखस्य खस्य ज्ञानस्य च पूर्णत्वमुच्यते । तत्र पूर्णसुखमात्राभिधानादेव यदास्य विष्णुप्रकरणत्वं तदा किमु वक्तव्यं ज्ञानविशि-ष्टाभिधानात् । अतो विष्णुप्रकरणबलाच्चाक्षिस्थो विष्णुरिति भावः । 'विज्ञानमानन्दं ब्रह्म, आनन्दो ब्रह्म' इति च ब्रह्मण एव पूर्णज्ञानं पूर्णानन्दश्च स्वरूपलक्षणं श्रूयते । अतो ब्रह्मप्रकरणमेवेति भावः ।

ननु 'कं ब्रह्म खं ब्रह्म' इत्याद्यविद्याया अस्ति वैष्णवत्वं आत्मविद्येत्युक्तत्वात्। 'य एषोऽक्षिणि पुरुष' इति द्वितीयविद्यायास्तु न वैष्णवत्वं, किन्त्वाग्नेयत्वं, 'य एष आदित्ये पुरुष' इत्यनेनैकार्थत्वात्। अन्यथा आद्याविद्यायाः आत्मविद्येति पृथगुक्त्ययोगात्। अतोऽक्षिस्थविद्याया अग्निविषयत्वमेवेत्याशङ्कां परिहरति— **श्रुतोपनिषत्कगत्यभिधानाच्च**। श्रुतमिति मननिदिध्यासनोपलक्षणम्। श्रुतमात्रपरं च उपनिषत् श्रुतोपनिषत् कः ब्रह्म वायुश्च। अक्षिस्थविद्यायां 'स एनान् ब्रह्म गमयती'ति वायुना ब्रह्मप्राप्तिः श्रूयते। सा च 'सर्वेषु लोकेषु भाति य एवं वेद' इति समीपवाक्यादेतद्विद्याज्ञानमेवेति ज्ञायते। तथाच श्रुतोपनिषदं उपकोसलं प्रति श्रुतोपनिषदां पुंसां केन कं प्रति गतेरभिधानाच्चास्य प्रकरणस्य वैष्णवत्वम्। अतो विष्णुरेवाक्षिस्थ इत्यर्थः। अस्याग्नेर्विद्यात्वे देवानां प्राप्तिरुपपन्ना। 'देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि' इति स्मृतेः। न चात्र विद्येति पृथगुक्तिविरोधः, तस्याः सर्वगतात्मविद्यात्वाभिधायकत्वात्। न च अस्या आदित्यस्थविद्यैकार्थत्वविरोधः। आदित्यस्थस्यापि विष्णुत्वादिति भावः।

विपक्षबाधकेनापि विष्णोरक्षिस्थत्वं साधयति— **अनवस्थितेरसम्भवाच्च नेतरः**। अक्षिप्रेरणार्थं हि चक्षुरन्तरः स्वीकर्तव्यः, तथाच जीवत्वाविशेषादग्नेरपि स्वप्रेर्यजीववज्जीवप्रेर्यत्वं वाच्यम्, तस्याप्येवमित्यनवस्था। अग्नेः स्वप्रेर्यजीवेन समानत्वान्न तत्प्रेरकसम्भवश्च। अत इतरोऽग्निरग्निस्थो नेत्यर्थः। अक्षिस्थोऽग्निर्यदि स्वतन्त्रः तर्हि स एव ईश्वरः। यदि ईश्वराधीनः तर्हीश्वर एव सूक्तरीत्याक्षिस्थः। यदि निरीश्वरो जीवः, तदोक्तौ दोषौ। अतोऽक्षिस्थ आदित्यस्थश्च आनन्दमयश्च विष्णुरेवेति युक्ता ब्रह्मजिज्ञासा। विष्णुज्ञानादेव मोक्ष इति च न बाधितम्। अग्निश्रुतेरपि विष्णुपरत्वादिति सिद्धमिति भावः।

## ५. अन्तर्याम्यधिकरणम्

अथापि स्यात्, काण्वमाध्यन्दिनश्रुत्योः 'एष त आत्माऽन्तर्याम्यमृत' इत्यत्र अन्तर्यामी अमृतत्वेन प्रतीयते। स जडप्रकृतिरेव, 'यस्य पृथिवी शरीरं, यस्यापः शरीरं', इत्यादिना अन्तर्यामिणः पृथिव्यादिशरीरत्वश्रवणात् तस्य च प्रकृतावुपपत्तेः। शरीरशब्दस्य स्वरूपेऽपि प्रयोगात्। प्रकृतेश्च सर्वात्मकत्वात्। पृथिव्यादिनिष्ठजीवो वा अन्तर्यामी, पृथिव्यादिशरीरत्वादेः वा अस्मिन्निति सुघटत्वात्। तच्चामृतत्वं 'एतदमृतमभयं' इत्यक्षिस्थस्य प्रतीयते। अतोऽक्षिस्थत्वमादित्यस्थत्वमानन्दमयत्वमपि प्रकृतेरेवेति न प्रकृत्यवयवब्रह्मजिज्ञासा युक्तेति प्राप्ते सिद्धान्तयति— **अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्**। आत्मेति वर्तते। विषयसप्तमी धर्मनिरूपकत्वेन धर्मव्यपदेशविषयत्वम्,

पृथिव्यादिष्विति वक्तव्ये अधिदैवादिष्विति वचनं जडानात्मवेदनस्य सर्वसिद्धत्वात् पृथिव्याद्यवेदनवचनं व्यर्थमिति शङ्कापरिहारार्थम् । आदिपदेन आध्यात्मिकं बाधाभावे भूतं च । तत्र चान्तर्यामी विष्णुरेव । तस्य विष्णोर्धर्मयोरविदितत्वान्तरत्वयोरन्तर्यामिणि 'यं पृथिवी न वेदे'ति 'पृथिव्या अन्तर' इति पृथिव्या अविदितत्वान्तरत्वरूपेण व्यपदेशादित्यर्थः । पृथिव्यादीनामन्तर्यामिणि पृथिव्याद्यवेद्यत्वमर्थात्सिद्धमिति 'स योऽतोऽश्रुतोऽगतोऽमतो' इति 'सर्वेषां भूतानामन्तरपुरुषः' इति च श्रुतेः तयोर्विष्णुधर्मत्वमिति भावः ।

ननूक्तरीत्या अन्तर्यामी प्रकृतिरेव किं न स्यादित्याशङ्कामपाकरोति— **न च स्मार्तमतद्धर्माभिलापात्** । चरस्त्वर्थे । तेन पूर्वसूत्रे अन्तर्यामी विष्णुरेवेत्यवधारणस्य व्यावर्त्यं सयुक्तिकं सूचयितुमिदं सूत्रमिति ज्ञापयति । अन्तर्यामीति वर्तते । ततश्च साङ्ख्यस्मृतिसिद्धं प्रकृत्याख्यं प्रधानं नान्तर्यामि, तस्य स्मार्तस्य धर्माणां त्रिगुणत्वोपादानत्वादीनां अन्तर्यामिण्यभिलापाभावादित्यर्थः । यत्र यत् प्रतिपाद्यते तत्र तस्य असाधारणधर्म अभिलाप्यत इति नियमादिति भावः ।

ननु तर्हि उक्तरीत्या अन्तर्यामी जीव एव किं न स्यादित्याशङ्कां परिहरति— **शारीरश्चोभयेऽपि हि भेदेनैनमधीयते** । चशब्दान्नेत्यनुवर्तते । उभये काण्वा माध्यन्दिनाश्च । ततश्चान्तर्यामी न शारीरश्च, हि यस्मादुभयेऽपि एनं जीवमन्तर्यामिणः सकाशात् भेदेन आत्मनोऽन्तर इति विज्ञानादन्तर इति चाधीयते इत्यर्थः । आत्मविज्ञानपदे श्रुतौ जीवपरे । अन्तरो विविक्तः शीर्यते अस्मादिदमिति पृथिव्यादि विष्णोरेव शरीरम् । शारीरश्चान्तर्यामी न, संसारित्वाद्यसाधारणतद्धर्माभिलापाभावादिति पूर्वन्यायस्या-पूर्वन्यायस्याप्राप्तावपि अवधारणव्यावृत्तये विशेषयुक्तिसूचनार्थमिदं सूत्रम् । अत एव चशब्देन नञोऽनुकर्षः । तेनानन्दमयोऽभ्यासादित्यादावपि आनन्दमयत्वादिना प्राप्तानां परिहारो न केवलं विष्णुसाधारणधर्मात् । किन्तु तत्तदसाधारणधर्माभावादपीत्यपि द्रष्टव्यम् । अतो विष्णुरेवान्तर्याम्यमृतोऽन्तस्थ आदित्यस्थ आनन्दमयश्चेति सिद्धमिति भावः ।

## ६. अदृश्यत्वाधिकरणम्

अथापि स्यात्, आथर्वणे 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमि'त्यादिना अक्षरमेवादृश्यत्वादिगुणकं प्रतीयते तच्च जडप्रकृतिः । 'यथा पृथिव्यामोषधयः सम्भवन्ति तथाक्षरात्सम्भवतीह विश्वम्' इति पृथिवीदृष्टान्तेनाक्षरस्य जगदुपादानत्वोक्तेः चेतनप्रकृतिर्वाक्षरम् अक्षरश्रुतेः, कूटस्थोऽक्षर उच्यते' इति स्मृतेः । हिरण्यगर्भो वाक्षरम्, 'स ब्रह्मविद्यामित्यादि ब्रह्मशब्दात् । रुद्रो वा अक्षरम्, 'कर्तारमीशमि'ति शब्दात् । विष्णुस्त्वक्षरं नैव, 'अक्षरात्परतः परः' इति बाधकात् । न हि

विष्णुः परतः परोऽस्ति । तथाच जडप्रकृत्यादिरेव अदृश्यत्वादिगुणकः । 'अदृश्येऽनात्म्य' इत्यादिना अदृश्यत्वादिगुण आनन्दमयादिः प्रकृतिरेवेति न तदवयवब्रह्मजिज्ञासा युक्तेति प्राप्ते सिद्धान्तयति— **अदृश्यत्वादिगुणको धर्मोक्तेः** । आत्मेति वर्तते । परविद्याविषयत्वस्य विष्णोर्धर्मस्य 'अथ परा यया तदक्षरमधिगम्यते' इत्यदृश्यत्वादिगुणके उक्तत्वाददृश्यादिगुणको विष्णुरेव न प्रकृतिरित्यर्थः । 'ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकाः । ता एव परमा विद्या यदा विष्णोस्तु वाचकाः' इत्यादिना परविद्याविषयत्वं विष्णुधर्म इति भावः ।

विशेषयुक्त्यापि प्रकृत्यादीनां पराकरोति— **विशेषणभेदव्यपदेशाभ्यां च नेतरौ** । विष्णुरिति शेषः । इतरौ प्रकृतिस्तदितरश्च जडप्रकृतिचेतनप्रकृतिविरिञ्चरुद्रा इति यावत् । आवृत्त्या जडप्रकृति-विरिञ्चौ चेतनप्रकृतिरुद्रौ चेति वा प्रकृतिपदार्थौ विरिञ्चरुद्रौ चेति वा । ततश्चादृश्यत्वादिगुणको न जडप्रकृतिः, 'यः सर्वज्ञः' इति सार्वज्ञ्यविशेषणात् । नापि चित्प्रकृतिः, 'अक्षरात्परतः परः' इति परत्वादिविशेषणात् । नापि विरिञ्चः, 'तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' इत्यक्षरजन्यत्वव्यप-देशात् । न रुद्रोऽपि 'अन्यमीशमि'ति प्रसिद्धेशभेदस्य व्यपदेशादित्यर्थः । जडे ज्ञानमात्रस्यैवाभावात् सार्वज्ञ्यासम्भवः । 'अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका । श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णु-संश्रया । तामक्षरं परं प्राहुः परतः परमक्षरम् । हरिमेवाखिलगुणमक्षरत्रयमीरितम्' इति स्मृतेरक्षरद्वय-परत्वस्य द्विविधप्रकृतौ विरिञ्चरुद्रयोरप्यसम्भवः । एकस्यैव पौर्वापर्याभावात् । विरिञ्चः स्वस्मात् स्वजन्यत्वस्य असम्भवः । अन्यादिपदानां स्वसमभिव्याहृतयत्प्रसिद्धार्थवैलक्षण्यज्ञापकत्वस्य लोक-सिद्धत्वाद्रुद्रे प्रसिद्धेशात् स्वस्मात् वैलक्षण्यासम्भवः । स्मृतिबलादेवाक्षरपदस्य प्रमाणान्तराद् ब्रह्मपदस्य, कारणत्वमात्रे पृथिवीदृष्टान्तोपादानेन जगन्निमित्तकारणत्वस्य विष्णोः सम्भवश्चेति भावः ।

युक्त्यन्तरेणादृश्यत्वादिगुणको विष्णुरिति साधयति— **रूपोपन्यासाच्च** । 'यदा पश्यः पश्यते रुक्मवर्णं' इत्यदृश्यत्वादिगुणकस्य रुक्मवर्णोपन्यासाच्चासौ विष्णुरेवेत्यर्थः । नारायणस्य चत्वारि रूपाणि, शुक्लं रक्तं रौक्मं कृष्णमिति । स एतान्येतेभ्योऽभ्यचीक्लृपत् । विमिश्राणि व्यमिश्रयत् । अत एतादृगेतद्रूपमिति श्रुतेर्विष्णावेव शुद्धरुक्मरूपं नान्येषाम् । अत आनन्दमयो विष्णुरेवेति सिद्ध-मिति भावः ।

## ७. वैश्वानराधिकरणम्

अथापि स्यात् छन्दोगश्रुतौ— 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इत्यत्र श्रुतो वैश्वानरः, अग्निदेवता तेजोभूतमेव वा, वैश्वानरश्रुतेः । अग्नौ विष्णौ च साधारणस्यापि

वैश्वानरशब्दस्य वैदिकविद्याभेदसिद्धयेऽग्निमात्रपरत्वात् । तस्मिन्वैश्वानरेऽभिविमानमिति श्रुतस्याभितो विगतमर्यादत्वरूपसर्वगतत्वस्यादृश्यत्वादिगुणके 'नित्यं विभुं सर्वगतं' इति श्रवणाददृश्यत्वादिगुणक आनन्दमयश्च अग्निरेवेति प्राप्ते सिद्धान्तयति— **वैश्वानरः साधारणशब्दविशेषात्** । अग्नाविष्णु-साधारणस्य वैश्वानरशब्दस्य आत्मानं वैश्वानरमित्यात्मशब्देन विशेषणाद्वैश्वानरो विष्णुरेवेत्यर्थः । 'आत्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते' इत्यात्मशब्दो विष्णावेव प्रसिद्ध इति भावः ।

नन्वमुख्यवृत्त्या आत्मशब्दोऽप्यग्न्यादिपरः किं न स्यादित्याशङ्कां परिहर्तुं हेत्वन्तरेण वैश्वानरस्य विष्णुत्वं निश्चाययति— **स्मर्यमाणमनुमानं स्यात् इति** । इतिशब्दः बुद्धिस्थसमाख्यास्मृतिप्रद-र्शकः । योग्यतया पदान्तराणि संयोज्यानि । ततश्च 'अहं वैश्वानरो भूत्वे'ति स्मृत्या स्मर्यमाणं विष्णोर्वैश्वानरत्वं, अग्निविद्यायामपि विष्णोर्वैश्वानरस्यानुमापकं स्यादित्यर्थः । विष्णुरेवाग्निविद्यायां वैश्वानरत्वेनोच्यते । गीतारूपसमाख्यायां वैश्वानरत्वेनोक्तत्वात् । यः यस्य समाख्यायां यथोच्यते स तथा तदेवोच्यते यथा सम्प्रतिपन्नोऽर्थ इति प्रयोग इति भावः ।

उक्तमाक्षिप्य समादधति— **शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशा-सम्भवात्पुरुषविधमपि चैनमधीयते** । वैश्वानर आत्मेति वर्तते । आदिपदेन लिङ्गानि । ततश्च वैश्वानरो विष्णुर्न, 'वैश्वानरमृत आ जातमग्निम्' इत्यग्निशब्दसमानाधिकृतत्वात् । 'अयमग्निर्वैश्वानर' इति बृहदा-रण्यकसमाख्यानाच्च । 'वैश्वानरे तद्धुतं भवति' इति होमाधिकरणत्वलिङ्गाच्च । 'हृदयं गार्हपत्यं' इत्यादौ गार्हपत्याद्यङ्गत्वलिङ्गाच्च । 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं' इत्यन्नपाचकत्वेन अन्तःप्रतिष्ठानलिङ्गाच्च । 'योऽयमन्तः पुरुषे येनेदमन्नं पच्यत' इति बृहदारण्यकसमाख्यानाच्च । अतो वैश्वानरोऽग्निः किं न स्यादिति चेन्न । तथा अग्नित्वेन होमाधिकरणत्वेन गार्हपत्याङ्गत्वेन पाचकत्वेन अन्तःप्रविष्टत्वेन दृष्टये वैश्वानररूपविष्णोः परोक्षज्ञानसाधनोपासनाय वैश्वानरे लिङ्गानामुपदेशात् । अत्र 'को न आत्मा किं ब्रह्म' इति विष्णोः प्रारम्भाच्चाग्नेरात्मत्वाद्यसम्भवात् । येन वैश्वानरपुरुषस्य विष्णोर्विधा प्रकारो यस्य तमधीयते अपि तल्लिङ्गादपि । 'शीर्ष्णो द्यौः समवर्तत, चक्षोः सूर्यो अजायत, प्राणाद्वायुरजायत, पद्भ्यां भूमिरि'-त्यादिना पुरुषस्याकारः श्रूयते । अत्र 'द्यौरिति कान्तिः, मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा, पृथिव्येव पादावि'त्यादिना पुरुषाकारत्वेन वैश्वानरं पठन्ति छन्दोगाः । पुरुषसूक्तं विष्णुपरमेवेत्यर्थः । अग्नावविद्यमानमपि ध्यातुमच्युत एवेति न वक्तव्यं 'नाविद्यमानं ब्रुवते वेदा ध्यातुं न वैदिका' इति स्मृतेः । 'सर्वनामा सर्वकर्मा सर्वलिङ्गः सर्वगुणः सर्वकामः सर्वधर्मः सर्वरूप' इति । 'स य एतमेवमात्मानं विश्वं हरिमारादुपास्त' इति श्रुतेः । शब्दलिङ्गानि विष्णौ सावकाशान्युपास्यानि च । 'सर्वतः पौरुषे सूक्ते गुणा विष्णोरुदाहृताः इत्यादिप्रमाणात् पुरुषसूक्तं विष्णुपरमेव । 'यस्माद्यज्जायते चाङ्गात् लोकवेदादिकं

हरेः । तन्नामवाच्यमङ्गं तद्यथा ब्रह्मादिकं मुखम्' इति प्रमाणान्न पुरुषवैश्वानराख्ययोराकारवैलक्षण्यमिति भावः ।

ननु वैश्वानरशब्दस्य देवतायां भूते च प्रसिद्धत्वादत्राप्यसौ तत्परः किं न स्यादिति शङ्कां परिहरति '**अत एव न देवता भूतं च**' । आत्मशब्दाद्युक्तहेतोरेव वैश्वानरो नाग्निदेवता न भूतञ्चेत्यर्थः । वैश्वानरादिशब्दानां ब्रह्मैकवाचित्वादिति भावः ।

ननु वैश्वानरादिशब्दानामग्न्याद्यवाचित्वे तत्तत्प्रसिद्धिविरोधः स्यात्, कारणान्तराभावादित्याशङ्कां परिहरति— **साक्षादप्यविरोधं जैमिनिः** । पूर्वसूत्रे ब्रह्मैकवाचित्वमभिप्रेतम् । अन्यथैतत्सूत्रारम्भो न स्यात् । तत्र ब्रह्मवाचित्वं वर्तते साक्षादनन्ययोगेन वैश्वानरादिशब्दानां ब्रह्मवाचित्वेऽपि प्रसिद्धिविरोधाभावं जैमिनिराचार्यो मन्यत इत्यर्थः । ज्ञानवन्तोऽग्न्याद्यवाचकैरपि शब्दैरग्न्यादिहानोपादनादिव्यवहारार्थं अग्न्यादौ व्यवहरन्ति । अज्ञानिनस्तु व्यवहारपरम्परामूलाज्ञानप्रयुक्तवाक्यत्वभ्रान्त्यैव व्यवहरन्ति । अतः प्रसिद्धिः कारणान्तरादेवेति भावः ।

ननु हानाद्यभावकाले अग्निसूक्तादिव्यवहारोऽज्ञानिनामेवानादितो वर्तते । अतस्तद्विरोधशङ्कां परिहरति— **अभिव्यक्तेरित्याश्मरथ्यः** । अविरोधमिति वर्तते । यथायोग्यमुपस्कारः कार्यः । अग्न्यादिसूक्तैः विष्णूपासकानां विदुषां अग्न्यादावेव विष्णुरभिव्यक्तो भवतीत्यतः प्रसिद्ध्यविरोधं आश्मरथ्याचार्यो मन्यत इत्यर्थः । वैश्वानरादिशब्दानां अग्न्याद्यवाचित्वेऽपिं कारणान्तरादेवास्मिन् सूक्तादिप्रसिद्धिरिति भावः ।

कारणान्तरेण अग्न्यादिनियममन्यथोपपादयति— **अनुस्मृतेर्बादरिः** । ल्यब्लोपे पञ्चमी । अविरोधमिति वर्तते । व्यवहारमूलत्वेन अनुस्मृतेः कृत्यप्रसिद्ध्यविरोधं बादरिराचार्यो मन्यत इत्यर्थः । तत्तत्सूक्ताद्युपासकैस्तत्तत्सूक्तार्थत्वेन अग्न्यादावेव विष्णुः प्रतिपत्तव्य इति ज्ञापनायैवाग्न्यादिसूक्तार्थत्वेन नियमः । न तु शब्दानामग्न्यादिवाचकत्वेन । अतः कारणान्तरादेव अग्न्यादिसूक्तादिप्रसिद्धिरिति भावः ।

सूक्तादिनियमेऽपि जैमिनिमतं दर्शयन् रीत्यन्तरेणाग्न्यादिनियममन्यथोपपादयति— **सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति** । अग्न्यादिसूक्तैरग्न्यादिगतविष्णूपासकानामग्न्यादिसम्पत्तिर्भवतीत्यग्न्यादिसूक्तनियम इत्यतः प्रसिद्ध्यविरोधं जैमिनिराचार्यो मन्यते । 'तं यथा यथोपासते तदेव भवति' इति प्रसिद्धश्रुतिरपि तथा जैमिनिमतं सम्पत्तिपदार्थं दर्शयतीत्यर्थः । श्रुतौ भवति प्राप्नुवन्तीत्यर्थः । अतः कारणान्तरादेवाग्न्यादिसूक्तादिप्रसिद्धिः न तु अग्न्यादिवाचकत्वेनेति भावः ।

ननु विष्णूपासकानां कथमग्न्यादिप्राप्तिरित्याशङ्कां परिहरति— **आमनन्ति चैनमस्मिन्** । चशब्दः शङ्काव्यावर्तकः । एतच्छङ्काभावः समुच्चितत्वादत एव पूर्वसूत्रोक्तः परिहारः स्यात् । इदंशब्देन देवता भूतं चेत्यत्र देवतात्वेन विवक्षितोऽग्न्यादिः परामृश्यते । 'योऽग्नौ तिष्ठन्', 'य एष एतस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषः' इत्यादिना श्रुतय एनं विष्णुमस्मिन्नग्न्यादौ आमनन्तीत्यर्थः । अग्न्यादिप्राप्तिर्नाम अग्न्यादिगतविष्णुप्राप्तिरेव विवक्षिता । अतो न विरोधः । सिद्धान्तत्वेन स्वचित्तस्थितानां परिहारकारणानां मध्ये एकमेव मुनयो वदन्ति । अतो वैश्वानरस्य विष्णुत्वेन होमाधिकरणत्वाद्यशेषलिङ्गात्मकशब्दवाच्यः सर्वगतोऽक्षिस्थ आनन्दमयो जिज्ञास्यश्चेति सिद्धमिति भावः ।

*इति श्रीविजयीन्द्रभिक्षुणा कृते भाष्यतत्त्वप्रकाशिकावाक्योद्धाररूपे मुकुरनाम्नि ग्रन्थे प्रथमाध्यायस्य द्वितीयः पादः ॥*



# अथ प्रथमाध्यायस्य तृतीयः पादः

## १. द्युभ्वाद्यधिकरणम्

श्रुत्यादिना विष्णौ तदितरत्र च प्रसिद्धानां नामलिङ्गात्मकशब्दानां विष्णवेकवाचित्वं प्रतिपादयत्यस्मिन्पादे । आथर्वणे 'यस्मिन् द्यौः पृथिवी चान्तरिक्षं' इति द्युभ्वाद्यायतनं प्रतीयते । तच्च रुद्रः, 'सह प्राणैश्च सर्वैः' इति प्राणाधारत्वश्रवणात् । 'प्राणानां ग्रन्थिरसि रुद्र' इति रुद्रे प्राणाधारत्वस्य प्रसिद्धत्वात् । प्रकृतिर्वा द्युभ्वाद्यायतनम्, द्युभ्वाद्याश्रयत्वात् । कारणस्य कार्याश्रयत्वात् । प्रकृतेश्च सर्वकारणत्वात् । जीवो वा द्युभ्वाद्यायतनम्, 'बहुधा जायमान' इति जीवलिङ्गश्रवणात् । वायुर्वा द्युभ्वाद्यायतनम्, लोकाधारत्वात् । 'वायुना वै गौतमसूत्रेणायं च लोकः परश्च लोकः सर्वाणि भूतानि सन्दृब्धानीति लोकाधारत्वस्य प्रसिद्धत्वात् ।

ननु लोकाश्च लोकिनश्च आलोकाश्च आलोकिनश्च विष्णावेवोताश्च प्रोताश्च' इति श्रुतेर्द्युभ्वाद्यायतनं विष्णुः किं न स्यात्, न स्यात्, बहुधा जन्मबाधात् । तत्र द्युभ्वाद्यायतने 'तमेवैकं जानथ आत्मानं' इति परविद्याविषयत्वं प्रतीयते, अतो रुद्रादिरेव परविद्याविषयोऽक्षरोऽदृश्यत्वादिगुणक आनन्दमयश्चेति प्राप्ते सिद्धान्तयति— **द्युभ्वाद्यायतनं स्वशब्दात्** । आत्मैवेति वर्तते । स्वशब्दपर्याप्तशब्दश्रवणात् द्युभ्वाद्यायतनं विष्णुरेव न तु रुद्रादिरित्यर्थः । 'आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययम् । न सम्भवन्ति यस्मात्तैर्नैवाप्ता गुणपूर्णता' इति स्मृतेर्विष्णुरेवात्मेति भावः ।

ननु मुख्यवृत्त्या आत्मशब्दो रुद्रादिपरः किं न स्यादित्यत आह— **मुक्तोपसृप्यव्यपदेशात्** । द्युभ्वाद्यायतनमित्यवधारणं प्रसक्तम् । न रुद्रादिरिति च वर्तते । आत्मैवेति तु न वर्तते । चशब्दाभावात् । भावप्रधानो निर्देशः । तथाच द्युभ्वाद्यायतनं न रुद्रादिः । 'अमृतस्यैष सेतुः' इति मुक्तप्राप्यत्वव्यपदेशादित्यर्थः । 'ब्रह्मविदाप्नोति परम्' इति विष्णुरेव मुक्तोपसृप्यः । अतोऽत्रापि मुख्यवृत्त्या आत्मशब्दो विष्णोरेवेति भावः ।

ननु शैवे साङ्ख्ये च शास्त्रे रुद्रप्रधानयोः सर्वाश्रयत्वोक्तिस्तावदस्ति । सा प्रमाणम् शैवसाङ्ख्यशास्त्रत्वात् । संवादिफले विधायकतच्छास्त्रवदित्यनुमानेन तस्याः प्रामाण्ये सिद्धे तद्बलादुक्तरीत्या चात्रापि द्युभ्वाद्यायतनं रुद्रः प्रधानं वा किं न स्यादित्यत आह— **नानुमानमतच्छब्दात्** । मानमनुस्मृत्य यन्मानं प्रमाणं तदनुमानम्, शैवं साङ्ख्यशास्त्रम्, सर्वाश्रयत्वेनैतत् सिद्धमनुमानम्, रुद्रः प्रधानं वेति यावत् । ततश्च द्युभ्वाद्यायतनं रुद्रः प्रधानं वा न, तदसाधारणश्रुतिलिङ्गाद्यभावादित्यर्थः । विसंवादिफलविधायकतद्वाक्यदृष्टान्तेन सर्वाश्रयत्वोक्तेरप्रामाण्यमप्यनुमातुं शक्यत इति न पुनरनुमाने प्रमाणे इति ज्ञेयम् । न चोक्तरीतिः, 'रुजं द्रावयते यस्मात्, रुद्रस्तस्माज्जनार्दनः' इत्यादेर्विष्णुरेव रुद्रः सर्वकारणं विष्णुरेवेति भावः ।

ननूक्तप्राप्त्या जीववायू अत्र द्युभ्वाद्यायतनं किं न स्यादित्यत आह— **प्राणभृच्च** । द्युभ्वाद्यायतनमित्यनुवर्तते । चशब्दात्प्रागुक्तहेतूनां नञश्च समाकर्षः । द्युभ्वाद्यायतनं प्राणभृज्जीवो वायुश्च । आत्मशब्दात् मुक्तोपसृप्यत्वात् अतच्छब्दादित्यर्थः । तत्प्रापकश्रुतिविषयत्वम्, 'अजायमानो बहुधा विजायत' इति श्रुतेरभियुक्तिरूपबहुजन्म च विष्णोः सम्भवतीति भावः ।

ननु रुद्रादिर्जीवो विष्णुश्च द्युभ्वाद्यायतनमस्तु, तत्प्रापकाणां समानत्वाद्विरोधः । रुद्रादिना विष्णोरभेदे श्रुतेस्तात्पर्यादित्यत आह— **भेदव्यपदेशात्** । नानुमानं प्राणभृच्चेति वर्तते । अत्रैव 'जुष्टं यदा पश्यत्यन्यमीशमि'ति जीवेशयोर्भेदव्यपदेशात् न रुद्रादि द्युभ्वाद्यायतनमित्यर्थः । अन्यथा स न स्यादिति भावः ।

नन्वत्र जीवस्य कस्माच्चिदीशादन्यत्वमुच्यते न विष्णोरतो न तयोर्भेदः इत्यत आह— **प्रकरणात्** । परविद्याविषयवस्तुनोऽत्रारभ्याधीतत्वेनान्यमीशमित्यन्तमुक्तत्वादस्य विष्णुप्रकरणत्वादित्यर्थः । प्रकरणविरोधभयेन ईशपदेन विष्णुरेवोच्यत इति भावः ।

हेत्वन्तरेण जीवेशाभेदोऽत्र न विवक्षित इत्याह— **स्थित्यदनाभ्यां च** । भेदव्यपदेश इति वर्तते । अत्र प्रकरणे तावत्, 'द्वा सुपर्णे'ति मन्त्रे 'अन्यः पिप्पलं स्वाद्वत्ति' इति जीवस्य स्वस्थित्यर्थ

अदनमुच्यते । 'अनश्नन्न्य' इति स्थितिरदनं विनैव विष्णोरुच्यते तथा चादनं विनैव स्थिते स्थित्यर्थमदनस्य चेशजीवयोरुक्तत्वात्तयोर्भेदव्यपदेश एवेत्यर्थः । जीवेशयोरभेदे भेदव्याप्यवैलक्षण्यात् तन्न स्यात् । अतो विष्णुरेव परविद्याविषयोऽक्षरोऽदृश्यत्वादिगुणक आनन्दमयो जिज्ञास्यश्चेति सिद्धमिति भावः ।

## २. भूमाधिकरणम्

अथापि स्यात् छान्दोग्ये 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमेव सुखम् इति भूम्नः पूर्णानन्दत्वं प्रतीयते । स भूमा मुख्यप्राणः, 'प्राणो वा आशाया भूयान्' इति आशोत्तमत्वेन तस्य प्रक्रान्तत्वाच्च । 'विष्णुर्वै देवेभ्यो भूयान्' इति समाख्यया विष्णोरपि भूमत्वं न युक्तम् । समाख्याया उपक्रमाद्दुर्बलत्वात् । तस्मादानन्दमयोऽपि वायुरेवेति तदवयवब्रह्म न जिज्ञास्यमिति प्राप्ते सिद्धान्तयति— **भूमा सम्प्रसादादध्युपदेशात्** । आत्मेति वर्तते । भूमा विष्णुरेव, सम्प्रसादात्, 'यो वै भूमा तत्सुखमि'ति भूम्नः पूर्णसुखत्वाभिधानात् । अध्युपदेशात्, नामादीनां सर्वेषामुपरि भूम्न उत्तमत्वेन व्यपदेशाच्चेत्यर्थः । विष्णोः पूर्णसुखत्वं 'विश्वशम्भुवम्, विश्वं नारायणमि'ति सम्पूर्णसुखाश्रयत्वोक्त्या सिद्धम् । वायौ तु सम्प्रसादाद्युपदेशश्च प्रमाणविरुद्धः । उपक्रमेऽपि साक्षाद्वाय्वन्तर्यामी वा विष्णुरेव विवक्षित इति भावः ।

युक्त्यन्तरेण विष्णोर्भूमत्वं प्रतिपादयति— **धर्मोपपत्तेश्च** । 'स एवाधस्तात् स उपरिष्टादि'-त्यादीनां भूमोक्तानां सर्वगतत्वादिधर्माणां विष्णावेवोपपत्तेश्च विष्णुरेव भूमेत्यर्थः । सूत्रद्वयेऽपि साध्यस्यैकत्वान्नाद्यसूत्रे हेत्वन्तरे चकारः । किन्त्वन्यहेतावेव । अतो विष्णुरेव भूमानन्दमयश्चेति सिद्धमिति भावः ।

## ३. अक्षराधिकरणम्

अथापि स्यात् बृहदारण्यके 'तद्वा एतदक्षरं गार्गि अदृष्टं द्रष्टृश्रुतं श्रोत्रि'त्यादिना अक्षरस्य द्रष्टृत्वादिगुणा उच्यन्ते । अक्षरं च त्रिविधम् । अधमं जडप्रकृतिः, उत्तमं विष्णुः तत्तावदत्राक्षरं अधमं न द्रष्टृत्वादिश्रवणात् । नाप्युत्तमं, 'न तदश्नाति किञ्चन' इत्यनशनश्रवणात् । विष्णोस्तु चराचरात्तृत्वात् । किन्तु मध्यमं, विष्णुभिन्ने तस्मिन्ननशनस्य युक्तत्वात् । तथा च मध्यमाक्षरपदार्थः अदृश्यत्वादिगुणकः आनन्दमयश्चेति प्राप्ते सिद्धान्तयति— **अक्षरमम्बरान्तधृतेः** । ब्रह्मेति वर्तते । इदमक्षरं ब्रह्मैव, अम्बरा लक्ष्मीरेवान्तेऽवसाने यस्य सर्वस्य तदम्बरान्तं तस्य धृतेः धारणस्य 'यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते आकाश एव तदोतं च

प्रोतं च' इत्याकाशस्य चित्प्रकृतेः सर्वाधारत्वमुक्त्वा एतस्मिन् खल्वक्षरे 'गार्ग्याकाश ओतश्च प्रोतश्चेत्याचक्षते' इति तदाधारत्वश्रवणादित्यर्थः । यद्यपि लक्ष्मीधृतिरेव विष्णुत्वसाधिकेत्यन्तपदं व्यर्थम्, तथापि यस्य तु आकाशो यत्र...पि अम्बरान्तसर्वाधारत्वं अक्षरस्य प्रतीयत एव । सर्वाधारत्वं च 'य उ त्रिधा तु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा' इति विष्णोरेव निर्णीतम् इति भावः । युक्त्यन्तरेण विष्णोरेवाक्षरत्वं प्रतिपादयति— **सा च प्रशासनात्** । चो विशेषार्थः, समुच्चयार्थश्च । एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः इति । सा सर्वधृतिस्तु अक्षरस्य प्रशासनादुच्यते अतश्चाक्षरं विष्णुरित्यर्थः । यदा सर्वधृतिमात्रेणाक्षरं विष्णुस्तदा सुतरां 'सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणी'त्यत्रार्धं अतिसमृद्धं ब्रह्माण्डगर्भे अन्तर्भागे येषां महदहङ्कारपञ्चमहाभूतदेवानां अर्धगर्भाः ब्रह्माण्डावरणभूता इति यावत् । भुवनस्य रेतो रतिदाः सारभूता वा सप्त महदादिदेवाः भुवनस्य रेतो रतिप्रदस्य विष्णोः प्रदिशाः आज्ञप्ताः विविधविश्वधारणे तिष्ठन्तीति विष्णुनिष्ठतया श्रुतेन सर्वधृतिहेतुप्रशासनेनाक्षरं विष्णुरिति भावः ।

हेत्वन्तरेण विष्णोरेवाक्षरत्वं प्रतिपादयति— **अन्यभावव्यावृत्तेश्च** । अन्येषां वस्तूनां भावानां स्वभावभूतानां धर्माणां स्थूलत्वादीनां 'अस्थूलमनणु' इत्यादिना अक्षरे व्यावृत्तिश्रवणाच्च । अक्षरं विणुरेवेत्यर्थः । स्थूलत्वादिति वक्तव्ये अन्यभावेति वचनं लौकिकस्थूलत्वादीनां व्यावृत्तिसूचनार्थम् । विष्णोर्लौकिकस्थूलत्वादिराहित्यं 'अस्थूलमनणुरमध्यमो मध्यमोऽव्यापको व्यापको योऽसौ हरिरादिरनादिरविश्वो विश्वः सगुणो निर्गुण' इति श्रुतिसिद्धम् । अत एवानशनमपि लौकिकाशनाभाव एव । अतोऽक्षरमदृश्यत्वादिगुणकं आनन्दमयश्च ब्रह्मैवेति सिद्धमिति भावः ।

## ४. सदधिकरणम्

अथापि स्यात् छान्दोग्ये— 'सदेव सोम्येदमग्र आसीत्, तत्तेजोऽसृजत' इति च सतः स्रष्टृत्वं प्रतीयते । सच्च न विष्णुः 'बहुस्यां प्रजायेये'ति सतो बहुभावाख्यविकारित्वश्रवणात् विष्णोश्च निर्विकारत्वात् किं तु प्रधानमेव परिणामित्वात् । अतो 'जन्माद्यस्य यतः' इत्युक्तमयुक्तमिति प्राप्ते सिद्धान्तयति— **ईक्षतिकर्मव्यपदेशात्सः** । स इत्यात्मा परामृश्यते । सदिति शेषः । ईक्षतेरीक्षणरूपस्य कर्मणः व्यापारस्य सति 'तदैक्षते'ति व्यपदेशात् स विष्णुरेवेत्यर्थः । 'नान्योऽतोऽस्ति द्रष्टे'ति विष्णोरन्यस्य चेतनस्यापि यदा नास्ति ईक्षणं तदा किं वक्तव्यं जडप्रधानस्य नास्तीति । 'अजायमानो बहुधा विजायत' इति विकाररहितोऽपि विष्णुः बहुधा भवतीत्यपि युक्तमिति सिद्धमिति भावः ।

## ५. दहराधिकरणम्

अथापि स्यात् छान्दोग्ये 'एतस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाश' इत्युक्त्वा 'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते, उभावग्निश्च वायुश्च, सूर्याचन्द्रमसावुभौ' इत्यादिना सूर्याद्याधारत्वं हृत्पद्मस्थस्य प्रतीयते । हृत्पद्मं च प्रसिद्धाकाशः, दहरोऽस्मिन्नन्तराकाश इति श्रवणात् । न चात्राकाशो विष्णुः, 'तस्यान्ते सुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितमि'ति श्रुतिविरोधात् । जीवो वा हृत्पद्मस्थः, एष आत्मेति परामर्शात् । दहरस्थत्वमप्यणोर्जीवस्यैव सम्भवति । तथा 'अस्य वाक्षरस्य प्रशासने गार्गी'ति श्रुतावुक्तं सर्वाधारत्वमाकाशस्य जीवस्य वेति प्राप्ते सिद्धान्तयति— **दहर उत्तरेभ्यः** । स इति वर्तते । अधिकरणे सप्तमी । गुणेभ्य इति शेषः । 'य आत्मा अपहतपात्मा' इत्यादिना उत्तरवाक्योक्तेभ्योऽपहत पाप्मत्वादिगुणेभ्यो दहरे पुण्डरीके विष्णुरेवेत्यर्थः । 'स एष सर्वेभ्यः पाप्मभ्य उदित' इत्यादिना विष्णोरेव ते गुणा इति भावः ।

युक्त्यन्तरेण विष्णोर्हृत्पद्मस्थत्वं प्रतिपादयति— **गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ।** 'अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ती'ति सुप्तप्रजानां हृत्पद्मं प्रति गतिरुच्यते । हृत्पद्मस्य ब्रह्मलोकत्वोक्त्या हृत्पद्मे ब्रह्मशब्दः श्रूयते । ततश्च प्रजाप्राप्तिब्रह्मशब्दाभ्यां दहरपुण्डरीकस्थो विष्णुरेव । तथा ब्रह्मलोकपदश्रवणादहरहरिति वाक्यं विष्णुपरम् । 'अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोक' इति दृष्टं हृत्पद्मस्थारण्याख्यार्णवलोकस्थत्वं लिङ्गमपि ब्रह्मलोकपदश्रवणादेव विष्णुपरम् । अतोऽपि हृत्पद्मस्थो विष्णुरेव । 'अरश्च वै ण्यश्च सुधासमुद्रावि'त्यादिना सुधासमुद्राश्रयलोकवत्त्वस्य विष्णुलिङ्गत्वं प्रसिद्धमिति समस्तसूत्रार्थः । 'सता सोम्य तदा सम्पन्नो भवती'ति सुप्तप्राप्यत्वं 'तदेव ब्रह्म परमं कवीनां' इति ब्रह्मशब्दश्च विष्णावेवेति प्रसिद्धमिति भावः ।

हेत्वन्तरेण विष्णोर्हृत्पद्मस्थत्वं प्रतिपादयति— **धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः** । पूर्वस्माद्युक्त्यन्तरसूचकश्चशब्दः समाख्यानादिति युक्त्यन्तरस्यापि सूचकः । तथाच हृत्पद्मस्थो विष्णुरेव । 'य आत्मा स सेतुर्विधृतिरेषां लोकानामि'ति हृत्पद्मस्थे सर्वधृतिश्रवणात्, 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी' इति बृहदारण्यके हृदये विष्णोरुक्तत्वेन तत्समाख्यानाच्च । समाख्याश्रुत्युक्तोऽपि कुतो विष्णुरिति चेत्, अस्य विष्णोर्महिमा 'एष सर्वेश्वर एष भूताधिपतिरि'त्यादिना अस्मिन् समाख्या श्रुत्युक्तादुपलब्धेरित्यर्थः । 'एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च इति श्रुतौ विष्णोरेव सर्वाधारत्वमुक्तम् । स हि सर्वाधिपतिः स हि सर्वपालः स ईशः स विष्णुः' इति श्रुतेः सर्वेश्वरत्वादिमहिमा विष्णोरेवेति भावः ।

युक्त्यन्तरेण विष्णोर्हृत्पद्मस्थत्वं साधयति— **प्रसिद्धेश्च**। 'दहरं विपापं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् । तत्रापि दहरं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्' इति विष्णोर्हृत्पद्मसंस्थत्वप्रसिद्धेश्च विष्णुरेव हृत्पद्मस्थ इत्यर्थः । अन्यथा प्रमाणविरोध इति भावः ।

भगवतो हृत्पद्मस्थत्वमाक्षिप्य समादधति— **इतरपरामर्शात्स इति चेन्नासम्भवात्**। 'परं ज्योतिरुपसम्पद्येति' प्रकृतस्य जीवस्य 'एष आत्मे'ति हृत्पद्मस्थात्मतया परामर्शात् हृत्पद्मस्थो जीव इति चेन्न, हृत्पद्मस्थे श्रूयमाणानामपहतपाप्मत्वादिगुणानां जीवेऽसम्भवादित्यर्थः । तथाच जीवस्य न परामर्श इति भावः ।

असम्भवमाशङ्क्य समादधति **उत्तराच्चेदाविर्भूतस्वरूपस्तु**। इतरपरामर्श इति पूर्वपक्षे वर्तते चेत् नेति शेषः । स तत्र पर्येति जक्षन् क्रीडन् रममाण इत्याद्युत्तरवाक्यात् सत्यकामत्वादिप्रतीत्या विशोकत्वादिसिद्धेर्नोक्तगुणसम्भव इतीतरपरामर्श इति चेत् उत्तरवाक्ये स्वेन रूपेणाभिनिष्पद्यते, इत्युक्तेराविर्भूतस्वरूपो मुक्त एवोच्यत इति न जीवपरामर्श इत्यर्थः । हृत्पद्मस्थस्य च देहान्तर्वर्तितया मुक्तत्वायोगान्न मुक्तजीवपरामर्शोऽपीति भावः ।

नन्वत्र परामर्शस्य निर्विषयत्वापत्त्या जीव एव परामृश्यते । जीवे वाऽमुख्यमपहतपाप्मत्वादि च सम्भवतीति शङ्कां परिहरति **अन्यार्थश्च परामर्शः**। परामर्शो जीवान्यविष्णुविषय एवेत्यर्थः । जीवो यं प्राप्य स्वेन रूपेणाभिनिष्पद्यते स एष आत्मेति वाक्यादिति भावः ।

उक्तमाक्षिप्य समादधति— **अल्पश्रुतेरिति चेत्तदुक्तम्**। श्रुतेरुक्तमयुक्तमिति शेषः । परामर्शो विष्णोर्न जीवस्येति न युक्तम्, 'दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तः' इत्यल्पस्थानस्थितत्वस्य जीवलिङ्गस्यैव श्रुतत्वादिति चेन्न, तदल्पस्थानस्थितत्वं पूर्वं नीरूपत्वात् 'व्योमवच्च' इति सूत्रे विष्णोरेवेत्युक्तम् । 'एष म आत्मा अन्तर्हृदये ज्यायान्' इति श्रुतौ ज्यायसोऽपि हृदयान्तर्वर्तित्वमुक्तमित्यर्थः । 'यस्मिन् विरुद्धगतयोऽप्यनिशं पतन्ति' इत्यादिना विष्णोरणुत्वे महत्त्वे च विरोधाभावात् हृत्पद्मस्थसूर्याभ्यन्तरोऽक्षरो विष्णुरेवेति सिद्धमिति भावः ।

## ६. अनुकृत्यधिकरणम्

अथापि स्यात् काठके 'तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् । कथं नु तद्विजानीयां किमु भाति न भाति वा' इति ज्ञानार्थं प्रार्थितत्वादानुकूल्येन गृह्यमाणसुखमुच्यते । तच्च ज्ञानिसुखं 'तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतमि'ति तस्य प्रकृतत्वेन 'तदेतदिति' परामर्शेन, चेतनानामिति

विष्णोः पुंल्लिङ्गेन दूरे च प्रकृतत्वान्नायं तत्परामर्शः । तथाच तस्यानिर्देश्यत्वं न भातीत्यज्ञेयत्वं चोच्यत इत्यदृश्यत्वादिगुणकं तदेवेति प्राप्ते सिद्धान्तयति— **अनुकृतेस्तस्य च** । स इति वर्तते । आनुकूल्येन गृह्यमाण इति शेषः । तस्येत्यावर्तते । द्वितीयं प्रतीकग्रहणम् । ततश्च 'कथं नु तद्विजानीयाम्' इत्यानुकूल्येन गृह्यमाणो विष्णुरेव । 'तमेव भान्तमनुभाति सर्वम्' इति तस्य परमसुखस्य सूर्यादीनामनुकरणश्रवणात् 'तस्य भासा सर्वमिदं विभाती'ति जगद्भासकत्वश्रवणाच्चेत्यर्थः । रूपापेक्षया नपुंसकपदं व्यवधानेनान्वयोऽपि योग्यतापेक्षया भवेदिति दूरस्थपरामर्शोऽपि न दोषः । 'अहं तत्तेजो रश्मीत्' इति श्रुतौ तेज इति विष्णोर्जगद्भासकतेजोरूपत्वं रश्मीदिति सूर्यादितेजसां तदधीनत्वं चोच्यत इति भावः ।

इदं लिङ्गद्वयं विष्णोरेवेति स्मृत्या साधयति— **अपि स्मर्यते** । उक्तं लिङ्गद्वयं विष्णोरेवेति शेषः । अपिपदात्पूर्वं श्रुत इति द्रष्टव्यमिति ज्ञापयति । ततश्चोक्तलिङ्गद्वयं न केवलं श्रूयते, किन्तु 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम्, यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' इति स्मर्यतेऽपीत्यर्थः । मामकं मदधीनं मदीयं चेत्यर्थः । किञ्च 'न तत्र सूर्यो भाति न चन्द्रतारकम्' इति परमसुखे सूर्याद्यप्रकाश्यत्वमुच्यते तदपि विष्णोरेवेति 'न तद्भासयते सूर्यो न शशाङ्को न पावकः । यद्गत्वा न निवर्तन्ते तद्धाम परमं मम' इति स्मर्यते । अतोऽप्यानुकूल्येन गृह्यमाणो विष्णुरेवेति । सूत्रस्यान्योऽर्थः । तेजःस्वरूपं च गृहं प्राज्ञैर्धर्मिऽतिगीयते' इत्यभिधानम् । इदं लिङ्गत्रयं अनिर्देश्यत्वादिकमपि ज्ञानिसुखे न सम्भवति । अत आनुकूल्येन गृह्यमाणोऽदृश्यत्वादिगुणको विष्णुरेवेति सिद्धमिति भावः ।

## ७. वामनाधिकरणम्

अथापि स्यात् काठके 'ईशानो भूतभव्यस्य' इति प्रकृतेशानस्य 'मध्ये वामनमासीनं विश्वेदेवा उपासते' इत्युपास्यत्वमुच्यते । स ईशानो वायुः । 'अङ्गुष्ठमात्रः पुरुषो मध्ये' इति मध्यमत्वं, 'ऊर्ध्वं प्राणमुन्नयति' इति प्राणव्यवस्थापकत्वं 'विश्वे देवा उपासत' इति सर्वदेवोपास्यत्वं च श्रूयते । एतल्लिङ्गत्रयस्य मुख्यप्राणैकनिष्ठत्वात् । योऽयं मध्यमः प्राणः, एष प्राण इतरान् प्राणान् पृथक् पृथगेव सन्निधत्ते 'कुविदङ्ग नमसे'ति च प्राणसिद्धत्वात् । अत एव न विष्णुः । अधिकारिसर्वोपास्यत्वश्रवणादेव रुद्रो न शङ्कार्हः । उपासना च श्रवणमननरूपजिज्ञासापि भवति । तदुक्तं 'सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी' इत्यादि । अतः ब्रह्मजिज्ञासेति न युक्तमिति प्राप्ते सिद्धान्तयति— **शब्दादेव प्रमितः** । आत्मेति वर्तते । ईशान इति शेषः । एवकारः शब्दस्य लिङ्गात्प्रबलत्वमाह प्रमितपदं शब्दस्य निरवकाशत्वमाह । ततश्च 'मध्ये वामनमि'ति वामनश्रुतेरेवेशानो विष्णुः प्रमित इत्यर्थः । 'श्रुतिर्लिङ्गं समाख्या च वाक्यं प्रकरणं तथा । पूर्वं पूर्वं बलीयः स्यादि'ति स्कान्दस्मृत्या श्रुतेर्लिङ्गात् बलवत्वं विष्णौ

महायोगरूढ्या प्रवृत्तत्वात् निरवकाशत्वम्। विष्णोरपि वायुत्वात् प्राणत्वाच्च लिङ्गत्रयं विष्णौ सावकाशमिति भावः।

ननु सर्वगतस्य विष्णोः कथमङ्गुष्ठमात्रत्वमित्यत आह— **हृद्यपेक्षया तु मनुष्याधिकारत्वात्**। आत्मेति वर्तते। अङ्गुष्ठमात्र इति शेषः। तुरवधारणे अप्यर्थे च। अधिकरणे सप्तमी। ततश्च सर्वगत आत्मा हृद्यस्थावकाशापेक्षयैवाङ्गुष्ठमात्रः। न तु स्वरूपेण, तावानेव मनुष्याणामेवाधिकारो यस्यां वेदविद्यायां स तत्त्वादपि अङ्गुष्ठमात्र इत्यर्थः। हृदि खल्ववकाशोऽङ्गुष्ठमात्रः। हृदि च विष्णुमूर्तिविशेषो व्यज्यते। ततः स्थानैक्यादवकाशस्थं अङ्गुष्ठमात्रत्वं विष्णोरुपचर्यते। वेदहीनानां पश्वादीनां अनुपासकत्वात् मनुष्याणामधिकारिणां स्वस्वाङ्गुष्ठपरिमाणतयोपास्यत्वेनाङ्गुष्ठमात्रो विष्णुरत्रोच्यते। अत ईशानो जिज्ञास्यश्च विष्णुरेवेति सिद्धमिति भावः।

## ८. देवताधिकरणम्

अथापि स्यात् काठके 'अङ्गुष्ठमात्रः पुरुषः' इत्यत्र मनुष्यमात्रोपास्यत्वमभिप्रेतमिति मनुष्याधिकारत्वादित्यनेनोक्तम्। ततो देवा नोपासका इति प्राप्तम्। युक्तं च तेषां सदामरत्वेन मुक्त्याद्यर्थित्वाभावात्। तथाच 'विश्वे देवा उपासत' इति श्रुत्युक्तं सूत्राभिप्रेतं च वामनस्य सर्वदेवोपास्यत्वमयुक्तमिति प्राप्ते सिद्धान्तयति— **तदुपर्यपि बादरायणः सम्भवात्**। तन्मनुष्यत्वमपीति फलवतामाह। अधिकार इति वर्तते। विप्रतिपत्तिज्ञापनार्थं बादरायणपदं मनुष्यत्वादुपरि देवत्वप्राप्त्यनन्तरं देवानामधिकारसम्भवाद्युक्तत्वात् मुक्तिरूपफलसद्भावाच्च वेदविद्यायामधिकारोऽस्तीति बादरायण आचार्यो मन्यत इत्यर्थः। देवानामिति वक्तव्ये तदुपर्यपीति वचनं देवत्वस्य सादित्वम्। अपीति सान्तत्वम्। तत एवार्थवत्त्वम्, असति निषेधे विशिष्टबुद्ध्यादिमत्त्वम्, देवेष्वधिकारस्य सम्भावकं मनुष्यपदं चेति पृथग्व्यावृत्त्यर्थमिति ज्ञातव्यमिति भावः।

उक्तमाक्षिप्य समादधति— **विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्**। तदुक्तरीत्यापि सूचितं देवानां साद्यन्तत्वं वर्तते। देवानां साद्यन्तत्वे उपरि तत उपरि न सन्तीति प्राप्नोति। तथाच तदा ज्योतिष्टोमादिकर्मविषये विरोधः स्यात्। उद्देश्याभावेन वैषम्यं स्यादिति यावत्। न च तत् युक्तम्। अतो न देवानां साद्यन्तत्वमिति चेन्न। 'ते ह नाकं महिमानः सचन्ते, यत्र पूर्वे साध्याः सन्ति देवाः' इति श्रुतौ महात्मानो देवाः प्रसिद्धं दुःखरहितं पूर्णसुखं मोक्षं प्राप्तवन्तः। यस्मिन्मोक्षे पूर्वप्राप्तपदा देवाः मुक्ताः सन्तः सन्तीत्यनेकेषां देवानां पदप्राप्तेर्दृष्टत्वादित्यर्थः। देवपदयोग्यानन्तानां जीवानां तत्तत्काले देवत्वेन सत्त्वान्नोद्देश्यत्वाभाव इति भावः।

पुनरुक्तमाक्षिप्य समादधति— **शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्** । देवानां साद्यन्तत्वे विरोध इति वर्तते । यद्यपि देवानां सादित्वे कर्मविरोधः, सान्तत्वे शब्दविरोध इति भावेन सूत्रद्वयं, तथापि सादित्वसान्तत्वयोरपि प्रत्येकविरोधलिङ्गत्वादुभयमुभयत्रावर्तनीयम् । प्रभवशब्दः तन्नियमावगमपरो वर्तते । देवानां साद्यन्तत्वे पश्चान्न सन्तीति प्राप्तम्, तथाच वेदविद्याविषये विरोधः स्यात् । प्रतिपाद्याभावेन नित्यस्य शब्दस्याप्रामाण्यं स्यादिति यावत् । अतो न देवानां साद्यन्ततेति चेन्न, अतः 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । यथैव नियमः काले सूर्यादिनियमस्तथा' इत्यादिशब्दात् । 'यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येन तथा भावा युगादिषु' इति महद्वचनसिद्धान्महतां प्रत्यक्षात् । उपरितनकालो देववान् कालत्वात् सम्मतवदित्यनुमानात् अनेकेषां देवानां प्रवाहेण प्रभवस्य उत्पत्तेः नियमसिद्धेरित्यर्थः । श्रुतेः प्रतीतार्थवादिनं उपचरितार्थवादिनं श्रुतिप्रत्यक्षं ह विश्वसन्तं प्रति क्रमेण त्रयकथनाच्चकाराभावः । अतो देवानां साद्यन्तत्वेन वेदविद्याधिकारोऽस्त्विति भावः ।

अर्थापत्त्या देवप्रवाहनित्यतां साधयति— **अत एव च नित्यत्वम्** । शब्दे प्रभवस्येति च वर्तते । साध्यत्वेन विवक्षितं नित्यत्वमत इति परामृशति । पराभिप्रेताच्छब्दादिनिष्ठान्नित्यत्वादेव प्रवाहेण प्रभवस्य नित्यत्वं प्रमितमित्यर्थः । न हि वाच्यानित्यत्वे वाचो नित्यत्वमुपपद्यत इति भावः ।

ननु ये देवानां मध्ये मुक्तास्तदन्येषां तत्पदप्राप्तावपि तेषां नानाविधानां रूपवत्वात् तत्प्रतिपादकस्य सर्वदैकप्रकारस्य वेदस्य अप्रामाण्यं स्यादेवेत्याशङ्कां परिहरति— **समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च** । यथायोग्यं शेषो द्रष्टव्यः । मुक्तदेवानां स्वपदेष्वावृत्तावप्येषां प्राप्तपदानां पुरा तैः देवैः 'यथापूर्वं अकल्पयत्' इति 'ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः । वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः' इति स्मृतेश्च समाननामरूपवत्वाच्च तत्तद्देवप्रतिपादकैर्वेदैऽप्रामाण्याभाव इत्यर्थः । स महेश्वरो वेदगतेभ्यः पूर्वब्रह्मादिनामभ्यः एवापरब्रह्मादिज्ञानिनां नामानि निर्ममे दृश्यन्त इति दृष्टयो रूपाणि याश्च प्राचीनदेवदृष्टयो वेदेषूक्तास्ता एवान्यदेवेषु निर्ममे इति स्मृत्यर्थः । प्रलये तु वेदो भगवन्मात्रपर इति भावः ।

पुनर्देवानां वेदाधिकारमाक्षिपति— **मध्वादिष्वसम्भवादनधिकारं जैमिनिः** । देवानामिति शेषः । मोक्षेतरफलानां मधुविद्यायां कर्मविद्यायां च देवानामधिकारस्यासम्भवात् तेषां तत्रानधिकारं जैमिनिराचार्यो मन्यत इत्यर्थः । तदुक्तफलेषु योग्यानां प्राप्तत्वादयोग्यानामकाम्यत्वादर्थित्वाभावादिति भावः ।

ननु 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिमोक्षार्थायां विद्यायां अधिकारोऽस्ति इत्यत आह— **ज्योतिषि भावाच्च**। देवानां वस्तूनामिति शेषः। देवानां ज्योतिषि ज्ञाने सर्ववस्तूनां विषयत्वेनान्तर्भावाच्च मोक्षविद्यायामधिकारं जैमिनिर्मन्यत इत्यर्थः। मोक्षार्थिनामपि देवानां सर्वज्ञेन सर्वविद्योक्तार्थज्ञानित्वान्न विद्यार्थित्वम्। अयमपि दोषो मध्वादिविद्यास्वपि ज्ञेय इति चकार इति जैमिनिमतावलम्बिनः पक्षं प्रतिक्षिपति— **भावं तु बादरायणोऽस्ति हि**। मध्वादिष्वधिकारस्येति वर्तते। देवानामिति अतिशय इति शेषः। शब्दो राद्धान्ते पूर्वपक्षाद्भिन्नविषयत्वमाह— ततश्च बादरायणस्तु भगवान् मध्वादिसर्वविद्यासु देवानामधिकारस्य सद्भावं मन्यते। हि यस्माद्विद्याभिर्देवानां मोक्षफले तद्धेतुज्ञाने चातिशयोऽस्तीत्यर्थः। 'यावत् सेवा परे तत्त्वे तावत्सुखविशेषता। सम्भवाच्च प्रकाशस्य परमेकमृते हरिम्। तेषां सामर्थ्ययोगाच्च देवानामप्युपासनम्। सर्वं विधीयते नित्यं सर्वयज्ञादि कर्म च' इति स्कान्दस्मृतौ प्राप्तमध्वादिविद्योक्तज्ञानफलानां सामर्थ्यवत्वेन पुनः पुनर्मध्वादिविद्योपासनया तदनुक्ते ज्ञाने मोक्षफले चातिशयोऽस्तीति प्रमितम्। अत एव तदुक्तमात्रानधिकारवादिनो जैमिनेर्न सिद्धान्तविरोधः। अतः सर्वदेवोपास्यत्वं वामनस्य सिद्धमिति भावः।

## ९. अपशूद्राधिकरणम्

अथापि स्यात् काठके 'अङ्गुष्ठमात्रः पुरुष' इति वेदविद्यासु मनुष्याणामधिकृतत्वात् तान् प्रति विष्णोरङ्गुष्ठमात्रत्वाभिधानमित्यत्रोक्तम्। ततश्च शूद्राणामपि वेदविद्याधिकाराभिमतौ भवति छान्दोग्ये 'अह हारे त्वा शूद्र' इति रैक्वमुनिना सम्बोधितस्य पौत्रायणस्य वैदिकविद्याध्ययनदर्शनाच्च। अतो निषेधवाक्यानुसारेण असति निषेध इत्यधिकारविशेष्यकृता शूद्रव्यावृत्तिरयुक्तेति प्राप्ते सिद्धान्तयति— **शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि**। व्याचिख्यासितश्रुत्युक्तहंसस्य परामर्श आद्येन तच्छब्देन द्वितीयेन शुचः। तथा शुचा आ द्रवणात् श्रुतौ शूद्रेति सम्बोधनमिति शेषः। हिर्हेतौ, 'अरे हंसैतद्वचनं कमेनमुद्दिश्यात्थ' इति पौत्रायणेन हंसकृतानादरश्रवणात् अस्य पौत्रायणस्य शुक्। 'सः सञ्जिहान एव क्षत्तारमुवाचे'ति व्यग्रत्वोक्त्या यस्मात्सूच्यते तस्माच्छुचा आ सम्यक् द्रवणात् पौत्रायणः सर्वज्ञमुनिना शूद्रेति सम्बोधित इत्यर्थः। शुचा द्रवतीति शूद्रः इतिवत् सम्यक् शूद्रः। 'आधिक्येऽधिकमि'ति सूत्रात्। तस्य सम्बुद्धिः शूद्रेत्यभिप्रेतं मुनेर्न तु वर्णावरत्वम्। 'राजा पौत्रायणः शोकाच्छूद्रेति मुनिनेरितः' इति भावः।

ननु वर्णावरपर एव शूद्रशब्दः किं न स्यादित्यत आह— **क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्**। अस्येति वर्तते। उत्तरश्रुतेनेति शेषः। चैत्ररथेनेति भावप्रधानः। ततश्च शूद्रेति सम्बोधना-

दुत्तरवाक्ये 'अयमश्वतरीरथ' इति श्रुतेन चित्ररथसम्बन्धित्वेन सिद्धाद्रथित्वलिङ्गात् पौत्रायणस्य क्षत्रियत्वानुमितेश्च शुगाद्रवणार्थः शूद्रशब्द इत्यर्थः। 'रथस्त्वश्वतरीयुक्तश्चित्र इत्यभिधीयते' इत्यभिधानं 'यत्र वेदो रथस्तत्र न वेदो यत्र नो रथ' इति व्याप्तिग्राहकं मानमिति भावः।

ननु वेदो रथश्च शूद्रेऽप्यस्त्वित्यत आह— **संस्कारपरामर्शात्तदभावाभिलापाच्च**। अध्यापनायेति शूद्रस्येति न वेदो न रथ इति च शेषः। 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यत्रोक्तस्योपनयनाख्यसंस्कारस्य 'तमध्यापयीत' इत्यत्र अध्यापनार्थं तमुपनीतमित्यत्र परामर्शात् 'शूद्रस्य च न संस्कारो न व्रतानि शूद्रस्य' इति पैङ्गिश्रुतौ संस्काराभावाभिधानाच्च न वेदो नापि रथः शूद्रस्येत्यर्थः। 'वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना' इति स्मृतेः ब्राह्मणपदं त्रिवर्णपरम्। 'स्त्रीणां प्रदानकर्मैव यथोपनयनं तथा' इति व्याससमृतेः स्त्रीणामपि संस्कारसद्भावात् 'सपत्नीं मे पराधमे'त्यादि वेदाधिकार इति भावः।

ननु निषेधाभावाच्छूद्रस्यापि संस्कारोऽस्त्वित्यत आह— **तदभावनिर्धारणे च प्रवृत्तेः**। प्रकृतं शूद्रत्वं तच्छब्देन परामृश्य तदभाव इति वर्तते। गौतमस्येति सत्यकामोपनयने चेति शेषः। ततश्च 'नाहमेतद्वेद भो यद्गोत्रोऽहमस्मी'ति वचनेन सत्यकामस्यार्जवं ज्ञात्वा 'नैतदब्राह्मणो विवक्तुमर्हती'ति शूद्रत्वाभावनिर्णये सत्येव तदुपनयने गौतमस्य प्रवृत्तत्वात् शूद्रस्य संस्काराभाव इत्यर्थः। ब्रह्म वेदमणन्ति जानन्तीति ब्राह्मणाः त्रैवर्णिकाः। वर्णविपर्ययात् त एव ब्राह्मणाः तद्भिन्ना ह्यब्राह्मणा इति भावः।

शूद्रो वेदविद्याधिकारी, विशिष्टबुद्ध्यादिमत्वात् द्विजवत् इत्यत्र आह— **श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च**। प्रकृतं शूद्रस्य न वेद इति वर्तते। वेदस्येति शेषः। अर्थेति तज्ज्ञानम्। ततश्च शूद्रस्य वेदश्रवणाध्ययनार्थावधारणानां 'श्रवणे त्रपुजतुभ्यां श्रोत्रपरिपूरणमध्ययने जिह्वाच्छेदः अर्थावधारणे हृदयविदारणमि'ति श्रुतौ प्रतिषेधात्। 'नाग्निर्न यज्ञः शूद्रस्य तथैवाध्ययनं कुतः' इति स्मृतेश्च न तस्य वेद इत्यर्थः। स्मृत्यनुसारात् श्रुतौ शूद्रस्येति शेषो ज्ञेयः। अनुमानं च बाधितम्। विदुराक्षत्रसंस्कारकर्णादिश्च वेदार्थावधारणादिकं पूर्वजन्मोत्पन्नज्ञानादेवेति नान्यशूद्रादिसाम्यम्। अतोऽसति निषेधे विशिष्टबुद्ध्यादिमतः वेदाधिकार इति सिद्धमिति भावः।

## १०. कम्पनाधिकरणम्

अथापि स्यात् काठके 'महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति' इति वज्रज्ञानान्मोक्षः श्रूयते। वज्रं च न विष्णुः। वज्रश्रुतेरुद्यतत्वलिङ्गाच्च। किं त्विन्द्रायुधम्। अतो न जन्माद्यस्य यत इत्युक्तं

युक्तमिति प्राप्ते सिद्धान्तयति— **कम्पनात्**। आत्मेति वर्तते। वज्रमिति शेषः। कम्पनं प्रवर्तनम्। ततश्च 'यदिदं किं च जगत्सर्वं प्राण एजति निस्सृतम्' इति वज्रस्य जगत्तत्प्रेरकप्राणयोः प्रवर्तकत्व-लिङ्गश्रवणाद्वज्रं विष्णुरेवेत्यर्थः। लिङ्गं च 'को ह्येवान्यात् कः प्राण्यात्', 'प्राणस्य प्राण' इति विष्णोरेव। 'वर्जनाद्वज्रमुच्यत' इति स्मृत्या वज्रश्रुतिरुद्यततत्वलिङ्गमपि विष्णोरेव। अतो जन्माद्यस्येत्युक्तमिति सिद्धमिति भावः।

## ११. ज्योतिरधिकरणम्

अथापि स्यात् बृहदारण्यके 'हृद्यन्तर्ज्योतिः पुरुष' इति हृत्स्थं ज्योतिः प्रतीयते। तच्च जीवः। 'उभौ लोकावनुसञ्चरती'ति लिङ्गात्। कर्मवशादूर्ध्वाधोलोकसञ्चरणं जीवस्यैवेति ज्योतिश्चरणाभिधाना-दित्युक्तमयुक्तमिति प्राप्ते सिद्धान्तयति— **ज्योतिर्दर्शनात्**। आत्मेति वर्तते। 'विष्णुरेव ज्योतिरि'-त्यादि श्रुतौ ज्योतिश्शब्दस्य विष्णवेकवाचित्वदर्शनात् ज्योतिर्विष्णुरेवेत्यर्थः। 'प्राज्ञेनाऽऽत्मना-ऽन्वारूढः उत्सर्जद्याति' इति श्रुतौ जीवमादायेश्वरस्यैवोभयलोकसञ्चरणमुक्तम्। अत 'इदं ज्योतिर्हृदय आहितमि'त्यपि विष्णुरेव ज्योतिरिति सिद्धमिति भावः।

## १२. आकाशाधिकरणम्

अथापि स्यात् छान्दोग्ये 'आकाशो वै नाम नामरूपयोर्निर्वहिता' इति सर्वाधारत्वमाकाशस्य प्रतीयते। स प्रसिद्धाकाश एव। वै नामेति निपातद्वयस्य उक्तार्थप्रसिद्धिद्योतकत्वात्। अतो द्युभ्वा-द्यायतनं स्वशब्दात् इत्युक्तमयुक्तमिति प्राप्ते सिद्धान्तयति— **आकाशोऽर्थान्तरत्वादिव्यपदेशात्**। आत्मेति वर्तते। अन्योऽर्थोऽर्थान्तरमर्थविलक्षणं नामरूपरहितमिति यावत्। आदिपदेन ब्रह्मशब्दः। अथवा अर्थान्तरं रूपरहितं, आदीति नामरहितम्। ततश्च 'ते यदन्तरा तद्ब्रह्मे'त्यत्र नामरूपे यत् आकाशं विना वर्तते इति नामरूपरहितत्वलिङ्गस्य ब्रह्मशब्दस्य व्यपदेशादाकाशोऽत्र विष्णुरेवेत्यर्थः। अवर्णमिति 'यतो वाचो निवर्तन्ते', 'तदेव ब्रह्म परमं कवीनाम्' इति नामलिङ्गशब्दौ विष्णोरेव। नामवत्यवर्णेऽकाये च बाधितौ वै नामेति निपातौ वेदप्रसिद्धत्वे प्रवृत्तौ अतो द्युभ्वाद्यायतनमिति सिद्धमिति भावः।

## १३. सुषुप्त्यधिकरणम्

अथापि स्यात् बृहदारण्यके आद्रवति स्वप्नायैव 'स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः इति स्वप्नादिद्रष्टुरसङ्गत्वं प्रतीयते। स च जीवः। तथा प्रसिद्धत्वात्। न च असङ्गत्वस्य जीवे बाधितत्वाद्विष्णुरेवेति वाच्यम्। जीवेशयोरभेदेन चैतन्यमात्रविवक्षया शुद्धधर्मस्य

असङ्गत्वस्य विष्णोरिव जीवे सम्भवात् । अतोऽसङ्गमरसमगन्धमित्युक्तासङ्गत्वं जीवस्यैवेत्यक्षराधिकरणोक्तमन्यभावव्यावृत्तेरित्ययुक्तमिति प्राप्ते सिद्धान्तयति— **सुषुप्त्युत्क्रान्त्योर्भेदेन** । आत्मेति व्यपदेशादिति च वर्तते । स्वप्नादिद्रष्टाऽसङ्गत्वान्न च जीवेशैक्यमित्युपस्कर्तव्यम् । तथा च स्वप्नादिद्रष्टा सर्वज्ञो विष्णुरेव असङ्गत्वात् । न च जीवेशयोरभेदः । 'प्राज्ञेनात्मना सम्परिष्वक्त' इति सुषुप्तिप्रकरणे, 'प्राज्ञेनाऽऽत्मनाऽन्वारूढ' इति मोक्षप्रकरणे चेशजीवयोर्भेदेन व्यपदेशादित्यर्थः । मोक्षे च सतो भेदस्य पारमार्थिकत्वेनात्यन्तजीवभिन्नस्य विष्णोरेवासङ्गत्वं सिद्धमिति भावः ।

## १४. ब्राह्मणाधिकरणम्

अथापि स्यात् बृहदारण्यके 'एष नित्यो महिमा ब्राह्मणस्ये'ति ब्राह्मणस्य नित्यमहिमा प्रतीयते । 'स चतुर्मुखः । वर्णश्रुत्या विष्णावनुपपन्नब्राह्मणशब्देन 'स वा एष महानज' इत्यादौ पठितबह्वजशब्दात् । तथाच विष्णुमहिमाप्रतिपादकपूर्वाधिकरणान्यनुपपन्नानि इति प्राप्ते सिद्धान्तयति— **पत्यादिशब्देभ्यः** । आत्मेति वर्तते । ब्राह्मण इति शेषः । 'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिरेष सर्वेश्वर' इत्यादिसर्वाधिपत्यादिप्रतिपादकबहुशब्दानां सद्भावात् ब्राह्मणो विष्णुरेवेत्यर्थः । विष्णुरेव न जायत इत्यजः । ब्रह्मणा वेदेन गम्यत इति ब्रह्माणः आधिक्येन ब्रह्माणो ब्राह्मण इति ब्राह्मणश्चात्र श्रुतिक्रमोल्लङ्घनं प्रत्येकं सर्ववशित्वादिशब्दानां विष्णुत्वसाधकत्वं 'उतामृतत्वस्येशान' इत्यादिश्रुतिभ्य इति ज्ञापनार्थम् । अत एव बहुवचनम् । तस्मादुभयत्र प्रसिद्धेः सर्वशब्दवाच्यो विष्णुरेवेति सिद्धमिति भावः । भाष्येऽपि श्रुतिक्रमोल्लङ्घनमपि साभिप्रायं द्रष्टव्यम् ॥

*इति श्रीविजयीन्द्रभिक्षुणा कृते भाष्यतत्त्वप्रकाशिकावाक्योद्धाररूपे*
*मुकुरनाम्नि ग्रन्थे प्रथमाध्यायस्य तृतीयः पादः ॥*

★ ★ ★

# अथ प्रथमाध्याये चतुर्थः पादः

## १. आनुमानिकाधिकरणम्

अन्यत्रैव प्रसिद्धानां नामलिङ्गात्मकानां समन्वयं प्रतिपादयति अस्मिन्पादे । तत्राव्यक्तपदवाच्यत्वं विष्णोराक्षिप्य समादधति— **आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च** । अपिरेवार्थे । शाखास्वव्यक्तशब्देनोच्यते इति शेषः । शरीरस्य रूपमिव परतन्त्रत्वलक्षणं रूपं यस्य, प्रधानस्य तच्छरीररूपकं न तु शरीरं कुत्सितमिति कृत्वा तस्मिन्विशेषेण स्थितस्य विष्णोर्ग्रहणादिति

विग्रहः । नेति स्मृतिमाह । ततश्च साङ्ख्यानुमानकल्पितं प्रधानमेव काठकानां शाखासु 'अव्यक्तात्पुरुषः परः' इत्यव्यक्तशब्देनोच्यते न तु विष्णुः । पुरुषावरत्वश्रवणात् । तच्च न विष्णोः विरोधात् अतः तत्तु समन्वयादित्युक्तमयुक्तमिति चेत् प्रधानस्थो विष्णुरेव, अव्यक्तशब्देन ग्रहणात् । 'अव्यक्तमचलं शान्तं निष्कलं निष्क्रियं परम् । यो वेद हरिमि'ति श्रुतिः 'अव्यक्तोऽक्षर उच्यते' इति स्मृतिश्च विष्णोरेवाव्यक्तत्वादि यतो दर्शयति तस्मादित्यर्थः । अव्यक्तनाम्नो विष्णोर्विशेषसम्बधात् प्रधानेऽप्यव्यक्तशब्दः शक्तः । तत्रापि विष्णौ मुख्यः । प्रधाने त्वमुख्यः । मङ्गलरूपशरीरस्य विष्णोर्महत्त्वात् तदधीनत्वेन प्रधानस्याल्पत्वात् । तस्मादपि तुच्छेनाभ्वपिहितं यदासीत्' इति श्रुतौ विभु ब्रह्म अल्पेन प्रधानेनाभ्वपिहितं यदासीदिति प्रमितत्वादिति प्रसङ्गात् ज्ञापयितुं शरीरेत्यादि विष्णुविशेषणमिति भावः ।

ननु तर्ह्यमुख्यमपि प्रधानमेवात्राव्यक्तं किं न स्यादित्यत आह— **सूक्ष्मं तु तदर्हत्वात्** । तुरवधारणे । तत्प्रकृतमव्यक्तं, सूक्ष्ममेव वस्त्वव्यक्तं योग्यत्वादित्यर्थः । लोके सूक्ष्मस्यैवाव्यक्तत्वं दृष्टम् । 'यत्तत्सूक्ष्मं परमं वेदितव्यम्' इति श्रुतेः । परमसूक्ष्मो विष्णुरेव मुख्याव्यक्तः । प्रधानमप्यत्रामुख्याव्यक्तं भवति । एतदर्थमपि प्राक्प्रधानस्येत्युक्तमिति भावः ।

ननु पुरुषावयवश्रवणात् प्रधानमेवात्राव्यक्तं न विष्णुरित्यत आह— **तदधीनत्वादर्थवत्** । विष्णाविति वर्तते । अव्यक्तपदप्रवृत्तिनिमित्तप्रसक्त्या बुद्धिस्थत्वात् प्रवृत्तिनिमित्तानामिति प्रतिज्ञातमिति च सम्बध्यते । ततश्चाव्यक्तादिपदजातं विष्णावेवार्थवत् । अव्यक्तत्वादीनां विष्णवधीनत्वादित्यर्थः । यद्यपि पुरुषावरो न विष्णुः सर्वोत्तमत्वात् । तथापि पुरुषावरत्वस्य तदधीनत्वात् पुरुषावरशब्दवाच्यता एव । तथाच विष्णोः सर्वशब्दः सर्वप्रवृत्तिनिमित्तनियन्तृत्वादबाधितप्रवृत्तिनिमित्तवत्वाच्चैव सर्वशब्दवाच्यत्वं सर्वाणि नामानीत्यादिवेदैरुच्यते । 'यदधीनो गुणो यस्य तद्गुणी सोऽभिधीयते । यथा जीवः परात्मेति यथा राजा जयी'त्यपि इति स्कान्दस्मृतेरिति भावः ।

युक्त्यन्तरेण विष्णुरेवात्र मुख्याव्यक्त इत्याह— **ज्ञेयत्वावचनाच्च** । आनुमानिकेनेति वर्तते । प्रधानस्य वेदे ज्ञेयत्ववचनाभावाच्च नात्र अव्यक्तशब्देन प्रधानमुच्यत इत्यर्थः । मोक्षार्थं प्रवृत्तः वेदस्तत्साधनं विष्णुज्ञानमुत्पादयेत् । न तु प्रधानज्ञानं मोक्षार्थम् । तयोर्ज्ञेयाज्ञेयत्वस्य 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुरि'ति श्रुतावुक्तत्वादिति भावः ।

उक्तमाक्षिप्य समादधति— **वदतीति चेन्न प्राज्ञो हि** । प्रधानस्य ज्ञेयत्वमिति वर्तते । श्रुतिरिति शेषः । 'महतः परं ध्रुवम् । निचाय्य तं मृत्युमुखात्प्रमुच्यत' इति श्रुतिर्महत्परत्वलिङ्गात् प्रधानस्य मोक्षार्थं ज्ञेयत्वं वदतीति श्रुतिरिति चेन्न । *(मूलमातृका अत्र तृटिता वर्तते ।)*

## २. ज्योतिरधिकरणम्

नियोगरूढ्योरभावात्तत्रेति प्राप्ते सिद्धान्तयति— **ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके** । प्राज्ञ इति वर्तते । ज्योतिःपद ..... दिरव्वाङ्गोपलक्षकमिति पूर्वं गृहीतं, ल्यब्लोपे पञ्चमी । तुरेवार्थे । हिर्हेतौ । तथाच ऐतरेये 'तं यच्छतं वर्षाण्यभ्यार्चत् तस्माच्छतर्चिन इत्याचक्षते एतमेव सन्तम्' इत्यादिना शतर्चादिपदवाच्यत्वेन सन्तमेवैतं विष्णुं शतवर्षाण्यभ्यर्चनादिरूपमहायोगेन विद्वांसः शतर्चादिरित्याचक्षत इति केषाञ्चित् पदानां विद्वद्रूढिमहायोगाभ्यां विष्णुपरत्वमुपक्रम्य तथा तु 'ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषाः एक एव व्याहृतिरि'ति सर्वशब्दव्याहर्तव्यत्वेन विष्णुमेव यस्मादधीयते तस्माद्विष्णुरेव ज्योतिरादिरित्यर्थः । ज्योतिरादिशब्दानां विष्णौ महायोगमहारूढिभ्यां प्रवृत्तिरिति भावः ।

ननु ज्योतिरादिशब्दानां विष्णुमात्रवाचकत्वे व्युत्पत्तिः कथम् ? ज्योतिषां स्तोमो ज्योतिष्टोम इति कृते विष्णूनां विष्णुरित्युक्तं, स्यात् । अन्यथाभावात् । अत एव कर्मादिबोधकाभावात् तदभावाख्य-विरोधप्राप्तौ तदननुष्ठानं स्यादित्यत आह— **कल्पनोपदेशाच्च मध्वादिवदविरोधः** । चोऽवधारणे समुच्चये वा । 'असौ वा आदित्यो देव मधु' इत्यादौ मध्वादिपदार्थतयोपासनाय विष्णुरादित्यो वोप-दिश्यते । एतावता लौकिकमध्वभावो यथा तथा प्राणऋच इत्येव विद्यादित्यादेः सर्वशब्दार्थतया विष्णोः कल्पनाय ता वा एताः सर्वा ऋचः इत्यादावुपदेशादेव इत्युत्पत्तिः । कर्माभावाख्यविरोधस्याभावा-च्चेत्यर्थः । उपासनाभिर्गुणध्यानं गुणपूर्तिसिद्धेश्च न रूढितः । पदानां कर्मार्थताभावे योगेऽपि न स्यादतो रूढ्यादिवृत्तिभिरन्यार्थता अस्तीति महायोगरूढिभ्यां ज्योतिरादि विष्णुरेवेति 'तत्तु समन्वयात्' इति सिद्धान्तितमिति भावः ।

## ३. न सङ्ख्योपसङ्ग्रहाधिकरणम्

अथापि स्यात् बृहदारण्यके 'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः' इत्युक्ताः पञ्चजना आकाशश्च । पञ्चजनानां बहुत्वेन तेषामाकाशस्य च विष्णवाधेयत्वेन प्रतीयते । विष्णोरस्तु बहुत्वे स्वाधेयत्वे च प्रमाणाभावेन विरोधात् । अतः प्रसिद्धा एव त इति 'तत्तु समन्वयादि'त्ययुक्तमिति प्राप्ते सिद्धान्तयति— **न सङ्ख्योपसङ्ग्रहादपि नानाभावात् अतिरेकाच्च** । प्राज्ञ इति वर्तते । प्राणादय इत्यनुकृष्यते प्रकाश उपलक्ष्यते आकाशस्य साधारणपूर्वोत्तरपक्षाभावात् अपीत्यावर्तते । आद्यं विरोधसमाकर्षार्थं, द्वितीयं तथापीत्यर्थे । सङ्ख्येत्याधेयत्वोपलक्षणम् । तथाच प्राणादयः पञ्चजनाः विष्णुरेव । तथापि बहुत्वसङ्ख्योपसङ्ग्रहात् प्राप्तो विरोधः नानारूपसद्भावाद्विष्णोः पञ्चजनेषु नियामकत्वेन

पञ्चरूपाणां युक्तिसिद्धत्वात् । नाप्याधेयत्वोपसङ्ग्रहप्राप्तो विरोधः । पञ्चजनाधारस्य शरीररूपस्य विष्णुरूपस्य पञ्चजनस्वरूपेभ्योऽतिरेकाद्विभक्तत्वाच्च इत्यर्थः । बह्विति वक्तव्ये नानेत्युक्तिः रूपवैचित्र्येण नामभेदोपपादनार्थं स्वगतभेदशून्येऽपि विशेषान्नानारूपवति विष्णौ बहुत्वं देहस्वरूपाधेयेषु आकाशप्राणादिषु स्थितरूपाणामुपचारादाधेयत्वं चोपसङ्गृह्यत इति भावः ।

ननु प्राणादीनां विष्णुत्वमेव कुत इत्यत आह— **प्राणादयो वाक्यशेषात्** । 'प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रं मनसो मनः' इति वाक्यशेषात् प्राणादयो ज्ञेया इत्यर्थः । तत्र प्राणादीनां प्राणादिप्राणत्वादिप्रदत्वं प्रतीयते । तद्विष्णोर्लिङ्गम् । 'तच्छ्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणश्चक्षुषश्चक्षुः' इति भावः ।

ननु काण्वानां शाखायां वाक्यशेषे चतुर्णामेवोक्तेर्भिन्नविषयत्वात् माध्यन्दिनशाखायां पञ्चोक्तावपि भिन्नविषयत्वं किं न स्यात् इत्यत आह— **ज्योतिषैकेषामसत्यन्ने** । प्राणादय इति वर्तते । माध्यन्दिनानां शाखायां सत्यविद्यमाने अकथिते सत्यपीति यावत् । अन्ने अन्नस्थाने 'तद्देवा ज्योतिषां ज्योतिरि'ति किञ्चिद्दूरोक्तो ज्योतिषां ज्योतिषा सह प्राणादयः पञ्च ज्ञेया इत्यर्थः । ज्योतिश्चान्नं रूपान्तरं वा । अत एव नानाभावादित्युक्तम् । अतो बहुवचनान्तैराधेयत्ववाचिभिश्च शब्दैर्वाच्यो विष्णुरेवेति युक्तं 'तत्तु समन्वयात्' इति सिद्धमिति भावः ।

## ४. आकाशाधिकरणम्

अथापि स्यात् तैत्तिरीये 'आत्मन आकाशः सम्भूतः आकाशाद्वायुः' इत्यादावाकाशादयः कार्यवत्कारणत्वाच्चावान्तरकारणत्वे प्रतीयन्ते । न ते विष्णुः उत्पत्तिमत्त्वात् विष्णोरुत्पत्त्यभावादेकस्यैव कार्यकारणत्वायोगाच्च तत्तु समन्वयादित्ययुक्तमिति प्राप्ते सिद्धान्तयति— **कारणत्वेन च आकाशादिषु यथा व्यपदिष्टोक्तेः** । प्राज्ञ इति नानाभावात् अतिरेकाच्च इति वर्तते । चेति कार्यत्वेन वा इत्यर्थः । उच्यत इति शेषः । आकाशादिष्वित्यावर्तते । तथाच प्राज्ञः कारणत्वेन कार्यत्वेन च उच्यते । आकाशादिषु विष्णोर्नानारूपसद्भावात् तेषां मिथो विभक्तत्वाच्च । न च तत्र प्रमाणाभावः, ऐतरेये 'विष्णुः स योऽतोऽश्रुतोऽमत' इत्यादावश्रुतत्वादिना यथा व्यपदिष्टः तादृशस्यैवाकाशादिषु बृहदारण्यके 'य आकाशे तिष्ठन्नाकाशो न वेद' इत्युक्तत्वादित्यर्थः । आकाशादिशब्दवाच्यत्वं च 'सर्वाणि नामानी'ति मानेनैव सिद्धम् । स्वस्य स्वस्मादेव व्यक्त्यपेक्षयोत्पत्तिः कारणकार्यभावश्च युज्यते इति समन्वयसूत्रं युक्तमिति सिद्धमिति भावः ।

## ५. समाकर्षाधिकरणम्

अथापि स्यात् विष्णोः सर्वशब्दवाच्यत्वे कथं गतिव्यवहारः उक्तानामपि तत्र रूढ्यादीनामनुपपादितत्वेनाभावात् । अतोऽसङ्गतः समन्वय इति प्राप्ते सिद्धान्तयति— **समाकर्षात्** । प्राज्ञादिति वर्तते । जगदित्यनुकृष्यते । ल्यब्लोपे पञ्चमी । शब्दानां व्यवहार इति शेष । विष्णुवाचिनां शब्दानां विष्णुतः समाकृष्य जगति व्यवहारो भवतीत्यर्थः । विष्णुः सृष्ट्यनन्तरमन्येषां अस्वाधीनानि प्रवृत्तिनिमित्तानि दत्वा स्वमानवाचिशब्दानन्यत्र रूढत्वेन सङ्केतितवान् । अतो विष्णौ मुख्यान्यत्रामुख्या रूढिरिति भावः ।

ननु तर्हि मुख्यं विष्णुं विहायामुख्ये जगति शब्दानां प्रसिद्धिर्न स्यादित्यत आह— **जगद्वाचित्वात्** । जगदित्यावर्तते । वाचित्वं तद्भानम् । प्रसिद्धिरिति शेषः । लोकस्य शब्दानां जगत्येव वाचित्वमिति भ्रमाज्जगति प्रसिद्धिरित्यर्थः । अग्निर्माणवक इति व्यवहारादग्निपदवाच्यो माणवक एवेति भ्रमो मुख्यार्थमजानतो लक्ष्येऽपि ज्ञायते । यतोऽतो विष्णुमजानतो जगत्येव व्यवहारवते यथाकथञ्चिद्वाच्यो भ्रमो युक्त एवेति भावः ।

उक्तमाक्षिप्य समादधति— **जीवमुख्यप्राणलिङ्गादिति चेत् तद्व्याख्यातम्** । 'तदधीनत्वादर्थवत्' इति सूत्रं न सङ्कुचेति सूत्रान्नेति वर्तते । विश्वस्य विष्णवधीनत्वात् तद्वाचकपदजातं विष्णावेवार्थवदिति न युक्तम् । अस्य यदेकां शाखां जीवो जहात्यथ सा शुष्यति इति जीवे वायुनैव हि सर्वे लोका नेनीयत इति मुख्यप्राणे च सर्वस्य तदधीनत्वलिङ्गश्रवणात् । तथाच तयोरपि मुख्यार्थत्वादिति चेत् तत्तु लिङ्गम् उपासात्रैविध्यादिति सूत्रे जीवमुख्यप्राणान्तर्यामि विष्णुसम्बन्धितयेति व्याख्यातमित्यर्थः । तथाच जीवमुख्यप्राणौ न शब्दमुख्यार्थाविति भावः ।

भाष्ये नकारो भाष्यानुसारी न सौत्रः अनन्वयात् । अत एव टीकायां अध्याहरति इति नोक्तम् । ननु कर्मादौ समाकर्षो न सम्भवति प्रयोजनाभावात् । भवज्ञानेनैव पुरुषार्थप्राप्तौ कर्मज्ञानस्यापि व्यर्थत्वात् । अस्ति च कर्मादौ शब्दवृत्तिः । अतः सा मुख्यैवेत्यत आह— **अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके** । प्रकृतो वेदः सम्बोध्यते । समाकर्षादिति । जगद्वाचीति श्रुतीति वर्तते । अन्येति तज्ज्ञानं अन्यो जगद्भिन्नो विष्णुः । तुरेवार्थे । अन्येऽधीयत इति वर्तते । तथाच मुख्यतो विष्णुज्ञानाय प्रवृत्तो वेदः समाकर्षेण कर्मादि विष्णुज्ञानार्थमेव वदतीति विशेषेण ज्ञातं भवतीति कर्मज्ञानस्य कारणे फले च शौनकप्रश्नात् 'तस्मै स होवाच', 'द्वे विद्ये वेदितव्ये परा चैवापरा चे'त्यत्र 'ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचका । ता एव परमा विद्या यदा विष्णोस्तु वाचकाः' इति

स्मृतेर्जगत्परत्वेनापरऋगादिविद्याः कर्मादिज्ञानोत्पत्त्यर्थं ज्ञातव्याः । विष्णुपरत्वेन परा ऋगाद्या एव विष्णुज्ञानाख्यकर्मज्ञानफलार्थं ज्ञातव्या इत्यङ्गिरसो व्याख्यानात् । अथवा छान्दोग्ये 'कथं नु भगवः स आदेशो भवती'त्यत्र हे भगवः सः कर्मज्ञानं विष्णुज्ञानफलकमित्यर्थकः आदेशस्तवोपदेशः कथं नु कथमेव तत्र दृष्टान्तो वक्तव्यः, तं ब्रूहीति यावत्, इति श्वेतकेतुप्रश्नात् 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यादि'त्यत्र यथेत्येकेन मृत्पिण्डेन ज्ञातमपि मृण्मयं घटशरावादिकं ज्ञातफलं भवति विशेषज्ञानात् तथा दार्ष्टान्तिकेऽपीत्युद्दालकव्याख्यानात् । अपि चैतरेये 'ऋचो अक्षरे परमे व्योमन् यस्मिन्देवा अधि विश्वे निषेदुः । यस्तन्न वेद किमृचा करिष्यति य इत् तद्विदुस्त इमे समासते' इत्यत ऋगुपलक्षिता विद्या परमे व्योमन् व्याप्ते अक्षरे विष्णौ विषया एवेति यावत् । यस्मिन्नक्षरे विश्वे देवा अधिविश्वे निषेदुः यस्तन्न वेद सः ऋचा कर्मादिरूपया किं करिष्यति, ये पुनस्तदक्षरं विदुः ते सम्यगास्त इति । एवं कर्मज्ञानं विष्णुज्ञानफलकमिति स्पष्टमभिधीयत इत्यर्थः । मोहायैव प्रवृत्तो वेदः तत्साधनं विष्णुज्ञानमुत्पादयति तमेव तत्साधनं कर्मादिकं वक्तुं विष्णुतः समाकृष्यत इति भावः ।

ननु तर्हि खण्डपदानामात्मान्यार्थत्वं स्यात् । तावतैव व्युत्पत्त्युपपत्त्या विष्णुज्ञानसम्भवात् न तु ज्योतिष्टोमादिसमुदितपदानां यज्ञादिपरत्वम्, व्यर्थत्वात् । अतो मुख्यार्थ एव कर्मादिरित्यत आह— **वाक्यान्वयात्** । समाकर्षाज्जगद्वाचीति जैमिनिरिति । प्राज्ञ इति वर्तते । ल्यब्लोपे पञ्चमी । विष्णौ वाक्यान्वयमपेक्ष्य वेदः समाकर्षात् कर्मादिजगद्वाचीति जैमिनिर्मन्यत इत्यर्थः । अधमाधिकारिणां पदव्युत्पत्तिमात्रेण विष्णुज्ञानं प्राप्तुमशक्यम् । 'कश्छन्दसां योगमावेद धीरः' इति श्रुतेः । वाक्यान्वये तु लौकिकव्युत्पत्त्या वाक्यार्थकर्मादिज्ञाने सर्ववाक्यपृथग्विषयमप्यन्ततो विष्णुपरमेवेति ज्ञातुं शक्यमिति भावः ।

विष्णुज्ञानार्थं पदवाक्यानामन्यार्थत्वमित्युक्तं तत्केन प्रकारेण इत्यत आह— **प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः** । जगद्वाचित्वं वर्तते । शब्दानां कर्मादिवाचकत्वं 'तमेवं विद्वानमृत इह भवति, नान्यः पन्था अयनाय विद्यते' इत्यत्र विज्ञानमेव मोक्षसाधनं नान्यदिति प्रतिज्ञासिद्धेः । निश्चयस्य लिङ्गं हेतुरुपयोगीति यावत् । आश्मरथ्य आचार्यो मन्यत इत्यर्थः । विस्तरेण सपरिकरकर्माद्युक्तौ यस्मात्कर्म दुःखसम्भिन्नानित्यफलमात्रसाधनं तस्मान्न मोक्षसाधनम् अतो विष्णुज्ञानमेव मोक्षसाधनमिति प्रतिज्ञा निश्चीयत इति भावः । प्रकारान्तरेणान्यवचनस्य ज्ञानोपयोगं दर्शयति— **उत्क्रमिष्यत एवं भावादित्यौडुलौमिः** । जगद्वाचित्वमिति सिद्धे लिङ्गमिति च वर्तते । एवमिति अन्यार्थमित्यस्य परामर्शाभावेति कर्मणा भावप्रधानम् । एवञ्च ज्ञानेनोत्क्रमणं मोक्षमिच्छतः पुंसः अन्यार्थत्वेन विष्णुज्ञानसाधनत्वेनेति यावत् । कर्मादेः वाच्यत्वादिति हेतोः कर्मादिवाचकत्वं विष्णुज्ञानोपयोगिऔडुलोमिराचार्यो

मन्यत इत्यर्थः । मोक्षो न ज्ञानं विना तच्च नान्तःकरणशुद्धिं विना सा च न कर्म विना अतो भेदे कर्म वदतीति भावः ।

रीत्यन्तरेण कर्मादिवचनस्य ज्ञानोपयोगमाह— **अवस्थितेरिति काशकृत्स्नः** । प्राज्ञजगतो-रनुवृत्तिः, जगद्वाचित्वमिति वर्तते । अवस्थितिस्तद्भावं ल्यब्लोपे पञ्चमी । प्राज्ञे जगतोऽवस्थानज्ञान-मुद्दिश्य शब्दानां कर्मादि सर्वजगद्वाचित्वमिति काशकृत्स्न आचार्यो मन्यत इत्यर्थः । 'एष सेतुर्विधारण एषां लोकानामिति विष्णोर्जगदाधारत्वमुच्यते । आधेयजगदज्ञाने तादृशं ज्ञानमेव न सम्भवतीति तज्ज्ञानस्य साक्षादेव विष्णुज्ञानसाधनत्वं मुनिमतानां भगवन्मतत्वेनानेकाधिकारिविषयत्वेन च विरोधः । अतः सर्वशब्दमुख्यार्थो विष्णुरिति सिद्धमिति भावः ।

इदं समाकर्षाधिकरणं क्वचिट्टीकापुस्तके (तत्त्वप्रदीपे) पूर्वाधिकरणेऽन्तर्भावितम्, सङ्गत्यन्तरा-नुक्तत्वात् । तत्त्वनुव्याख्याने षण्णामेवाधिकरणप्रापकाणां सन्यायानामुक्तत्वात् तद्विवरणे च तावतामेव विवृतत्वाच्च क्वचित्पुस्तके तु नान्तर्भावितमिति न विरोधः ।

## ६. प्रकृत्यधिकरणम्

अथापि स्यात् वेदे प्रकृतिः प्रतीयते सा लक्ष्मीः जडप्रकृत्यभिमानित्वात् स्त्रीणामेव स्त्रीलिङ्ग-वाच्यत्वस्यौत्सर्गिकत्वात्, विष्णोश्च परमपुरुषत्वात् असत्प्रकृतिः । अतः स्त्रीलिङ्गशब्दवाच्यत्वाभावान्न युक्तं समन्वयसूत्रमिति प्राप्ते सिद्धान्तयति— **प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्** । प्राज्ञ इति वर्तते । न केवलं पुरुषो विष्णुः, किन्तु हन्त 'एतमेव पुरुषं सर्वाणि नामान्यभिवदन्ती'ति प्रतिज्ञायाः । यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रमभिसंविशन्तीति दृष्टान्तस्य चानुपरोधादनुपपत्तेः प्रकृतिरपि विष्णुरेवेत्यर्थः । यदि विष्णुः स्त्रीलिङ्गशब्दवाच्यो न स्यात् तर्हि प्रतिज्ञादिर्नोपपद्येत इति भावः ।

युक्त्यन्तरेण हरेः प्रकृतिपदवाच्यत्वमाह— **अभिध्योपदेशाच्च** । प्राज्ञ इति प्रकृतिरावृत्त्या वर्तते । अभिध्या इच्छा, प्रकृतिरिच्छति 'मायां तु प्रकृतिं विद्यात्' इति श्रुतौ 'प्रकृतिर्वासनेत्येवं तवेच्छानन्त कथ्यते' इति स्मृतौ चोपदेशात् प्रकृतिर्विष्णुरित्यर्थः । श्रुतिस्मृती अनुशासनरूपे अभि-ध्याय विष्णुस्वरूपं सोऽभिध्येति श्रुतेरिति भावः ।

ननु तथापि विष्णोः प्रकृतिशब्दवाच्यत्वे स्पष्टप्रमाणं नोक्तमित्यत आह— **साक्षाच्चोभया-म्नानात्** । चोऽवधारणे समुच्चये च उभयौ प्रकृतिपुरुषौ विष्णोरुभय साक्षादसाधारण्यादेव 'एषस्त्वेष पुरुषप्रकृतिरि'ति श्रुतावाम्नानाच्च प्रकृतिर्विष्णुरित्यर्थः । तदसाधारण्यं च 'सर्वाणि नामानि' इति सामा-न्येनेच्छाद्वारं विनैवेति भावः ।

अथापि विष्णौ योगो वक्तव्य इत्याह— **आत्मकृतेः परिमाणात्**। प्रकृतिमिति वर्तते। ल्यब्लोपे पञ्चमी। विष्णुः जडप्रकृतिं परिणाम्य महदादिरूपं प्रापयित्वा तत्रात्मनः स्वस्य बहुधा कृतेः करणात् प्रकृतिः जडप्रकृतिस्थो विष्णुरित्यर्थः। परिणाम्य आत्मानं च प्रकर्षेण करोतीति प्रकृतिः प्रकृष्टा कृतिर्यस्य वस्तुन इति यस्या इति वा सा प्रकृतिरिति योगः। 'अथ हैष आत्मा प्रकृतिमनुप्रविश्यात्मानं बहुधा चकार, तस्मात्प्रकृतिस्तत्प्रकृतिरित्याचक्षते' इति भाल्लवेयश्रुतेरिति भावः।

ननु परमपुरुषस्य स्त्रीलिङ्गशब्दवाच्यत्वं कथमित्यत आह— **योनिश्च हि गीयते**। प्राज्ञ इति वर्तते। हि यस्माद्विष्णुर्योनिरिति 'यद्भूतयोनिमि'ति श्रुतौ गीयते। अतश्च प्रकृतिर्विष्णुरित्यर्थः। प्रकृतित्वं हि स्वदेहादेवोत्पादकत्वम्। श्रुतिरव्यवधानेन प्रकृतित्वमिति स्मृतेः। तच्च जगद्योनित्वात् स्त्रीरूपत्वाच्च विष्णोरस्ति। अतः प्रधानस्त्रीवाचकप्रकृतिपदोपलक्षितसर्वस्त्रीलिङ्गशब्दवाच्यो विष्णुरिति युक्तं तत्तु समन्वयादिति सूत्रमिति सिद्धमिति भावः।

## ७. एतेन सर्वे व्याख्याताधिकरणम्

अथापि स्यात् 'असदेवेदमग्र आसीत्' इत्यादावसदादिशब्दाः श्रूयन्ते न ते विष्णुवाचकाः। निषेधमुखवेद्यतुच्छाभाववाचित्वात्। विष्णोस्तु भावस्वरूपत्वात्। अतः समन्वयसूत्रमयुक्तमिति प्राप्ते सिद्धान्तयति— **एतेन सर्वे व्याख्याता व्याख्याताः**। एते तदधीनत्वादित्याद्युक्तिसमुदायेन सर्वे असच्छून्यतुच्छाभावादिशब्दा विष्णुविषया एवेति प्रतिपादिता इत्यर्थः। शमूनं कुरुते विष्णुरित्यादिना योगो द्रष्टव्यः। असदादय इति वक्तव्ये सर्वग्रहणम् अतः परं प्रकृतिप्रत्यययाद्यौगिकस्यापि विष्णौ परमविद्वत्प्रतीतस्य च चण्डालकाकमर्कटमलमूत्रादिकस्यापि निरर्थकत्वेन प्रतीतिसमुद्घोषादेरपि कस्यापि शब्दस्य विष्णुपरत्वे सन्देहो भावित एवेति ज्ञापनार्थं विशेषदर्शनस्यावश्यमुत्पन्नत्वात्। अत एव क्तप्रत्ययः। न च विशेषयुक्तिभिः सन्देहः सर्वयुक्तीनामेतावतैव निरस्तत्वात्। अत एवैतेनेति। न च तत्रैव विप्रतिपत्तिः स्वरूपशून्यस्य निर्धर्म्यत्वाभावेन तदधीनत्वादिति वाच्यम्। अध्यायार्थस्य सर्वस्यापि विशेषप्रमाणैः निर्णीतत्वात्। तुच्छाभावयोरेव निषेधमुखवेद्यत्वं नान्यत्रेति नियमस्य स्वतन्त्रेश्वराधीनत्वात् कारणान्तराभावादित्यस्य प्रागेव सूचितत्वात्, अत एव द्विरुक्तिः 'अवधारणार्थं सर्वस्याप्युक्तस्याध्यायमूलतः। द्विरुक्तिं कुर्वते प्राज्ञा अध्यायान्ते विनिर्णये' इति स्मृतेः। अतः उपक्रमादिभिः शास्त्रे विचार्यमाणे विष्णवाख्यब्रह्मण एव अशेषस्वरवर्णसंहितापदवाक्यात्मकशास्त्रयोनित्वेन तस्य जगज्जन्मादिकर्तृत्वात् तस्य गुणपूर्णत्वं जिज्ञास्यत्वं च सिद्धमिति ॥

*इति श्रीविजयीन्द्रभिक्षुणा कृते भाष्यतत्त्वप्रकाशिकावाक्योद्धाररूपे मुकुरनाम्नि ग्रन्थे प्रथमाध्यायस्य चतुर्थः पादः ॥*

*इति प्रथमाध्यायः ॥*

★ ★ ★

॥ श्रीः ॥

॥ श्रीवेदव्यासाय नमः ॥

# अथ द्वितीयाध्यायः

## अथ द्वितीयाध्यायस्य प्रथमः पादः

### १. स्मृत्यधिकरणम्

प्रथमाध्याये विष्णुर्जगज्जन्मादिकारणमित्युक्तम् । तस्य प्रेक्षावदुपादित्साप्रतिबन्धकेषु युक्तिसमयश्रुतिसहितश्रुतिविरोधेषु युक्तिविरोधाभावं प्रथमपादे प्रतिपादयिष्यन् आद्याधिकरणे स्मृतिरूपयुक्तिविरोधाभावं समर्थयितुमादौ तमाक्षिप्य समादधति— **स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्** । अत्र जन्माद्यस्य यत इति सूत्रार्थो ब्रह्मण एव जगज्जन्मादिकारणत्वं, तद्वर्तते शास्त्रयोनीत्यतः शास्त्रस्येति वर्तते । सिद्धान्ते स्मृतीनां पूर्वपक्षस्मृत्यन्यत्वे पूर्वपक्षस्मृतीनामेतदन्यत्वमर्थात्सिद्धम् । प्रथमप्रसङ्गपदमापादकम् । द्वितीयं प्रकृष्टवन्नेति स्मृतीनामिति चावर्तते । ततश्चान्यासां रुद्रादेरेव जगज्जन्मादिकारणत्वप्रतिपादकानां पाशुपतसाङ्ख्ययोगस्मृतीनां रुद्रकपिलकमलासनादिभिः श्रुतिनिरपेक्षैर्जगत्प्रसिद्धाप्तैः प्रणीतत्वादर्थान्तरेऽवकाशाभावेन तद्विरुद्धे विष्णोरेव जगज्जन्मादिकारणत्वे कृते सति तत्प्रतिपादयतो 'यतो वा इमानी'ति शास्त्रस्याप्रामाण्याख्यो दोषः स्यात् । न चासौ युक्तः । अतोऽर्थान्तरं शास्त्रस्य वाच्यमिति च । तथाच न विष्णुर्जिज्ञास्य इति चेन्न, पूर्वस्मृतिभ्योऽन्यासां पाञ्चरात्रस्मृतीनां संवादिवाक्येन नितरामाप्तैर्विष्णवादिभिः प्रणीतत्वेनार्थान्तरेऽवकाशाभावेन शास्त्रविरुद्धार्थप्रतिपादकान्यस्मृतीनामेवाप्रामाण्यस्वरूपदोषस्य संलुग्नत्वादित्यर्थः । संवादिपाञ्चरात्रादिस्मृतिमात्रविरोधित्वेन विसंवाद्यन्यस्मृतीनां यदबाधिताविषयत्वं तदानुकूल्यवद्वेदविरोधित्वेन सुतरामिति ज्ञापनाय प्रेत्युपसर्ग इति भावः ।

ननु अन्यस्मृतीनामन्यस्मृतिविरोधमात्रेण न अप्रामाण्यं, रुद्राद्याप्तोक्तत्वादित्यत आह— **इतरेषां चानुपलब्धेः** । अन्यस्मृतीनां दोषप्रसङ्ग इति वर्तते । चेति उपलब्धे अनुपलब्धेरित्यावर्तते । न वर्तते उपलब्धिः साक्षात्कारो यस्य पदार्थस्य सोऽनुपलब्धिरदृष्टोऽतीन्द्रिय इति यावत् । तस्मादितरेषां प्रत्यक्षयोग्यानां फलानां मध्ये केषाञ्चिदुपलब्धेः केषाञ्चिदुपलब्ध्यभावादन्यस्मृतीनां अप्रामाण्यदार्ढ्यमित्यर्थः । अनुपलब्धेरावृत्त्यङ्गीकारे अतीन्द्रियस्य जन्मादिकर्तृत्वस्य प्रसक्तत्वाददृष्टत्वादिति शेषः ।

फलानुपलब्ध्या प्रामाण्याभावे साध्यमाने यदि परः फलोपलब्ध्या प्रामाण्यं साधयेत् तथापि सत्प्रतिपक्षत्वात् प्रामाण्यानिर्णय एव । विशेषे प्रमाणाभावादिति भावः ।

ननु योगस्मृत्युक्तप्रत्यक्षफलस्य सर्वस्यापि दर्शनान्न तत्राप्रामाण्यमित्यत आह— **एतेन योगः प्रत्युक्तः** । एतेन इतरेषां चानुपलब्धेरित्यनेन योगग्रन्थोऽपि खण्डित इत्यर्थः । पाशुपतादावुक्तफलानुपलब्धेरेव योगे तूक्तफलदर्शनेऽपि तत्तदुक्ततत्तत्काले तदनुपलब्धिरिति विशेषज्ञापनाय प्रत्येकसूत्रम् । अतो विरोधाभावाद्विष्णुः जिज्ञास्य इति सिद्धमिति भावः ।

## २. नविलक्षणाधिकरणम्

अथापि स्यात्, वेदोक्तप्रत्यक्षयोग्यदृष्ट्यादेः क्वचिदनुपलब्धेः पाञ्चरात्राद्युक्तपुत्रादेरनुपलब्धेश्च 'कारीर्या यजेत वृष्टिकाम' इति श्रुतेः 'स चिरायुः सुखी पुत्री विजयी भवेदित्यादिस्मृतेश्चे'ति युक्तिविरोधात्तावन्न प्रामाण्यम् । पाशुपतादिस्मृतिवत्तद्दृष्टान्तेन जन्मादिप्रतिपादकश्रुत्यादेरपि अप्रामाण्यमिति न 'शास्त्रयोनित्वादि'ति युक्तमिति प्राप्ते सिद्धान्तयति— **न विलक्षणत्वादस्य तथात्वं च शब्दात्** । प्रमितमिति वर्तते । तथात्वं चेत्यावर्तते चस्त्वर्थेऽवधारणे च । अस्य वेदरूपशास्त्रस्य तु तथात्वं क्वचित् फलदर्शनेनान्यस्मृतिवदप्रामाण्यं न, अन्यस्मृतिभ्यो विरुद्धं लक्षणं नित्यत्वं स्वतःप्रामाण्यं यस्य स तथात्वात् । तथात्वं वेदस्य स्वतःप्रामाण्यं नित्यत्वं च 'न चक्षुर्न श्रोत्रं न तर्को न स्मृतिर्वेदा ह्येवैनं वेदयन्तीत्यत्रावधारणेन संवादाद्यनपेक्षत्वेन वेदस्य वेदकत्वोक्त्या 'वाचा विरूपनित्यया' इति च शब्दादेव प्रमितमित्यर्थः । उपलक्षणमेतत् । स्मृतेरपि वेदानुकूलत्वं स्वतःप्रामाण्यरूपवैलक्षण्यात् न तथात्वमित्यपि द्रष्टव्यम् । यद्वा अस्य श्रुत्यादेः श्रुतेः स्मृतेरिति यावत् । वैलक्षण्यात् श्रुतेः नित्यत्वात् स्मृतेस्तदनुसारित्वादुभयोः स्वतःप्रामाण्याच्च, वेदे स्वतःप्रामाण्यं नित्यत्वं च, न चक्षुरिति, वाचेति चशब्दादेव स्मृतौ वैलक्षण्यं च । 'भारतं पञ्चरात्रं च वेदा इत्येव शब्दिताः । स्वतःप्रामाण्यमेतेषां' इत्यत्र सूत्रभाष्योक्तप्रमाणादित्यर्थः । पाशुपतादिस्मृतीनां स्वतःप्रामाण्यं न वक्तुं शक्यम्, निर्दोषत्वादिप्रामाण्यसाधकाभावादिसंवादित्वेन अप्रामाण्यनिश्चयादिति भावः ।

ननु स्वोक्तफलादर्शनरूपदोषवत्त्वाद्धेतोरसिद्धेर्न श्रुतिस्मृत्योः प्रामाण्यमित्यत आह— **दृश्यते तु** । इतरेषामित्यत्र प्रसक्तं फलं अनुपलब्धेरिति प्रसक्ता अनुष्ठातारोऽत्र सम्बन्ध्यन्ते । तु कर्तृविशेषे । ततश्च तत्फलयोग्यैः कर्मवैगुण्यप्रतिबन्धादिशून्यैरनुष्ठातृभिः फलं दृश्यत इत्यर्थः । पाशुपतादावुक्ताधिकारवद्भिरनुष्ठानेऽपि फलादर्शनाद्युक्तं प्रामाण्यं वेदोक्ताधिकारस्य दुर्लभत्वात् । तदुक्तमुक्तफलादर्शनान्नाप्रामाण्यहेतुः । अतो युक्तं शास्त्रयोनित्वादिति भावः ।

## ३. अभिमान्यधिकरणम्

अथापि स्यात् 'मृदब्रवीत्, आपोऽब्रुवन्, तत्तेज ऐक्षत, ओषधयः संवदन्ते' इत्यादिवेदैरादिसृष्टौ वचनादि प्रतीयते । मृदादिकं न वचनादिमज्जडत्वादित्यादि युक्तिविरुद्धत्वात् बाधितम् । अतो मृदब्रवीदित्याद्यप्रमाणम् । तद्दृष्टान्तेन जन्माद्यावेदकवेदोऽप्यप्रमाणमिति जन्माद्यस्य यत इति अयुक्तमिति प्राप्ते सिद्धान्तयति— **अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्** । शब्द इति वर्तते । तुरवधारणे । एकवचनं देवतासमुदायविवक्षया । अभिमानिनो व्यपदेशोऽभिमानिव्यपदेश इति विग्रहात् दृश्यत इत्युत्तरसूत्रे एकवचनात् तत्र देवतायाः तत्सामर्थ्यं च कर्मत्वात् प्रमाणे तथोक्तत्वात् । ल्यब्लोपे पञ्चमी । देहवत्त्वं चेह न चोपलक्ष्यते । ततश्च सामर्थ्यविशेषं स्वाभिमन्यमानेष्वनुगतिं विग्रहवत्त्वं चापेक्ष्य मृदब्रवीदित्यादिवेदे मृदादिनामकमृदाद्यभिमानिदेवतानां व्यपदेश एव न तु मृदादिजडव्यपदेश इत्यर्थः । देहवत्वेन वचनादिव्यवहारः । अनुगत्या परिच्छिन्नानामप्यभिमन्यमाने सर्वत्र व्यवहारः । सामर्थ्यविशेषेण देहवतीनां अनुगतिमतीनामपि देवतानामत्रादृश्यत्वं वस्त्वन्तरमधिष्ठाय वचनादिकं चेति सर्वं क्रमेणोपपादितमत्र पृथिव्याद्यभिमानिन्यो इत्यादिस्मृतिः प्रमाणमिति भावः ।

उक्तार्थे विप्रतिपन्नं प्रत्याह— **दृश्यते च इति** । विग्रहवदनुगतदेवतातत्सामर्थ्यविशेषश्च वर्तते । महद्भिरिति शेषः । न केवलं वेदेनोक्तदेवता सिद्ध्यति । किन्तु महद्भिर्दृश्यते चेत्यर्थः ।

ननु मृदब्रवीदित्यादेर्नोपजीव्यविरोधो दृश्यते । जडत्वयुक्तिस्तु श्रुतिविरोधेन दुर्बलत्वात् बाध्यते । अतो मृदादिजडमेवार्थः किं न स्यात् इति शङ्काऽप्यत एवापास्ता मुख्यार्थलाभाच्च । अतः सर्वस्यापि वेदस्य प्रमाणत्वाद्युक्तं जन्मादिसूत्रमिति भावः ।

## ४. असदधिकरणम्

अथापि स्यात् प्रलये कान्यपि कारणानि न सन्ति वस्तुत्वात् कार्यवदिति युक्त्या कारणानामसत्वं प्रमितम् । अत आदिसृष्टिरसतः सकाशादेव भवति । न चेदं निर्मूलम्, असदेवेदमग्र आसीत्, असतः

सदजायत, इति श्रुतिमूलत्वात् । ब्रह्मान्यस्याप्यमुख्यार्थत्वात् । तथा चैतद्विरुद्धं सतो ब्रह्मणो जगत्कारणत्वमिति न युक्तं जन्माद्यस्येति भावेनाक्षिप्य सिद्धान्तयति— **असदिति चेन्न प्रतिषेधमात्रत्वात्** । जन्माद्यस्य यत इति वर्तते । अस्य यतो जन्मादिवदसदिति चेन्न, असत्कारणं न अभावधर्मात्मतामन्तरेण स्वरूपत एव, प्रतिषेधबुद्धिविषयत्वाच्छशविषाणवदित्यर्थः । घटोऽस्तीति बुद्धिविषये व्यभिचारवारणाय प्रतिषेध इति । अभावव्यावृत्तये स्वरूपत इति । न ह्यभावस्वरूपमेव निषिध्यते । गृहे घटो न गोष्ठ इति बुद्धिविषयघटपरिहारायैव वेति गोष्ठे घटनिषेधः । संसृष्टतया घटपटो नेति बुद्धिविषयघटव्यावर्तनाय अभावात्मतामन्तरेणेति । अभावस्य भावात्मता न सम्भवति । विरोधादतः स दोषस्तदवस्थ एवेति तन्निवृत्तये धर्मेति । भावस्यापि अन्योन्याभावरूपधर्मात्मकत्वात् शशविषाणादेश्च तादृग्रूपत्वेन तन्मूलासतः कारणत्वाभावस्य प्रमितत्वात् अनुमानं तन्मूलकृतिश्च बाधितविषयेति भावः ।

ननु 'सदेव सोम्ये'ति श्रुतिबलाद्यथा कस्यचिदेव सतः कारणत्वं सूपेयते तथैव 'असदेवे'ति श्रुतिबलात्कस्यचिदसतः कारणत्वं किं न स्यादित्यत आह— **अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्** । असच्चेदिति वर्तते । तद्वत्प्रसङ्गात् तद्वच्च प्रसङ्गात् असदिति वर्तते । ततश्च असज्जन्मादिकारणं चेदपीतौ प्रलये असन्मात्राधारत्वात् असन्मात्रोऽशेषः स्यादिति यावतोऽसदिति मतमसमञ्जसमित्यर्थः । कार्यनाशे कारणमात्राविशेषानियमादिति भावः ।

परस्येष्टापत्तिं पराकर्तुं विपर्यये पर्यवसानं कुर्वन् तेनार्थात्सिद्धमर्थं स्पष्टानुमानेनापि साधयति— **न तु दृष्टान्तभावात्** । तुश्चावधारणार्थे । नासावधीतावसन्मात्राविशेषः, किं तु स्वशेषोऽपि, तत्र दृष्टान्तसद्भावादित्यर्थः । विप्रतिपन्ना उत्पत्तिः सतो भवितुमर्हति, उत्पत्तित्वात्, घटोत्पत्तिवत् । विमतो विनाशः सशेषः विनाशत्वात् घटविनाशवदिति प्रमाणसिद्धवत्पदार्थपरित्यागप्रसङ्गान्नेष्टापत्तिः परस्येति भावः । अप्रामाणिकस्वीकारापत्त्या च परस्य नेष्टापत्तिरित्याह— **स्वपक्षदोषाच्च** । प्राक्प्रसक्तमनुमानं दोषोक्तः दृष्टान्ताभावव्यतिरेको न सम्बध्यते । तत्त्विति वर्तते । तथा चापीतौ सर्वासत्त्वासाधकानुमानदृष्टान्ताभावात् व्याप्त्यभावाख्यदोषाच्च नेष्टापत्तिरित्यर्थः । प्रत्यक्षागमौ कुतस्त एव अनुपलम्भादिति भावः ।

उक्तमाक्षिप्य समादधति— **तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः** । प्रसक्तात्साध्यद्वयादन्यथा विमता उत्पत्तिः सतो भवितुं नार्हतीति, विमतो विनाशः सविशेषो नेत्यनुमातुं शक्यम् । तस्यानुमानस्यानेनैवमेव साध्यं नान्यथेति नियमाभावात् । अतोऽनुमानद्वयं सत्प्रतिपक्षमिति

न स्तः कारणत्वमकारणत्वं वा सत इति चेत् एवं सति प्रामाणिकस्याप्यर्थस्य तर्कान्तरेणावश्यं बाधे सति प्रमाणसिद्धस्य निर्मोक्षस्य चार्वाकवद्बाधेन तव मते मोक्षाभावः स्यादित्यर्थः । न चानिर्मोक्षो युज्यते अशास्त्रीयत्वप्रसङ्गात् । शास्त्रस्य मोक्षैकप्रयोजनत्वात् । अतो यावत्प्रमाणसिद्धं तावदेवाङ्गीकर्तव्यम्, नातोऽन्यच्चिन्त्यमिति भावः ।

ननु विप्रतिपन्नं निष्कारणं कार्यत्वात् कूलपतनवत्, अचेतनकारणं वा दध्यादिवत्, जीवकारणं वा घटयतीति युक्तयोऽकस्मादिदमाविरासीदिति प्रधानादिदमुत्पन्नमिति 'जीवाद्भवन्ति भूतानि' इति श्रुतिमूलका । तद्विरुद्धं ब्रह्मणो जगत्कारणत्वमित्यत आह— **एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः** । विरुद्धार्थे नञ् । एतेन दृष्टान्तभावादिति स्वपक्षदोषाच्चेति सूत्रद्वयेन असत्सिद्धान्ताच्छिष्टा अवशिष्टा अकारणत्वादिसाधकाः ब्रह्मकारणत्वविरुद्धसिद्धान्ता अपि निराकृता इत्यर्थः । विप्रतिपन्नं सकारणं कार्यत्वात् घटवत्, चेतनकारणं वा घटवत्, जीवभिन्नकारणं वा गिरिदरीगाङ्कुरवदिति स्वपक्षे प्रयोगः । कूलपतनदध्यादेश्चेश्वरकारणत्वाज्जीवस्य दुःख इव घटेऽप्यस्वातन्त्र्यात् घटस्यापीश्वरकारणत्वात् । परानुमानेषु व्याप्यत्वासिद्धिः । प्रत्युक्ता इति वक्तव्ये व्याख्याता इति वचनं श्रुतिषु किं प्रधानजीवपदान्यसत्पदं च विष्णोरेव वाचकानि । अविरोधेऽन्यवाचकत्वम्, विरोधे तु ब्रह्ममात्रवाचकत्वमिति नियमस्य प्रागेव उक्तत्वादिति ज्ञापनार्थम् । अन्यथा सृष्ट्यादिकारणत्वेनाकाशादीनामपि प्रतीतत्वात् पुनस्तन्निराकरणं कार्यं स्यात् । अत एव शिष्टा इत्युक्तम् । विशेषयुक्त्या समानन्यायेन च विरुद्धपक्षा दूष्या इति ज्ञापयितुमतिदेशः । अतो युक्तिविरोधाभावेन युक्तं ब्रह्मणो जगत्कारणत्वमिति भावः ।

## ५. भोक्त्रधिकरणम्

अथापि स्यात् जगज्जन्मादिकर्तृत्वं विष्णोः पूर्वमभिहितं, तच्च तस्य जीवाभिन्नत्वादयुक्तम् । न च विष्णोर्जीवाभिन्नत्वमसिद्धम् । 'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति' इत्यादौ मुक्तजीवस्य परमात्मत्वप्राप्तिः श्रूयते, किं तत इति चेन्न, तेनैव हेतुना मुक्तेश्वरयोरभेदसिद्धेः । यो यथा श्रूयते स तथेति व्याप्तेः । न हि जीवाभिन्नस्य जगत्कर्तृत्वमुपपद्यते । जीवाभेदो हि उभयगतविरुद्धधर्मपरित्यागेन जीवस्येश्वरसालक्षण्यग्रहणेन ईश्वरस्य जीवसालक्षण्यग्रहणेन वा च सम्भवति । सर्वथापि जगत्कर्तृत्वादिकमीश्वरैकनिष्ठं न भवति ।

ननु मुक्तजीवाभिन्नस्य कथमपि जगत्कर्तृत्वादिकं निर्वोढुं शक्यमिति चेन्न, मुक्तावैक्ये संसारेऽप्यैक्यस्यावश्यकत्वात् । न हि भिन्नमभिन्नतां यातीति युक्तम् । अतो जीवाभिन्नत्वादीश्वरस्यैव परमार्थतो जगत्कर्तृत्वाद्यनुपपन्नमिति न लक्षणं तत्र युक्तमिति । अयं पूर्वपक्षो **भोक्त्रापत्तेरविभागश्चे-**

**त्स्याल्लोकवत्** इति सूत्र एवोक्तः तथा हि भोक्तुर्मुक्तजीवस्यापत्तिपरब्रह्मत्वप्राप्तिः तस्याः सकाशादविभागः भेदाभाव इति यावत् । सोऽस्तीति चेदिति तत्रैव नञध्याहारेण सिद्धान्तेऽप्युक्तः । तथा च न स्याल्लोकवदिति सिद्धान्तस्तत्रावयवः पर्यवसितः । तस्यायमर्थः— जीवेश्वरयोरभेदाभावादिनेश्वरस्य जगत्कर्तृत्वादिकं विरुद्धम्, मुक्तजीवस्यैक्येनोक्तत्वात् । परमात्माभिन्नत्वेन तत्सिद्धिरिति चेन्न, एकीभूतत्वेनोक्तजलेऽन्तर्भेददर्शनेन व्यभिचारादैक्योक्तेऽस्तु स्थानैक्यालम्बनत्वेन लोकसिद्धजलैकीभावोक्तिवदुपचरितत्वात् श्रुतौ मुक्तेश्वरयोरेकीभावोक्तिः लोकवेदवत्स्यादिति को विरोध इति । न च श्रुतेरुपचरितार्थत्वकल्पनमयुक्तमिति वाच्यम्; 'यथोदकं शुद्धे शुद्धं आसिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम' इति श्रुत्यैवोपचरितार्थत्वस्योक्तप्रायत्वात् । एतेन बाधकं विना उपचारकल्पनमयुक्तमित्येतदपि परास्तम् । 'निरञ्जनः परमं साम्यमुपैति, परात्परं पुरुषमुपैति दिव्यम्' इत्यादि सन्निहितवाक्यविरोधाच्च । एतेनैव जलयोरप्यैक्यान्न व्यभिचारादिकमिति निरस्तम् । 'उदकमुदके सिक्तं मिश्रमेव यथा भवेत् । न चैतदेव भवति यतो वृद्धिः प्रदृश्यते । एवमेव हि जीवोऽपि तादात्म्यं परमात्मना । प्राप्तोऽपि नासौ भवति, स्वातन्त्र्यादिविशेषणादि'ति सयुक्तिकं स्मृत्या तादृगेव भवतीति सावधारणश्रुत्या च जलयोर्भेदस्यैव सिद्धत्वात् । अन्यथा 'हरौ नियतचित्तत्वात् गृहवत्तत्प्रवेशनात् । मोक्षं तादात्म्यमित्याहुः न तद्रूपत्वतः क्वचिदि'त्यादिवचनेन मुक्तेश्वरयोर्भेदानुक्तितादात्म्योक्तिनिमित्तयोरनुक्तिप्रसङ्गात् । एतेनाल्पमुक्तानामेतदस्त्विति निरस्तम् । 'ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते । तद्यत्स्वभावः कैवल्यं स भवान् केवलो हरे' इति स्मृतिविरोधात् । एतेनैव वर्तमाननिषेधात् उत्तरत्र तदभावे मानाभावात् स्यादिति निरस्तम् । 'न ते विष्णो जायमानो न जातो देवमहिम्नः परमन्तमाप । न ते महित्वमन्वश्नुवन्ती'त्यादि श्रुत्या कालत्रयेऽपि तदभावावेदनात् । अतो विष्णोर्जयमानो न जगत्कर्तृत्वादौ युक्तिविरोधाभावादुपपन्नं लक्षणसूत्रमिति ।

## ६. तदनन्यत्वाधिकरणम् (आरम्भणाधिकरणम्)

ननु विष्णुर्जगत्सृष्ट्यादिकर्तेत्युक्तम् । तस्य स्वतन्त्रसाधनानपेक्षत्व एव तत्त्वं निर्वहति, स्वतन्त्रसाधनानपेक्षजगत्सृष्ट्यादिकर्तृत्वं च विप्रतिपन्ना सृष्टिः कर्तृव्यतिरिक्तस्वतन्त्रसाधनापेक्षा, सृष्टित्वात्, घटादिसृष्टिवदिति युक्तिविरुद्धम् । घटादिसृष्टौ मृदादीनि खलु स्वतन्त्रसाधनानि, तानि विना तत्सृष्ट्यनुपपत्तेः । अतो विष्णुः स्वतन्त्रसाधनसापेक्ष एव सन्, जगत्सृष्ट्यादि कर्तेति वाच्यम् । एवं च सति तस्य तादृशसृष्टिकर्तृत्वे न लोकोत्कृष्टगुणपूर्णत्वं सिद्ध्यतीत्यत आह— **तदनन्यत्वमारम्भणशब्दादिभ्यः** । अस्य सूत्रस्यायमर्थः— 'तस्य स्वतन्त्रकारणस्यानन्यत्वं भेदराहित्यं एकत्वं,

स्वतन्त्रसाधनत्वस्य विष्णवनन्यत्वं तद्व्यतिरेकेणास्य तत्र साधनं नास्ति । ब्रह्मैव जगतः स्वतन्त्रकारणं न कालादिरिति । यद्यपि घटादिसृष्टिः स्वतन्त्रबहुसाधनसापेक्षा दृष्टा, तथापि तद्दृष्टान्तेन न ब्रह्मणो जगत्सृष्टिरपि तथा कल्प्या । स्वतन्त्रसाधनान्तराभावेन स्वस्यैव च स्वतन्त्रसाधनत्वेन साधनान्तरनैर-पेक्ष्येण विष्णोः स्वरूपसामर्थ्यदिव जगत्सृष्ट्यादिकर्तृत्वोपपत्तेः ।

ननु स्वतन्त्रसाधनानन्यत्वमेवास्य कुतः ? कुतश्चेतरेषां तत्त्वाभाव इति चेत् यतः 'किंस्वि-दासीदधिष्ठानमारम्भणं कतमत्स्वित्कथासीदि'ति श्रुताधिष्ठानसाधनाद्याक्षेपः क्रियते । तथाच तदनन्य-त्वमिति सौत्रप्रतिज्ञायां विष्णुरेव जगत्सृष्ट्यादौ स्वतन्त्रसाधनम्, अन्यत्तु कालादिकमस्वतन्त्रमेवे-त्यर्थपरतया पर्यवसितायां तत्र हेत्वाकाङ्क्षायां विष्णवतिरिक्तस्वतन्त्रसाधनाक्षेपार्थकारम्भणशब्दात् आदिशब्दोपात्तादपरतन्त्रत्वात् स्वतन्त्रत्वात् स्वसाधनस्वसत्ताप्रदत्वादिति सौत्रेणारम्भणशब्दादिभ्य इति खण्डेन हेतुचतुष्टयमुक्तं भवति । एवं च विष्णुरेव स्वतन्त्रसाधनानन्यः न तु कालादिः तदाक्षेपार्थ-कारम्भणशब्दादपरतन्त्रत्वात् स्वतन्त्रत्वात् इतरसाधनसत्ताप्रदत्वाच्च । यन्नैवं तन्नैवं यथा सम्प्रतिपन्न इति प्रयोगोऽत्र फलतीति ।

ननु किंस्विदासीदित्यनेन कृतेऽप्याक्षेपे कथमिष्टसिद्धिरिति चेन्न आक्षेपस्य विपर्यये पर्यवसाना-वश्यम्भावात् । ननु विप्रतिपन्ना सृष्टिः कर्तृव्यतिरिक्तस्वतन्त्रसाधनसापेक्षा सृष्टित्वादित्युक्तानुमानविरोधे सति नानया श्रुत्या तदाक्षेपः सम्भवतीति चेन्न । नित्यनिर्दोषश्रुतिविरोधेनानुमानस्याप्रमाणत्वात् । एतेन सृष्टेः स्वतन्त्रसाधनसापेक्षत्वसाधने तादृशेश्वरमादाय सिद्धसाधनेऽपि बहुस्वतन्त्रसाधनसापेक्षा सृष्टि-त्वात्, घटादिसृष्टिवदिति साधने तदनवकाश इति निरस्तम् । उदाहृतश्रुतिविरोधेनास्याप्यनुमानस्य बाधितविषयत्वात् । घटादिसृष्टौ व्यभिचाराच्च एतेनैव किंशब्दस्य प्रश्नाक्षेपयोः समानत्वादत्र श्रुतौ किंशब्दसमभिव्याहृतारम्भणशब्दः प्रश्नार्थक एव, न त्वाक्षेपार्थकः । तथाच नोक्तमनुमानं श्रुतिविरुद्धम् अतः प्रमाणमिति निरस्तम् । तथासति श्रुतौ परिहारायाधिष्ठानाद्युक्तिप्रसङ्गात् । ततश्चायं किं शब्द आक्षेपपर एवेति विश्वकर्मा हरिः यतो येनाधिष्ठानादिना भूमिं द्यां चाजनयत् जनयिता विशेषेण बभूव । येन महिम्ना विश्वतश्चक्षुरावृणोत् । तदधिष्ठानं किमासीत् । आरभ्यतेऽनेनेत्यारम्भणं, साधनं वा कतमदासीत् कथंरूपं वा आसीत् न किञ्चित्कथमपीत्यर्थः । युक्त्यन्तरेण स्वतन्त्रं साधनान्तरं प्रतिक्षिपति— **भावे चोपलब्धेरिति** । स्वतःसाधनान्तरसद्भावे प्रमाणैरुपलम्भप्रसङ्गादित्येतत्सूत्रार्थः । तदेतदभिप्रेत्योक्तं टीकायां **यदि भगवान् सृष्टौ तदतिरिक्तं साधनमस्ति तर्हि वेदादिप्रमाणैरुप-लभ्येत । न चोपलभ्यते अतो नास्तीत्यर्थ** इति ।

ननु प्रमाणानुपलब्धमपि किं न स्यादिति चेत् न 'अनुक्तं पञ्चभिर्वेदैः न वस्त्वस्ति कुतश्चन । अतो वेदत्वमेतेषां यतस्ते सर्ववेदकाः' इति स्कान्दवचनेन प्रमाणानुक्तस्य सर्वथा सत्त्वाभावावेदनात् । न चैवं भगवतः कतिपयगुणानामेव वेदादिप्रमाणैरुक्तत्वात् तदतिरिक्तानामसत्त्वप्रसङ्गः । विशेषतस्तेषामनुक्तत्वेऽपि सामान्यतस्तैरुक्तत्वात् ।

ननु 'अद्भ्यः सम्भूतः पृथिव्यै रसाच्च' इत्यादिश्रुतौ भगवदितरस्य स्वतन्त्रसाधनस्य प्रतीतेः न तदनुपलब्धिरित्याशङ्क्य नात्र भगवदितरस्वतन्त्रसाधनं प्रतीयते, किं तु तदधीनमेव, तदधीनस्य च साधनस्य सत्त्वेऽप्यविरोध इत्यभिप्रेत्याह— **सत्त्वाच्चावरस्य** । अवरस्य तदधीनस्य सत्त्वात् सत्त्वाभ्युपगमादित्येतत्सूत्रार्थः ।

ननु तत्पुरुषाख्यो हिरण्यगर्भो विश्वकर्मणो हरेः सकाशात् अबाद्युपलक्षितभूतैः रसोपलक्षिततन्मात्रैरुत्पन्नः सर्वस्मात् अधिकत्वेन समवर्तत । तस्य तत्पुरुषस्याग्रत एव जातं विश्वं ब्रह्माण्डाख्यं रूपं त्वष्टा भगवान् धारयन् वर्तत इत्यर्थप्रतिपादिकायां 'अद्भ्यः सम्भूत' इति श्रुतौ साधनमात्रं प्रतीयते न तु तदधीनमिति तच्च लोकानुसारात् स्वतन्त्रमेव किं न स्यात् इति चेन्न, 'काल आसीत् पुरुष आसीत् परम आसीत् तन्नदासीत् तदावृतमासीत् तदधीनमासीत् । अथ ह्येक एव परम आसीत् तस्यैतदासीत् न ह्येतदासीत्' इति श्रुतौ कालादि भगवदितरसाधनमात्रस्य भगवदधीनतायाः प्रतीयमानत्वात् । तथा हि यस्मात् तदा यदासीत् तद्भगवदधीनमासीत् तस्मादेक एव परम आसीदित्युच्यते । कीदृशोऽसौ यस्य सकाशादेतदासीत् कुतस्तर्ह्येतत्पूर्वमासीदित्येतच्छ्रुत्यर्थस्तावत्प्रतीयते । तथा चैतच्छ्रुतौ साधनाद्याक्षेपतत्सद्भावोक्त्यन्यथानुपपत्त्या तदधीनसाधनादिकमवश्यमभ्युपेयमिति उक्तमाक्षिप्य समादधति— **असद्व्यपदेशादिति चेन्न धर्मान्तरेण वाक्यशेषात्** इति । साधनान्तरस्य सत्त्वमभ्युपेत्य तस्येश्वराधीनत्वम् । यदुदितौ तद्युक्तं नासदासीदिति श्रुतौ प्रलये सर्वस्यासत्त्वव्यपदेशात् । साधनान्तरस्यैव भावे परमात्माधीनतावर्णनस्य सर्वथानुपपत्तेः । तदानीं प्रलये पञ्चमहाभूतानि गुणत्रयं यच्च परमं व्योम प्रकृतिर्मृत्युरमृतं दिवारात्र्योश्च प्रभावो नासीत् एतदभावात् किं कुत्र कस्य सुखार्थमवर्तत । न किमपि यच्चेतनप्रकृतिरूपमहस्तदप्यासीत् किं तु निर्वातं ब्रह्मैकमेव स्वसामर्थ्येनाचेष्टत । न तु तस्मादन्यत्परमासेति तच्छ्रुत्यर्थः । प्रतीतेरित्येतत्सूत्रगताक्षेपांशस्यार्थः । न धर्मान्तरेण वाक्यशेषादिति परिहारांशस्य त्वयमर्थः । तथाहि भवेदेतद्यदि अस्यां श्रुतौ साधनानां स्वरूपासत्त्वाभिप्रायेणासत्त्वव्यपदेशो भवेत् । नैतदस्ति साधनानामव्यक्तत्वपारतन्त्र्यधर्मत्वं विकृतरूपविनाशादिधर्मान्तरापेक्षया असत्त्वस्य व्यपदिष्टत्वात् । अव्यक्तादौ तद्व्यपदेशस्य लोके दृष्टत्वात् । न च वाच्यं स्वरूपसत्त्वाभिप्रायेण असत्त्वोक्तिः किं

न स्यादिति, वाक्यशेषे प्रकृत्यादिसत्त्वश्रवणात्। यत्तमोऽपरिमितं सलिलं भूत्वा उपासीत् प्रकृत्याख्यं तेनेदं सर्वं गृहीतमासीदिति तद्वाक्यार्थप्रतीतेः। अन्यथा 'तस्माद्यन्नात्र परः किञ्चनास' इति परशब्द-वैयर्थ्यं स्यात्।

ननु साधनान्तरमभ्युपगम्य तस्येश्वराधीनत्वकथनाद्वरं साधनाभावकथनमेव, साधनशून्यस्य सृष्ट्यादिकर्तृत्वाभ्युपगमे महिमाधिक्यलाभादित्याशङ्क्याह— **युक्तेः शब्दान्तराच्च**। न महिमाधिक्य-लाभाय साधनाभावोऽभ्युपेयः, साधनान्तरेण सृष्टेरपि युक्तत्वात् महिमाविरोधित्वात्। स्वाधीनसाधनैः प्रवृत्तैरैश्वर्यद्योतकत्वस्य साधनानां साधनत्वं यदाऽऽत्माधीनमिष्यते तदा साधनसम्पत्तिरैश्वर्यत्वा-ल्लोकसिद्धत्वाच्च तर्हि उभयथापि महिमोत्कर्षसिद्धौ किं साधनसत्त्वपक्षाग्रहेणेति चेन्न, निरपेक्ष-तया स्रष्टृत्वस्योभयपक्षेऽपि साम्येन महिमोत्कर्षसाम्येऽपि साधनत्वाभ्युपगमेनैकाकिनः सकाशात् सोपस्करस्याधिकोत्कर्षलाभात् 'अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टौ इत्यादौ शब्दतस्तत्प्रतीतेश्च तत्राग्रहात्। तथाच भगवतो महिमाधिक्यलाभाय न साधनाभावोऽभ्युपेयः। तदधीनसाधनान्तरेण जगत्सृष्टेरभ्युपगमेऽपि तादृशसाधनान्तरस्य तन्महिमाविरोधित्वेन युक्तेरप्युक्तत्वात्। 'अद्भ्यः सम्भूत' इत्यादौ तदधीनसाधनस्य शब्दात् प्रागुदाहृतात् 'नासदासीत्' इत्यादेरन्यस्माच्चशब्दात् प्रतीतेरित्येत-त्सूत्रार्थो द्रष्टव्यः।

किञ्च साधनसद्भावस्य युक्तिसिद्धत्वेन न तदभावोऽभ्युपगमार्ह इत्याह— **पटवच्च** इति। विप्रतिपन्ना सृष्टिः कर्तृव्यतिरिक्तसाधनसाध्या, सृष्टित्वात् पटादिसृष्टिवदिति तत्सूत्रार्थः।

विमता सृष्टिः, कर्तृव्यतिरिक्तस्वतन्त्रसाधनसापेक्षा, सृष्टित्वात्, पटसृष्टिवत्। विप्रतिपन्नत्वसाधनं स्वतन्त्रं साधनत्वात्, तुर्यादिवदित्यपि स्यादित्याशङ्क्याह— **यथा प्राणादिः** इति। न तत्साधनं स्वतन्त्रप्रेरणार्थं, भगवता अनुप्रविष्टत्वात्, यथा शरीरेन्द्रियप्राणादयः। प्राणे तिष्ठन्नित्यादेरीश्वरेणानु-प्रविष्टत्वान्न स्वतन्त्रः, अन्यथा अनुप्रवेशवैयर्थ्यात्। साधनानां भगवदनुप्रविष्टत्वमेव कुत इति चेत्, 'प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तमः। क्षोभयामास भगवान् सृष्ट्यर्थं जगतो विभुरिति कूर्मपुराणादि'ति सूत्रार्थः। अत्र 'तदनन्यत्वमारम्भणशब्दादिभ्य इति सूत्रे आरम्भणशब्देन प्रकृतं साधनं स्वतन्त्रम्, 'असद्व्यपदेशान्नेति चेन्न' इति सूत्रे सन्निहितो नञ् चानुवर्तत इत्युक्तसूत्रार्थलाभो द्रष्टव्यः। कूर्मपुराण-वचने क्षोभयामास इत्यस्य उन्मुखीचकारेत्यर्थः। अतो भगवतः स्वातन्त्र्येण सर्वकर्तृत्वे विरोधगन्धा-भावात् युक्तं सर्वोत्कृष्टगुणपूर्णत्वमिति।

## ७. इतरव्यपदेशाधिकरणम्

ननु विष्णोर्जगत्कारणत्वादिकमुक्तम्, तच्च नोपपद्यते, कुतः ? 'जीवाद्भवन्ति भूतानि' इत्यादिश्रुत्या जीवस्यैव स्वातन्त्र्येण कर्तृत्वावेदनात् । ततश्च जगज्जन्मादिकारणत्वं लक्षणमसम्भवीति प्राप्ते सिद्धान्तयति— **इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः** इति । यदि जीवकर्तृत्वस्य श्रुतौ व्यपदेशादिकारणत्वात् जीवः स्वतन्त्रकर्तेत्युच्यते तर्हि तस्य हिताकरणमहितकरणं च न स्यात् । न हि स्वतन्त्रस्य ते सम्भवतः । विद्येते च ते जीवे । अतोऽसौ न स्वतन्त्रकर्ता । अपि तु परमेश्वर एवेति । ततश्च परमेश्वरादितरस्य जीवस्य 'जीवाद्भवन्ती'त्यादिश्रुतौ कर्तृत्वेन व्यपदेशादितरो जीवो यदि स्वतन्त्रकर्तेत्युच्यते तर्हि तस्य हिताकरणादिदोषो न प्रसज्येत । अस्ति च तस्मिंस्तत्प्रसक्तिः । तस्मान्न जीवः स्वतन्त्रकर्तेति सूत्रार्थः ।

ननु यत्किञ्चिद्दोषवत्वमात्रेण जीवस्य कर्तृतानिराकरणे ब्रह्मणोऽपि कर्तृत्वं किं न निराक्रियते । तस्यापि श्रमादिदोषवत्त्वनियमात् । एवञ्च पक्षयोः साम्ये जीवकर्तृत्वमेव आश्रयणीयं इत्याशङ्कां परिहरति— **अधिकं तु भेदनिर्देशात्** इति । तुशब्दः साम्यव्यावर्तकः । भवेत् प्रतिबन्द्या जीवस्य कर्तृत्वसमर्थनम्, यदि ब्रह्मणि श्रमचिन्तासाधनमरणदुःखादिदोषा भवेयुः । न च ते तत्र सन्ति ।...

*(अत्र एकं पत्रं नोपलभ्यते । अतः तत्त्वप्रकाशिकावाक्यानि योजितानि । सं०)*

(श्रुतिषु तस्य सर्वेभ्योऽखिलश्रोतृत्वान्तर्यामित्वाशनायाद्यतीततत्त्वाद्यतिशयस्य निर्देशात् । न ह्येवंविधस्य ते दोषाः शङ्कितुमपि शक्यन्त इति भावः ।

अथापि जीवोऽन्यनिरपेक्षतया कर्ता चेतनत्वादीश्वरवदिति किं न स्यात् । न चेश्वराभ्युपगमानभ्युपगमाभ्यां विरोधः । परसिद्धेनैव न्यायेन परस्य बोधनादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे— **अश्मादिवच्च** इति । न चेतनत्वहेतुना जीवस्यान्यानपेक्षकर्तृत्वं साध्यम् । अस्वातन्त्र्येण हेतुना अश्मादिवत् तदभावस्यापि साधयितुं शक्यत्वात् । स्वतन्त्रो ह्यन्यनिरपेक्षः कार्यं करोति चेतनत्वं त्वप्रयोजकमिति भावः । चोऽपिशब्दार्थः । एतेन कर्मसापेक्षतया हिताक्रियादिदोषपरिहारोऽपि परास्तः । तस्याप्यस्वतन्त्रत्वात् । अस्वातन्त्र्यमेव जीवस्य कुत इत्यत आह **यथेति** । अस्वातन्त्र्यस्य हितक्रियादिनैव सिद्धौ सूत्रार्थे सम्मतिर्वा ।

जीवस्य स्वतःकर्तृत्वाभावमाक्षिप्य समादधत् सूत्रं पठित्वा आक्षेपांशं तावद् व्याचष्टे— **उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि** । न जीवस्य स्वतःकर्तृत्वाभावो वक्तव्यः । अनुभवविरोधात् ।

स हि यत्कर्तुमारभते तदवसाययतीत्यनुभूयत इत्यर्थः । परिहारांशं व्याचष्टे **नेति** । कार्योपसंहारदर्शनेन जीवस्यान्यानपेक्षतया न कर्तृत्वसिद्धिः । तत्कार्योपसंहारस्येश्वरनिमित्तत्वात् । न च जीवे दृश्यमानत्वेन जीवस्यैवासाविति वाच्यम् । गोषु वर्तमानस्यापि क्षीरस्यान्नं रसादिरूपेणेति वचनात् प्राणाधीनत्ववदत्राप्युपपत्तेः । न च बाधकवचनबलात् क्षीरस्यान्याधीनत्वेऽपि कार्योपसंहारस्य बाधकाभावाज्जीवकर्तृत्वमिति वक्तव्यम् । जीवस्यास्वातन्त्र्येण कार्योपसंहारकर्तृत्वानुपपत्तेरेव बाधकत्वादिति भावः ।

ननु जीवस्यास्वातन्त्र्यात् कार्योपसंहारकर्तृत्वाभावेऽपि कुतोऽसावीश्वरकृत इत्यत आह **य इति** ।)

अस्वतन्त्रे जीवे दृश्यमानोऽपि कार्योपसंहारः स्वतन्त्रेश्वरसम्बन्धप्रयुक्त इति यावदिति ।

ननु जीवस्येश्वराधीनकर्तृत्वस्यैव अभावात्, न च श्रुत्या तत्सिद्धिस्तस्यानुपलब्धिबाधितत्वात् । अथ च कल्पने गौरवं स्यात् । अतो लाघवाजीव एव कर्ता वाच्य इत्याशङ्क्य परिहरति— **देवादिवदपि लोके** इति । नेश्वरस्य कर्तृत्वाङ्गीकारे गौरवम्, 'स हि कर्तेत्यादि श्रुतिसिद्धत्वात् । नाप्यनुपलब्धिविरोधः, अदृष्टानामपि देवादीनां विद्यमानत्वात् । तच्च प्रतिपादितमधस्तात् ।

ननु देवादीनामदृश्यत्वशक्तिमत्त्वाद्युक्तानुपलब्धिरिति चेत्, सममीश्वरस्यापि । तादृशशक्तियुक्तत्वात् कुतः ? लोके पिशाचादीनामनीश्वराणां तादृशशक्तिमत्त्वे सर्वेश्वरस्य सुतरां तत्सिद्धेः । अतो नेश्वरस्य कर्तृत्वाङ्गीकारे गौरवम् । किं त्वश्रौतजीवकर्तृत्वाङ्गीकार एव तद्भवति सिद्धान्ते च तदभावाल्लाघवमेवेति । किं च श्रुतिसिद्धः परमेश्वरो नानुपलब्धियुक्त्या निराकार्यः । तथा सति न युक्तियोगाद्वाक्यानि निराकार्याण्यपि क्वचित् विरोध एव वाक्यानां न तु युक्तय इति बृहत्संहितावचनविरोधात् । युक्तियोगाद्युक्त्या यद्वाक्यानां विरोधे युक्तीनां जाते सति ता एव युक्तयः न युक्तयः, किन्तु आभासा इति वाक्यानां परस्परविरोधे युक्तयोऽर्थसाधिकाः न तु केवलयुक्त इति वा तद्वचनार्थः । तथाच अयमेतत्सूत्रार्थः— यथा देवादीनां सामर्थ्यविशेषादनुपलब्धिर्विद्यमानानामेवोपपद्यते तथा कर्तुरीश्वरस्यानुपलब्धिर्विद्यमानस्यैवोपपद्यते, नानुपलब्धिमात्रेण तस्यासत्त्वमङ्गीकारार्हम् । अन्यथा देवादीनामपि असत्त्वाङ्गीकारापत्तेः । न च सतामनुपलभ्यमानत्वमक्लृप्तम्, लोके सतामपि पिशाचादीनामनुपलभ्यमानत्वस्य क्लृप्तत्वादिति । लोकेऽपि यदैवं तदा किमचिन्त्यशक्तिसम्पन्न ईश्वर इति कैमुत्यन्यायसूचनार्थोऽपिशब्दः इति द्रष्टव्यम् ।

युक्त्यन्तरेण जीवस्य स्वतःकर्तृत्वं निराकरोति— **कृत्स्नप्रसक्तिनिरवयवत्वशब्दकोपो वा** इति । जीवस्य स्वतःकर्तृत्वं न युज्यते । तथाहि जीवः किं सर्वकार्येषु सर्वसामर्थ्येन प्रवर्तते तदंशेन वा । नाद्यः, एकाङ्गुलितृणादानादावपि पूर्णशक्त्या प्रवृत्तिप्रसक्तेः । न च इष्टापत्तिः, अनुभवविरोधात् ।

न द्वितीयः अंशाभावात्। न चात्र प्रमाणाभावः। 'अथ यः स जीवः स नित्यो निरवयवो ज्ञाताऽज्ञाता सुखी दुःखी शरीरेन्द्रियस्थ' इति भाल्लवेयश्रुत्या निरवयवत्वावेदनात्। अन्यथा तदावेदकश्रुतिकोप-प्रसङ्गात्। तथाच कृत्स्नशब्दस्य वाशब्दस्य च सूत्रोपात्तत्वमहिम्ना असामस्त्येनांशेनैकदेशेन तत्र स्वतःकर्तृत्वाङ्गीकार इति लभ्यते। एवञ्च तत्र निरवयवत्वशब्दकोपो निरंशत्वावेदकश्रुतिलक्षणशब्द-विरोध इति सूत्रार्थः पर्यवस्यतीति द्रष्टव्यम्। तस्माज्जीवस्य स्वतःकर्तृत्वानुपपत्तेर्युक्तं हरेर्जनकादिकर्तृत्वं लक्षणमिति।

## ८. शब्दमूलत्वाधिकरणम्

ननु विष्णुः सर्वकर्तेति यदुक्तं तदयुक्तं, जीवकर्तृत्वपक्षोक्तस्य दोषस्य विष्णुकर्तृत्वपक्षेऽपि प्रस-रात्। तथाहि किमीश्वरः कार्येषु सर्वशक्त्या प्रवर्तते तदेकदेशेन वा। नाद्यः, तृणादानादावपि कृत्स्न-प्रसक्तेः। न द्वितीयः, 'नेह नानास्ति किञ्चन' इत्यादिश्रुतिव्याकोपात्। तस्या ब्रह्मतदवयवादीनां भेद-निषेधात्। न हि युक्तं वक्तुमयं दोषो जीवपक्ष एव नेश्वरपक्ष इति। ईश्वरे तदस्पर्शनिमित्तस्य जीवादति-शयस्य अदर्शनात्। विशेषमन्तरेणापि दोषास्पर्शे किं जीवेनापराद्धमिति प्राप्ते सिद्धान्तयति— **श्रुतेस्तु शब्दमूलत्वात्** इति। नेश्वरकर्तृत्वपक्षे युक्तिविरोधोऽस्ति योऽसौ विरुद्धोऽविरुद्धो मनुरमनुः अवाग्-वाग् इन्द्रोऽनिन्द्र प्रवृत्तिरप्रवृत्तिः स परः परमात्मा' इत्यादि पैङ्गिश्रुतौ लोकविरुद्धे धर्मणावरुद्धतया ईश्वरे-ऽवस्थानोक्तेः।

ननु तथा श्रुत्युक्तेऽपि न युक्तिविरोधोऽङ्गीकर्तुं शक्यः, अन्यथा जीवेऽपि प्रत्यक्षबलात्तदभ्युप-गन्तव्यम्, अविशेषादिति चेन्न, भवेजीवप्रतिबद्धेश्वरे युक्तिविरोधो यदि विशेषाभावो भवेत्। न चैवं शब्दैकसमधिगम्यत्वस्य युक्तिविरोधपरिहारोपयोगिनः परमेश्वरे श्रुत्यादिसिद्धत्वात् जीवे तदभावात्। न हि शब्दैकसमधिगम्यवस्तुनि युक्तिविरोधप्रसरः सम्भवति, न हि प्रत्यक्षाविषये प्रत्यक्षविरोधो दृष्टचरः। तद्वत् श्रुतिगतपदानामेषोऽर्थः विरुद्धो लोकदृष्ट्या अविरुद्धः। तथाच वागनिन्द्राप्रवृत्तिशब्दैः बहुव्रीहिणा तद्रहितो ज्ञातव्यः। शब्दैकसमधिगम्ये वस्तुनि युक्तिविरोधप्रसरः सम्भवतीत्यस्यार्थस्य यद्वाक्योक्तं न तद्युक्तीः विरोद्धुं शक्नुयात्। विरोधवाक्ययोरत्रापि किञ्चित्समधिगम्यत्वात् शब्द एव मूलं गमकं यस्य स तथोक्तः। तथा चायं सूत्रार्थः— ईश्वरो न युक्तिविरुद्धो भवितुमर्हति, कुतः ? शब्दमूलत्वात् ? शब्दैकसमधिगम्यत्वात्। शब्द एव मूलं गमकं यस्य स तथोक्तः, तस्य भाव-स्तत्वम्। तस्मात् युक्त्याद्यविरुद्धत्वादेकश्रुत्यादिरूपशब्दाभावे तथाविधशब्दमूलत्वमेव असिद्धमित्यत आह— **श्रुतेस्त्विति**। तादृशश्रुतिस्मृत्यादेः सत्त्वादेवेति जीव एव युक्तिविरोधो नेश्वर इत्येतमर्थं

युक्त्यन्तरेण प्रतिपादयति— **आत्मनि चैवं विचित्राश्च हि** इति । युक्तिविरोधनिरासकविचित्रशक्तिसद्भावान्नेश्वरे युक्तिविरोधः । जीवे तदभावात्तस्मिन्नेव युक्तिविरोध इत्यर्थः । आद्यश्चशब्द एवार्थः । तेन नान्येषामिति सिद्धम् । तदुक्तं 'अचिन्त्याः खलु ये भावा न तांस्तर्केन योजयेत्' इति ।

नन्वीश्वरस्यैव विचित्रशक्तित्वं नान्येषामित्येतदेवासिद्धमिति चेन्न । 'विचित्रशक्तिः पुरुषः पुराणो न चान्येषां शक्तयस्तादृशाः स्युः, एको वशी सर्वभूतान्तरात्मा सर्वान्देवानेक एवानुप्रविष्टः' इति । सौत्रहिशब्दसूचितश्रुत्यैव तथा वेदनादिति ।

ननु यथा शब्दैकसमधिगम्यत्वादिना विष्णोर्युक्तिविरोधोऽप्यविरोधतां नीयते तथा चेतनत्वादिना जीवेऽपि किं न नीयते, अन्यथेश्वरेऽपि न नेतव्य इत्याशङ्क्य परिहरति— **स्वपक्षदोषाच्च** । जीवपक्षे युक्तिविरोधो दोष एव, न त्वदोषतां नेतव्यः । किं तु परमेश्वरपक्ष एव कुतः ? 'ये दोषा इतरत्रापि ते गुणाः परमे मताः । न दोषः परमे कश्चित् गुणा एव निरन्तरः' इति वचनेन सयुक्तिकं तथैव प्रतिपादनात् । दोषा भगवदितरत्र प्रतीताश्चेत्तर्हि दोषा एव न तु कयाचन विधयाऽदोषतां नेतव्यः । तत्र दोषाणां सम्भवेन कल्पनाभावात् । त एव चेद्विष्णौ प्रतीयन्ते तर्हि तेऽचिन्त्यशक्त्यादिगुणाभावे कल्पनीया न दोषाः । भगवतो निर्दोषनिर्भेदगुणतया श्रुतिसिद्धत्वेन कल्पकसद्भावादिति तद्वचनार्थः ।

नन्वीश्वरवज्जीवस्यापि निर्दोषत्वात्तत्र प्रतीतदोषोऽन्यथैव नेतव्य इति चेन्न, 'अथ यः स दोषः साञ्जनः स जनिः स जीवोऽथ यः स निर्दोषो निष्कलः सगुणः परः परमात्मा' इति श्रुतौ जीवस्य सदोषताया एवोक्तत्वेन प्रतीतदोषाणामन्यथात्वेन नयने कारणभूतनिर्दोषत्वस्यैव तत्रासिद्धेः । अतो जीवपक्ष एव दोषो न परमात्मपक्ष इति सौत्रश्चशब्द एवार्थः । स्वपक्षो जीवपक्षः । तत्रैव दोषोऽस्ति न परमात्मपक्ष इति कृत्वेति सूत्रार्थः । श्रुतौ साञ्जनशब्दस्य पुण्यपापादिलेपयुक्तोऽर्थः । यदुक्तं विचित्रशक्तित्वान्नेश्वरे युक्त्यादिविरोध इति तदसत् । सा विचित्रशक्तिर्या अविषया भवति विषयरहिता भवति यदा च नश्यति तदा तत्र विरोधनियमादित्याशङ्कां परिहरति— **सर्वोपेता च तद्दर्शनात्** इति । न केवलं सामान्यतो विचित्रशक्तिरीश्वरः, किं तु सर्वविषये सर्वदा विद्यमानविचित्रशक्तिः । कुतः यतः 'सर्वैर्युक्ता शक्तिभिर्देवता सा परेति यां प्राहुरजस्रशक्तिम् । नित्यानन्दा नित्यरूपाजरा च या शाश्वताऽऽत्मेति च यां वदन्ति' इति श्रुतौ तथोक्तमिति सर्वैः सर्वविषयाभिः अजस्रशक्तिं नित्यशक्तिमिति श्रुतिगतपदार्थः । ईश्वररूपदेवता सर्वोपेता सर्वविषयकश्रुत्युपेता सर्वाभिः सर्वविषयकश्रुत्युपेता कुतः ? तद्दर्शनात् तत्प्रतिपादकश्रुतिसद्भावादिति सूत्रार्थः । सूत्रे चशब्दस्तु श्रुतिगतनित्यत्वानन्दत्वादिसमुच्चयार्थः । सर्वोपेतेति सूत्रे स्त्रीलिङ्गनिर्देशस्तु 'सर्वैर्युक्ता शक्तिभिर्देवता सा' इति श्रुत्यनुसारेति

न विरोध इति । यद्वा चशब्दोऽवधारणार्थः । तेन सर्वोपेतैवेति विशेषणसङ्गतैवकारस्यायोगव्यवच्छेदार्थकत्वेन ईश्वररूपदेवतायां सर्वविषयकविचित्रशक्त्युपेतत्वरूपविशेषणस्य कस्मिन्नपि काले कस्मिन्नपि देशे अयोग इत्येतद्व्यवच्छेदाल्लभ्यत इति विष्णोर्जगत्कर्तृत्वमाक्षिप्य समाधत्ते— **विकरणत्वान्नेति चेत्तदुक्तम्** इति ।

ननु नेश्वरस्य कर्तृत्वं युक्तम्, 'अचक्षुः श्रोत्रं तदपाणिपादम्' इति श्रुत्या तस्य हस्तादिकरणशून्यत्वावेदनात् । न हि हस्तादिकरणरहितस्य कर्तृत्वं युज्यत इति चेन्न, 'अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् । न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुतिवाक्येषु पाण्यादिकरणरहितस्यापि हरेर्ग्रहणादिकमुक्त्वा न तस्य कार्यमिति पाण्यादिरहितत्वस्य प्राकृतविषयत्वेन सर्वोत्तमत्वेन परशक्तित्वेन चोपपादितत्वात् । अन्यथा तस्य सर्वात्मना पाण्यादिकरणरहितत्वे 'सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्' इत्यादि तद्वत्त्वप्रतिपादकश्रुतिस्मृतिविरोध इति । यद्यपि पूर्वसूत्र एव विचित्रविशेषशक्तिमत्त्वेन सकलविरोधानां परिहृतत्वादेव न शङ्कावकाशः तथापि सामान्यतः सर्वविरोधानां परिहृतत्वेऽपि विशेषतोऽस्यैव चोद्यस्य परिहाराय युक्तिबुभुत्सया युक्तः शङ्कोदयः । विशेषयुक्तिश्च प्राकृतशरीराभावेऽपि चिदानन्दात्मकविग्रहत्वादौ प्रमाणविशेष एवेति किमनुपपन्नम् । अतो विष्णोर्जगत्कारणत्वे विरोधाभावाद्युक्तं लक्षणसूत्रमिति ।

## १०. नप्रयोजनाधिकरणम्

अथापि स्यात् न विष्णोर्जगत्स्रष्टृत्वादिकं युक्तम्, युक्तिविरोधात् । तथाहि— किमसौ प्रयोजनमपेक्ष्य सृष्ट्यादिकं करोति किं वा तदनपेक्ष्यैव । नोभयथापि सर्वकर्तृत्वं भवति, प्रयोजनापेक्षत्वे सृष्टेः पूर्वमपूर्णत्वप्रसङ्गात् । अपूर्णस्य सर्वकर्तृत्वं न यज्ञदत्तवत् । प्रयोजनानुद्देशे तु प्रवृत्तिरेव न दृष्टा । कुतः कर्तृत्वं सर्वकर्तृत्वं वा अतः प्रकारद्वयेनापि विष्णोः स्रष्टृत्वाद्यनुपपत्तेः विधान्तरस्य चाभावादयुक्तं तस्य जन्मादिकर्तृत्वं लक्षणमिति प्राप्ते सिद्धान्तयति— **न प्रयोजनवत्त्वात्** इति । न प्रयोजनाय सृष्टिः तथापि युक्तमेव विष्णोः सर्वकर्तृत्वादिकम्, न चोक्तदोषः, तस्य पूर्णानन्दत्वेन प्राप्तप्राप्तव्यत्वात् फलानुद्देशेनैव प्रवृत्त्यभ्युपगमादिति सूत्राक्षरार्थः ।

फलानुद्देशेऽपि प्रवृत्तिरित्येतदयुक्तं, दर्शनादित्याशङ्क्य तत्परिहारायाह— **लोकवत्तु लीलाकैवल्यम्** इति । प्रयोजनानुद्देशे कीदृशी प्रवृत्तिरिति चेत् पृच्छसि तर्हि, तस्याः केवललीलात्वं

ब्रूमः । न हि लीला प्रयोजनान्तराय भवति । मत्तादिलीलायाः फलानुद्देशेन सुखोद्रेकादेव लोके दर्शनात् । अतः पूर्णानन्दस्यापि विष्णोर्लोकानुग्रहायैव सृष्ट्यादिक्रीडेति न किञ्चिदयुक्तमिति । न च अत्र मानाभावः । 'सृष्ट्यादिकं हरिर्नैव प्रयोजनमपेक्ष्य तु । कुरुते केवलानन्दाद्यथा मत्तस्य नर्तनम् । पूर्णानन्दस्य तस्येह प्रयोजनमतिः कुतः । मुक्ता अप्यात्मकामा स्युः किमु तस्याखिलात्मनः' इति नारायणसंहितावचनस्य 'देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा' इति श्रुतेश्च तत्र मानत्वात् । अखिलस्वामिनस्तस्याप्तकामता किमु वक्तव्यमिति तदर्थः । *(अत्र एकं पत्रं नास्ति, ग्रन्थपातः)*

वैषम्यादेरीश्वरे अदोषतयैव श्रुतावुपलभ्यमानत्वात् । कासौ तादृशी श्रुतिरिति चेत् 'स कारयेत्पुण्यमथापि पापं न तावता दोषवानीशितापि । ईशो यतो गुणदोषादिसत्त्वे स्वयं परोऽनादिरादिप्रजानाम्' इति चतुर्वेदशिखा । ग्रहणकर्मादीनामीश्वराधीनत्वे च 'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च । यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया' इत्यादिप्रमाणं स्वस्वाधीनकर्मापेक्षया पुण्यादि कारयेत् । एवं तस्य कर्मण ईशितापि न तावता वैषम्यादिदोषवानिति तच्छ्रुत्यर्थः ।

नन्वेवं तर्हि कर्मापेक्षापि निष्फला । तदभावेऽपि दोषाभावसम्भवादिति चेन्नैवम्, कर्मानपेक्षत्वे वेदाप्रामाण्यप्रसङ्गात् । तदुक्तं 'वैषम्यं निर्घृणत्वं च वेदाप्रामाण्यकारणम् । नाङ्गीकार्यमतोऽन्यत्तु न वैषम्यादि कारणम्' इति । अतो हरेः सर्वकर्तृत्वे विरोधाभावात् युक्तं लक्षणमिति ।

## ११. सर्वधर्मोपपत्त्यधिकरणम्

ननु समस्तगुणपूर्णो विष्णुरित्युक्तम् । तस्य युक्तिविरुद्धत्वे तत्प्रतिपादकः पूर्वाध्यायो बाधितः स्यात् । तदेव कथमिति चेत्, विष्णोर्गुणपूर्णत्वं न युज्यते, चेतनत्वात्, न च अप्रयोजको हेतुः, सर्वचेतनानामपूर्णत्वनियमात् हरेरपि चेतनत्वेन अपूर्णता अवश्यम्भावात् । अन्यथा अतिप्रसङ्गादिति प्राप्ते सिद्धान्तयति— **सर्वधर्मोपपत्तेश्च** इति । नायुक्तं विष्णोः पूर्णत्वम्, तस्य चेतनत्वेऽपि स्वातन्त्र्यादिना सर्वगुणोपपत्तेः । स्वातन्त्र्यादिमतः पूर्णगुणत्वनियमात् । न च उक्तयुक्तिविरोधः सर्वधर्मोपपादकश्रुत्या शुष्कयुक्तेर्बाधात् । का सा श्रुतिरिति चेत् 'गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्र शङ्का । चिन्त्या अचिन्त्याश्च तथैव दोषाः श्रुताश्च नाङ्गैर्हि तथाप्रतीताः' इति । गुणाः सुविरुद्धाः लोकदृष्ट्या अश्रुता अपि रमादिचिन्त्यास्तदचिन्त्याश्चे'ति तच्चेत्यर्थः । अतो विष्णोः सर्वगुणपूर्णत्वे युक्तिविरोधाभावात् उक्तं सर्वमुपपन्नमिति । इदं सूत्रं प्रथमाध्यायप्रतिपाद्यस्य गुणपूर्णत्वस्य युक्तिविरोधे प्राप्ते तत्परिहारो द्वितीयाध्यायस्थैरेतत्सूत्रान्यैः सर्वैः सूत्रैः कृते पुनस्तस्यैव प्रथमाध्यायप्रतिपादितस्य गुणपूर्णत्वस्योपसंहारार्थमिति ।

*इति श्रीविजयीन्द्रभिक्षुणा कृते भाष्यतत्त्वप्रकाशिकावाक्योद्धाररूपे मुकुरनाम्नि ग्रन्थे द्वितीयाध्यायस्य प्रथमः पादः ॥*

★ ★ ★

# अथ द्वितीयाध्यायस्य द्वितीयः पादः

## १. रचनानुपपत्त्यधिकरणम्

अत्र द्वितीयाध्याये प्रथमपादे युक्तिविरोधो निराकृतः । इदानीं द्वितीयपादे समयविरोधो निराक्रियते । श्रुतिसयुक्तिकश्रुतिविरोधापेक्षया अनादिकालानुवृत्तसमयविरोधस्यैव प्रबलत्वात् । यद्यपि 'इतरेषां चानुपलब्धेः' इति कपिलकाणादादिसमयानामुक्तानुपलब्ध्यनाप्तोक्तत्वेन निराकृत्य अयं पादो व्यर्थ इति । तथापि तत्र तेषां सामान्यतो निराकरणेन विशेषतो निराकरणार्थोऽयं पाद इति न व्यर्थः । न ह्यनादिकालानुवृत्तानामापातप्रतीतिसुन्दराणां तेषां सामान्यतो निराकरणमात्रेणाधिकारिणां निःशङ्का प्रवृत्तिरुपपद्यते ।

ननु विष्णुः सर्वकर्तेत्ययुक्तः प्रकृतेरेव महदादिकारणत्वात् । भवितव्यं खलु स्वसदृशकारणवतैव । अन्यथा अतिप्रसङ्गात् । न हि ईश्वरस्य महदादिसारूप्यमपीश्वरवादिभिरुपेयते । न च प्रकृतिप्रेरकत्वेन ईश्वरोऽङ्गीकर्तव्यः केवलप्रकृतेरेव कर्तृत्वाभ्युपगमात् । न चान्यदीश्वराङ्गीकारे प्रयोजनं पश्यामः । अतः प्रकृतेरेवाविशेषकर्तृत्वान्नेश्वरस्य तत्कर्तृत्वमिति चेत्तमाह— **रचनानुपपत्तेश्च नानुमानम्** इति । अचेतनस्य स्वतःप्रवृत्त्यनुपपत्तेः नानुमानपरिकल्पितं प्रधानं जगत्कर्तृ भवितुमर्हति । साधकमानाभावाच्च न प्रधानं जगत्कर्त्रीति सूत्रार्थः । इदमुक्तं भवति । न कार्यं स्वसदृशकारणवत् कार्यत्वात् इत्यनुमानेन कारणतया कल्पितं प्रधानं जगत्कर्तृ, स्वतःप्रवृत्तिमदेव हि कर्तृ भवति । न च प्रधानस्य स्वतःप्रवृत्तिर्युक्ता अचेतनत्वात् घटवत् । अतो युक्तं विष्णोर्जगत्कर्तृत्वमिति । एवं प्रधानस्य स्वतन्त्रकारणत्वमचेतनत्वादिना निराकृत्य युक्त्यन्तरेणापि तन्निराकरोति— **प्रवृत्तेश्च** इति । चेतनस्यैवास्मदादेस्तत्कार्यानुगुणप्रवृत्तिदर्शनात् । इदमिदानीमहं करोमीति सर्वस्यापि चेतनस्य प्रवृत्तेरनुभवसिद्धत्वात् । नाचेतनस्य प्रधानस्य भेदादिकारणत्वं सम्भवतीति सूत्रार्थः ।

ननु यदुक्तं प्रधानस्याचेतनत्वात् न स्वतःप्रवृत्तिरिति, तत् अयुक्तम्, पयसोऽचेतनस्यापि दध्याकारेण परिणामदर्शनात् । अचेतनस्यैवाम्बुनो गतिदर्शनात् तथा कूलस्य पतनदर्शनात् । अतोऽचेतनत्वेऽपि प्रधानस्य तद्वत् स्वतःप्रवृत्तिः किं न स्यादिति चेन्न, 'एतेन ह वाव पयो मण्डं भवति,

एतस्य वा अक्षरस्य प्रशासने गार्गि, प्राच्योऽन्या नद्यः स्यन्दन्ते' इत्यादिश्रुत्या पयोऽम्ब्वादिप्रवृत्तेरपि ईश्वरनिमित्तत्वावेदनात् । ततश्च तन्निदर्शनेन प्रधानस्य स्वतःप्रवृत्तिराशास्येति भावेनाह— **पयोऽम्बुवच्चेत् तत्रापि** तत्रापीत्यपीदं चेतनप्रवृत्तेराकर्षकम् । ततश्चाचेतनत्वहेतोः न व्यभिचार इत्यवधेयम् ।

ननु श्रुतसामर्थ्येन पयोऽम्बुनोः प्रवृत्तेरीश्वराधीनत्वेऽपि अयस्कान्तवद्यचेतनान्तरप्रवृत्तौ भविष्यति व्यभिचारः सेत्स्यति च प्रधानस्य प्रवृत्तौ निदर्शनम् । न हि पयोऽम्बुप्रवृत्तेरीश्वराधीनत्वेऽन्यप्रवृत्त्यापि तन्निमित्तया भवितव्यमित्यत्र अस्ति नियामकमिति चेत्तत्राह– **व्यतिरेकानवस्थितेश्चानपेक्षत्वात्** इति । 'न ऋते त्वत्क्रियते किञ्चनार' इति श्रुत्या तद्व्यतिरेकेण कर्मणोऽनवस्थितेः । प्रेक्षावतां स्वतोऽचेतनप्रवृत्तिवादिमतम् अनपेक्षितमिति सूत्रार्थः । सौत्रश्चशब्दो द्व्यर्थः । इदमुक्तं भवति । सर्वप्रवृत्तीनामीश्वरनिमित्तत्वस्य 'न ऋत' इत्यादिश्रुतिसिद्धत्वात् न कुत्राप्युक्त हेतोरचेतनस्य व्यभिचारो नाप्यचेतनप्रवृत्तौ निदर्शनम् । ततश्च स्वतोऽचेतनप्रवृत्तिमतं प्रमाणविरुद्धत्वान्निष्प्रमाणत्वात् प्रेक्षावदनुपादेयमिति । अतो निरीश्वरसाङ्ख्यमतस्याप्रामाणिकत्वेन तद्विरोधाभावाद्युक्तं हरेर्लक्षणमिति सिद्धम् । 'न ऋत' इति मन्त्रस्यायमर्थः— इन्द्रियगणपते धनवन् यशस्विन् मखपते त्वमिन्द्रियगणेषु निषुसीद, तत्र स्थित्वा महान्तं परमानन्दमाश्चर्यतमं त्वामेव पूजयन्तस्त्वामेव विशेषेण ज्ञानिनः प्रकृष्टतममाहुः । अतस्तवैव पूज्यत्वं यतस्त्वदृते दूरे समीपे वा न केनचित् किञ्चित् क्रियते । अतस्त्वमेव पूजक इति ।

## २. अन्यत्राभावाधिकरणम्

इदानीं सेश्वरसाङ्ख्यमतं निराचष्टे— **अन्यत्राभावाच्च न तृणादिवत् इति** । ननु स्वातन्त्र्येण जगत्कर्तेश्वर इति निगदितम्, तत् अयुक्तम्, प्रधानादेव जगदुत्पत्तेः सम्भवात् । न च अचेतनस्य स्वतःप्रवृत्त्यनुपपत्तिः, प्रधानादेव जगदुत्पत्तावपीश्वरस्यानुग्राहकत्वाभ्युपगमात् । यथा खलु पृथिव्येव तृणादिकार्याणां प्रधानकारणं पर्जन्यानुग्रहेणोत्पादयति तथा प्रधानस्यैव प्राधान्यमीश्वरस्त्वनुग्राहकमात्रमिति न तस्य स्वातन्त्र्येण जगत्कारणत्वलक्षणं युक्तमिति सेश्वरसाङ्ख्यशङ्कायां तन्निराकरणायेदं सूत्रम् । ब्रह्मणोऽन्यत्र जगतोऽभावात् तृणादिकं प्रति पर्जन्यस्येव जगत्प्रतीश्वरस्य नानुग्राहकत्वमात्रमिति सूत्रार्थः । ब्रह्मणोऽन्यत्र जगतोऽभावश्च 'यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा, ब्रह्मण्येवेदमाविरासीत्, ब्रह्मणि स्थितं, ब्रह्मणि लयमभ्युपेति, ब्रह्मैवाधस्तात् ब्रह्मैवोपरिष्टात्, ब्रह्म मध्यतो ब्रह्म सर्वतो, ब्रह्मैवेदं सर्वम्, ब्रह्म तं पराद्याद्योऽन्यत्रात्मनो ब्रह्म वेद, क्षत्रं तं परादात् योऽन्यत्रात्मनः क्षत्रं वेद, सर्वं तं पराद्याद्योऽन्यत्रात्मनः सर्वं वेदेत्यादिश्रुतिभ्योऽवगम्यते । अत्र सर्वपदार्थानां सत्तादिप्रदानस्य

ईश्वरस्य सर्वगतत्वमुच्यते । न च ईश्वरप्रेरणमन्तरेण कस्यापि वस्तुनः सत्त्वं भवितुमर्हति । यदधीनं यत्सत्तादि तत्तस्यानुग्राहकमिति युज्यते । किञ्च न कार्यस्येश्वराधीनत्वेनानुग्राहकत्वमात्रं किन्तु सर्वकारणत्वेनाभ्युपगतप्रकृतिसत्तादेरपि तदधीनत्वेनापीति सौत्रश्चशब्दार्थः । न चात्र मानाभावः, 'स एव भूयो निजवीर्यचोदितां स्वजीवमायां प्रकृतिं सिसृक्षतीम् । अनामरूपात्मनि रूपनामनी विधित्समानोऽनुससार शास्त्रिकृत्', 'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च' इत्यादेः अत्र स एवेति प्रकृतेर्हर्यधीनोद्बोधत्वमुच्यते । द्रव्यमिति तदधीनसत्वम्, स्वजीवमायां स्वाधीनां जीवबन्धिकां, सिसृक्षतीं सर्जनोन्मुखीमिति भागवतश्लोकार्थः । अतः सेश्वरसाङ्ख्यमतस्याप्रामाणिकत्वेन अविरोधित्वात् युक्तं हरेर्जगत्कारणत्वं लक्षणमिति ।

## ३. अभ्युपगमाधिकरणम्

इदानीं लोकायतिकसमयं निराचष्टे— **अभ्युपगमेऽप्यर्थाभावात्** इति । नन्वन्तरेणापीश्वरं पूर्वपूर्वस्मादुत्तरोत्पत्तिसम्भवात् क्वचित्स्वभावादेव मदिरोत्पत्तिवदुपपत्तेश्च नेश्वरस्य जगत्कारणत्वलक्षणं युक्तम् । न चैवं श्रुत्यादिबाधः, तस्याप्रामाण्यात् । धर्माद्यसिद्धिविरोधोऽपि न तदनभ्युपगमादेव । न हि तदनभ्युपगमे किमपि बाधकमस्ति । न हि तदभावमात्रेण सत्यामपि क्लृप्तसामग्र्यां कार्यानुत्पादो दृष्टचरः । येन अलौकिककारणमावश्यकं स्यादिति लोकायतिकशङ्कानिरासायेदं सूत्रम् । अभ्युपगमेऽपि लोकायतिकसिद्धान्तेऽपि अर्थाभावाद्विषयप्रयोजनाद्यभावात् तस्य समयित्वानुपपत्तेस्तद्विरोधाभावेन युक्तमेव विष्णोर्जगत्कारणत्वमिति सूत्रार्थः ।

इदमुक्तं भवति— तत्सिद्धान्ते न तावद्धर्मः स्वर्गापवर्गादिप्रयोजनं भवितुमर्हति । अनभ्युपगमात् । नापि दृष्टं धनादि । तदभावादेव । धनादेर्वार्तादितोऽपि सिद्धेश्च । न च धर्माद्यभावबोधनद्वारा तत्सिद्धान्तस्य लोकोपकारप्रयोजनम् । धर्माद्यभावज्ञाने परस्परहिंसादेरेव प्राप्ततया तच्छास्त्रस्यापकारिताया एव प्राप्तेरुपकारस्यापि स्वतःप्रयोजनत्वाभावेन दूरत्वात् तत्साध्यस्यापि प्रयोजनस्यावश्याङ्गीकर्तव्यत्वाच्च । तदापि प्रयोजनमवश्यमङ्गीकर्तव्यत्वेन प्राप्तं नादृष्टरूपं भवितुमर्हति, तेनादृष्टरूपार्थस्यैवानभ्युपगमात् । नापि दृष्टम् । न हि कुवर्त्मना गच्छन्तं प्रति मार्गोपदेष्टाऽविपालो लौकिकैर्दृष्टान्तनिरपेक्षैरुपक्रियते । अतो न किञ्चित् तत्समयस्य प्रयोजनम् । एवं विषयोऽप्यसम्भवि, अदृष्टाभावादेव । नापि दृष्टो विषयः, तच्छास्त्रवैयर्थ्यापत्तेः । नापि धर्मादिभ्रान्तिनिरासमुखेन तदभाव एव तद्विषयः । धर्माद्यभावस्य प्रत्यक्षाद्ययोग्यत्वात् । अपरामर्शदशायां तददर्शनात् परामर्शदशायां तददर्शनस्यानुमानताया एव प्राप्तेः । न हि चार्वाकेणानुमानं प्रमाणमित्यास्थितम् । विषयप्रयोजनाभावादेवाधिकार्यसम्भवोऽपि मास्तु मत्सिद्धान्ते प्रयोजनादीति चेन्न, सिद्धान्तस्य प्रयोजनादिमत्वनियमात् ।

अतः सिद्धान्तेऽपि प्रयोजनाद्यभावमभ्युपगच्छतः चार्वाकस्य स्वव्याहतिरेव स्यात् । न ह्यभ्युपगमशब्दितः सिद्धान्तोऽप्रयोजनं चेति । तस्माद्व्याहतभाषी चार्वाक उन्मत्तवदुपेक्षणीय इति क्व तत्समयविरोधावकाश इति ।

## ४. पुरुषाश्माधिकरणम्

ननु न हरेर्जगत्कारणत्वं युक्तम्, प्रधानस्य कर्तृत्वेनेश्वरवैयर्थ्यात् । केवलप्रधानस्य स्वतःप्रवृत्त्यसम्भवेन कारणत्वानुपपत्तावपि पुरुषोपसर्जनस्य तस्य तदुपपत्तेः । विप्रतिपन्ना प्रवृत्तिः पुरुषोपसर्जनाचेतननिमित्ता, प्रवृत्तित्वात्, अश्मानयनादिप्रवृत्तिवदिति प्रयोगसम्भवात् । पुरुषसम्बन्धेनाचेतनस्यैव शरीरस्याश्माद्यानयनादिप्रवृत्तिदर्शनेन दृष्टान्तस्य विवादास्पदत्वादिति चेन्न, अश्मादिगोचरशरीरप्रवृत्तेरपि परमात्माधीनत्वस्य 'न ऋते त्वत्क्रियत' इत्यादि श्रुतिविरुद्धत्वेन प्रतिपन्नप्रवृत्तेस्तथात्वे पुरुषोपसर्जनप्रधानाधीनत्वसाधने दृष्टान्ताभावात् तत्रोक्तानुमानस्य मानत्वायोगेन युक्तमेव विष्णोः सर्वकर्तृत्वमित्यभिप्रेत्य पुरुषोपसर्जनप्रधानवादिनिरीश्वरसाङ्ख्यैकदेशिमतं निराचष्टे— **पुरुषाश्मवदिति चेत् तथापि** इति । हैतुकम्मन्योऽयं वादी श्रुत्यवष्टम्भेनोक्तं दृष्टान्तदोषं साध्यवैकल्यान्न गणयतीत्यतो हेत्वन्तरेणोक्तदृष्टान्ते साध्यवैकल्यं साधयति— **अङ्गित्वानुपपत्तेः** इति । पुरुषस्याङ्गित्वानुपपत्तेरिति सूत्रार्थः । अयं भावः– यदि शरीरमेव पुरुषोपसर्जनं प्रवर्तते तदा शरीरमङ्गी पुरुषोऽङ्गमित्युक्तं स्यात् । न चैतत् युज्यते । तथासति पुरुषस्याङ्गित्वेन शरीरस्याङ्गत्वेन च लौकिकपरीक्षकव्यवहाराभावप्रसङ्गात् । अतः पुरुषोपसर्जनशरीरस्य प्रवृत्तिरिति दृष्टान्ते साध्यवैकल्यम् । अतः तन्मतविरोधस्याप्यभावाद्युक्तं विष्णोर्जगत्कारणत्वलक्षणमिति ।

## ५. अन्यथानुमित्यधिकरणम्

प्रकृत्युपसर्जनपुरुषकर्तृत्ववादम् अपाकरोति— **अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात्** इति । ननु प्रधानादेव जगदुत्पत्तिसम्भवेन तदर्थमीश्वरो नाङ्गीकार्यः । उपयोगाभावात् । न च अचेतनस्य स्वतःप्रवृत्त्यनुपपत्तिर्दोषः । पुरुषसम्बन्धात् तदुपपत्तेः । न चैवमङ्गित्वानुपपत्तिः, प्रकृत्युपसर्जनपुरुषस्य कर्तृत्वाङ्गीकारात् । विमता प्रवृत्तिरचेतनोपसर्जनपुरुषाधीना प्रवृत्तित्वात्, अश्मानयनादिप्रवृत्तिवदिति प्रकारान्तरेणानुमानप्रयोगसम्भवात् । न च दृष्टान्तदोषावकाशः, शरीरोपसर्जनपुरुषस्य प्रवृत्तिदर्शनात् श्रुतेश्च अनुमानविरोधेन यथाश्रुतार्थपरत्वासम्भवात् । अतो जगत्कारणत्वं ब्रह्मणोऽयुक्तमिति शङ्कानिरासपरमिदं सूत्रम् । अन्यथानुमिताविति सूत्रावयव उक्तशङ्काप्रदर्शनार्थः । ज्ञशक्तिवियोगादिति तदवयवस्तु तत्परिहारप्रदर्शनार्थ इति विवेकः । चशब्दस्त्वङ्गित्वानुपपत्तिसमाकर्षार्थः । तथाच

ज्ञशक्तिवियोगादङ्गित्वानुपपत्तिरिति तदवयवार्थः । अयमर्थः— उक्तरीत्या प्राचीनमतापेक्षया अन्यथा प्रकारान्तरेण अनुमितावपि दृष्टान्ते साध्यवैकल्यदोषतादवस्थ्यम् । तथाहि— शरीरोपसर्जनः पुरुषः प्रवर्तत इति पक्षे ज्ञशब्दार्थस्य पुरुषस्य स्वतःप्रवृत्तिशक्तिरस्ति चेत् शरीरवैय्यर्थ्यम् । नास्ति चेत् तस्याङ्गित्वानुपपत्तिः । शरीरसम्बन्धार्थं केवलस्य पुरुषस्य शक्त्यभावात् तत्र शक्तिरस्ति चेत् सा अन्यत्रापि स्यादिति शरीरवैय्यर्थ्यं तदवस्थम् । शरीरसम्बन्धात्पूर्वमपि प्रकृतिसम्बन्धस्यास्ति शक्तिरिति चेत् तर्हि पूर्वमप्येवमिति अनवस्थानात्, प्रकृतिसम्बन्धस्यानादित्वाश्रयणान्नानवस्थेति चेन्न, निष्प्रकृतीनां मुक्तात्मनां प्रवृत्त्यभावापत्तेः । *(अत्र ग्रन्थपातः)*

## ६. वैशेषिकाधिकरणम्

अथ वैशेषिकादीनामिति न तेषामनुपपन्नभाषित्वमत एव न तत्कल्पना अप्रामाणिकीति चेन्न, सर्वकार्याणां प्रसज्यमानम् अणुत्वं शब्दवाच्यत्वरूपं चेत् का नो हानिः । तदत्यन्तपरमाणुत्वरूपं चेत् तथासति त्र्यणुकादिगतमहत्त्वस्यापि चतुरणुकादिगतमहत्त्वानारम्भकत्वापत्तेः । न हि त्र्यणुकादिकारणगतमहत्त्वपरिमाणे चतुरणुकादिकार्यगतमहत्त्वपरिमाण इत्यन्तसदृशं किञ्चित् द्व्यणुकत्र्यणुकगतपरिमाणयोरसमवायिकारणान्तराभावादपि परमाणुद्व्यणुकपरिमाणे एव तदसमवायिकारणे वाच्ये । न च परमाणुद्व्यणुकगतद्वित्वबहुत्वसङ्ख्ये एव तयोः असमवायिकारणे भविष्यत इति वाच्यम्; तथा सति जन्यपरिमाणमात्रेऽपि सङ्ख्यायोनित्वापत्तेः । एवं सूत्रकृता दूषणं समवाय्यसमवायिनिमित्तभेदेन कारणत्रयमभ्युपगम्याभिहितम् ।

वस्तुतस्तु कारणत्रैविध्यमनुपपन्नमेव । कारणद्वैविध्यस्योचितत्वात् । अन्यथा समवाय्यसमवायिनिमित्तानिमित्तभेदेन तच्चातुर्विध्यप्रसङ्गात् । अविशेषात् । भिन्नतया प्रतीत्यभावस्तत्र विशेष इति चेन्न, भिन्नतया प्रतीत्यभावेऽपि अपेक्षाबुद्धेरात्मगतद्वित्वं प्रति निमित्तत्वात् । किञ्च परमाण्वोस्तन्तूनां असमवायः संयोगः सकलकार्यं प्रति असमवायिकारणं द्व्यणुकं पटं वा प्रतीति चेन्न, परमाण्वोस्तन्तूनां विवक्षितसंयोगव्यतिरेकेण द्व्यणुकलक्षणस्य पटलक्षणस्य वा कार्यान्तरस्य सद्भाव एव मानाभावात् । अत एव संयोगविशेषविशिष्टास्तन्तव एव पट इति प्रतीतिव्यवहारौ । तस्मादसमवायिकारणं नाम न किञ्चित् अस्तीति ।

एवमसमवायिकारणं निरस्य वैशेषिकाभिमतं निमित्तकारणमपि निराकरोति— **उभयथापि न कर्मातस्तदभावः** । निमित्तभूतेश्वरेच्छाया नित्यत्वे वा अनित्यत्वे वा उभयथाप्यतिप्रसङ्गदोषात् । ईश्वरेच्छातो यतः परमाणुषु न कर्म सम्भवति । अतस्तदभावो द्व्यणुकादिकार्याभाव इति सूत्रार्थः ।

अयं भावः— सर्वकार्याणामीश्वरेच्छानिमित्तकारणमिति वदन् प्रष्टव्यः स किं नित्या उत अनित्येति । नाद्यः, प्रलयकाले सत्यामपि ईश्वरेच्छायां परमाणुषु द्व्यणुकोत्पत्त्यनुकूलक्रियाभावस्य त्वयाप्यभ्युपगतत्वेन अन्यदापि ततस्तदभावापातात् । ततश्च तदेवान्यदापि द्व्यणुकादिकार्याभावप्रसङ्गः । सति कारणे कार्यानुत्पादे तत्कारणत्वस्य तदा (अ)कारणत्वे एव पर्यवसानात् । न द्वितीयः, तथासति तस्याः कार्यत्वेन निमित्तापेक्षायां तस्या अप्येवमित्यनवस्थानात् । तदनपेक्षायां चान्यत्रापि तदनपेक्षाप्रसङ्गात् । अत उभयथापि दोषग्रस्तान्नेश्वरेच्छा तत्र निमित्तमिति ।

नन्वीश्वरेच्छाया नित्यत्वनिमित्तत्वयोः सिद्धान्तेऽप्यङ्गीकारादेष दोषस्तुल्य इति चेन्न । सिद्धान्ते सत्यामपीश्वरेच्छायां कार्यानुत्पादादेः सर्वस्यैकवेदसमधिगम्येश्वराचिन्त्यशक्तित एव निर्वाहाङ्गीकारेण वैषम्यात् । वैशेषिकादिभिरनुमानमात्रेणेश्वरसिद्ध्यङ्गीकारेण तस्या अचिन्त्यशक्त्यनङ्गीकारात् । किञ्च नास्माकमुक्तदोषसाम्यम्, ईश्वरेच्छामात्रस्यानिमित्तत्वानभ्युपगमात् । कालविशेषसहकृतस्यैव तस्य निमित्तत्वोपगमात् । प्रलये तादृशकालविशेषस्याभावात् । कालेऽस्माभिः सृष्टिकालत्वादिविशेषाणां स्वाभाविकानामेवाङ्गीकृतत्वेन अनुपपत्त्यभावात् । वैशेषिकादिभिस्तु पुनः सृष्ट्याद्युपाधित एव कालविशेषस्याङ्गीकृतत्वात् । सृष्टिमन्तरेण सृष्टिकालानुपपत्तिः, सृष्टिकालमन्तरेण सृष्ट्यनुपपत्तिरित्यन्योन्याश्रयात् । एवं वैशेषिकादिनये ईश्वरेच्छादेर्निमित्तकारणत्वासम्भवं दर्शयित्वा परमाण्वादेर्द्व्यणुकादिकं प्रति समवायिकारणत्वासम्भवं दर्शयितुमाह— **समवायाभ्युपगमाच्च साम्यादनवस्थितेः** इति । अवयवावयव्यादीनां भिन्नत्वेऽप्यवयवावयवित्वादि विशेषणविशेष्यभावोपपत्तये समवायाभ्युपगमात् समवायस्यापि समवायिभ्यां भिन्नत्वसाम्यात् समवायसमवायित्वादिविशेषणविशेष्यभावोपपत्तये समवायान्तरापेक्षापातात् तत्राप्येवमित्यनवस्थानादिति सूत्रार्थः । न च समवायानन्त्ये मानमस्ति । न च मूलक्षयाभावान्तानवस्थादूषणमिति शङ्क्यम्, मूलभूतावयवावयव्यादिसम्बन्धस्यैव प्रमाणाभावेन असिद्धेः । तत्सिद्ध्यर्थमभ्युपगन्तव्यसम्बन्धानां सुतरामसिद्धिरित्येवं मूलक्षयसद्भावात् । न चोक्तदोषात् मास्तु समवायपरम्परा, प्रथमसमवाय एव स्वनिर्वाहक इत्यङ्गीकारे न कोऽपि दोष इति वाच्यम् । तथा सति तस्यैवासिद्धिप्रसङ्गात् । तेन विनैव द्रव्यस्यैव गुणगुण्यादिरूपेण स्वनिर्वाहकत्वोपपत्तेः । तत एव विशेषणविशेष्यभावबुद्ध्युपपत्तेश्च । सम्बन्धत्वस्य संयोग एव व्यभिचारितया स्वनिर्वाहकत्वं प्रत्यतन्त्रत्वात् । अतिप्रसङ्गस्य प्रमाणसदसद्भावेनैव निरासेन व्यवस्थोपपत्तेः । रूपं नित्यसम्बद्धम्, गुणत्वान्महत्त्ववदित्यनुमानस्य निदर्शनशून्यत्वेन समवाये प्रमाणत्वायोगात् । विशेषणविशेष्यभावेन हेतुना तस्य सम्बन्धनिबन्धनत्वसाधने बहुशो व्यभिचारात् । तथाच वैशेषिकादिनये समवायस्यैवाप्रामाणिकत्वेन तत्प्रयुक्तकारणत्रैविध्यमनुपपन्नमिति तत्प्रयुक्तसृष्टिरप्यप्रामाणिकीति भावः ।

इदानीं वैशेषिकादिरीत्या प्रलयोऽप्यसम्भवीति तन्मते दूषणान्तरमाह— **नित्यमेव च भावात्** इति । परमाण्वादिकारणानां च नित्यमेव सर्वदैव सद्भावात् तत्कार्यं द्व्यणुकाद्यपि नित्यमेव स्यात् । अन्यथा न कदाचिदपि स्यादिति सूत्रार्थः ।

अयं भावः— वैशेषिकादिनये द्व्यणुकादिकार्यं सर्वदैव स्यान्न तु कदाचित्प्रलयः समवायिकारणं परमाण्वादीनां सदा सत्त्वान्निमित्तस्य चेश्वरेच्छादेर्नित्यत्वात् परमाण्वादिसंयोगरूपासमवायिकारणानुत्पत्तावपि कारणाभावेन तदभावयुक्तसामग्रीवैकल्यस्यासम्भवात् । तदसमवायिकारणकर्मणोऽपि सामग्रीवैकल्यप्रयुक्ताभावस्यापि वक्तुमशक्यत्वात् दृष्टसामग्रीसत्त्वे अदृष्टविलम्बेन कार्यविलम्बदर्शनाच्च दृष्टसामग्रीसम्पत्तावेवोपयोगसत्त्वेन अदृष्टस्वीकारावैयर्थ्योपपत्तेरिति ।

एवं परमाणूनां नित्यत्वमभ्युपेत्य तदारम्भवादो निरस्तः । इदानीं तेषां नित्यत्वमपि दुर्लभमित्याह— **रूपादिमत्त्वाच्च विपर्ययो दर्शनात्** इति । पार्थिवादिपरमाणूनां रूपादिमत्त्वेन हेतुना प्रकृतनित्यत्वविपर्ययोऽन्यत्वं भवति । यद्रूपादिमत्त्वस्य घटादेरनित्यत्वदर्शनादिति सूत्रार्थः ।

ननु रूपादिमत्त्वेऽपि परमाणूनां नित्यत्वं किं न स्यात्, अस्तु वा अनित्यत्वं, किं बाधकमिति चेत्तत्राह— **उभयथा च दोषात्** इति । रूपादिमतामपि परमाणूनां नित्यत्वे तद्वदेव घटादेरपि नित्यत्वं स्यात् । न च घटादेरवयवित्वादि विशेषादनित्यत्वं सेत्स्यतीति युक्तम्, विवक्षितावयवसंयोगव्यतिरेकेण घटाद्यवयविन एवासिद्धेः । प्रत्युत रूपादिमत्वेन परमाणुनित्यत्ववद् अनित्यत्वस्यैव असिद्धेः । नित्यत्वे च तत्समवायिकारणाभावेन तदुत्पत्त्यभावेन द्व्यणुकादिकार्यानुपपत्तेरित्युभयथा च दोषसद्भावादिति सूत्रार्थः ।

एवं प्रपञ्चेन दूषितं परमाण्वारम्भवादमप्रामाणिकत्वेनापि दूषयति **अपरिग्रहाच्चात्यन्तमनपेक्षा** इति । परमाण्वारम्भवादस्य श्रुतिस्मृत्यपरिगृहीतत्वाच्चातिशयेनानपेक्षेति सूत्रार्थः । न केवलं श्रुत्याद्यपरिगृहीतत्वेन तस्य नापेक्षा, किं तु 'अहमासं पण्डितको हैतुको वेदनिन्दकः । आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थि(र्थ)काम्' इति मोक्षधर्मादिवचनविरुद्धत्वेनापि ............. । अतः परमाण्वारम्भवादस्य अनुपपन्नत्वेन अविरोधित्वात् युक्तं समन्वयाध्यायोक्तमीश्वरस्यानन्तगुणत्वमिति ।

## ७. समुदायाधिकरणम्

इदानीं परमाणुपुञ्जवादिवैभाषिकसौत्रान्तिकयोर्मतं निराकरोति **समुदाय उभयहेतुकेऽपि तदप्राप्तिः** इति । ननु रूपविज्ञानवेदनासंज्ञासंस्काररूपेणावस्थितं खलु जगत्परमार्थसत् । तदशेषपरमाणु-

समुदायमात्रम्। न त्ववयवी नाम कश्चिदस्ति। परमाणुसमुदायेनैव पटादिबुद्ध्युपपत्तौ परमाणुपरिणामस्य तदारब्धस्य वाऽवयविनोऽभ्युपगमस्य व्यर्थत्वात्। विद्यमानं च सर्वं क्षणिकमेव एतदेव हि पदार्थानां सत्त्वं यत्कालतः। क्षणिकत्वं देशतः परमाणुत्वम्। तच्चैतत्कार्यं कालकर्मनिमित्तेन भवतीति किं तदर्थमीश्वराङ्गीकारेण। न च तदनभ्युपगमे मानविरोधः, श्रुतिप्रामाण्यानभ्युपगमात्। अतो न हरेरुक्तं लक्षणं युक्तमित्याशङ्कानिरासायेदं सूत्रम्। समुदायो न तावदेकपरमाणुहेतुकः सम्भवति, एकस्मात्समुदाय इत्यस्य व्याहतेः। अनेकपरमाणुहेतुके समुदायेऽङ्गीक्रियमाणेऽपि तदप्राप्तिः समुदायानुपपत्तिरिति सूत्रार्थः। अयमाशयः— अनेकपरमाणुहेतुकः समुदाय इति पक्षेऽपि स किं मिलितानेकपरमाणुहेतुकः किं वा विरलानेकतद्धेतुकः। नाद्यः, अन्योन्याश्रयात्। मिलितानेकतः समुदायः, सति समुदाये मिलितत्वमिति। नोत्तरः, अमिलितपरमाणूनां सदा सद्भावेन तत्समुदायस्यापि सदातनत्वापत्त्या प्रलयाभ्युपगमविरोधादिति। उक्तमाक्षिप्य समाधत्ते— **इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात्** इति। विरलानेकपरमाणुहेतुकसमुदायस्य सदातनत्वेऽपि न प्रलयानुपपत्तिः, समुदायस्य समुदायिनां परमाणूनामिदं चेति इतरेतरवित्तिव्यवहारसापेक्षत्वेन तदभावादेव प्रलयोपपत्तेरिति सूत्रे आक्षेपांशार्थः। न च विद्यमानव्यवहाराभावोऽपि कुत इति वाच्यम्, व्यवहारादेरिदं चेदं चेति परमाणुपरस्परापेक्षानिबन्धनत्वात्। परस्परापेक्षा च परमाणूनां सामीप्यापेक्षा। न चास्ति प्रलये तत्सामीप्यम्। अतः क्व प्रलयानुपपत्तिरिति भावः। नेत्यादिपरिहारांशस्यायमर्थः— समुदायस्य सदातनत्वेऽपि वित्तिव्यवहारयोः कादाचित्कतया तदभावादेव प्रलयोपपत्तिरिति न विरलपरमाणूनां अमिलितपरमाणूनां मिलितपरमाणूत्पत्तिमात्रनिमित्तत्वादिति। अयमाशयः— विरला हि परमाणवो मिलितपरमाणूनुत्पादयन्ति। ते च पुरुषेण दृश्यन्ते। ते चैकं कार्यमुत्पाद्य नश्यन्त्येव, क्षणिकत्वाभ्युपगमात्। क्षणिकत्वं च अस्य उत्पत्त्यव्यवहितोत्तरक्षणवृत्तिध्वंसप्रतियोगित्वरूपमेव। एवमन्येऽपि तथाविधाः परमाणवः तथाविधपरमाणूनुत्पाद्य नश्यन्त्येव। एवमन्येऽपि इत्येतद्रीतिः। तथापि कथं दृष्टः परस्परापेक्षा ततो व्यवहारादिना घटनम्, न ह्यन्यत्र दर्शनम् अन्यत्र परस्परापेक्षान्यत्र व्यवहारादिरिति युज्यते। पुरुषस्यापि च तथात्वात्।

ननु विरलपरमाणुभ्यो जाता मिलितपरमाणवः स्थायीत्यङ्गीकारे न व्यवहारानुपपत्तिरिति चेत्, सत्यम्, तथा सत्यपसिद्धान्तप्रसङ्गात् क्षणिकतोपगमात्। किञ्च यदि परमाणवः स्थायिनस्तर्हि ते प्रतिक्षणं कार्यमुत्पादयेयुरेव, कारणे सति कार्यं भवत्येवेति नियमात् तथा चाल्पतरकालेऽप्येकस्मात् घटप्रसङ्गः।

एवं विरलपरमाणुभ्यो मिलितपरमाणूत्पत्तिमभ्युपेत्य व्यवहाराभावो दर्शितः । इदानीं कार्यविशेष-मपि निराकरोति— **उत्तरोत्पादे च पूर्वनिरोधात्** इति । उत्तरस्य कार्यस्य उत्पादनम् एव पूर्वकार-णस्य निरोधात् विनाशाच्च न कार्यविशेषोत्पत्तिः सम्भवतीति सूत्रार्थः । अयमाशयः— क्षणिकवादे विनाशकार्योत्पत्तिश्च न युज्यते । कारणस्य स्वसदृशकार्यजनन एव सामर्थ्यात् । अन्यथा घटादावपि पटोत्पत्त्यापातात् । न च स्वसदृशकार्योपजननसमर्थं कारणं कार्यमुत्पाद्य पश्चात् तत्रैव सादृश्य-मुत्पादयति । न चातिप्रसङ्गः, तस्यादृष्टविशेषाधीनत्वस्वीकारेणातिप्रसङ्गानवकाशात् इति वाच्यम् । कारणस्य स्वसदृशमेकं कार्यमुत्पाद्यैव विनष्टत्वेन तत्र पश्चाद्वैसादृश्योत्पादासम्भवात् । अन्यथा तत्क्षणिकत्वस्वीकारविरोध इति । एवं विसदृशकार्योत्पत्तिनिरासेन व्यवहारादिकं पराकृत्येदानीं प्रतिक्षणोत्पत्तिमेव निराकरोति— **असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा** इति । अत्र कारण इति शेषः । कारणे असति विनष्टे सति कार्यं उत्पद्यत इत्यङ्गीकारे तत्कार्यमेतदिति प्रतिज्ञोपरोधात् प्रतिज्ञाहानिः । अन्यथा कार्यकालेऽपि कारणमस्तीति चेन्न । नश्यति चेत् तर्हि विनाशकारणाभावात् सर्वकार्याणां यौगपद्यं स्यादिति सूत्रार्थः । अयमाशयः— न प्रतिक्षणं कार्योत्पत्तिः स्वीकारार्हा । तथा हि किं कारणे विनष्टे कार्यमुत्पद्यते विद्यमाने वा । न प्रथमः, यस्मिन्विनष्टे यदुत्पद्यते तस्य तत्कार्यत्वे अतिप्रसङ्गात् । न द्वितीयः, एकस्मिन् क्षणे त्वयमात्मानमलब्ध्वा कार्योत्पत्तिक्षणेऽपि तस्यावस्थाने कारणस्य च द्विक्षणकत्वप्रसङ्गात् । क्षणिकस्य च द्विक्षणावस्थाने तदुत्तरत्र विनाशकारणाभावात् पुनरपि तस्मात्कार्योत्पत्तयः स्युः, तथा तेभ्योऽपीति सर्वकार्याणां यौगपद्यं स्यात् । तथा यस्मिन् क्षणे कारणं तस्मिन्नेव क्षणे कार्यावस्थानप्रसङ्गात् । तत्कारणानां चैवमिति सर्वकारणानां यौगपद्यं प्रसज्यते । न च क्षणार्धे समुत्पन्नं क्षणार्धे कार्यमुत्पादयतीति युक्तम् । क्षणस्य पूर्वमध्यावस्थाकालाविकलत्वस्य वैभाषिकसौत्रान्तिकाभ्यामेव स्वीकृतत्वादिति । एवं क्षणिकत्ववादे कार्योत्पादनं पराकृत्य विनाशं च पराकरोति— **प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात्** इति । अत्र प्रतिसङ्ख्यानिरोधशब्दस्य निरस्सन्तानविनाशोऽर्थः । अप्रतिसङ्ख्यानिरोधशब्दस्य तु ससन्तानविनाशोऽर्थः । तयोरप्राप्तिरयोगः । अविच्छेदात् कारणे सति कार्यं भवत्येवेति नियमादिति सूत्रार्थः । अयं भावः— सन्तानमन्तरेण यः प्रतिक्षणं विनाशः यश्च सन्तानेन सह तथा विनाशः, तौ क्षणिकवादे नोपपद्येते । तथाहि— प्रतिक्षणं कारणं कार्यं निर्वर्त्य नश्यतीति वक्तव्यम् । तत्र स्वकार्यवियोगकाले कारणं सदेवेति कार्यमुत्पादयेत् । कारणे सति कार्यमवश्यं भवत्येवेति नियमाभ्युपगमात् । तदुत्पत्त्यनन्तरं चैवमिति कथं प्रतिक्षणं नाशो युज्येत । नापि अन्यः । सतो हि घटस्य नात्यन्तिको नाशः, अतोऽसौ सत्त्वात् कार्यमुत्पादयेदेव । कारणे सति कार्यं भवत्येवेति नियमात् । तत्कार्यं चैवमिति कथं सन्तानोच्छेदावसरः । सन्तानो नित्य

एवेति चेन्न, सन्तानिनामपि तथात्वापातात् । न हि सन्ति सन्तानिनो न सन्तान इति युक्तम् । एतेन समुदायस्य वास्तवत्वं परास्तम् । समुदायस्य समुदायिमात्रत्वे समुदायित्वानुपपत्तेरिति ।

ननु तथापि न सतां भावानां क्षणिकत्वं निषेद्धुं शक्यते । अर्थक्रियाकारित्वं खलु सत्त्वं नाम । न च तत्क्षणिकत्वमन्तरेणोपपद्यते । यदाद्यक्षणे घटे घटान्तरमुत्पाद्य न स्वयं नश्यति तदा घटान्तरेऽपि तथेत्यनन्तकार्यापातः । अतोऽर्थक्रियाकारित्वसिद्ध्यै क्षणिकत्वमेष्टव्यं भावानामित्याशङ्कां परिहरति— **उभयथा च दोषात्** इति । कारणे सति कार्यं भवत्येवेति नियमसद्भावे तदसद्भावे च उभयथापि इति कार्यानुत्पत्तिदोषादिति सूत्रार्थः । अयमाशयः— अर्थक्रियाकारित्वरूपसत्त्वान्यथानुपपत्त्या हि परेण भावानामक्षणिकत्वमास्थितम्, तन्मते कारणे सति कार्यं भवत्येवेति नियमोऽस्ति न वेति प्रष्टव्यम् । अस्ति चेत् कार्यस्यापि यावत्कारणभावित्वेन सव्येतरगोविषाणवत् न कार्यकारणभाव उपपद्यते । नास्ति चेत् तत्कालेऽर्थक्रियाकारित्वाभावेन कारणत्वाभिमतस्यासत्त्वापत्त्या न कदापि ततः कार्योत्पत्तिः स्यात् । तथाच क्षणिकता व्याहन्यत इति न च वाच्यम् । एवंसति कथं तर्हि घटादिसत्त्वव्यवस्थेति, जलाहरणादियोग्यतयैतदुपपत्तेरिति । ननूक्तरीत्यार्थापत्त्या भावानां क्षणिकत्वसिद्धिः । यत्सत्तत्क्षणिकं यथा दीपादि, सन्तश्चामी भावा इत्यनुमानेन सेत्स्यति । न च दृष्टान्तस्य साध्यविकलता, यद्विरुद्ध-धर्माधिकरणं तन्नाना यथा घटपटौ, तथा चायं दीपः पूर्वोत्तरक्षणस्थो विरुद्धधर्माधिकरणम् । परिमाण-विशेषदर्शनात् इत्याशङ्कां निराकरोति— **आकाशे चाविशेषात्** इति । दीप इवाकाशे विशेषाभावा-दाकाशदृष्टान्तेन भावानामक्षणिकत्वस्यापि सुसाधत्वान्न भावक्षणिकत्वे उक्तानुमानं प्रमाणीकर्तुं शक्यत इति सूत्रार्थः ।

अयं भावः— न चोक्तानुमानेन भावानां क्षणिकत्वम्, यत्सत् तदक्षणिकं यथाकाशमित्यन्यत्र आकाशदृष्टान्तेन अक्षणिकत्वस्यापि साधयितुं शक्यत्वात् । न ह्याकाशे दीप इव विशेषो दृश्यते । येन दीपवत् तस्यापि क्षणिकत्वसाधनसौलभ्येन दृष्टान्तस्य साध्यविकलताशङ्का स्यात् । न च वाच्यमाकाशे क्षणिकत्वं हेत्वन्तरेण सेत्स्यति, तथाच साध्यवैकल्यमिति । आकाशस्य पञ्चस्कन्धातिरिक्तत्वेन परेण तत्र क्षणिकत्वानभ्युपगमात् । न च सत्त्वहेतोरक्षणिकत्वसाधकस्योत्पत्त्यनन्तरमेव मुसलाहतघटे व्यभि-चारः । तत्र पूर्वमध्यापरकालाविकलकालवृत्तित्वाभावेनाक्षणिकत्वात् । न चाकाशस्य सत्त्वहीनतया साधनविकलता, यत्सत्त्वमाकाशे नेत्युच्यते, तन्न तावदर्थक्रियाकारित्वम्, क्षणिकत्वसाधकपरानुमाने-ऽसिद्धिप्रसङ्गात् । दीपरूपनिदर्शने साधनवैकल्याच्च । नापि स्वरूपेण विद्यमानत्वं भावत्वं वा तत् तस्याकाशेऽपि सत्त्वादिति । तथाच प्रतिपक्षग्रासात् परोक्तानुमानान्न क्षणिकत्वसिद्धिरिति ।

किञ्च बाधितविषयत्वादपि न परोक्तानुमानेन क्षणिकत्वसिद्धिरित्याह— **अनुस्मृतेश्च** इति। तदेवेति प्रत्यभिज्ञानेन बाधितविषयत्वाच्च परानुमानेन न क्षणिकत्वसिद्धिरिति सूत्रार्थः। न च वाच्यं परिलूनपुनर्जातकुन्तलकलापप्रत्यभिज्ञावदनुस्मृतिशब्दितप्रत्यभिज्ञाभ्रान्तिरिति, बाधकाभावात्। बाधकं विनापि भ्रान्तित्वे दीपादौ विशेषदर्शनस्यापि भ्रमत्वप्रसङ्गात्। न च विरुद्धधर्माध्यासरूपबाधकसत्त्वादनुस्मृतिर्भ्रान्तिरिति तस्य कालादिभेदेनाप्युपपत्तेः। न हि तादृशेऽन्यत्वमस्मत्सम्प्रतिपन्नम्, अन्यथा एकक्षणेऽपि भावभेदप्रसङ्गात्। एतेन दीपोऽपि व्याख्यातः। किञ्च परानुमाने घटादिभाव एव पक्षत्वेनाभिमतः, तत्र किं घटादिशब्देन परमाणवः स्वीक्रियन्ते समुदायो वा। नाद्यः, दृष्टान्ताभावात्। न द्वितीयः, तस्योक्तरीत्या अवस्तुत्वेनाश्रयासिद्ध्यादिदोषप्रसङ्गात्। तथाच वैभाषिकसौत्रान्तिकमतयोरनुपपन्नत्वेनापरिपन्थित्वादयुक्तमिति ईश्वरस्याशेषजगत्कारणत्वं लक्षणमिति सिद्धम्।

## असदधिकरणम्

इदानीं शून्यवादमपाकरोति— **नासतोऽदृष्टत्वात्** इति। नन्वेकमेव शून्यं खल्वन्तत्रयविरहितं परमार्थतो विद्यमानम्। तस्मात् एव एतदशेषं जगदुदेति। तस्यासङ्गत्वेऽपि सम्प्रति सम्बन्धेन जगत्कारणतोपपत्तिः। न चैवमङ्गीकारे श्रुतिविरोधः, शून्यवादिना तत्प्रामाण्यानभ्युपगमात्। अतः शून्यादेव जगदुदयसम्भवादीश्वरस्योपयोगाभावादयुक्तं लक्षणमिति शङ्कानिरासायेदं सूत्रम्। असतः शून्यशब्दितस्य कारणत्वं न युज्यते, तत्कारणत्वस्यादृष्टत्वादिति सूत्रार्थः। अयं भावः— शून्यस्य जगत्कारणत्वमयुक्तं मानाभावात्। न च तस्य तत्त्वे प्रत्यक्षमस्ति, नाप्यनुमानं क्वाप्यसतः कारणत्वादर्शनेन दृष्टान्ताभावात्। आगमस्तु नेष्टो दृष्टो वेति।

ननु अदृष्टमपि जगत्कारणत्वं शून्यस्याभ्युपगम्यते चेत् को दोष इत्यत आह— **उदासीनानामप्येवं सिद्धिः** इति। एवंसति असतः कारणत्वेऽभ्युपगम्यमाने उदासीनानां हेयोपादेयबुद्धिविवर्जितानां खपुष्पादीनामपि सकाशात् सौरभ्यादिकार्यसिद्धिः स्यात् इति सूत्रार्थः। तत्सकाशान्न चेत्कार्यं तदा शून्यादपि तन्न स्यादविशेषादित्यर्थः। अत्रोदासीनानामिति हेतुगर्भं विशेषणमतोऽत्र परेण नेष्टापत्तिः कर्तुं शक्यत इति भावः।

ननु नायं दोषः, परमार्थतः शून्यान्मृदो घटस्येव जगत उत्पत्त्यनङ्गीकारात्। संवृतिवशात् शून्यमेव जगदाकारेण विवर्तत इत्यङ्गीकारात्। न हि शून्ये जगदध्यस्तमित्यत्रोक्तदोषप्रसरोऽस्ति। असत एव जगदाकारेण प्रतीयमानत्वादित्याशङ्क्याह— **नाभाव उपलब्धेः** इति। शून्यमेव जगदाकारेणावभाति, न परमार्थतो जगदस्तीत्ययुक्तम्, सदिति दृष्टत्वादिति सूत्रार्थः। न वा असदेव जगदाकारेणावभातीति युक्तम्, नेदं रजतम्, किं तु शुक्तिकैवेति बाधविरोधात्।

ननु सदिति दृश्यमानस्य स्वप्नस्य रज्जुभुजङ्गादेश्च असत्त्वं दृष्टमिति जगतः सत्त्वेन दृष्टस्याप्यसत्त्वं किं न स्यादित्याशङ्क्याह— **वैधर्म्याच्च न स्वप्नादिवत्** इति । जगतः सत्त्वेन दृष्टस्यापि जगतो न स्वप्नादिवदसत्त्वम्, वैधर्म्यादिति सूत्रार्थः । अयमाशयः— सत्त्वेनोपलब्धस्यापि जगतो न स्वप्नादिवदसत्त्वं वक्तुं शक्यम्, स्वप्नासत्त्वस्यैवासिद्धेः । स्वप्नगतत्वेन दृष्टं जाग्रत्वं दृष्टान्त इत्यङ्गीकारेऽपि न तद्वदसत्त्वं जगतः । ततो जाग्रत्त्वादेः स्वप्न एवायं न जाग्रत् रज्जुरियं न सर्पः ........ । *(अत्र ग्रन्थपातः)*

## नैकस्मिन्नधिकरणम्

.................... सत् प्रकारद्वयातिरिक्तप्रकारस्य अप्रामाणिकत्वेन असम्भवित्वात् । एकैकप्रकाराभ्युपगमे दोषदर्शनात् तथोपेयत इति चेत् तथासति दोषभीरुणा सर्वस्यापि त्यागप्रसङ्गात् । सदसत्प्रकारद्वये च न कोऽपि दोषः इति । जीवात्मनः शरीरपरिमाणत्वाभ्युपगमः किं जैनानां सर्वशरीरगतचेष्टोपपत्त्यर्थः किं वा शरीरावच्छेदमन्तरेण आत्मनः परिमाणाभावप्रसङ्गपरिहारार्थो वा । तत्राद्यं पक्षं प्रतिक्षिपति— **एवं चात्मा कात्स्न्यर्म्** इति । एवञ्च जीवस्य शरीरपरिमाणत्वाङ्गीकारे मशकादिसूक्ष्मसूक्ष्मतरशरीरस्य जीवात्मनः कर्मवशात् हस्त्यादिशरीरप्राप्तौ तत्र कात्स्न्यं तावत्परिमाणत्वं न स्यादिति सूत्रार्थः । न च वाच्यम् आत्मन शरीरपरिमाणत्वस्य प्रागप्रसक्ततया तन्निरासोऽसङ्गत इति । जैनमतप्रसङ्गसन्निधापितत्वात् । अत एव सूत्रे एवमिति तत्परामर्शः । सर्वशरीरचेष्टोपपत्त्यर्थमात्मनः शरीरपरिमाणत्वाङ्गीकारे प्राक्कर्मवशात्प्राप्तपिपीलिकादिशरीरस्य तस्य पुनः कर्मान्तरवशात् पुनरपि पिपीलिकादिसूक्ष्मशरीरप्राप्तावधिकपरिमाणताप्रसङ्गः । तथाच शरीरपरिमाणत्वाभ्युपगम(भङ्ग) इति ।

ननु यदा यच्छरीरं प्राप्नोति जीवस्तदा तत्परिमाणको भवति । अतो नोक्तदोष इति शङ्कां निराचष्टे— **न च पर्यायादप्यविरोधो विकारादिभ्यः** इति । पर्यायात्क्रमेण एव आत्मनस्तद्देहानुसारिपरिमाणाङ्गीकारादविरोध इत्यपि न वाच्यम्, तथासति विकारित्वापातेन, विकारि च नश्यतीति नियमेन आत्मनोऽनित्यत्वप्राप्तेरिति सूत्रार्थः । न च वाच्यमनित्यत्वप्राप्तावपि को दोष इति । कृतहानादिप्रसङ्गान्मोक्षाभावप्रसङ्गाच्च । न च विकारित्वेऽपि प्रकृतिवदात्मनोऽपि नित्यत्वं सेत्स्यतीति वाच्यम् । प्रकृते विकारित्वनित्यत्वयोरिव जीवस्य विकारित्वनित्यत्वयोर्मानाभावात् । आत्मनः शरीरपरिमाणत्वाभावेऽपि तद्वन्ने वस्त्रादाविव सर्वशरीरे चेष्टोपपत्तेश्च । किं च जैनेनापि स्वशास्त्रस्य मोक्षप्रयोजकत्वोपगमात् तदभावे तस्यानारम्भणीयत्वप्रसङ्ग इति भावः । द्वितीयपक्षं प्रतिक्षिपति— **अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात्** इति । परिमाणाभावे स्वरूपाभावप्राप्त्या मोक्षेऽप्यात्मस्वरूपमिच्छता जैनेन तत्परिमाणस्यान्त्यस्य नित्यभावेन स्थितिरुपेया । तदर्थत्वेन तत्र शरीरं

चोपेयम् । तदपि नित्यभावेनोपेयम् । एवञ्च मोक्षे शरीरशरीरिणोरुभयोर्नित्यत्वात् शरीरत्वाविशेषात् संसारदशायामपि सर्वशरीरनित्यत्वप्रसङ्ग इति सूत्रार्थः ।

इदमत्राकूतम्— शरीरावच्छेदमन्तरेणात्मनः स्वतःपरिमाणाभावात् शरीरपरिमाणत्वं तस्येति वदन् जैनः प्रष्टव्यः— किं मोक्षे जीवस्य परिमाणमस्ति न वेति । तत्र न द्वितीयः, परिमाणाभावे स्वरूपाभावप्रसङ्गात् । परिमाणशून्यस्य द्रव्यत्वायोगात् । आत्मनश्च त्वयापि द्रव्यत्वोपगमात् । न प्रथमः, मोक्षे जीवपरिमाणस्य शरीरमन्तरेणानुपपत्तेस्तत्रापि शरीराङ्गीकारप्रसङ्गात् । ततः किमिति चेत् न तस्यानित्यत्वे संसारदशायां विशेषाभावप्रसङ्गात् । नित्यत्वे मुक्तात्मवच्छरीरयोरुभयोरपि नित्यत्वप्राप्त्या शरीरत्वाविशेषेण संसारदशापन्नसर्वशरीराणामपि नित्यत्वापत्तेरिति तस्य जैनमतस्यानुपपन्नत्वेनाविरोधात् युक्तं विष्णोर्जगत्कारणत्वं लक्षणमिति ।

## पत्युरधिकरणम्

पाशुपतमतमिदानीं निराकरोति— **पत्युरसामञ्जस्यात्** इति । सार्वज्ञादिगुणशालिमायामुपादाय हरिहिरण्यगर्भादि जगदुत्पत्त्यादि करोति । तथात्वे श्रुतिस्मृतिसत्त्वात् । तथाच हरेर्जगत्कारणत्वायोगात् न लक्षणसूत्रं युक्तमिति शङ्कानिरासार्थमिदं सूत्रम् । पत्युः पशुपतेः न हिरण्यगर्भादिजगत्कारणत्वं युक्तम्, असामञ्जस्यात् । तथात्वे 'यं कामये तं तमुग्रं कृणोमि । अहं रुद्राय धनुरातनोमि', 'अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः', 'एको नारायण आसीन्न ब्रह्मा नेशान' इत्यादि पारतन्त्र्यावेदनपरश्रुत्यस्वारस्यप्रसङ्गादिति सूत्रार्थः । अयं भावः— न पत्युरज्ञजनप्रसिद्धेश्वरस्य पशुपतेर्जगत्कारणत्वं युक्तम् । तस्य पारतन्त्र्यजननमरणादिदोषवत्त्वयोः श्रुतत्वात् । न हि सकलकारणस्य दोषवत्त्वं युक्तमिति । 'ब्रह्मद्विषे चतुर्मुखस्य पञ्चमशिरच्छेत्रे शरवे हिंसनशीलाय हन्तवे हन्तुमेव न तु भीषणाद्यर्थमहं रुद्राये'ति श्रुत्यर्थः । अस्य आ समन्तादीशस्य अभीष्टसेचकस्य विष्णोर्देवस्य हविर्भिः प्रभरणे कृते सति अहङ्काररूपेण बन्धको रुद्रो रौद्रं महिमानं यथा लेभे तथा हे अश्विनौ युवामपि विष्णुपूजायैवान्नवद्वर्तनं प्राप्तवन्तौ स्थ इत्यस्य देवस्येति श्रुत्यर्थः ।

युक्त्यन्तरेण पशुपतेर्जगत्कारणत्वमपाकरोति— **सम्बन्धानुपपत्तेश्च** इति । अशरीरत्वेन पशुपतेः कर्तृत्वायोगात् कर्तृकार्यभावेन सम्बन्धानुपपत्तेरिति सूत्रार्थः । रुद्रो न कर्ता अशरीरत्वात् मृतपुरुषवदिति प्रमाणमनेन सूचितमिति भावः ।

हेत्वन्तरेण जगत्कारणत्वं निराकरोति— **अधिष्ठानानुपपत्तेश्च** इति । अधिष्ठानाभावादपि न पशुपतेर्जगत्कारणत्वमिति सूत्रार्थः । इदमुक्तं भवति— रुद्रो न कर्ता निरधिष्ठानत्वात्, यः कर्ता स साधिष्ठानः यथा कुलालादिरिति ।

उक्तमाक्षिप्य समाधत्ते— **करणवच्चेन्न भोगादिभ्यः** इति । करणवत् कृतिविषयीभूतं जगद्रूप-कारकजातमेव पशुपतेः शरीरं भविष्यतीति न तस्य कारणत्वानुपपत्तिरिति सूत्रे आक्षेपांशार्थः । न च कारकजातस्य शरीरत्वानुपपत्तिः, साक्षात्प्रयत्नाधिष्ठेयतया अस्मदादिशरीरसमत्वेन तस्य तच्छरीरत्वोपपत्तेः । साक्षात्प्रयत्नाविशिष्टे च विषयसत्त्वेऽपि दर्शनमात्रेण शरीरान्तरापेक्षायामन-वस्थाप्रसङ्गात् । तस्यैवाधिष्ठानत्वोपपत्तेश्च प्रलयेऽपि कारककलापस्य सत्त्वेन तमादायैव सृष्टिकाले कार्यजन्मादिसम्भवादिति । तन्न, तथासति पशुपतेः शरीरत्वप्रयुक्तसुखदुःखभोगप्रसङ्गात् उत्पत्ति-विनाशप्रसङ्गाच्चेति परिहारार्थः । अयं भावः— जगद्रूपकारकजातस्यैव साक्षात् प्रयत्नाधिष्ठेयतया शरीरादिवदेव कर्तृत्वोपयोगिता तर्हि तदुपादानहाननिमित्तोत्पत्तिमरणे च पशुपतेः स्याताम् । तथा-विधशरीरे उपादानहानाभ्यामस्मदादिषु तददर्शनात् । तथाच तत्प्रयुक्तसुखदुःखप्राप्तिश्च स्यात् । ततश्चास्मदाद्यविशेषान्न पशुपतेर्जगत्कर्तृत्वमिति ।

उक्तपक्षावेव विकल्पभङ्ग्या दोषान्तरेण दूषयति— **अन्तवत्त्वमसर्वज्ञता वा** इति । पशुपतेः शरीरत्वे यज्ञदत्तवदन्तवत्त्वप्रसङ्गः । अशरीरत्वे च ज्ञानाभावप्रसङ्ग इति सूत्रार्थः । अन्तवत्त्वमित्युत्पत्ति-मत्वोपलक्षणम् । अयमाशयः— पशुपतिः कर्तेति वदता स शरीरीति स्वीक्रियते उत न, आद्ये यज्ञ-दत्तस्योत्पत्तिविनाशौ स्यातामिति तद्वदेव जगत्कर्तृत्वं न स्यात् । द्वितीये तस्य ज्ञानमेव न स्यात् । कुतः सार्वज्ञं कुतश्च जगत्कारणत्वम् । शरीराभावे कुतो ज्ञानाभाव इति चेत् विमतो ज्ञानरहितो भवितुमर्हति, शरीररहितत्वात् यो ज्ञानवान् स शरीरी यथा यज्ञदत्त इत्यनुमानादित्यवैहि । न च वाच्यमिच्छाग्राहीति विग्रहत्वान्न तस्यान्तवत्त्वादीति शरीरत्वे इच्छाया एवायोगात् । एतेन 'विमतं ज्ञानं शरीरापेक्षं नित्य-त्वादि'ति परास्तम् । तज्ज्ञाननित्यत्वस्यैवासिद्धेरिति ।

ननु विष्णावप्येते दोषाः प्रसरन्त्येवेति न तस्यापि जगत्कर्तृत्वमुपपद्यते इति चेन्न, 'सर्वधर्मो-पपत्तेश्चे'त्यादिना सूत्रकृता निरस्तत्वात् । किञ्च यदात्मको भगवांस्तदात्मिका व्यक्तिः । किमात्मको भगवान् ज्ञानात्मकः ऐश्वर्यात्मकः शक्त्यात्मक इति । बुद्धिमनोऽङ्गप्रत्यङ्गवत्तां भगवतो लक्षयामहे । बुद्धिमान् मनोवान् अङ्गप्रत्यङ्गवान् इति 'सद्देहसुखगन्धश्च ज्ञानभाः सत्पराक्रमः । ज्ञानज्ञानः सुखसुखः स विष्णुः परमोऽक्षरः' इत्यादि श्रुत्या विष्णोर्लोकविलक्षणदेहादिमत्त्वावेदनेन तत्र न दोषगन्धावकाश

इति । तत्र बुद्धीति श्रुत्या ईश्वरस्य शरीरत्वाभिधात्र्या ज्ञानाभावादिदोषाः यदात्मक इत्यादिश्रुत्या तु देहस्य ज्ञानाद्यात्मकभगवत्स्वरूपत्वाभिधात्र्या अन्तवत्त्वादिदोषाः परिहृता इति द्रष्टव्यम् । तस्मात् पाशुपतसमयस्यानुपपन्नत्वेनाविरोधकत्वाद्युक्तं लक्षणसूत्रमिति ।

## उत्पत्त्यधिकरणम्

इदानीं शक्तिसमयं निराकरोति— **उत्पत्त्यसम्भवात्** इति । ननु शक्तिरेव खलु सर्वज्ञादिगुण-शालिनी सकलजगज्जननी श्रुतिस्मृतीतिहासपुराणेषु पठ्यते । अतो हरेः न जगत्कारणत्वं लक्षणं सम्भवतीति शङ्कानिरासायेदं सूत्रम् । पुरुषाननुगृहीतकेवलस्त्रीत उत्पत्त्यसम्भवादिति सूत्रार्थः । न शक्तेरेव जगत्कर्तृत्वं युक्तम् । पुरुषाननुगृहीतत्वात् । न हि पुरुषाननुगृहीतस्त्रीव्यक्तिमात्रात् क्वचिदुत्पत्तिर्दृष्टेति भावः ।

नन्वस्त्येव शक्त्यनुग्राहकः पुरुषः सदाशिवोऽतस्तस्या जगदुत्पत्तिर्युक्तेति केषाञ्चिच्छाक्तेयानां यन्मतं तन्निराकरोति— **न च कर्तुः करणम्** इति । कर्तुः शक्त्यनुग्राहकस्य सदाशिवस्य उत्प-त्त्युपयोगि ज्ञानादिसाधनं न विद्यत इत्यतोऽप्युत्पत्त्यनुपपत्तिरिति सूत्रार्थः । अयमाशयः— यद्यपि त्वया शक्त्यनुग्राहकपुरुषोऽङ्गीक्रियते तथापि तस्य जगदुत्पत्त्युपयोगि ज्ञानादिसाधनाभावात् ततोऽपि जगदुत्पत्त्यनुपपत्तिरिति । शक्त्यनुमानग्राहकस्य पुंसः सार्वज्ञादिसद्भावेन जगदुत्पत्तिरिति केचित् । शक्त्यनुग्राहकस्य पुंसोऽपि ज्ञानादिकरणसद्भावाङ्गीकारे च तदप्रतिषेधः । तस्य पाशुपतमतस्यानेन शाक्तोऽयं तेनाप्रतिषेधः कुतः स्यात्तत्रैवान्तर्भावः स्यादिति सूत्रार्थः । तच्च निरस्तमिति भावः ।

एवं शाक्तेयमतं निराकृत्य समुदितदूषणेनापि तन्निराचष्टे— **विप्रतिषेधाच्च** इति । असमञ्जसं शाक्तमतमिति शेषः । अथ च शक्तिमतमसमञ्जसं विप्रतिषेधात् श्रुत्यादिविरुद्धत्वाच्चेति सूत्रार्थः । यद्यपि पूर्वन्यायेनैव शक्तिमतं निरस्तम्, तथाप्यसाधारणदोषाविष्करणेन पुनस्तन्निराकरणमेव सूत्रकृता कृतमिति नैतदधिकरणवैयर्थ्यमिति द्रष्टव्यम् । तस्माच्छाक्तमतस्यायुक्तत्वात् तद्विरोधाभावेन उपपन्नमेव विष्णो-र्जगत्कारणत्वमिति ।

*इति श्रीविजयीन्द्रभिक्षुणा कृते भाष्यतत्त्वप्रकाशिकावाक्योद्धाररूपे*
*मुकुरनाम्नि ग्रन्थे द्वितीयाध्यायस्य द्वितीयः पादः ॥*

★ ★ ★

# अथ द्वितीयाध्यायस्य तृतीयः पादः

## १. वियदधिकरणम्

अनेन तृतीयपादेन श्रुतिविरोधं परिहरति सूत्रकारः । युक्तिसमयविरोधपरिहारे कृतेऽपि श्रुतिविरोधपरिहाराय तन्मतं निरस्यति— **विज्ञानादिभावे वा तदप्रतिषेधः** । करणेन वेदसमन्वयेन विष्णोर्जगत्कारणत्वं सिद्ध्यति, वेदानां परस्परविरोधापरिहारे व्याहतभाषित्वेनाप्रामाण्यापातात् । न हि अप्रमाणसिद्धार्थः सिद्ध्यति । तथाच वेदस्य विष्णोर्जगत्कारणत्वसिद्ध्यर्थं श्रुतीनां परस्परविरोधोऽवश्यं परिहरणीयो भवति । तत्र श्रुतिविरोधश्च अधिभूतादिविषयोऽध्यात्मविषयश्चेति द्विविधः । तत्र जिज्ञासोरध्यात्मविषयविचारस्यान्तिमत्वादधिभूतादिविषयश्रुतीनां परस्परविरोधं प्रथममस्मिन्पादे सूत्रकारः परिहरति । न च वाच्यं श्रुतीनां जीवादिविषय एव विरुद्धत्वेनोक्तविरोधाभावात् व्यर्थः पादद्वयारम्भ इति । अभ्युपगतार्थद्वयेऽन्यतरार्थे श्रुतीनामप्रामाण्यप्राप्तौ तदितरार्थेऽप्यनाश्वासप्रसङ्गात् जगत्स्वरूपानिर्णये तत्कारणत्वानिर्णयाच्च । अत्र पादे 'ज्ञोऽत एव' इत्यारभ्य आपादपरिसमाप्तेर्जीवविचारः । 'असम्भवस्तु, नात्माश्रुतेः' इत्यधिकरणद्वये परमात्मविचारः । एकैकस्मिन्नेवाधिकरणे अधिभूतादिविचारः । अतो विचारबाहुल्याभिप्रायेण क्रमोल्लङ्घनमिति द्रष्टव्यम् । अधिभूतं नाम सकारणकार्यभूतानि तदभिमानिदेवता अधिदैवतम् । तत्र भूतेष्वाकाशस्योत्पत्त्याद्यष्टके चोत्पत्तेः प्राधान्यात् ब्रह्मणि च श्रुतिसमन्वयसिद्ध्यर्थं आकाशोत्पत्तिश्रुतिविरोधोऽत्र प्रथमाधिकरणे निराक्रियते— **न वियदश्रुतेः** इति ।

ननु वियदनुत्पत्तिमदेव, तदुत्पत्त्यङ्गीकारेऽनुभवविरोधात् युक्तिविरोधात् बहुश्रुतिविरोधाच्च न हि वियत उत्पत्तिरनुभवानुसारिणी । वियदनुत्पत्तिमद्विभुत्वादित्यनुमानेन तदनुत्पत्तेरेव सिद्धेः । अनादिर्वा अयमाकाशः इत्यादि बहुश्रुत्या तदनुत्पत्तेरेव सिद्धेश्च । 'आत्मन आकाशः सम्भूतः' इत्याकाशोत्पत्त्यावेदकश्रुतेरुक्तानुभवाद्यनेकप्रमाणविरुद्धत्वेन प्रामाण्यानुपपत्त्या ततस्तदुत्पत्तिसिद्ध्ययोगात् । अत एव तदनुत्पत्तिश्रुतीनां भोक्तृत्ववर्णनं च परास्तम् । तस्मादाकाशोत्पत्तिश्रुतेरप्रामाणिकत्वांदयुक्तं ब्रह्मणि श्रुतिसमन्वयेनाकाशकारणत्वम् । सम्भूतिश्रुतेरन्यार्थत्वेनाविरुद्धत्वाश्रयणे वाच्यादावपि तथात्वाश्रयणप्रसङ्गात् न ह्यस्ति सम्भवो शब्दः यत्र श्रूयते स तत्र अमुख्यः यत्रानुषज्यते तत्र मुख्य इति । अतो दुष्परिहरं श्रुत्यप्रामाण्यमिति शङ्कानिरासायेदं सूत्रम् । अत्रोत्पत्त्यसम्भवादिति प्रकृतानुत्पत्तिः सम्बद्ध्यते । वियदनुत्पत्तिमन्न, तथानुत्पत्तौ श्रुत्यभावादिति सूत्रार्थः ।

ननु न वियदुत्पत्त्यभावे पृथगपि प्रमाणं नियमेन वक्तव्यम् । उत्पत्तौ प्रमाणाभावादेव तत्सिद्धेः, न वेदे प्रमाणाभावेऽपि प्रमाणापेक्षः स्यादित्याशङ्कां निराचष्टे— **अस्ति तु** इति । अस्त्येवाकाशोत्पत्तिश्रुतिः 'आत्मन आकाशः सम्भूतः' इत्यादिकेति सूत्रार्थः । न च आकाशोत्पत्तौ प्रमाणाभावः । उदाहृतश्रुतेरेव विद्यमानत्वादिति भावः ।

न वियत उदाहृतश्रुत्योत्पत्तिः सम्भावयितुं शक्यम् । अनादित्वाभिधायकोदाहृतश्रुतिविरोधादित्याशङ्कां परिहरति— **गौण्यसम्भवात्** इति । 'अनादिर्वाऽयमाकाशः' इत्याद्युदाहृतश्रुतिर्गौणी, अन्यथा तदुत्पत्त्यावेदकश्रुतीनां गत्यसम्भवादिति सूत्रार्थः । अयमाशयः— आकाशोत्पत्तिश्रुतिरेव मुख्यार्थपरा । अनादित्वश्रुतिस्तु गौणानादित्वपरा । तथाहि— आकाशपदेन भूताकाशतद्देवता उच्यन्ते । तत्र भूतं स्वरूपत एवोत्पद्यते रूपित्वात्, आकाशो नीलिमोदेति इति श्रुतेस्तदभिमानिनोऽपि शरीरोत्पत्तिद्वारोत्पत्तिः । अवकाशतदभिमानिनोरपि अस्ति पराधीनविशेषलाभलक्षणोत्पत्तिरिति सर्वविषयत्वादुत्पत्तिश्रुतिर्मुख्यार्था । तदनादिश्रुतिस्तु न सर्वविषयेति गौणीभूते तदर्थस्य बाधिततया कथमपि तस्यास्तत्राप्रवृत्तेः ।

ननूत्पत्तिश्रुतेर्भूताकाशतदभिमान्यव्याकृताकाशतदभिमानिसर्वविषयत्वेन मुख्यार्थत्वेऽप्यनुभवानुसारिबहुश्रुतिविरोधेनाप्रामाण्यमेव युक्तमिति चेन्न, उत्पत्तिश्रुतीनामपि बहुत्वसत्त्वात् । आकाशेऽनुत्पत्त्यनुभवासिद्धेश्च । अनेन विभुत्वाद्यनुमानविरोधोऽपि निरस्तः । भूताकाशतदभिमानिनोर्विभुत्वासिद्धेरिति । न केवलमाकाशोत्पत्त्यनादित्वश्रुतीनां मुख्योत्पत्तिगौणानादित्वविषयतया व्यवस्थोक्तसर्वयुक्तिसिद्धा, अपि तु श्रुतिसिद्धा चेत्याह— **शब्दाच्च** इति । 'अथ ह वाव नित्यानि पुरुषः प्रकृतिरात्मा कालः इति, अथ यान्यनित्यानि प्राणः श्रद्धाभूतानि भौतिकानीति । यानि ह वा उत्पत्तिमन्ति तान्यनित्यानि । यानि ह वा अनुत्पत्तिमन्ति तानि नित्यानि । न ह्येतानि कदाचनोत्पद्यन्ते न लीयन्ते पुरुषः प्रकृतिरात्मा काल इति । अथैतान्युत्पत्तिमन्ति चानुत्पत्तिमन्ति च प्राणश्रद्धाकाश इति भागशः उत्पद्यन्त इत्युक्तव्यवस्थाप्रतिपादकभाल्लवेयश्रुतिरूपशब्दसत्त्वाच्चेति सूत्रार्थः । अत्र श्रुतावात्मा परमात्मा जीवचैतन्यप्रकृतिस्वरूपकालप्रवाहा उच्यन्ते । तदभिमानिचित्प्रकृतिश्च प्राणो मुख्यवायुः श्रद्धा तत्पत्नी जीवचैतन्यमात्रवाचिपुरुषपदेन गृहीतयोरपि अनयोश्चैतन्यमात्रादधिकमपि अस्ति इति दर्शयितुं पुनः सपरिकरयोर्ग्रहणम् । उक्तप्रतिज्ञाद्वयसमर्थनाय व्याप्तिरुच्यते, यानीति नित्यत्वव्याप्तिः । तस्यानादित्वहेतोरुपनयो न हीति । न लीयन्त इति निगमनम् । स एवमनित्येष्वपि प्राणादीन्युत्पत्तिमन्ति तस्माल्लीयन्त इत्युपनयनिगमने द्रष्टव्ये । प्राणादीति न सर्वेषामनित्यत्वमेवोच्यते, अथेति तस्मान्नित्यानीति

शेषः । अत्रोत्पत्तिर्भागश इति बहुभागैरुत्पद्यन्ते कैश्चिन्नोत्पद्यन्त इत्यर्थः । तत्प्रकाशश्चाकाशस्योक्तः, प्राणस्योपरि वक्ष्यते ।

ननु भवेदाकाशस्य गौणमनादित्वमुत्पत्तिर्मुख्यत इति व्यवस्था, यद्यनादित्वश्रुतिर्भाक्ता भवेत्, नैतदस्ति, 'न जायत म्रियत' इत्यादिश्रुतावनुत्पत्तिमच्छब्दस्य मुख्यार्थत्वदर्शनादित्याशङ्कां परिहरति— **स्याच्चैकस्य ब्रह्मशब्दवत्** इति । एकस्यैवाकाशस्योत्पत्तिमत्त्वमनुत्पत्तिमत्त्वं च मुख्यगौणापेक्षया स्यादेवेति । तत्र अनुत्पत्तिमच्छब्दो ब्रह्मशब्दवद्गौण इति सूत्रार्थः । अयमाशयः— एकस्यैवाकाशस्य गौणमुख्यापेक्षया अनुत्पत्तिमत्वम् उत्पत्तिमत्त्वं चेत्युक्तव्यवस्था युक्तैव । अनुत्पत्तिमच्छब्दस्य ब्रह्मणि मुख्यार्थस्याकाशे अमुख्यार्थस्य चोपपत्तेः । यथा परे ब्रह्मणि मुख्यब्रह्मशब्दस्य चतुर्मुखादावमुख्यार्थत्वं तद्वत् ब्रह्मशब्दस्य च मुख्यत्वं 'अथ कस्मादुच्यते परं ब्रह्मे'त्यादिश्रुतिसिद्धम् । ब्रह्मशब्दार्थस्य गुणपूर्तेः ब्रह्मणीव विरिञ्चादिष्वभावादिति भावः ।

ननु ब्रह्मशब्दस्य युक्तं ब्रह्मणि मुख्यत्वम् अन्यत्र अमुख्यत्वं च, कारणसद्भावात् । प्रवृत्तिनिमित्त-पौष्कल्यस्यैव मुख्यतः शब्दप्रवृत्तौ कारणत्वात् । न च प्रकृते तथा कारणमुपलभ्यते, इत्याशङ्कां परिहरति— **प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः** इति ।

ब्रह्मणो 'ब्रह्मव्यतिरिक्तस्य च तुल्यवन्मुख्यत उत्पत्तिमत्त्वराहित्ये इदं सर्वमसृजत' इति श्रौत-प्रतिज्ञाहानिः स्यात् । आकाशस्यापि सृष्टिविषयतया श्रौतप्रतिज्ञाविरोधः । सर्वशब्दार्थान्तर्गतत्वेन तदनित्यत्वाभावात् । ब्रह्मणो मुख्यतोऽनादित्वस्य तदितरस्य प्रागसत्त्वेन सादित्वस्य च 'आत्मा वा इदमेक एवाग्र आसीत्, एकमेवाद्वितीयम्, इदं वा अग्रे, नैव किञ्चनासीत्' इत्यादि श्रुतिरूपशब्देभ्यः स्फुटप्रतीतेरिति सूत्रार्थः ।

इदमत्राकूतम्— यदि ब्रह्माकाशयोरुभयोरप्यनुत्पत्तिमच्छब्दस्तुल्यवन्मुख्योऽङ्गीक्रियते तदा ब्रह्मेदं सर्वमसृजतेति श्रौतप्रतिज्ञाविरोधः स्यात् । अतो ब्रह्मण्येव मुख्योऽनुत्पत्तिमच्छब्दोऽन्यत्रा-काशादावमुख्य इत्येव स्वीकार्यम् । न चात्र श्रुतावाकाशस्य श्रवणं तस्य सर्वशब्देन सङ्ग्रहात् सङ्कोचे कारणाभावात् । आकाशब्रह्मणोः सादित्वानादित्वयोः प्रतिज्ञाश्रुतौ स्फुटं प्रतीतावपि 'आत्मा वा इदमेक एवाग्र आसीत्' इत्युदाहृतश्रुतिषु तयोः सादित्वानादित्वयोः स्फुटं प्रतीयते । बहुश्रुतिविरोधेन अनादिर्वा अयमाकाशः इत्याकाशानादित्वश्रुतेर्गौणपरताया एव न्यायप्राप्तत्वात् । यद्यपि गौण्यसम्भवादित्यनेन अयमर्थः साधितस्तथापि स एवात्र विवृत इत्यदोष इति ।

अनुत्पत्तिश्रुतेर्मुख्यामुख्यत्वसिद्ध्यर्थमनुमानेनापि ब्रह्मण एवानादित्वं तदन्येषां सादित्वं च साधयति— **यावद्विकारं तु विभागो लोकवत्** इति । अत्र विक्रियत इति व्युत्पत्त्या विकारशब्दो विकारपरः । यावदवधारण इत्यव्ययीभावः । विभज्यते इति व्युत्पत्त्या विभागशब्दो विभक्तपरः । तथाच यो विभक्तः स विकार्येव स उत्पत्तिमानेव, यथा लोके घटादिरिति सूत्रार्थः । यदुत्पत्तिरहितं तदविभक्तं लोकवत् व्यतिरेकेण घटादिवदिति तुशब्दार्थः । अत्रेमौ प्रयोगौ विवक्षितौ— वियदुत्पत्तिमत् विभक्तत्वादल्पशक्तित्वात् घटादिवत् । ब्रह्म नोत्पत्तिमत् अविभक्तत्वात् पूर्णशक्तित्वात् व्यतिरेकेण घटादिवदिति विकारिण एव विभक्ता दृश्यन्ते । न त्वविकारिणः । अतो विभक्तस्य न विपक्षगामितेति भावः । न चात्रार्थे मानाभावः, 'एकोऽविभक्तः परमः पुरुषो विष्णुरुच्यते । प्रकृतिः पुरुषः कालरूप एते विभागतः । चतुर्थस्तु महान् प्रोक्तः पञ्चमोऽहङ्कृतिर्मता । तद्विभागेन जायन्त आकाशाद्याः पृथक् पृथक् । यो विभागी विकारः सः सोऽविकारो परो हरिः । अविभागात्परानन्दो नित्यो नित्यगुणात्मकः । विभागो ह्यल्पशक्तित्वं न तदस्ति जनार्दन' इति बृहत्संहितावचनस्यैव तत्र मानत्वात् । अस्यायमर्थः— एको विष्णुरविभक्तः । प्रकृत्यादयस्त्रयोऽर्था विभागवत्त्वेन प्रोक्ताः । महानपि तथा प्रोक्तः । अहङ्कृतिरपि विभक्तत्वेन मता । यद्येवं किं तर्ह्यत आह— तद्विभागेन जायन्त इति । स चासौ विभागश्चेति तथोक्तः । तेन हेतुना आकाशाद्याः पृथक् पृथगिति परम्परया नैकस्मात् विभागत्वेऽपि कुतो जन्मेति, तदाह— यत इति । विष्णुरविभक्तश्चेत्ततः किमित्यत आह— स इति । द्रव्यत्वादविभागादित्यसिद्धमित्यत आह— विभाग इति । न चास्य प्राचीनश्रुतिविरोधः, तत्र स्वरूपोत्पत्तेरभावस्योक्तत्वात् । अनेन न वियदश्रुतेरिति सौत्रं वियत्पदं अनादित्वेन प्रसिद्धानां प्रकृत्यादीनामुपलक्षणार्थ इति सूचितं भवति । अतः श्रुत्यविरोधेन भगवदितरस्योत्पत्तिसिद्धेर्युक्तः सर्वकारणे ब्रह्मणि श्रुतिसमन्वय इति ।

## २. मातरिश्वाधिकरणम्

ननु सर्वोत्पादको हरिरित्यभिहितमयुक्तम्, 'अथ ह नित्याश्चानित्याश्च तेजोऽबन्नान्याकाश इति तान्यनित्यानि, वायुर्वा नित्यो वायुना हि सर्वाणि भूतानि नेनीयन्ते', ' अथ ह चेतनाश्चाचेतनाश्च तेजोऽबन्नान्याकाश इति । तान्यचेतनानि वायुर्वाव चेतनो वायुना हि सर्वाणि भूतानि विज्ञायन्ते । सा वा एषा देवता अनादिर्योऽयं पवत' इति श्रुतिभ्यां वायोरुत्पत्तेरावेदनात् । न चाकाशानुत्पत्तिश्रुतिवत् तयोर्गौणार्थत्वम्, तथा सत्याकाशादिवत् मुख्यवायोरुत्पत्तिः अनुत्पत्तिमत्त्वे तेजोऽबन्नाकाशानामनित्यत्वमुक्त्वा तत्र वायोर्नित्यत्वोक्तिरयुक्ता स्यात् । न चाकाशपदेन भूतमेवात्र विवक्षितमित्यत्र

किमपि नियामकमस्ति । किञ्च वायोरनुत्पत्तिर्गौणीति स्वरूपमात्रविषयेति वक्तव्यम् । तथासति तस्य सर्वचेतनसाम्येनातिशयितचेतनत्वमयुक्तं स्यात् । न च वायोरुत्पत्तिमत्त्वे तस्य सर्वदेवोपास्यता घटते । न च तस्य सर्वदेवोपास्यत्वे मानाभावः, 'कुविदङ्गनमसा ये वृधासः पुरा देवा अनवद्यास आसन् । ते वायवे मनवे बाधितायाऽऽवासयन्नुषसं सूर्येणे'ति श्रुतेरेव तत्र मानत्वात् । हे अङ्ग हे देवाः वायोर्नमस्कारादिना ज्ञानादिगुणपूर्णाः अज्ञानादिविधुराश्च पुरा आसन् । ते क्वचिद्रहस्यस्थाने सूर्येण साकं मनवे ज्ञानिने संसारबन्धवद्भिः शरणं प्राप्ताय वायवे बुद्धिमावासयन् तद्विषयामकुर्वन्निति तच्छ्रुत्यर्थप्रतीतेः । किञ्च तस्योदयनिम्लोचाभावे कुतो जन्मसम्भवः । एवंविधस्य चोत्पत्त्यङ्गीकारे अनुभवव्याकोपः स्यात् । अतोऽत्यन्तमनुभूतियुक्तबहुवाग्विरोधेन वायोरुत्पत्त्ययोगात् तदुत्पत्तिरप्रमाणमेवेति जगत्कारणे ब्रह्मणि न वेदसमन्वयो युक्त इत्यभ्यधिकाशङ्कया पूर्वपक्षितेऽतिदेशेन सिद्धान्तयति— **एतेन मातरिश्वा व्याख्यात** इति । एतेन अथैतान्युत्पत्तिमन्ति चानुत्पत्तिमन्ति च प्राणश्रद्धाकाश इति । भागश उत्पद्यन्त इत्युदाहृतमुख्यामुख्यानुत्पत्तिवचनेन विभक्तत्वयुक्त्या च मातरिश्वा 'सा वा एषा देवता अनादिर्योऽयं पवते' इत्यादिना एवानुत्पत्तिश्रुतिरपि वायोर्गौणानुत्पत्तिपरेति व्याख्याता पर्यवस्यतीति सूत्रार्थः ।

अयमाशयः— मुख्यवायुरप्युत्पत्तिमानेव । अनुत्पन्नत्वेनाश्रुतत्वात् । 'प्राणाद्वायुरजायत' इत्यादावुत्पन्नत्वेन श्रुतत्वाच्च । न चैवं वायुर्वाव नित्यः, 'सा वा एषा देवता अनादिर्योऽयं पवत' इत्याद्युदाहृतश्रुत्या वाय्वनुत्पत्तिः श्रूयत इति तद्विरोधः, तस्य स्वरूपविषयत्वेनाकाशानुत्पत्तिश्रुतिव्याख्यानेनैव व्याख्यातत्वात् । अनुत्पत्तिश्रुतेस्तु पुनः शरीरविषयत्वाद्यवस्थोपपत्तेः । न चैवं व्यवस्थाभ्युपगमे कारणाभावः, 'अथैतान्युत्पत्तिमन्ति चानुत्पत्तिमन्ति च प्राणः श्रद्धा आकाश इति भागश उत्पद्यन्त' इति वायोर्मुख्यामुख्योत्पत्त्यनुत्पत्त्यभिधायकश्रुतिवचनसत्त्वात् । अनुत्पत्तिश्रुतिर्ब्रह्मण्येव मुख्या अन्यत्र त्वमुख्येत्यस्यार्थस्य 'स्याच्चैकस्य' इत्यादिसूत्रे व्यवस्थितत्वाच्च । विभक्तशक्तित्वाच्च वायोर्मुख्यानुत्पत्त्यनुपपत्तेः । किञ्च वायोरनुत्पत्तिं वदन् प्रष्टव्यः— किं वायुरेवानादिरीश्वरोऽपि वा । नाद्यः, प्रमाणविरोधेन वायोरेवानुत्पत्तिरित्यस्यानुपपन्नत्वात् । न च द्वितीयः । द्वयोरपि स्वातन्त्र्यापातात् । पराधीनविशेषलाभो ह्युत्पत्तिः । न च स्वातन्त्र्यं द्वयोर्युक्तम्, अन्योन्यानुरोधाननुरोधयोर्विरोधात् । अतो वायोर्मुख्यानुत्पत्तौ बाधकसद्भावात् युक्तैवोक्तव्यवस्थेति ।

ननु वायोर्मुख्यानुत्पत्त्यभावे वियदादिभ्य उत्पत्त्यनुत्पत्तिमद्भ्यो विशेषेणानुत्पत्तिश्रुतिर्मुख्यचेतनत्वादियुक्तिश्च कथं विरुद्धा स्यादिति चेन्न, ''नित्यः परमनित्यश्च तथाऽनित्यः परस्तथा । चतुर्धैत-

ज्जगत्सर्वं परानित्यं तु पार्थिवम् । अनित्यानि तु भूतानि नित्यो वायुरुदाहृतः । परस्तु नित्यः पुरुषः प्रकृतिः काल एव च । एतच्चतुष्टयं विष्णुः स्वयं नित्यः परात्परः । प्रतिव्यूह्य व्यूह्य चासावतीत्य च जनार्दनः । धारयत्यनिशं देवो नित्यानन्दैकलक्षणः'' इति कौर्मवचनेन श्रुतियुक्तिविरोधपरिहारात् । अत्र कौर्मवचने परात्परः नित्य एतद् व्यूह्य स्वात्मानं च तत्र प्रतिव्यूह्य स्वगुणैस्तदतिक्रम्य धारयतीत्यर्थः । अत्र वायोः परात्परनित्यत्वं स्वातन्त्र्यलक्षणं परनित्यत्वं देहादेरपि नित्यत्वं च नास्त्येव । तथापि सम्यगनित्यताशून्येभ्यो नित्येभ्यो वियदादिभ्यः स्वरूपातिरिक्तज्ञाननित्यत्वाभिप्रायेण अतिशयेन नित्यतोच्यते । नन्वत्राकाशानन्तरं भूतवायोः प्राप्तिर्न मुख्यस्येति चेन्न, वायुशब्देन खलु भूततदमुख्यमुख्याभिमानिन उच्यन्ते । तत्र मुख्यवायुविषय एव विवादः प्राप्तः । न हि भूतादिविषये श्रुतिविरोधोऽस्ति । ननु तैत्तिरीयश्रुतौ आकाशाद्वायुः इति श्रूयते । छन्दोगश्रुतौ च तेजःपूर्वैव सृष्टिरिति कथं श्रुत्योर्विरोधो नेति चेन्न, उक्त्यनुक्त्योर्विरोधाभावात् । किं नित्यविभुवियदुत्पत्तौ निर्णीतायां वायुभूतविषये शङ्कासाम्यस्याप्यभावेन अधिकाशङ्का प्रागेव नास्तीत्युक्त एव सूत्रार्थ इति । अतः श्रुत्यविरोधेन वायोरुत्पत्तिसिद्धेर्युक्तो ब्रह्मणि सर्वश्रुतिसमन्वय इति ।

## ३. असम्भवाधिकरणम्

ननु सकलजगज्जन्मादिकारणं ब्रह्मेत्युक्तं, तदयुक्तम्, ब्रह्मणोऽप्युत्पत्तिमत्त्वेन कार्यकोटिनिविष्टतया सकलजगजन्मादिकारणत्वानुपपत्तेः । 'असद्वा इदमग्र आसीत्, ततो वै सदजायत' इत्यादिश्रुत्या सच्छब्दार्थस्य ब्रह्मणोऽप्युत्पत्त्यावेदनात् । असत एव तत्कारणतया श्रुतत्वात् ब्रह्मणोऽनादित्वेऽपि श्रुतिरस्तीति चेन्न, असम्भवदुद्भवयोः नभो नभस्वतोरुत्पत्तावनादितया समस्य ब्रह्मणोऽनुत्पत्तिरयुक्तेति जन्मश्रुतेः सयुक्तिकत्वेन प्राबल्यात् । अनुत्पत्तिश्रुतिस्तु सर्वात्मनानुत्पत्तिवादिनीत्यभिमानश्चेत्तर्हि अप्रमाणमेव । न चेदाकाशादाविव व्यवस्था स्यात् । अतो ब्रह्मणोऽप्युत्पत्तिमत्त्वान्न तत्राशेषकरणतया श्रुतिसमन्वयो युक्त इत्याशङ्क्याह— **असम्भवस्तु सतोऽनुपपत्तेः** इति । सतो ब्रह्मणोऽसम्भवः अनुत्पत्तिरेव, कुतः ? अनुपपत्तेः सतोऽसतः सकाशादुत्पत्तेरदृष्टत्वादिति सूत्रार्थः । अत्र तुशब्द उक्तव्यवस्थानिराकरणार्थः । अयं भावः— न तावत् 'असद्वा इदमग्र आसीत्' इति श्रुतिर्ब्रह्मण उत्पत्तौ मानम्, असतः प्रतीतिकार्थस्य सकाशात् पदार्थोत्पत्तेरेवायोगात् । तस्य सकाशात् पदार्थोत्पत्तेः काप्यदर्शनात् । न चैवं तच्छ्रुतेरप्रामाण्यप्रसङ्गः, असद्वेति श्रुतावसच्छब्दस्य ब्रह्मपरत्वेन सच्छब्दस्य च प्रमाणपरत्वेन तयोर्जन्यजनकभावप्रतिपादनपरतया अप्रामाण्यप्रसङ्गानवकाशात् । न च श्रौतासच्छब्दसच्छब्दयोः ब्रह्मप्रमाणपरत्वे मानाभावः । 'देवानां पूर्वे युगेऽसतः सदजायतेति ब्रह्म वा असत्

सद्वा व प्राणः प्राणो वाव महान् सह ओजो बलमित्याचक्षत' इति पैङ्गिश्रुतेः। तद्वा 'एतद् ब्रह्माहुः, बृहति बृंहयति चेति, तद्वा एतदसदाहुः न ह्यसादयति कश्चनेति, तद्वा एतत्परमाहुः परतो हि तदुदीक्ष्यत' इति श्रुत्यन्तरस्य, 'त्वं देव शक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविरादधेऽजः। ततो वयं सत्प्रमुखा यदर्थे बभूविमात्मन् करवाम किं ते' इति भागवतवचनस्य च तत्र प्रमाणत्वात्। ननु रामकृष्णादिरूपेण हरेर्जायमानत्वात् कथं जन्माभाव इति चेन्न, 'अजायमानो बहुधा विजायते' इति श्रुत्यैव अस्मदादि-साधारणजन्मप्रतिषिध्य हरेस्तद्विलक्षणजन्माभिधानात्। तादृशस्य जन्मनः सकलजगज्जन्माविघाति-त्वात्। नन्वजायमानत्वे हरेः कीदृशं जन्म स्यात् यदुदाहृतश्रुतेरालम्बनमिति चेत्, उच्यते— 'प्रत्य-क्षत्वं हरेर्जन्म न विकारः कथञ्चन। पुरुषः प्रकृतिः कालो महानित्यादिषु क्रमात्। विकार एव जननं पुरुषो तद्विशेषणम्। परतन्त्रविशेषो हि विकार इति कीर्तितः' इति पाद्मवचनेन 'अविकारोऽपि भगवान् सर्वशक्तित्वहेतुतः। विकारहेतुकं सर्वं कुरुते निर्विकारवान्। शक्तिशक्तिमतोश्चापि न विभेदः कथ-ञ्चन। अविभिन्नाऽपि सेच्छादिर्भेदैरपि विभाष्यते' इति भागवततन्त्रवचनेन च श्रुतिस्मृत्योर्भगवत्तदितर-जन्मनोरत्यन्तवैलक्षण्यज्ञापनाय लक्षणाभिधानात् तादृशजन्मादाय भगवतो जन्मप्रतिपादकश्रुतेः सालम्बनत्वमिति। अत्र स्मृत्यादौ हरेरुच्यमानं जन्म किं रूपमिति प्रश्नस्योत्तरं प्रत्यक्षत्वं हरेर्जन्मेति। क्रमादित्यस्य उपचयाधिक्यक्रमादित्यर्थः। पुरुषस्य चेतनत्वात् कथं विकार इत्यत आह— पुरुषो तद्विशेषणमिति। तेन विकारेण विशेषितं भवतीत्यर्थः। एवं तर्हि तस्य नोत्पत्तिरित्यत आह— परतन्त्रेति। ननु परमेश्वरस्य जगत्कारणत्वात् कथमविकारित्वं, तत्राह— अविकारोऽपीति। सर्व-शक्तित्वेन सर्वं करोति इत्यनेन हरेर्निमित्तत्वमेवेत्युक्तं भवति। विकारहेतुकं प्रकृत्याद्युपादानकं निर्विकारवानित्यनेन तद्धर्मदिरविकार उच्यते। ननु हरेः शक्त्या चेज्जगत्कारणत्वं तदा तद्विनाशे तदभावः स्यादिति चेत् तमाह— शक्तीति। इच्छाज्ञानप्रयत्नानां कर्तृत्वोपयुक्तत्वात् शक्त्या कथं तदित्यत आह— अविभिन्नाऽपीति। एकैवेत्यर्थः। एतेनेच्छादिपूर्वकं कारणत्वं नोपादानस्येत्युक्तं भवतीति पाद्मभागवततन्त्रवचनार्थो द्रष्टव्यः। अतः श्रुत्यविरोधात् ब्रह्मणोऽनादित्वसिद्धेर्युक्तस्तत्र श्रुतिसमन्वय इति।

## ४. तेजोऽधिकरणम्

ननु ब्रह्मणो जगत्कारणत्वेन सर्वश्रुतिवेद्यतेत्ययुक्तम्। 'वायोरग्निः' इति श्रुत्या वायोरपि तेजसो जातत्वावेदनात्। न च तेजसो वायुद्वारा परमात्मजातत्वाभिधायकत्वं तच्छ्रुतेरिति वाच्यम्; किं परमात्मा वायुद्वारमन्तरेण तेजः स्रष्टुमीष्टे न वा। आद्ये व्यर्थं तस्य वायुद्वारानुसरणम्। द्वितीये सिद्धं नः

समीहितम् । यावतास्माभिरप्युभयकारणत्वमेवेष्यते । 'तत्तेजोऽसृजत' इति श्रुतेरुभयकारणत्वेऽप्यविरुद्धत्वात् । अस्या ब्रह्ममात्रकारणत्वाभिधायकत्वे 'वायोरग्निः' इति निरवकाशश्रुतिविरोधापत्तेः । न चैवमप्रामाण्यापातादिति शङ्कायामाह— **तेजोऽतस्तथा ह्याह** इति । अतः परमात्मनः सकाशादेव तेजोऽजायत न वायोः । किं कारणम् ? 'तत्तेजोऽसृजत' इति श्रुतिस्तथैव वदतीति कृत्वेति सूत्रार्थः । 'वायोरग्निः' इत्यादिश्रुत्या वायोः सकाशान्न तेजस उत्पत्तिः सिद्ध्यति, किन्तु ब्रह्मणः सकाशादेव । 'तत्तेजोऽसृजत' इति श्रुतेः । 'वायोरग्निरि'त्यादिश्रुतेश्च वायुद्वारा ब्रह्मणस्तेजोजन्मेत्यर्थप्रतिपादनपरत्वेनाविरोधात् । न च द्वारवैयर्थ्यं ब्रह्मणस्तन्नैरपेक्ष्येणैव तेजोजनकत्वसम्भवादिति वाच्यम्; वाय्वादेरकारणत्वेऽपि वाय्वादिद्वारमनुसृत्य परमसमर्थस्यापि ब्रह्मणः स्वेच्छयैव तेजःप्रभृतिसर्जने प्रवृत्त्युपगमात् । ईश्वरप्रवृत्तेस्तथाविधत्वस्य श्रुत्यादिसिद्धत्वात् अन्यथा 'इच्छामात्रं प्रभोः सृष्टिः' इत्यादिश्रुत्या सृष्टेरीश्वरेच्छामात्रनिबन्धनत्वं नोच्यते इति ।

ननु कारणत्वेन चाकाशादिषु, 'यथा व्यपदिष्टोक्तेः' इत्यधिकरण एव वाय्वादिशब्दानां ब्रह्मणि समन्वयस्योक्तत्वात् । तत एव तेजसोऽपि ब्रह्मजातत्वस्य सिद्धत्वात् किं पुनरत्राधिकरणं निरूपणीयमस्तीति चेत् सत्यम्, तुल्यवदुभयकारणत्वशङ्कानिवृत्त्यर्थत्वेनापुनरुक्तेः । 'कारणत्वेन चाकाशादिषु' इति सूत्रेणेतच्छङ्काया अनिरासात् । तत्र वाय्वादीनामप्यमुख्यतया वाय्वादिशब्दवाच्यत्वस्याङ्गीकृतत्वेन तस्योभयकारणत्वाविरोधित्वात् । नन्वेतच्छ्रुतीनामुपादाननिमित्तविषयतया स्वत एव व्यवस्थितत्वात् नात्रोक्तशङ्कावकाशः, अत एव न तत्परिहारावसरश्चेति चेत् वायुप्रभृतीनां देवतात्वेनोपादनत्वशङ्काया एवानुदयात् । वायुप्रभृतीनां भूतत्वेनोपादानत्वसम्भवेऽपि तद्भूतोपादानत्वप्रयुक्तशक्तेरीश्वराधीनत्वाच्चेति न किञ्चिदनुपपन्नमिति । अतः श्रुत्यविरोधेन तेजसो ब्रह्मजातत्वसिद्धेर्युक्तो ब्रह्मणि वेदसमन्वय इति ।

## ५. अबधिकरणम्

ननु तथापि 'ननु सर्वकारणे ब्रह्मणि न श्रुतिसमन्वयः सिद्ध्यति', 'अग्नेरापः' इति श्रुत्या अपां तेजसः सकाशात् जन्मावेदनात् अपां परब्रह्मजन्यत्वेऽपि श्रुतिसत्त्वात्तयोर्विरोधः । विमता आपः तेजसो जायन्ते अप्त्वात् स्वेदादिवदिति युक्तियुक्तत्वेन 'अग्नेरापः' इत्यपां तेजोजातत्वावेदकश्रुतेः प्राबल्यात् बलवदेतच्छ्रुतिविरुद्धायास्तस्या एवाप्रामाण्योपपत्तेः । तथाच श्रुत्यन्तरं— 'तत्तेज ऐक्षत बहु स्यां प्रजायेयेति, तदपोऽसृजत, तस्माद्यत्र क्व च शोचति स्वेदते वा पुरुषस्तेजस एव तद्ध्यापो जायन्त' इति । ततश्च श्रुतिसमन्वयः सिद्धिरिति सिद्ध्यति चेत्तत्राह— **आपः** इति । अत्राप्यतस्तथा ह्याहेत्यनुषङ्गः । अत्राबिति पृथिव्याद्युपलक्षणम् । अतो ब्रह्मणः सकाशादेवाबादयो जायन्ते, किं कारणम्,

'ब्रह्मैवेदमग्र आसीत्, तदपोऽसृजत, तदिदं सर्वम्, एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणीम्' इत्यादिश्रुतिस्तथा ह्याह वाय्वतीतादि..........कृत्वेति सूत्रार्थः ।

अयमाशयः— 'अग्नेरापः' इति श्रुतेर्नाग्नेः सकाशादपामुत्पत्तिरस्तीति ग्राह्यं, किन्तु ब्रह्मण एव सकाशादापोऽपि जायन्त इत्येव ग्राह्यम् । 'ब्रह्मैवेदम्' इत्यादिश्रुतेः । न च वाच्यं विष्णोरिवान्येषामपि कारणत्वं किं न स्यात् । तथा श्रुतेरिति वाच्यम् । 'कर्ता सर्वस्य वै विष्णुरेक एव न संशयः । इतरेषां तु सत्ताद्या यत एव तदाज्ञया' इति भविष्यत्पुराणवचनेन इतरेषां स्वरूपसत्ताप्रवृत्त्यादेः विष्णवधीनत्व-वर्णनेन तेषां स्वातन्त्र्येण तत्तज्ज्ञानानुकूलशक्त्यसिद्धेः ।

ननु तथाप्युक्तयुक्त्युपेता 'अग्नेरापः' इत्यादिश्रुतयः कथं तर्ह्युपपद्यत इति चेत्, 'तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तीः प्रबोधयन् । एक एव महाशक्तिः कुरुते सर्वमञ्जसा' इति वामनपुराणवचनेनैव तत्र तत्र पदार्थेषु स्थित्वैव विष्णुस्तत्तच्छक्तीः प्रबोधयति, 'स एवैको महाशक्तिरिति कृत्वा सर्वं स्वेतर-चेतनाचेतनप्रपञ्चमात्रमञ्जसा कुरुत' इति वर्णनेन तेजःप्रभृतीनामबादिजनकता न भगवत्प्रेरणमन्तरेणेति उक्तयुक्त्युपेतायाः श्रुतेरनन्यथासिद्धप्रमाणत्वाभावेन तेजःप्रभृतीनां ततोऽबादिकारणत्वसिद्धिरिति । इदमुक्तं भवति— महाशक्तिरपि हरिर्लीलयैवाग्न्यादिषु स्थित्वाऽबादिकं जनयतीति सिद्धे उदाहृतश्रुति-युक्ती अपि तद्विवरणतयैवान्यथासिद्धेः इति । यद्यपि कारणत्वेन च इत्यत्रैवापां ब्रह्मणो जन्म सिद्ध-मिति व्यर्थमिदमधिकरणम्, उभयकारणत्वशङ्कानिवृत्तिरप्यव्यवहितपूर्वन्यायेनैव निरस्ता, तथापि भवतु वायोरग्न्युत्पत्तौ द्वारत्वप्रतिपादकता तच्छ्रुतेः । अत्र तु पुनरग्नेरापः प्रति कारणत्वमेव कुतः ? प्रत्य-क्षानुकूल्यात् धर्मात् स्वेदादिरूपाणामपां प्रत्यक्षत एवोपलब्धेरिति विशेषाशङ्कानिवृत्त्यर्थमेवेदमधि-करणमिति । तस्माच्छ्रुत्यविरोधेनापां ब्रह्मजातत्वसिद्धेर्युक्तो हरौ वेदसमन्वय इति ।

## ६. पृथिव्यधिकरणम्

ननु 'ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्तेत्यद्भ्योऽन्नसृष्टिः श्रूयते । 'अद्भ्यः पृथिवी पृथिव्या ओषधयः' इति कुत्रचिदद्भ्यः पृथिवीसृष्टिः श्रूयते । न चेदमुपपद्यते । क्रमिक-सृष्टावपां पृथिवीकारणत्वे अन्नकारणत्वानुपपत्तेः । अन्नकारणत्वे च पृथिवीकारणत्वानुपपत्तेः । तथाच परस्परविरुद्धार्थतयोदाहृतश्रुतिद्वयस्य अप्रामाण्यमेव स्यात् । द्वयोरप्यनयोः श्रुत्योर्निरवकाशत्वेन अन्यतरानुरोधेनान्यतरनयनायोगात् । न च पृथिवीपदेनान्नग्रहणम्, अद्भ्यः एवान्नसृष्ट्यङ्गीकारे 'अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्' इति श्रुतिविरोधात् । नापि पृथिव्यन्नयोरद्भ्यः एवोत्पत्तिः

स्वीकर्तुं शक्यते, उक्तश्रुतिविरोधादेव । न चान्नस्यैवाद्भ्यः ओषधीभ्योऽप्युत्पत्तिः स्वीक्रियत इति युक्तम्, तथासति बहुकल्पनापत्तेः । परम्परया अन्नोत्पत्तिस्वीकारे मुख्यार्थत्यागापत्तेः । न हि कारणं विना तत्त्यागो युज्यते । तस्मादुदाहृतश्रुतिद्वयस्य परस्परविरुद्धत्वादप्रामाण्यमेव । ततश्च न ब्रह्मणि समन्वयो युक्त इति शङ्कानिरासायाह— **पृथिव्यधिकाररूपशब्दान्तरादिभ्यः** इति । 'ता अन्नमसृजन्त' इति श्रुत्युक्तानां पृथिव्येव, कुतः 'तत्तेजोऽसृजत, तदपोऽसृज्यत' इति भूतविषयकप्रकरणाम्नातत्वात् कार्ष्ण्यलिङ्गात् 'पृथिवी वा अन्नम्, आपश्च पृथिवी चान्नम्, ता आपोऽन्नमसृजन्त, पृथिवी वा अन्नम्' इति शब्दान्तराच्चेति सूत्रार्थः । अत्रादिशब्देनोदाहृतश्रुत्या पृथिव्यन्नविषययोरप्रामाण्यकारणदोषशून्यत्वरूपयुक्तिः सूचितेति द्रष्टव्यम् ।

अयमाशयः— नात्रापां द्वारकारणत्वानिर्णयाच्छ्रुतिद्वयस्याप्रामाण्यं कल्प्यम्, अपां पृथिवीकारणत्वात् "ता अन्नमसृजन्त' इति श्रुतावन्नशब्देन पृथिवीग्रहणेन तद्विरोधानवकाशात् । न च तत्रत्यान्नशब्दस्य पृथिवीपरत्वे मानाभावः, 'तत्तेजोऽसृजत, तदपोऽसृजत, ता अन्नमसृजन्त, तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इति श्रुत्याम्नानस्यैव तत्र मानत्वात् । अस्याः श्रुतेर्भूतविषयत्वेन भूताधिकारत्वात् । सौत्राधिकारशब्दस्य अधिक्रियतेऽस्मिन् भूतमिति व्युत्पत्त्या भूतप्रकरणपरत्वात् अन्नस्य भौतिकत्वेन तस्यैव ग्रहणे प्रकरणविरोधात् वाक्यशेषे तासां त्रिवृतं त्रिवृतमिति त्रिवृत्करणोक्त्यनुपपत्तेश्च ।

नन्वन्नश्रुतौ जागरूकायां कथं प्रकरणमात्रेण पृथिवीति निर्णय इति चेत् 'यदग्नेर्रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तत्तेजसौ तदन्नस्य' इत्यस्यां श्रुतौ अन्नस्य कृष्णरूपत्वप्रतीतेः कृष्णरूपत्वस्य च प्राचुर्येण पृथिवीमात्रलिङ्गत्वात् तण्डुलविकारस्यैव लोकप्रसिद्धान्नत्वेन तत्र कृष्णरूपस्य काप्यनुपलम्भात् । न च पृथिवीवदन्ने प्राचुर्येण कार्ष्ण्यमुपलभ्यते । किञ्च 'रक्तोऽग्निरुदकं शुक्लं कृष्णैव पृथिवी स्वतः । नाभिपद्माभिसम्बन्धात् पीता सेत्यभिधीयते । क्षत्ररक्ताभिसम्बन्धाद्रक्तोदकबहुत्वतः । शुक्लत्वमेत्येवमेव वर्णान्तरगतिर्भवेत् । विष्णुवीर्याभियोगाच्च पीतत्वं भुव इष्यते । स्वर्णवीर्यो हि भगवान् अनादिः परमेश्वरः' इति व्योमसंहितावाक्यबलादपि प्राचुर्येण कार्ष्ण्यं पृथिवीधर्म इत्यवसीयते । किञ्च 'आपः पृथिवी चान्नं' इत्याद्युदाहृतश्रुतिष्वन्नशब्दस्य बहुलप्रयोगदर्शनेन तत्र तस्य वाचकत्वशक्तिरुन्नीयते । ततश्च प्रकरणाल्लिङ्गाच्छ्रुतेश्च अन्नशब्देन पृथिव्येव ग्राह्यत्वेन प्राप्तेति क्वोदाहृतपृथिव्यन्नश्रुत्योर्विरोधः । न चान्नश्रुतिः पृथिव्यन्नयोः साधारणीति वाच्यम्, तथापि प्रकरणलिङ्गाभ्यामनुगृहीतायास्तस्याः पृथिवीमात्रपरत्वे निर्णयोपपत्तेः । न चैवं यत्र क्वचन वर्षति तदेव

भूयिष्ठमन्नं भवति, अशितमन्नं त्रेधा विधीयते, इति वृष्टिजत्वाशितत्वरूपलिङ्गद्वयसहकारेणान्न-श्रुतिः प्रसिद्धान्नपरेति निर्णयः सम्भवति इति तथा श्रुत्योः सम्बन्धत्वमिति न विरोधतादवस्थ्यमिति वाच्यम्। 'यत्र क्वचन वर्षती'ति श्रुतेः पार्थिवपदार्थमात्रस्यौषधिवनस्पत्यादिरूपस्य वृष्ट्युत्पन्नत्वावेदन-परत्वेन अविरोधात् । अशितमित्यादिश्रुतेरपि तेजोऽशितमितिवत् पार्थिवविशेषाशितत्वप्रतिपादन-परत्वेनोपपत्त्या विरोधाभावाच्च । किञ्च उदाहृतपृथिव्यन्नश्रुत्योरेकस्यैव नाबाधेनैव प्रामाण्योपपत्ता-वप्रामाण्यास्वीकारायोगः । अन्यथा वेदो नाप्रमाणम्, अप्रामाण्यकारणदोषशून्यत्वात्, प्रत्यक्षवदिति प्रमाणविरोधः। न च हेतोरसिद्धिः, अपौरुषेयवाक्ये दोषासम्भवात्। वेदापौरुषेयत्वस्य प्रागेव समर्थि-तत्वात्। एवं युक्तिबलाद्वेदप्रामाण्यसिद्धौ विरोधस्याभासतयान्यार्थतैव कल्प्या नाप्रामाण्यम्। तथाच कूर्मपुराणवचनम्। 'विरोधवाक्ययोर्यत्र नाप्रामाण्यं तदेष्यते। यथाऽविरुद्धता न स्यात् तथार्थः कल्प्य एतयोः' इति एवं श्रुत्यविरोधेन अपां पृथिवीकारणसिद्धेर्युक्तो हरौ श्रुतिसमन्वय इति।

## ७. तदभिध्यानाधिकरणम्

एवमधिभूताधिदैवोत्पत्तिविषयश्रुतिविरोधः पराकृतः । सम्प्रति ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थं तत्संहारविषयः श्रुतिविरोधः परिह्रियते— **तदभिध्यानादेव तु तल्लिङ्गात्सः** इति । ननु तथापि न विष्णौ श्रुतिसमन्वयो युज्यते । 'प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः, तेनान्नेनाप्यायस्व' । इति श्रुत्या रुद्रस्यैव संहर्तृत्वावेदनात् 'रुद्रो मा विशान्तक' इति तत्रान्तकत्वश्रवणात्, हे रुद्र, त्वं प्राणानामाश्रयोऽन्तकश्चासि स त्वं मा मां विश आहुतिरूपेणान्नेन निमित्तेन मामाप्यायस्वे'ति तदर्थप्रतीतेः । न च रुद्रादीनां विष्णुपरत्वेनेयं श्रुतिस्तत्परा किं न स्यात्, रुद्रविषयत्वे वा रुद्रस्य संहारद्वाराभिधात्री किं न स्यादिति वाच्यम्, तथा कथञ्चिद्विष्णोः संहर्तृत्वाभ्युपगमे लोकविरोधात् । तस्य जगदुत्पादकत्वात्तत्पालकत्वाच्च । उत्पादकचेतनस्य पितृत्वेन मारकत्वायोगात् । लोके च पितुरन्यस्यैव मारकत्वदर्शनात् । न च रुद्रस्य संहर्तृत्वेऽत्यन्तसुप्रसिद्धेऽङ्गीक्रियमाणे विरोधोऽस्ति । 'यो प्राणानां ग्रन्थिरसि' इत्यादि श्रुतेरन्यार्थता कल्प्येत । विष्णोः संहर्तृत्वावेदकश्रुत्यपेक्षया रुद्र-संहर्तृत्वावेदकश्रुतेर्युक्तिसहितत्वेन प्रबलत्वात् । न च सा श्रुतिर्भक्तार्थपरेत्यविरोधः । तथापि युक्ति-विरोधानिस्तारात् । तथाच रुद्रस्यैव संहर्तृत्वादन्यश्रुतिरप्रमाणमेवेति शङ्कानिरासायेदं सूत्रम् । तस्य विष्णोरभिध्यानं तदभिध्यानं तदिच्छा, तत एव बन्धप्रलयः श्रूयत इति शेषः । ततश्च तल्लिङ्गा-दिच्छाधीनत्वलिङ्गवत् स तादृशेच्छावान् विष्णुरेव बन्धनिवृत्तिकर्तेत्यनुमीयत इति सूत्रार्थः । अत्र तुशब्दश्च कैमुतिकन्यायसूचनार्थः। अयमाशयः— विष्णुरेव जगत्संहारकर्ता, 'तस्याभिध्यानाद्योजना-

तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः' इति श्रुतौ तस्य तथाप्रतीतेः । विष्णौ मनो योजनात् भूयो भूयो यथार्थध्यानाच्च जातात् तस्य विष्णोरभिध्यानात् परिपाककाले विश्वान्धकमायानिवृत्तिर्भवतीति तच्छ्रुत्यर्थप्रतीतेः । किञ्च अतः तादृशबन्धनिवृत्तौ तदिच्छाधीनत्वरूपलिङ्गं सिद्ध्यतीति गृहाण । ततः किमिति चेत्तादृशबन्धनिवृत्तिलक्षणस्य मोक्षस्य विष्णुकृतत्वानुमित्या तस्य तत्कर्तृत्वं सिद्ध्यतीति गृहाण । तथापि विष्णोर्जगत्संहर्तृत्वे किमायातमिति चेत् अनादेर्मायाशब्दितसंसारापरपर्यायस्य लयकर्ता विष्णुरिति लाभमहिम्ना सुतरां सादेर्जगतः संहारकर्ता स इति सिद्ध्यति । अयमेवार्थः सौत्रेण तुशब्देन सोसूच्यते । नन्वेतावतापि विष्णोरनादिभवभेत्तुविश्वसंहारसामर्थ्याल्लुब्धं, तत्संहर्तृत्वं तु कुतो लब्धव्यमिति चेत्, भ्रान्तोऽस्य देशतः कालतश्च परिच्छेदशून्यस्य विष्णोर्विश्वसंहारसामर्थ्ये फलोपधानावश्यम्भावात् । शक्तस्य तादृशस्यैव तत्सम्भवात् । किं चैतावतापि तवापरितोषे सुतरां स्पष्टश्रुतिभ्योऽयमर्थः प्रतीयत इति विष्णोः सर्वसंहर्तृत्वं दुस्त्यजम् । ताश्च श्रुतयो 'यमप्येति भुवनं साम्पराये स नो हरिर्घृतमिहायुषेऽत्तु देवः, य इदं सर्वं विलापयति स हरिः परः परमात्मा' इत्यादिकाः ।

नन्वेवं विष्णोरेव संहर्तृत्वे उदाहृतश्रुतिविरोध इति चेन्न; 'स ब्रह्मण विसृजति स रुद्रेण विलापयति सोऽनुत्पत्तिरलय एक एव हरिः परः परानन्दः' इति महोपनिषद्वाक्यबलेनोदाहृतश्रुतेः रुद्रस्य परतन्त्रसंहर्तृत्वपरत्वावधारणेनाविरोधात् । तथाच स्कान्दवचनम् 'स्रष्टा पाता च संहर्ता स एको हरिरीश्वरः । स्रष्टृत्वादिकमन्येषां दारुयोषावदुच्यते ।

'एकदेशक्रिया चात्र न तु सर्वात्मनेरितम् । सृष्ट्यादिकं समस्तं तु विष्णोरेव पराद्भवेत्' इति । तथा भागवतवचनम्— 'निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः । हिरण्यगर्भः शर्वश्च कालाख्या रूपिणस्तव' इति । पारतन्त्र्यं च ब्रह्मरुद्रयोः सृष्टिसंहारद्वारत्वमिति द्रष्टव्यम् । न चैवं जगदुत्पादकस्य विष्णोः संहर्तृत्वाङ्गीकारे लोकविरोधः, लोके पितुरन्यस्यैव मारकत्वदर्शनादिति वाच्यम्; विष्णोर्ममतादिदोषराहित्येन लोकसिद्धविलक्षणत्वेन लोकविरोधस्यादोषत्वात् । तस्माच्छ्रुत्यविरोधेन संहारस्य भगवत्कर्तृकत्वसिद्धेर्युक्तस्तस्मिन् श्रुतिसमन्वय इति ।

## ८. विपर्ययाधिकरणम्

ननु तथापि हरौ श्रुतिसमन्वयानुपपत्तिः तथाहि– 'अत एव हीदं परात्क्रमादुत्पद्यते क्रमाद्विलीयते, नासावुदेति नास्तमेति' इति भाल्लवेयश्रुतावुत्पत्तिक्रमादेव लयः प्रतीयते । 'अक्षरात्परमादेव सर्वमुत्पद्यते क्रमात् । व्युत्क्रमाद्विलयश्चैव तस्मिन्नेव परात्मनि' इति चतुर्वेदशिखायां तु व्युत्क्रमात् लयः प्रतीयते । अतो विरोधः । न च विरोधे प्रामाण्यमुपपद्यते । किं चोत्पत्तिक्रमानुसारेण लोके लयस्य प्रायिकत्वात्

क्रमेण लयावेदकश्रुतेः प्राबल्येन प्रामाण्यसम्भवेऽपि व्युत्क्रमेण तदावेदकश्रुतेरप्रामाण्यमेव प्रबलतया दुर्बलतच्छ्रुतिबाधावश्यंभावात् । किञ्च 'क्रमादुत्पद्यते, क्रमाद्विलीयते, क्रमेणोत्पत्तिर्विलयश्च क्रमेणैवास्योत्पत्तिविलयावि'त्यादिबहुश्रुत्यनुग्रहायोत्पत्तिक्रमेणैव लयाङ्गीकारो युक्तः न तु व्युत्क्रमेण लयाङ्गीकारः तदावेदकश्रुतेरल्पत्वात् । तथाच बलवच्छ्रुतिविरुद्धा असौ व्युत्क्रमश्रुतिरप्रमाणमेवेति शङ्कानिरासायाह— **विपर्ययेण तु क्रमोऽत उपपद्यते च** इति । क्रमाद्विलय इति भाल्लवेयश्रुतावुक्तः क्रमो लयक्रमो विपर्ययेण उत्पत्तिक्रमवैपरीत्येनैव कुतः ? 'कर्ता प्राणादिकार्यस्य हन्ता भूम्यादिकस्य च । यः क्रमात् व्युत्क्रमाच्चैव स हरिः पर उच्यते' इत्यत एव भाल्लवेयश्रुतिवचनादेवोपपद्यते चायमर्थः पूर्वेषां सामर्थ्याधिक्यादिति सूत्रार्थः । अयमाशयः— उत्पत्तिक्रमवैपरीत्येनैव लयोऽभ्युपेयः, 'क्रमाद्विलीयत' इति क्रमवाचिश्रुतौ उत्पत्तिक्रमविपरीतक्रमापेक्षत्वात् । न च क्रमश्रुतेरेवमर्थान्तरपरत्वकल्पनं कुतः ? इति वाच्यम्; यस्यामेव भाल्लवेयश्रुतौ क्रमाल्लयः श्रूयते तस्यामेव व्युत्क्रमाल्लयः श्रूयत इति कृत्वा ।

ननु श्रुतित्वाविशेषात् व्युत्क्रमश्रुत्या क्रमश्रुतेरेव कुतो बाधः, वैपरीत्यमेव किं न स्यादिति चेन्न, व्युत्क्रमश्रुतेर्निरवकाशत्वेन प्रबलत्वात् क्रमश्रुतेश्च सावकाशत्वात् । अस्ति हि क्रमव्युत्क्रमयोः क्रमपदप्रवेशः । न तु व्युत्क्रमपदप्रवेशः । न हि क्रमव्युत्क्रमयोः क्रमपदवद्व्युत्क्रमपदं साधारणम् । तथाच श्रुत्यन्तरं 'द्विविधः क्रम उद्दिष्टो व्युत्क्रमोऽनुक्रमस्तथा । सृष्टावन्यो लये चान्य इति वेदविदो विदुः' इति । एतेन क्रमश्रुतीनां बाहुल्ये प्रयत्नप्राबल्यमपि निरस्तं सावकाशत्वात् । न च वाच्यं व्युत्क्रमाल्लयाङ्गीकारे लोकविरोधः स्यादिति, लौकिकानां प्रायः सामर्थ्यसाम्यात्, क्रमाल्लयेऽपि पूर्वपूर्वोत्पन्नानामाकाशादीनां उत्तरोत्तरापेक्षया सामर्थ्याधिक्यसत्त्वेन लोकविलक्षणतया क्रमाल्लयानुपपत्त्या व्युत्क्रमेणैव तेषां लयस्योपगन्तव्यत्वात् । 'पूर्वे पूर्वे यतो विष्णोः सन्निधानं क्रमाधिकम् । सामर्थ्याधिक्यमेतेषां पश्चादेव लयस्तथा । व्याप्तिश्चाभ्यधिका तेषामत एव न संशयः' इति वामनपुराणवचनेन । पूर्वपूर्वोत्पन्नानामुत्तरोत्तरोत्पन्नापेक्षया सामर्थ्याधिक्यवर्णनात् । न तेषु लोकवैलक्षण्यासिद्धिरिति वामनपुराणवचनेन पूर्वपूर्व इति प्रथमान्तं सप्तम्यन्तं वा । सप्तम्यन्तत्वपक्षे सन्निधानपदं सन्निधीयतेऽस्मिन्निति व्युत्पत्त्या प्रतिमापरमित्यवधेयम् । तस्माच्छ्रुत्यविरोधेन व्युत्क्रमाल्लयसिद्धेऽप्युक्तहरौ श्रुतिसमन्वय इति ।

## ९. अन्तराधिकरणम्

उक्तमर्थमाक्षिप्य समाधत्ते— **अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्** इति । विज्ञानमनसि विज्ञानमनस्तत्त्वे अन्तरा विना तदन्येषामेव क्रमेणोत्पत्तिक्रमविपरीतक्रमेण लयो वाच्यः । न तु विज्ञानमनस्साधारण्येन, कुतः ? तल्लिङ्गात्, 'मनसश्च विज्ञानं', 'यच्छेद्वाङ्मनसी प्राज्ञ-

स्तद्यच्छेज्ज्ञान आत्मनि' इति श्रुतिद्वयपर्यालोचनायां विज्ञानतत्त्वस्य स्वोत्पादकमनस्तत्त्वलयानन्तर-भाविलयवत्त्वरूपलिङ्गदर्शनादिति चेदिति सूत्रे आक्षेपांशस्यार्थः। अयमाशयः— न सर्वेषां व्युत्क्रमेण लयः स्वीकार्यः। किन्तु केषाञ्चित् क्रमात् केषाञ्चित् व्युत्क्रमात्। तथाहि– विज्ञानतत्त्वं तावन्मन-स्तत्त्वादुत्पन्नं श्रूयते मनसश्च विज्ञानमिति। तस्य च पश्चादुत्पन्नस्य विज्ञानतत्त्वस्य पश्चादेव लयः। पूर्वावस्थितस्य मनस्तत्त्वस्य तु पूर्वमेव लयः श्रूयते। 'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि' इति। अनेन च लिङ्गदर्शनेन विज्ञानमनसी विना अन्येषां व्युत्क्रमाल्लयः प्राप्तः। लोकानुकूलं चैतत्। लोकेऽपि केषाञ्चित् क्रमाल्लयो दृश्यते। केषाञ्चित्तु व्युत्क्रमादिति। न च सामर्थ्यतारतम्यविरोधः। विज्ञानमनसोः समसामर्थ्यस्यापि सम्भवात्। न चैवं 'अक्षरात्परमादेव सर्वमुत्पद्यते क्रमात्। व्युत्क्रमाद्विलयश्चैव तस्मिन्नेव परात्मनि' इति श्रुतिविरोधः। तस्याः सयुक्तिकलिङ्गदर्शनविरुद्धत्वेन अप्रामाण्यस्यैवोचितत्वात्। तथाच हरौ न श्रुतिसमन्वयः सिद्ध्यतीति 'यच्छेद्वाङ्मनसी' इत्यस्याः श्रुतेः वाङ्मनसि लीयत इति स्मरेदित्यर्थः। विज्ञानं मनस्तत्त्वेऽपि नान्येषामेव विपरीतक्रमेण लय इति नाविशेषात् किन्तु व्युत्क्रमाल्लय इत्यत्र लिङ्गदर्शनसद्भावस्योक्तत्वात् कथं विशेषे प्रमाणमित्या-शङ्क्याह— **चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्** इति। अत्र तुशब्दः शङ्कानिवृत्त्यर्थः। 'मनसश्च विज्ञानं' इति श्रुतौ व्यपदेशः मनःशब्दरूपो विज्ञानशब्दरूपश्च प्रकृते भाक्तः स्यात्। साधारणमनोविज्ञानराश्योरिन्द्रियावबोधरूपोभयभागविषय एव स्यान्न तु मनस्तत्त्वविज्ञान-तत्त्वविषयः। ननु तथापि मनसश्च विज्ञानं इति तयोः सम्बन्धव्यपदेशानुपपत्तिरिति चेत्तत्राह— तद्भावभावित्वादिति। तेषु चराचरेषु विषयेषु मनःशब्दितेन्द्रियस्य भाव आलोचनं प्रणिधानविशेषस्तेन विज्ञानस्यावबोधस्य भावित्वादुत्पद्यमानत्वादिति सूत्रार्थः। अयमाशयः— यद्यपि 'यच्छेद्वाङ्मनसी प्राज्ञः' इति तत्त्वानां लयक्रमो भवेत्तथापि न तेषां तथोत्पत्तिः विज्ञानतत्त्वादेव मनस्तत्त्वस्योत्पत्तेः। न चैवं 'मनसश्च विज्ञानमि'ति व्यपदेशोपपत्तेर्मनःशब्दविज्ञानशब्दयोरुभयोरपि मनोविज्ञानतत्त्वयो-रन्तःकरणावबोधयोश्च साधारणत्वेऽपि प्रकृतेऽन्तःकरणावबोधरूपतद्भागविषयत्वमेव न तु तत्त्वविषय-त्वमित्याश्रीयते। न चैवमाश्रयणे काचिदनुपपत्तिरस्ति। तावतैव 'मनसश्च विज्ञानं' इति व्यपदेशोप-पत्तेः। चराचरविषये मनोरूपेन्द्रियस्य भावेनालोचनेनावबोधस्योत्पद्यमानत्वात्। अतो नेदं लिङ्गदर्शनं विज्ञानमनस्तत्त्वयोः क्रमेण लये विशेषप्रमाणमिति। तथाच स्कान्दवचनम् 'परादव्यक्तमुत्पन्नमव्यक्तात्तु महांस्तथा। विज्ञानतत्त्वं महतः समुत्पन्नं चतुर्मुखात्। विज्ञानतत्त्वात्तु मनो मनस्तत्त्वात्तु खादिकम्। एवं बाह्या परा सृष्टिरन्तस्तद्व्यत्त्यपेक्षया। विपरीतक्रमो ज्ञेयो यस्मादन्ते हरेर्दृशिः' इति। अत्र बाह्या-द्ब्रह्माण्डादित्यर्थः। अन्तरित्यादिवाक्यं क्वचित्तत्त्वानामेवायं क्रमः श्रूयते चेत् तत्रापि ब्रह्माण्डान्तरा-

भिव्यक्तात् तज्ज्ञानिनां तत्त्वापरोक्षे च क्रमोऽसौ ज्ञातव्यः । अधमानां तत्त्वानां प्रथमाभिव्यक्तेरिति ज्ञापनार्थं अन्तः ब्रह्माण्डस्य देहस्य च व्यक्तौ विपरीतक्रम इत्यत्र लिङ्गं यस्मादित्यनेनोच्यते । अतः श्रुत्यविरोधेन व्युत्क्रमाल्लयसिद्धेर्युक्तो हरौ श्रुतिसमन्वय इति ।

## १०. आत्माधिकरणम्

ननु परमात्मापि लीयत एव 'स इदं सर्वं विलाप्यान्तस्तमसि लीनः' इति श्रुतेः । न चेयं श्रुति-र्नेश्वरविषयेति शक्यं वक्तुम्, 'तद्विलाप्य व्युत्तिष्ठते स इदं सर्वं विसृजति विस्थापयति प्रकाशयति विमोचयत्येक एवे'त्यस्यां श्रुतौ स इदं सर्वं विसृजतीत्यादीश्वरलिङ्गसत्त्वात् । न चैतद्वैपरीत्ये श्रुत्यन्तर-मप्यस्तीति वाच्यम्, विष्णुर्लयवांश्चेतनत्वाज्जीववदिति युक्तिसहितत्वेन लयश्रुतेः प्रबलत्वात् । न च स्वातन्त्र्यहेतुना परमात्मनोऽनुत्पत्तेरुक्तत्वात् कथं तस्य लय इति शङ्क्यम् । स्वतन्त्रस्यापि लीलया विग्रहग्रहणतत्परित्यागोपपत्तेः । अतः सयुक्तिकश्रुतिविरोधादस्याः श्रुतेरप्रामाण्यान्नोक्तसमन्वयो युक्त इत्याशङ्क्याह— **नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः** इति । आत्मा परमात्मा न लीयते, उदाहृतश्रुतौ तल्लयस्याश्रुतेः । प्रत्युत ताभ्यः 'नित्यो नित्यानां चेतनश्चेतनानाम्, स नित्यो निर्गुणो विभुः, परः परमात्मा स नित्यो विभुः, कारणो लोकसाक्षी परो गुणैः सर्वदृक् शाश्वतश्चे'त्यादिश्रुतिभ्यस्तस्य नित्यत्वाच्चेति सूत्रार्थः । अयमाशयः— 'परमात्मा न विलीयत एव, प्रमाणाभावात् न च अन्तस्तमसि विलीन' इति श्रुतिर्मानम्, तस्यास्तदपिहितपरत्वात् 'तुच्छेनाभ्वपिहितं यदासीत्' इति श्रुतेः । अस्यां श्रुतौ 'नासदासीदि'त्यादिना लयमुक्त्वा 'तम आसीदि'ति तमश्शब्दात् प्रकृतेरवस्थानमभिधाय ब्रह्मण-स्तदपिहितत्वं पुनः प्रादुर्भावश्चोच्यत' इति स्पष्टतरस्तत्समाख्यानादत्रापि श्रुतौ विलीनशब्दोऽपिहितत्वार्थ एव । ब्रह्मणो निलीनत्वमपिहितत्वरूपमेवेत्यत्र किं मानमिति चेत् 'स एतस्मिंस्तमसि निलीनः प्रकृतिं पुरुषं कालञ्चानुपश्यति नैनं पश्यति कश्चन' पैङ्गिश्रुतिरेवेति गृहाण । तत्र निलीन इत्युक्त्वा 'पुरुषादीन् स्वयं पश्यति नैनं पश्यति कश्चने'ति प्रतिपादनान्निलीनशब्दोऽपिहितार्थे प्रयुक्त इति विज्ञातव्यत्वात् ।

ननु किमर्थमेवं विलीनश्रुतेरर्थान्तरं परिकल्प्यते, लय एवार्थः किं न स्यात्, उदाहृतसमाख्यादीनां श्रुतितो दुर्बलत्वेन तद्बलेनापि निलीनश्रुतेरपिहितार्थत्वाश्रयणायोगात् । न च श्रुत्यन्तरबलात्तथार्थः परामर्शित इति वाच्यम्, तस्याप्रामाण्योपपत्तिरिति चेन्न, 'नित्यो नित्यानां' इत्युदाहृतपरमात्माति-शयितनित्यत्वावेदकानेकश्रुतिविरोधान्निलीनश्रुतेरुक्तान्तरपरत्वाश्रयणस्यैव युक्तत्वात् । न च तदप्रामा-ण्यमेव किं न स्यात्, बाहुल्येन तासां प्राबल्यावश्यम्भावात् । न च सयुक्तिकाया अपि श्रुतेः प्राबल्यम्, श्रुतिविरुद्धयुक्तेः स्वयममानत्वात् । 'परो गुणैः सर्वदृक्' इति श्रुतौ गुणैर्गुणेभ्य इत्यर्थः । न चोदाहृत-

श्रुतीनां स्वरूपविषयत्वमङ्गीकर्तुं शक्यम्, नित्यो नित्यानामिति देहनित्यत्वस्याप्युक्तत्वादिति । अतः श्रुत्यविरोधेन परमार्थलयस्य निरस्तत्वाद्युक्तस्तस्मिन् श्रुतिसमन्वय इति ।

## ११. ज्ञाधिकरणम्

एवम् अधिभूताधिदैवपरमात्मविषयश्रुतिविशेषः परिहृतः । सम्प्रति ज्ञाधिकरणे हरौ श्रुतिसमन्वय-सिद्धये जीवजन्मविषयश्रुतिविरोधः परिह्रियते— **ज्ञोऽत एव** इति । ननु न जीव उत्पद्यते, अनादि-त्वात्, ईश्वरवत्, । न च साध्याविशिष्टता, प्रागभावशून्यताया हेतुत्वेन विवक्षितत्वात् । न च तत्र विवादः, उत्पत्तेरेवाभावप्रसङ्गात् । कारणशून्यत्वं वा हेतुः । न च तत्रापि विवादः, कारणानुपलब्धेरेव न चाकाशादीनामेव भूतानामप्युत्पत्तिमत्वेन व्यभिचारः, असम्प्रतिपत्तेः । 'नित्यो नित्यानामि'ति श्रुत्या जीवस्य नित्यत्वावेदनेनानुत्पत्तिसिद्धेश्च । न च 'सर्व एते आत्मानो व्युच्चरन्ती'ति तदुत्पत्त्यावेदकश्रुति-विरोधः, व्युच्चरन्ति जायन्त इत्यर्थविज्ञानादिति वाच्यम् । अनादित्वश्रुतेर्युक्त्युपेतायाः प्रबलत्वात् । तद्विरोधेनोत्पत्त्यावेदकश्रुतेरप्रामाण्यात् । न च देहादिव्युत्पत्तेः प्रत्यक्षादिसिद्धत्वात् बाधः । व्यधिकरण-त्वात् । श्रुतिविरोधान्न जगत्कारणे ब्रह्मणि श्रुतिसमन्वयसिद्धिरित्याशङ्कानिरासार्थमिदं सूत्रम् । जानातीति जीवः, अत एव परमेश्वरसकाशादेवोत्पद्यते । कुतः ? अतःशब्दादेवेति सूत्रार्थः । अत्र अत एवे-त्यस्यावृत्त्याऽयमर्थो लभ्यते । अयमाशयः— जीव उत्पद्यत एव, स चेश्वरादेवोत्पद्यते । 'ते वा एते चिदात्मानोऽविनष्टाः परंज्योतिर्निविशन्त्यविनष्ट एवोत्पद्यन्ते न विनश्यन्ति कदाचने' ति श्रुतेः 'सर्व एत चिदात्मानो व्युच्चरन्तीत्युदाहृतश्रुत्यन्तराच्च । न च 'नित्यो नित्यानामि'ति तदनादित्वश्रुतिविरोधः नित्यत्वाविरोधेनैवोत्पत्तेः श्रुत्युक्तत्वादिति । नन्वनादिनित्यस्योत्पत्तिः श्रुतावपि कथं युज्यते नित्यत्व-मभ्युपेत्य उत्पत्तिवचनस्य वन्ध्यात्वमभ्युपेत्य मातृवचनेन साम्यादित्याशङ्क्याह— **युक्तेश्च** इति । नित्यस्यापि जीवस्योपाध्यपेक्षया उत्पत्तिर्युज्यत इति सूत्रार्थः । न चैवं जीवोत्पत्तिरुपचारः स्यात्, पराधीनविशेषलाभस्योत्पत्तेरत्र विवक्षितत्वादिति भावः । तथाच स्मृतिः— 'उत्पद्यन्ते चिदात्मानो नित्यान्नित्याः परात्मनः । उपाध्यपेक्षया येषामुत्पत्तिरपि गीयते' इति । अतः श्रुत्यविरोधेन जीवस्य ब्रह्मजातत्वसिद्धेर्युक्तस्तत्र श्रुतिसमन्वय इति ।

## १२. उत्क्रान्त्यधिकरणम्

ननु न हरौ श्रुतिसमन्वयो युज्यते । जीवपरिमाणश्रुतीनां विरोधेनाप्रामाण्यप्राप्तेः । 'व्याप्ता ह्यात्मानश्चेतना निर्गुणाश्च, सर्वात्मानः सर्वरूपा अनन्ताः' इति श्रुतौ व्याप्तत्वं प्रतीयते । अत्र सर्वात्मान इत्यस्य सर्वस्मादनादिकर्तार इत्यर्थः । सर्वरूपा इत्यस्य पूर्णा इत्यर्थः । न चेयं श्रुतिर्न जीवविषया,

बहुवचनविरोधात् । न चेश्वररूपबाहुल्यार्था, बाधकं विना श्रुतेर्बाधायोगात् । न च 'अणुर्ह्येष आत्मा यं वा एते सिनीतः पुण्यं (च) पापं च' इति जीवाणुत्वप्रतिपादनपरश्रुतिविरोधः । उदाहृतजीवव्याप्तत्वाभिधायकश्रुतेर्युक्ता, प्रबलत्वात् । तथाहि– न तावदणुरात्मा, सर्वदेहतः स्पर्शज्ञानात् । रूपादीनां च तत्तदिन्द्रियैर्ज्ञानात् । न चेदं ज्ञानमणावात्मनि सम्भवति, न हि कश्चिदप्राप्तकरणेन क्रियां निर्वर्तयति । न चात्मा देहपरिमाणः, उक्तदोषात् । तस्य पक्षस्य शरीरपरिमाणत्वेनात्मनः शरीरवत्सांशत्वं स्यात् । मध्यमपरिमाणस्य तन्नियमात्तेषां चांशानां प्रत्येकचेतनत्वेन विरुद्धया क्रियया शरीरमुन्मथ्येत् अक्रियं वापद्येत । न हि युगपदनेकेषां ऐकमत्यं नियमेन सम्भवति । न च समुदायो नाम कश्चिद्धर्मी भवति । न चांशारब्धोंऽशी स्वीकर्तुं शक्यते, नित्यत्वप्रसङ्गात् । अतः परिशेषादात्मनो व्याप्तत्वमेव सिद्ध्यतीति । तथा च प्रयोगः— सर्वमिदं मूर्तमात्मना स्पृष्टम्, मूर्तत्वात्तच्छरीरवदिति सयुक्तिकोदाहृतजीवव्याप्तत्वावेदकश्रुतिविरोधादुदाहृततदणुत्वश्रुतेरेवाप्रामाण्यम् । तथाच न प्रागुक्तसमन्वयासिद्धिरित्याशङ्क्याह— **उत्क्रान्तिगत्यागतीनाम्** इति । उत्क्रान्तिगत्यागतिरूपहेतूनां सकाशात् ज्ञो जीवोऽणुरेव भवितुमर्हतीति सूत्रार्थः । अयमाशयः— जीवोऽणुरेव न व्याप्तः, उत्क्रान्तिगत्यागतिमत्वात्, पतत्रिशरीरवत् । न हि व्याप्तस्य व्योमादेरुत्क्रान्त्याद्याः सन्ति । न चात्मन उत्क्रान्तिगत्यागतिमत्वे मानाभावः । 'सोऽस्माच्छरीरादुत्क्रम्यामुं लोकमभिगच्छत्यमुष्मादिमं लोकमागच्छति स गर्भभाग्भवति स प्रसूयते स कर्म कुरुते' इति श्रुतेरेव तत्र मानत्वात् ।

ननु श्रुतिसिद्धत्वादुत्क्रान्त्यादयः सन्त्वात्मनः ताभिर्विभुत्वासम्भवश्च । तावता तस्याणुत्वं कुतः सिद्ध्येदिति चेन्न, मध्यमपरिमाणत्वे दोषस्योक्तत्वात्, अव्याप्तस्य चाणुत्वावश्यम्भावात् । 'अणुर्ह्येष आत्मा यं वा एते सिनीत' इत्युदाहृतश्रुत्या साक्षात्तदणुत्वस्यावेदनाच्चेति भावः ।

नन्वेवमुत्क्रान्त्यादिहेतुभ्यो जीवस्याव्याप्तत्वादिसिद्धावपि तासु सोऽस्मादित्युदाहृतश्रुत्या तस्य स्वातन्त्र्यप्रतीतेस्तद्विरोधात् परमेश्वरे उक्तश्रुतिसमन्वयानुपपत्तिः, 'एकः प्रसूयते जन्तुरेक एव प्रमीयते । एकोऽनुभुङ्क्ते सुकृतमेक एव च दुष्कृतम्' इत्यादिस्मृतिषु जीवस्वातन्त्र्यस्य स्फुटप्रतीतेश्च तत्प्रसङ्गं निराकरोति— **स्वात्मना चोत्तरयोः** इति । अत्र सूत्रे चशब्द एवकारार्थः । स्वात्मनैव परमात्मनैव जीवस्योत्क्रान्तिगत्यागतयो भवन्ति न स्वतः कुतः ? उत्तरयोः । 'सोऽस्माच्छरीरादुत्क्रम्यामुं लोकमभिगच्छती'त्यादि पौष्यायणश्रुतिवाक्यादुत्तरयोः स एतेनैव स्वात्मना परेणेमं गर्भमनुप्रविशति परेण जायते परेण कर्म कुरुते परेण नीयते परेणोन्नीयते तं वा एतमभिवदन्ति स्वात्मेत्येष ह्यानन्दमादत्ते एष ह्येनं जीवयत्येष उद्गमयत्येष गमयत्येष आगमयति' इति वाक्ययोरत्तथैवोक्तत्वादिति सूत्रार्थः । न चैवं

पूर्ववाक्यविरोधः । तस्य साधारणत्वात् । न च उदाहृतस्मृतिविरोधः तस्याः प्रसवादिदुःखानुभव-विषयत्वेन जीवस्वातन्त्र्यप्रतिपादने औदासीन्यादिति भावः । उत्तरवाक्ये उन्नीयते मोक्षायेत्यर्थो द्रष्टव्यः । एष ह्येवेति द्वितीयवाक्यं पूर्ववाक्यस्थात्मशब्दस्य व्याख्यानरूपमिति द्रष्टव्यम् । उक्तमाक्षिप्य समादधति— **नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्** इति । जीवो न अणुः अतच्छ्रुतेः 'व्याप्ता ह्यात्मानश्चेतना निर्गुणाश्च' इति जीवाणुत्वविरोधितद्व्याप्त्यावेदकश्रुतिसद्भावादिति सूत्रे आक्षेपांश-स्यार्थः । नैतच्छ्रुतिबलेन जीवात्मनो व्याप्तत्वं सिद्ध्यति, कुतः ? इतराधिकारात् । अस्याः श्रुतेरितरं जीवान्यं परमात्मानं विषयीकृत्य प्रवृत्तत्वादिति तत्परिहारांशस्यार्थः । कुत एवमवसीयत इति चेत् 'स आत्मेदं सृजति, स द्विधेदं बिभर्त्यन्तर्बहिश्च । स बहुधेदमनुप्रविश्यात्मनोऽभिनयति । स आत्मा स आत्मानः स ईशः स विष्णुः स परः परोवरीयानि'ति परमात्मप्रकरणे व्याप्तस्यात्मनश्चेतना इति वाक्यस्य सत्त्वेन तत्प्रकरणतया तत्परत्वावश्यम्भावादिति गृहाण । न च एतद्वाक्यस्य विष्णुपरत्वे बहुवचनविरोधः, स आत्मा आत्मान' इति परमात्मन्येव बहुवचनश्रवणात् । न च एवं परमात्मनो बहुवचनवाच्यत्वे भेदः स्यादिति शङ्क्यम्, 'एकशब्दैर्द्विशब्दैश्च बहुशब्दैश्च केशवः । एक एवोच्यते वेदैस्तावता नास्य भिन्नता' इति भविष्यत्पुराणवचनेनैकस्यैव परमात्मनो बहुवचनवाच्यत्वेऽपि भेदा-भावस्य वर्णनात् । किञ्च एकस्मिन्ननेकवचनप्रयोगस्य 'तदयं प्राणोऽधितिष्ठति तदुक्तमृषिणा आ तेन यातं मनसो जवीयसा रथं यं वामृभवश्चक्रुरश्विना तस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वतः' इति मन्त्रे दर्शनेन न तत्र विवदितव्यम् । अत्र मन्त्रे परमात्मन एकस्यैव शरीराधिष्ठातृत्वमुक्त्वा ततः द्विवचनयुक्तमन्त्रयोः प्रमाणत्वेनोपादानात् । तथापि निरन्तरेऽपि हरौ बहुरूपत्वापेक्षया बहुवचनं नायुक्तमिति । 'हे अश्विनावाशुगती मनसो जवीयसा पटुना तेन शरीराख्येन रथेन आयातं शरीरे सन्निहितौ भवतम् । यं रथं युवयोरर्थमेव देवाः कृतवन्तः । यत्सम्बन्धाच्च जीवस्य भगवत्प्रसादेन विद्योत्पन्नतत्त्वज्ञानजीवन्मुक्ति-मुक्त्यवस्थे साध्ये भवतः इति प्रथममन्त्रस्यार्थः । 'निमिषश्चिज्जवीयसा रथेनायातमश्विना । अन्ति षद्भूतुवामव' इति द्वितीयमन्त्रस्यायमर्थः— 'निमिषश्चित् चक्षुर्निमेषणादपि वां युवयोः सकाशाद्यदवनं तदस्मदन्तिके भवत्वि'ति ।

ननु यदुक्तं व्याप्तिश्रुतिरीश्वरविषया, तत्प्रकरणादिति, न तत् युक्तम्; दुर्बलेन प्रकरणमात्रेण बहुवचनश्रुतेर्बाधायोगादित्याशङ्कां परिहरति— **स्वशब्दोन्मानाभ्यां च** इति । स्वशब्दादात्म-शब्दादुन्मानादपरिमितत्वलिङ्गाच्च व्याप्तत्वावेदकश्रुतिः ईश्वरविषयेति सूत्रार्थः । न प्रकरणमात्रेणेति चशब्दार्थः । अयमाशयः— 'एषो ह्यात्माऽध्युद्गतो मानशक्तेस्तथाप्यसौ प्रमितिं याति वेदैः । पूर्णोऽचिन्त्यः सर्ववेदैकयोनिः सर्वाधीशः सर्ववित्सर्वकर्ता' इति 'व्याप्ता ह्यात्मानश्चेतना निगुर्णाश्च' इति

व्याप्तत्वावेदकश्रुतेर्वाक्यशेषे श्रूयते। तत्रात्मशब्दोऽस्ति अपरिमितत्वं च प्रमित एतदुभयं परमेश्वरस्यैवावधारणं द्युभ्वाद्यधिकरणादिषु व्यवस्थापनादिति। ततश्च प्रकरणबलात् वाक्यशेषश्रुतात्मश्रुतेरपरिमितत्वलिङ्गाच्च व्याप्तिश्रुतिः ईश्वरपरा न प्रकरणमात्रादित्युक्तं भवति। मानशक्तेरध्युद्गतः परिमाणातीतः प्रमितं याति ज्ञानविषयो भवतीत्युदाहृतवाक्यशेषार्थः।

नन्वेतच्छ्रुतिलिङ्गयोर्वैष्णवत्वं कुतोऽवसीयत इति चेत् 'आत्माऽमेयः परं ब्रह्म परानन्दादिकाभिधः। वदन्ति विष्णुमेवैकं नान्यत्रासां गतिः क्वचित्' इति कूर्मपुराणवचनादिति गृहाण। न च मन्तव्यं व्याप्ताः ह्यात्मान इत्यत्रैव श्रुतावात्मशब्दानन्तत्वयोः श्रवणात् किं वाक्याशेषग्रहणेनेति तत्र बहुवचनसमभिव्याहारवशादन्यार्थताया एव झटिति प्रतिभासात् वाक्यशेषस्य तु परमात्मपरत्वेन निश्चयसत्त्वादिति विशेषसद्भावात्।

ननु तथापि न जीवस्याणुत्वं युक्तम्; तत्र तत्र परिज्ञानायोगादित्याशङ्कां परिहरति— **अविरोधश्चन्दनवत्** इति। अणोरपि जीवस्य शरीरे व्याप्त्यविरोधः चन्दनवदिति सूत्रार्थः। अयमाशयः— जीवस्याणुत्वेऽपि तस्य तत्र तत्रापरिज्ञानायोगः, अंशैः शरीरे व्याप्तत्वात्। एकदेशपतितचन्दनबिन्दोरंशैः शरीरव्याप्तिवदेवेति। ननु प्रतिदृष्टान्तस्यापि सम्भवान्न नियामकं विना दृष्टान्तमात्रेणार्थसिद्धिरिति चेन्न; 'अणुमात्रोऽप्ययं जीवः स्वदेहं व्याप्य तिष्ठति। यथा व्याप्य शरीराणि हरिचन्दनविप्रुषः' इति ब्रह्माण्डपुराणवचनस्यैव प्रकृते नियामकस्य सत्त्वादिति। उक्तमाक्षिप्य समाधत्ते— **अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि** इति। अवस्थितिरवस्थानं तद्वैशेष्यात्। तत्कृतविशेषसद्भावासद्भावाभ्यां चन्दनस्य व्याप्त्यव्याप्त्युपपत्तावपि नात्मनस्तद्युज्यते, तस्य शरीरेऽवस्थानकृतविशेषसद्भावासद्भावयोः प्रमाणाभावादित्याक्षेपांशस्यार्थः। नात्मनश्चन्दनबिन्दोरिव स्वरूपतदंशाभ्यामव्याप्तिव्याप्ती उपपद्येते। चन्दनबिन्दोः शरीरैकदेशे सम्यगवस्थानवदन्यत्रासम्यगवस्थानवच्च जीवात्मनः तथाभावस्यानुभवसिद्धत्वाभावेन शरीरे व्याप्त्यव्याप्त्योरभ्युपगमायोगात्। न हि आत्मनः क्वचिच्छरीरदेशे सम्यगवस्थानं क्वचिदसम्यगवस्थानमनुभवसिद्धमस्ति। येन तस्य चन्दनबिन्दुवदेव स्वरूपांशाभ्यां शरीरे व्याप्त्यव्याप्ती प्रतीम इति भावः। परिहारांशे त्वयमर्थः— जीवात्मनः शरीरे सम्यगवस्थानाभावः, हृदि ह्येष आत्मेति जीवस्यापि हृद्देशे सम्यगवस्थानश्रवणेन तथाभ्युपगमोपपत्तेरिति। हिशब्द उदाहृतश्रुतिसद्भावप्रसिद्ध्यर्थः। तथा चात्मनः शरीरे सम्यगवस्थानाभावासिद्धेर्न दृष्टान्तवैषम्यम्। एतावांस्तु विशेषः— चन्दनरूपदृष्टान्ते शरीरे सम्यगवस्थानस्यानुभवसिद्धत्वेनाभ्युपगमः। दार्ष्टान्तिके आत्मनि तु शरीरे सम्यगसम्यगवस्थानस्य हृदि ह्येष आत्मेति श्रुतिसिद्धत्वेनाभ्युपगम इति भावः।

एवं स्वरूपतदंशाभ्यामात्मनः शरीराव्याप्त्यव्याप्ती सदृष्टान्तमुक्त्वा प्रकारान्तरेणापि तदुपपादयति— **गुणाद्वाऽऽलोकवत्** इति । आत्मनो गुणाद्वा ज्ञानलक्षणवशाद्वा व्याप्तिर्जीवरूपेणाव्याप्तिरुपपद्यते । आलोकवत् । यथा दीपादेरालोकेन प्रभालक्षणगुणेन व्याप्तिः, दीपादिरूपेण चाव्याप्तिः तद्वदिति सूत्रार्थः । अयमाशयः— अणोरपि जीवस्य शरीरे व्याप्तिश्चिद्गुणस्य व्याप्तित्वेनोपपद्यते । न च गुणिनोऽणुत्वे गुणस्य व्याप्तिरयुक्ता, आलोकवदुपपत्तेरिति । नन्वालोकशब्दितप्रभाया द्रव्यत्वात् कथं गुणत्वमिति चेन्न, द्रव्यत्वे मानाभावात् । प्रभया घटादिगतरूपस्यैव प्रतीत्या तत्र पृथग्रूपसत्त्वे मानाभावेन रूपित्वेन तस्याद्रव्यत्वसाधनानुपपत्तेः । न हि व्योम्नि वर्तमानस्याकाशस्य रूपं गृह्यते । न च दीपं विहाय वृत्तिरेव तस्याद्रव्यत्वे प्रमाणं गुणत्वे तदयोगादिति वाच्यम्, गन्धादिवद्गुणत्वेऽपि प्रभाया आश्रयं विहाय वृत्तिसम्भवेन तावन्मात्रेण तस्याद्रव्यत्वे साधनानुपपत्तेः । गन्धादीनामाश्रयं विना वृत्तेरवश्याभ्युपेयत्वात् । अन्यथा सर्वतोऽधिकचम्पकगन्धाद्युपलम्भस्य सत्त्वादिचम्पकाद्यवयवसाहित्येनैव गमनाभ्युपगमापत्त्या प्रतिक्षणं चम्पकादि कुसुमानामपचयेन पूर्ववदुपलम्भाभावापत्तेः । तथा तस्यास्तद्गुणत्वसिद्धिः कथमिति चेत् तदनुविधानादिनेति ब्रूमः । किं चालोको द्रव्यमिति वदन् प्रष्टव्यः— कार्यमकार्यं वेति । आद्येऽपि किं दीपकार्यमन्यकार्यं वेति प्रष्टव्यम् ? तत्र नाद्यः, कारणं विहाय कार्यवृत्तेरभ्युपेतत्वात् । न द्वितीयः— दीपप्रकाश इति प्रयोगानुपपत्तिप्रसङ्गात् कारणान्तरादर्शनाच्च । नान्त्यः, अकार्यद्रव्यस्यात्मन्यस्यातीन्द्रियत्वेनाप्रत्यक्षत्वप्रसङ्गवत् । प्रदीपावयवाभावालोक इति चेन्न; तथासति प्रदीपानुविधानानुपपत्तेः । न हि जीर्णकन्थातन्तवः कति च विकीर्णाः कन्थया सहैव गच्छन्ति अवस्थिता एवावयवा दीपापगमे तमसा न दृश्यन्ते इति न युक्तम् । विरोधात् । क्रमेण चैवं सति प्रकाशबाहुल्यं स्यात् । तदेवोत्पन्नप्रदीपावयवाः सर्वतो विकीर्णा भवन्तीत्यनुभवविरुद्धं चेति युक्तमालोको गुण इति । नन्वंशैर्गुणेन च व्याप्तिरित्येकत्र विरुद्धमिति चेन्न, 'असम्यक् सम्यगिति च ह्यवस्थाभेदतः सुराः । व्याप्त्यव्याप्तियुतास्त्वन्ये चिद्गुणेनैव नान्यथा । चिद्गुणस्य स्वरूपत्वात् तद्व्याप्तिश्चेति युज्यते । 'शक्तियोगात्सुराणां तु विविधा च व्यवस्थितिः' इति स्कान्दवचनेनैव विरोधस्य परिहृतत्वात् इति ।

नन्वात्मा, विभुः, आत्मत्वात्, परमात्मवत्, मनोऽन्यन्निस्पर्शद्रव्यत्वात्, आकाशवत्, सर्वत्र कार्योपलम्भात् देशवत् कालवच्च । आत्मा नाणुः, युगपत्सर्वदेहगतस्पर्शज्ञानात् ईश्वरात्मवदित्यादि जीवात्मनां व्याप्तिसाधकानुमानं तु घटादेरपि व्याप्तिसाधकाभाससमानयोगक्षेमम् । तदणुत्वसाधकश्रुतिबाधितं चेति न कश्चिद् क्षुद्रोपद्रवः । अतः श्रुत्यविरोधेन जीवस्याणुत्वसिद्धे हरौ युक्तः श्रुतिसमन्वय इति ।

## १३. व्यतिरेकाधिकरणम्

ननु तथापि हरौ श्रुतिसमन्वयो न युज्यते, श्रुतीनां परस्परविरोधेनाप्रामाण्यात् । 'स नित्यो निरवयवः पुण्ययुक् पापयुक् च स इमं लोकममुं चावर्तते, स विमुच्यते स एकधा न सप्तधा न दशधा न शतधा' इति गौपवनश्रुतावेकस्याबहुत्वप्रतीतेः, स पञ्चधा सप्तधा दशधा भवति शतधा च सहस्रधा च गच्छति स मुच्यते' इति पाराशार्यायणश्रुतावेकस्यैव बहुत्वं प्रतीयते । अतो जीवस्यैकरूपत्वावेदक-गौपवनश्रुतिविरोधात् एकत्वावेदिकायाः स पञ्चधेत्यादि तदनेकत्वावेदकपाराशार्यायणश्रुतेरप्रामाण्यमेव वाच्यम् । तदेकरूपत्वावेदकगौपवनश्रुतेः सयुक्तिकत्वेन प्रबलतया तयैव तद्रहितायास्तद्बहुरूपत्वावेदक-पाराशार्यायणश्रुतेर्दुर्बलायाः प्रामाण्यौचित्यात् । युज्यते खलु विभावात्मनि योगप्रभावेन शरीरबहुतया बहुरूपत्वम् । तच्चात्मविभुत्वं प्राङ्निषिद्धमेव । न च वक्तव्यमणोरप्यात्मनोंऽशबाहुल्यात् बहुरूपत्वं युज्यत इति । स नित्यो निरवयवः इति श्रुत्या तस्य निरवयवत्वावेदनेन निरंशत्वेंऽशबाहुल्यस्या-योगात् । न चैवं मन्तव्यं योगिनोऽघटितघटकसामर्थ्यवत्त्वेनोपपन्नं बहुरूपत्वम् । दृश्यते हि समाधि-सामर्थ्यादिव तेषां समुद्रपानादीति । तथासति जीवस्येश्वरेण साम्यापातात् । एतदेव ह्यैश्वर्यं यत्कर्तु-मकर्तुमन्यथाकर्तुं च सामर्थ्यम् । अतः सयुक्तिकात्मैकत्वावेदकोदाहृतश्रुतिविरोधेन तद्बहुरूपत्वावेदको-दाहृतश्रुतिरप्रमाणमेव । न च तच्छ्रुतेरीश्वरविषयता समुच्यत इत्यादिजीवलिङ्गात् । तस्माच्छ्रुतिसमन्वयो न युक्त इत्याशङ्कायामाह— **व्यतिरेको गन्धवत् तथा च दर्शयति** इति । व्यतिरेको विभागः । अंशिनो जीवादंशानां व्यतिरेको भवति । यथा पुष्पाद्गन्धस्य विभागः तथा 'अथैक एव सन् गन्धवद् व्यतिरिच्यते तथैकीभवति अथ बह्वीभवति । तं यथा यथेश्वरः प्रकुरुते तथा तथा भवति सोऽचिन्त्यः परमो गरीयान्' इति शाण्डिल्यश्रुतिरिममर्थं दर्शयतीति सूत्रार्थः । स्मृतिश्च दर्शयतीति चशब्दार्थः । स्मृतिश्चेयं 'अचिन्त्ययेशशक्त्यैव ह्येकोऽवयववर्जितः । आत्मानं बहुधा कृत्वा क्रीडते योगसम्पदा' इति । अयं भावः— अस्त्येव जीवस्य बहुरूपत्वम्, अणुत्वेऽप्यंशव्यतिरेकेण तस्य बहुत्वोपपत्तेः । न च अंशिनं विहायांशस्यान्यत्र गमनमनुपपन्नम्, गन्धादौ दृष्टत्वात् । न च तद्बहुत्वनिषेधकोदाहृत-श्रुतिविरोधः, तस्याः स्वरूपैक्यविषयत्वात् । न च भिन्नांशशून्यत्वात् पृथग्भावानुपपत्तिः, योग-सम्पदा तदुपपत्तेः । न चैवमीश्वरेण जीवस्य साम्यापातः, योगिनामपि बहुरूपत्वानुकूलशक्तेर्योगा-राधितेश्वरप्रसादायत्तत्वात् । न चेश्वरस्यापि तदशक्यम्, तस्याचिन्त्यशक्तित्वात् । कुत एतत्सर्व-मिति चेदथेत्याद्युदाहृतश्रुतिभ्यामेवेति । तदेवं श्रुत्यविरोधेन जीवस्य बहुरूपत्वोपपत्तेर्युक्तो हरौ श्रुतिसमन्वय इति ।

## १४. पृथगुपदेशाधिकरणम्

ननु तथापि जगत्कारणे ब्रह्मणि श्रुतीनां समन्वयो न युज्यते। 'तत्त्वमसि', अहं ब्रह्मास्मी'त्यादि श्रुतिषु जीवस्य परेणाभेदप्रतीतेः। 'नित्यो नित्यानां चेतनश्चेतनानां', 'द्वा सुपर्णा' इत्यादि श्रुतिषु तस्य परमात्मना भेदप्रतीतेः। भेदाभेदयोर्विरुद्धत्वात्। अद्वैतश्रुतेः षड्विधतात्पर्यलिङ्गोपेतत्वेन प्रबलतया द्वैतश्रुतेर्बाधितत्वेनाप्रामाण्यावश्यम्भावात्। न च तत्त्वमसीत्याद्यद्वैतश्रुतेः षड्विधतात्पर्यलिङ्गोपेतत्वमसिद्धम्। एकमेवाद्वितीयमित्युपक्रमात्, तत्त्वमसीत्युपसंहारात्, तत्त्वमसीति नवकृत्वोऽभ्यासात्, अद्वैतस्य मानान्तराप्राप्तत्वेनापूर्वत्वात्, तस्य तावदेव चिरमिति फलश्रवणात्, येनाश्रुतं श्रुतं भवतीत्यर्थवादात्, मृत्पिण्डादिदृष्टान्तेनोपपादनात्। एवं च तत्त्वमसीत्यादिश्रुतेरद्वैत एव तात्पर्यावगमात्तद्विरुद्धोदाहृतभेदश्रुतेरतत्त्वावेदकत्वमिति न परमात्मनि परमार्थतः श्रुतिसमन्वयो युक्तः इत्याशङ्क्याह— पृथगुपदेशात् इति। जीवः परस्मात्पृथक् अत्यन्तं भिन्नः, कुतः ? उपदेशात् 'भिन्नोऽचिन्त्यः परमो जीवसङ्घात् पूर्णः परो जीवसङ्घो ह्यपूर्णः। यतस्त्वसौ नित्यमुक्तो ह्ययं च बन्धान्मोक्षं तत एवाभिवाञ्छेत्' इति सोपपत्तिककौशिकश्रुतिरूपोपदेशादिति सूत्रार्थः। अयमाशयः— परमात्मनो जीवः पृथगेव, 'भिन्नोऽचिन्त्य' इति सयुक्तिकश्रुत्या तथैवावेदनात्। न चाभेदेऽपि श्रुतिरस्तीति शङ्क्यम्, विरुद्धधर्माधिकरणत्वरूपयुक्तियुक्तत्वेन भेदश्रुतेः प्रबलत्वादिति।

नन्वेवं सत्यद्वैतश्रुतेर्निर्विषयत्वेनाप्रामाण्यमेव स्यादित्याशङ्क्य आह— तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् इति। अत्र तच्छब्देन 'स्वात्मना चोत्तरयोः' इति व्यवहितपूर्वसूत्रे स्वशब्देन प्रकृतस्य परमात्मनः परामर्शः। तस्य गुणास्तद्गुणाः तज्ज्ञानानन्दादि ब्रह्मगुणा एवास्य जीवस्य तत्सारः स्वरूपं अतः तद्व्यपदेशः। तच्छब्दो भावप्रधानः। तत्त्वेन ब्रह्मत्वेन तदभिन्नत्वेन श्रुत्यादिषु व्यपदेशः उक्तिः। तत्कथमिव, प्राज्ञवत् यथा सर्वगुणात्मकत्वात् प्राज्ञशब्दितस्य ब्रह्मणः 'सर्वं खल्विदं ब्रह्म' इत्यादिश्रुतिषु सर्वात्मकत्वेनोक्तिस्तद्वदिति सूत्रार्थः। अयमाशयः— तत्त्वमसीत्यादिश्रुतेर्जीवब्रह्मभेदपरत्वाभावेऽपि नाप्रामाण्यप्राप्तिः, परमात्मगुणसदृशानन्दादिगुणस्वरूपत्वेन जीवस्य तदत्यन्तभिन्नत्वेऽपि गौण्या वृत्त्या तत्त्वमसीति तेनाभेदस्य श्रौतव्यपदेशोपपत्तेः। यथा खलु सकलजगद्गुणसदृशगुणात्मकत्वेन परमात्मनो जगतोऽत्यन्तभिन्नत्वेऽपि तस्य 'सर्वं खल्विदं ब्रह्म' इति गौण्या वृत्त्या जगतोऽभेदव्यपदेश इति तत्त्वमसीत्यादिश्रुतेरेवमेवार्थः स्वीकार्यः। 'भिन्ना जीवाः परो भिन्नस्तथापि ज्ञानरूपतः। प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वशः' इति भविष्यत्पूर्ववचनोपबृंहणात्।

ननु गौणीवृत्तिरमुख्येति चेत् सत्यम्, मुख्यासम्भवे प्रामाण्यनिर्वाहाय अमुख्यवृत्तेरप्याश्रयणीयत्वात्। न हि सार्वज्ञादिगुणवता ब्रह्मणा अनादिमतो जीवस्य अभेदः सम्भवति। सार्वज्ञादिकमपार-

मार्थिकमिति चेन्न, 'यः सर्वज्ञः स सर्ववित्' इत्यादिश्रुतिसिद्धत्वात् श्रुतिसिद्धसार्वज्ञादेरपि मिथ्यात्वे तत्प्रतिपादकस्य बौद्धागमेनाविशेषापत्तिः । मिथ्यात्ववादस्यापि तद्राद्धान्ततापत्तिश्च । कश्चैवंवादिनोऽद्वैतश्रुतिसिद्धार्थे विश्वासहेतुरभिनिवेशादन्योऽस्तीति न जानीमः । किं चोपजीव्यप्रमाणविरुद्धमद्वैतबोधनं जीवपरमात्मविषयप्रमाणैस्तयोः परस्परभेदस्यैव ग्रहणात् । परेणापि हि, प्रमाणविरोधभीरुणा लाक्षणिकोऽर्थोऽङ्गीकृतोऽद्वैतश्रुतेः । अन्यथा तत्त्वम्पदमुख्यार्थभेदपरत्वमेवाद्वैतश्रुतेः किं न स्यात् । न च श्रुतिविहितं ब्रह्म सार्वज्ञादिकं श्रुत्यैव निषेद्धुं शक्यते । परस्परविरुद्धभाषित्वेनाप्रामाण्यापत्त्या सार्वज्ञवत्तन्निषेधस्याप्यसिद्धिप्रसङ्गात् । निषेधस्यैव ब्रह्मसार्वज्ञस्यापि मानान्तराप्राप्तत्वाविशेषेण तदंशेनापि श्रुतितात्पर्यापरिहारात् । लोकवद्वेदेऽपि मानान्तरविरोधे 'त्वं सिंहोऽसी'त्यादिप्रमाणवाक्य इव तत्त्वमसीत्यादिवेदेऽपि लोकसिद्धव्युत्पत्त्यनुसारेण गौणार्थताश्रयणौचित्याच्च । तथाच मुख्यार्थासम्भवात् तत्त्वमसीत्यादेर्गौणार्थग्रहणमेव युक्तम् । लक्षणावृत्तौ हि तत्त्वम्पदवाच्यार्थपरित्यागेन असिपदमात्रमुख्यार्थताशेषप्रमाणविरुद्धाङ्गीकार्या स्यात् । ततो वरं तत्त्वंपदमुख्यार्थमङ्गीकृत्य असिपदमात्रस्य गौणार्थत्ववर्णनम् । नात्र प्रमाणविरोधेन श्रुतेरमुख्यार्थताभ्युपगम्यते । येन गौणार्थोऽङ्गीकृतः स्यात् । किन्तु श्रुतेरेव तथाभिप्रेतत्वादिति कश्चित् । स प्रष्टव्यः । कथमसौ श्रुत्यभिप्रायो लोकोत्तरप्रज्ञेन विज्ञात इति । तात्पर्यलिङ्गैरिति वदन् देवानां प्रियोऽसावुपेक्षणीयः । न हि लिङ्गानि तात्पर्यार्थविबोधकानि लाक्षणिकार्थग्रहणे कारणानीति युक्तम् । लिङ्गबलादद्वैत एव तात्पर्ये सिद्धे प्रमाणविरोधात् गौणार्थमनङ्गीकृत्य लक्षणाश्रीयत इति चेत् न, उपक्रमादीनामन्यार्थत्वात् । यथा चैतत्तथोक्तमन्यत्र ।

नन्विदमनुपपन्नम्— 'रुढियोगौ विना कश्चिन्नैवार्थो वेदगो भवेत्' इति वदता भाष्यकृता गौणीं वृत्तिमाश्रित्यैव श्रुतिव्याख्यानायोगात् । न च परमात्मविषयतद्वाक्यमन्यार्थप्रस्ताव एव तस्योदाहृतत्वात् । अत एव तत्र वाक्ये कश्चिदित्युक्तिरिति चेन्न, तत्र रूढियोगौ विहाय केवलवृत्त्यन्तरस्य निषिद्धत्वात् रूढियोगपूर्वकगौण्यादिवृत्तेरनिवारणात् । सा च परकीयन्यायेनैव अस्ति हि तत्त्वमसीत्यादि श्रुतीनां अतत्त्वमसीत्यादिरूपो न रूढ्याद्यर्थः इति । अतः श्रुत्यविरोधेन जीवस्य परमात्मात्यन्तभेदसिद्धेर्युक्तस्तत्र वेदसमन्वय इति ।

## १५. यावदधिकरणम्

स्याद्रेतत्, अनित्य एव जीवः । 'अविनष्टा एवोत्पद्यन्ते, सर्व एत आत्मानो व्युच्चरन्ती'त्यादि तदनित्यत्वश्रुतेः । न च वक्तव्यम्, 'सोऽनादिना पुण्येन पापेन चानुविद्धः परेण निर्मुक्त आनन्त्याय कल्प्यत' इति श्रुतिर्जीवनित्यत्वेऽप्यस्ति । अत्र जीवस्यानादिकर्मसम्बन्धानन्त्यप्राप्तेरुक्तत्वादिति ।

उदाहृतानित्यत्वश्रुतेः सयुक्तिकत्वेन प्राबल्यात् । उक्ता खलु जीवस्याप्युत्पत्तिः 'ज्ञोऽत एव' इति सूत्रे । उत्पत्तिमतश्चानित्यत्वं नियतमेव घटादौ दृष्टत्वात् । न च मन्तव्यं जनिरत्रोपाधेरेवोक्ता न तु जीवस्य । अतः कथञ्चिदस्य नित्यत्वमपीति उपाधेरुत्पत्तिमत्त्वे प्रतिबिम्बस्योत्पत्तिनियमात् । न हि दृष्टमुपाधेरुत्पत्तिमत्त्वेऽपि प्रतिबिम्बस्यानादित्वम् । अतोऽस्त्येव जीवस्योत्पत्तिर्विनाशश्च । अतः सयुक्तिकजीवानित्यत्वश्रुतिविरोधात् तस्यानादिकर्मसम्बन्धाद्ययुक्तेस्तदभिधायकोदाहृतश्रुतेरेव अप्रामाण्यात् अयुक्तो ब्रह्मणि श्रुतिसमन्वय इत्याशङ्क्याह— **यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्** इति । अत्रोपाधेरिति शेषः । यावत्परमात्मा तिष्ठति अनाद्यनन्तत्वेन एवं जीवोऽपि, कुतः ? उपाधेर्यावदात्मभावित्वात् । भवतीति भावी । यावदात्मं भवतीति यावदात्मभावी, तत्त्वाच्च न दोषो जीवानित्यत्वविरोधप्रयुक्तः, तदनादित्वश्रुत्यप्रामाण्यलक्षणदोषो न । कुतः ? तद्दर्शनात् 'नित्यः परो नित्यो जीवोऽनित्यास्तस्य धातवोऽत उत्पद्यते च म्रियते च विमुच्यते चे'त्याग्निवेश्यश्रुतौ आनन्त्याय कल्प्यत' इत्युदाहृतश्रुतौ, 'आत्मा नित्यः सुखदुःखे त्वनित्ये नित्यो जीवो धातुरस्य त्वनित्यः' इति भारते च जीवनित्यत्वस्य दर्शनादिति सूत्रार्थः । अयमाशयः— नित्य एव जीवः, प्रतिबिम्बस्य बिम्बोपाधितत्सन्निधिनाशं विना नाशानुपपत्तेः । बिम्बस्य परमात्मनोऽनाद्यनन्तत्वात् । उपाधेश्च यावत्परमात्मभावित्वात् । सर्वगतबिम्बोपाधेश्च नित्यत्वात् । अतो जीवस्यानाद्यनन्तत्वान्नानादिकर्मसम्बन्धाद्यनुपपत्त्या अप्रमाणता च श्रुतेर्भवति । न चानित्यत्वश्रुतिविरोधः, तस्या उपाधिविषयत्वात् । न चोपाधेरनित्यत्वे पुनर्जीवस्यानित्यत्वापत्तिरिति वाच्यम् । न हि येनोपाधिना जीवः प्रतिबिम्बः तस्योत्पत्तिविनाशौ ब्रूमः, अपि तु धात्वादिपदोदितबाह्योपाधेरेव । कुतस्तदखिलमिति चेत्, 'नित्यः पर' इति श्रुतेः । 'उत्पद्यन्ते चिदात्मान' इति, 'आत्मा नित्यः सुखदुःखे त्वनित्ये' इति चोदाहृतस्मृतिद्वयाच्चेति । उक्तं च एतद् अन्यत्रापि— 'जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्य एव च । बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः । सर्वोपाधिविनाशे तु प्रतिबिम्बः कथं भवेत् । कथं चात्मविनाशाय प्रयत्नः सेत्स्यति क्वचित्' इति, तथा 'उपाधेश्चैव नित्यत्वान्नैव जीवो विनश्यति । स्वरूपत्वादुपाधेश्च न भिन्नोपाधिकल्पनम्' इति । अतः श्रुत्यविरोधेन जीवस्य नित्यत्वसिद्धेर्युक्तो वेदानां हरौ समन्वय इति ।

## १६. पुंस्त्वाधिकरणम्

ननु न जीवो ज्ञानानन्दादिरूपः 'स दुःखाद्विमुक्त आनन्दी भवति सोऽज्ञानाद्विमुक्तो ज्ञानी भवति, सोऽबलाद्विमुक्तो बली भवति, स नित्यो निरातङ्कोऽवतिष्ठते' इति पैङ्गिश्रुतौ तस्यानन्दादिरूपत्वाभावत्वोक्तेः । न च 'विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र । स आनन्दः स बलः

स ओजः स परेणामुं लोकं नीयते स विमुच्यते' इति श्रुतौ जीवस्य ज्ञानानन्दादिरूपत्वोक्तेः कथं तस्य तदभावः । न चासावीश्वरविषया, 'प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र' इति, 'स परेणामुं लोकं नीयते' इति च वाक्यशेषविरोधादिति वाच्यम्, उदाहृतानानन्दादिरूपत्वावेदकोक्तश्रुतेः सयुक्तिकत्वात् । न ह्यानन्दादिरूपत्वमात्मनोऽनुभूयते । न च प्रतिबिम्बाद्भिद्यमानापि आनन्दादिरूपता नानुभूयत इति वाच्यम्, जीवस्याहमिति नित्याभिव्यक्तत्वेन तत्स्वरूपभूतानां तेषामव्यवधानस्यैवायोगात् । आनन्दादिरूपत्वे च जीवस्य न केनचिन्मोक्षाय प्रयतितव्यम् । अत्रावरणादननुभवो मोक्षत्वाभिव्यक्तिरिति वदन् प्रष्टव्यः— किमावरणमानन्दादीनामज्ञानं शरीरादि वा । नाद्यः, तस्यैवानुपपत्तेरुक्तत्वात् । न द्वितीयः, मोक्षवैपरीत्यात् । अत एव मोक्षेऽभिव्यक्तिरित्ययुक्तम् । सयुक्तिकानन्दादिरूपत्वाभावावेदकाख्यश्रुतिविरोधादप्रमाणमेव तद्रूपत्वावेदकाख्यश्रुतिः । अतो नेश्वरे श्रुतिसमन्वयो युक्त इत्येवं शङ्कापरिहारायाह— **पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्** इति । अत्रास्येति प्रकृतं तद्गुणसारत्वं परामृश्यते । अभिव्यक्तियोगादित्यत्र अभिव्यक्तेर्योगः अभिव्यक्तियोगः । तस्मात् अभिव्यक्तियोगात् । अस्य जीवे सतस्तद्गुणसारत्वस्य ज्ञानानन्दादिरूपत्वस्य बाले प्राक्सतः पुंस्त्वादेरिव व्यक्तियोगात् अभिव्यक्त्यपेक्षया योगात् स मुक्त आनन्दीभवति इति श्रुतौ ज्ञानानन्दादिभावेनोक्तियोगात् 'विज्ञानात्मा सह देवैश्च सर्वैः' इति जीवस्य ज्ञानानन्दादिरूपत्वावेदकश्रुतिर्नाप्रमाणमिति सूत्रार्थः । अयमाशयः— भवत्येवानन्दादिरूपो जीवः । न चैवं स 'दुःखाद्विमुक्त आनन्दी भवति' इति श्रुतिविरोधः, न ह्यानन्दरूपत्वमात्मनो भूयत इत्याद्युक्तयुक्तिविरोधश्चेति वाच्यम्, यथा पुरुषयोषिदादीनामपत्योत्पत्तिशक्तिस्वरूपत्वेऽपि कालतस्तदभिव्यक्तेर्नायं पूर्वं पुमान् इदानीं तु पुमानित्यादि युज्यते, एवं जीवस्वरूपत्वेन मुक्तेः पूर्वमपि सतो ज्ञानानन्दादेरीश्वरप्रसादेन अभिव्यक्तिनिमित्तेन आनन्दीभवतीत्यादिश्रौतव्यपदेशोपपत्तेः । प्रागनभिव्यक्तत्वेनानुभवाभावप्रसङ्गात् । तदभिव्यक्त्यर्थं च मुमुक्षूणां प्रयत्नोपपत्तेः । न चावरणानुपपत्तिः, ज्ञानाभावातिरिक्ततन्निमित्ताविद्यावरणाभ्युपगमात् ।

ननु प्रागसतामुत्पत्तिवादिन्येव 'स दुःखाद्विमुक्त आनन्दीभवती'त्यादि श्रुतिः किं न स्यात् किमभिव्यक्तिकल्पनयेति चेत् 'बलमानन्द ओजश्च सहो ज्ञानमनाकुलम् । स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्विभोः' इति श्रुत्यैव प्रागपि ज्ञानानन्दादीनां सत्यत्वमभ्युपैति । मुक्तौ परमेश्वरादभिव्यक्त्यभिधानेन तदविरोधाय 'स दुःखाद्विमुक्त आनन्दीभवती'ति श्रुतौ तद्भवनोक्तेस्तदभिव्यक्तिमादायैवोपपादनीयत्वात् । एतच्च सजीवविषयं केषाञ्चित् दुःखादिरूपत्वं मिश्रत्वं च ज्ञातव्यम् ।

यदुक्तं जीवस्वरूपभूतानामानन्दादीनां प्रागनभिव्यक्तानां मोक्षेऽभिव्यक्तिरिति, तदयुक्तम्; जीवस्वरूपस्य नित्याभिव्यक्तत्वेन तत्स्वरूपभूतानां ईश्वरप्रसादेनाभिव्यक्त्ययोगात् इति चेत् तत्र प्रष्टव्यम्,

'किं जीवस्यानन्दादिरूपत्वमङ्गीकृत्य तदावरणाभावात् तन्निवृत्तिर्नाभ्युपगम्यते, किं वा आनन्दादिरूपत्वमेवानङ्गीकृत्येदमुच्यत' इति विकल्पं मनसि निधाय द्वितीयपक्षस्य 'नित्यानन्दो नित्यज्ञानो नित्यबलः परमात्मा नैवमसुरा एवमनेवं च मनुष्याः' इत्याग्निवेश्यश्रुतौ 'परमात्मवदेवानन्दादिरूपा देवाः' इति निरासं सिद्धवत्कृत्य प्रथमपक्षं निरस्यति— **नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा** इति । अन्यथावरणनिवृत्त्यङ्गीकारे नित्यं सर्वदा उपलब्ध्यनुपलब्ध्योः प्रसङ्गः । तत्र देवानामानन्दादीनां नित्योपलब्धिः, असुराणां दुःखादीनां नित्यमुपलब्ध्यापत्त्या वैषयिकसुखादीनां तत्कृताभिभवसत्त्वेनानुपलब्धिः । अन्यतरनियमो वा दुःखाद्युपलब्धिरेव वा मध्यममनुष्याणां तु द्विस्वभावानामानन्दादीनां नित्यमुपलब्ध्यनुपलब्धी च प्रसज्येतेति सूत्रार्थः । अयमाशयः— यदि जीवस्वरूपस्यानन्दादिरूपत्वमङ्गीकृत्य आवरणाभावाद् आवरणनिवृत्तिर्मोक्षे नाङ्गीक्रियते तर्हि देवानां मोक्षयोग्यानां अनित्यानन्दाद्यनुभवः स्यात् । असुरादीनां न कदाप्यानन्दानुभवः स्यात् । दुःखाद्यनुभव एव भवेत् । मध्यममनुष्याणां च नित्यानन्दादीनामुपलब्धिः । केवलतदुपलब्ध्यभावो दुःखाद्युपलब्धिश्च सदैव स्यात् । आवरणाभावे अनुभवाभावायोगात् । अतोऽस्त्येवाविद्यावरणं भगवत्प्रसादेनाभिव्यक्तिश्चेति । इममेवार्थं 'नित्यानन्दज्ञानबला देवा नैवं तु दानवाः । दुःखोपलब्धिमात्रास्ते मानुषास्तूभयात्मकाः । तेषां यदन्यथा दृश्यं तदुपाधिकृतं मतम् । विज्ञानेनात्मयोग्येन निजरूपे व्यवस्थितिः । सम्यग्ज्ञानं तु देवानां मनुष्याणां विमिश्रितम् । विपरीतं च दैत्यानां ज्ञानस्यैवं व्यवस्थितिः' इति भविष्यत्पर्ववचनान्यपि संवदन्ते । अत्र दुःखोपलब्धिमात्रास्तद्योग्या इत्यर्थः । उपाधिबाह्या इति द्रष्टव्यम् । तदेवं श्रुत्यविरोधेन जीवस्यानन्दादिरूपत्वसिद्धेः युक्तो हरौ श्रुतिसमन्वय इति ।

## १७. कर्तृत्वाधिकरणम्

नन्वीश्वरे सर्वश्रुतिसमन्वय इति यदुक्तं तदयुक्तम्, 'यत्कर्म कुरुते तदभिसम्पद्यते' इत्यादि जीवकर्तृत्वविषयश्रुतीनां 'नान्यः कर्ता' इत्यादीश्वरकर्तृत्वविषयश्रुतिविरोधेनाप्रामाण्यात् । न च 'यत्कर्म कुरुते' इत्यादिश्रुतिरपि ईश्वरविषया, अतो न विरोध इति वाच्यम्, 'तदभिसम्पद्यते' इति तत्रैव फलसम्प्राप्तिश्रवणात् । न चैतद्विरोधेनेश्वरकर्तृत्वविषयश्रुतीनामेवाप्रामाण्यं किं न स्यादिति वाच्यम्; जीवाकर्तृत्वेश्वरकर्तृत्वश्रुतेः सयुक्तिकत्वेन प्राबल्यात् । समर्थितं हीश्वरस्यानन्ययोगेन कर्तृत्वमितरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिरित्यादौ । अत एव द्वयोरपि कर्तृत्वमस्त्विति पक्षः प्रत्युक्तः । ईश्वरस्यैव कर्तृत्वाङ्गीकारे कल्पनालाघवत्वं स्यात् । जीवस्यापि तदङ्गीकारे गौरवं स्यात् । न खलु लाघवन्यायसहकृतश्रुत्यादिबद्धमीश्वरस्य कर्तृत्वं हेतुमित्याशङ्क्याह— **कर्ता शास्त्रार्थवत्त्वात्** इति ।

जीवः कर्ता स्वीकार्यः, कुतः ? विधिनिषेधरूपस्य शास्त्रस्यार्थवत्त्वात् सप्रयोजनत्वात् इति सूत्रार्थः। अयं भावः— जीवस्याप्यस्त्येव कर्तृत्वम् । तदभावे विधिनिषेधरूपशास्त्रस्य वैयर्थ्यप्रसङ्गात् । न हि कर्तारमन्तरेणारण्यरोदनाय मानशास्त्रस्य सामर्थ्यं भवति । न हि जडं प्रति विधिनिषेधरूप-शास्त्रे भवतः । नापीश्वरं प्रति तथासति पुण्यपापलेपप्रसङ्गेन तदनीश्वरत्वस्यैव प्राप्तेः । अतो जीवस्य कर्तृत्वाङ्गीकारे शास्त्रस्यार्थवत्वसिद्धेर्जीवोऽपि कर्तेत्यवश्यमङ्गीकार्यमिति ।

ननु जीवस्य कर्तृत्वाभावेऽपि परगतकर्तृत्वे विवेकाग्रहोऽस्त्येव । अतस्तादृशं कर्तारं प्रति विधिनिषेधरूपशास्त्रप्रवृत्तिरस्त्वित्याशङ्क्याह— **विहारोपदेशात्** इति । परमार्थतो जीवोऽपि कर्ते-त्यङ्गीकार्यम्। 'स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा' इत्यादिश्रुतौ तस्य विहारोपदेशादिति सूत्रार्थः। अयं भावः न जीवस्य काल्पनिकं कर्तृत्वं स्वीकारार्हम्, किं तु पारमार्थिकमेव । विगलिताखिलकल्पनेऽपि कैवल्ये विहारादिकर्तृत्वोपदेशादिति ।

नन्वेवं तर्हि जीवस्य मोक्षः स्वाभाविक एव, काल्पनिकमेव कर्तृत्वम्, उक्तरीत्या प्रमाणसिद्ध-त्वात्। संसारे तु काल्पनिकमेव तत्किं न स्यात् तावतापि विधिनिषेधरूपशास्त्रसार्थक्योपपत्तेरित्याशङ्कां परिहरति— **उपादानात्** इति । अत्र संसारेऽपि जीवस्य कर्तृत्वं पारमार्थिकमेव न काल्पनिकमिति शेषः। तथाच संसारेऽपि जीवस्य कर्तृत्वं वास्तवमेव न काल्पनिकम्, कुतः। उपादानात्। मोक्षाद्यर्थं साधनाद्युपादानस्य तेन करणादिति सूत्रार्थः। अयमाशयः— जीवस्य संसारेऽपि कर्तृत्वं न काल्पनिकं, किन्तु पारमार्थिकमेव, मोक्षाद्यर्थं तेन श्रवणादिरूपसाधनाद्युपादानात्। न चात्र मानाभावः। तदर्थं तेन तदुपादानस्य सर्वानुभवसिद्धत्वात्। न च स भ्रमः; तथासति फलादर्शनप्रसङ्गात्। न हि परानुष्ठित-साधनेष्वात्मीयताकल्पनमात्रेण फलाभिसम्बन्धो भवत्यतिप्रसङ्गात् इति । एवमुपपत्त्या प्रत्यक्षेण साधितं जीवकर्तृत्वं श्रुत्यापि समर्थयते— **व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः** इति। किञ्च 'आत्मानमेव लोकमुपासीते'त्युपासनक्रियायां कर्तृत्वेन व्यपदेशादपि जीवात्मनः कर्तृत्वं दुर्निवारं क्रियायाम् । न चेत्क्रियायां कर्तृत्वं भवेन्निर्देशविपर्ययः । क्रियायां सकर्तृकत्वनियमात् जडस्य तां प्रति कर्तृत्वासम्भवात् जीवात्मनस्त्वयैव कर्तृत्वानभ्युपगमात् परमात्मन एव परिशेष्य तां प्रति कर्तृत्व-मुपेयम् । तथा चात्मानमेव लोकमुपासीतेति श्रुतं वात्मशब्दितपरमात्मनः आत्मैव लोकमुपासीतेति प्रथमान्ततयैव निर्देशः स्यान्न तु कर्मत्वार्थकद्वितीयान्ततयेति सूत्रार्थः । अयं भावः— 'आत्मानमेव लोकमुपासीते'त्यादौ उपासनक्रियायां जीवात्मनः कर्तृत्वेन व्यपदेशात्तस्यापि कर्तृत्वमस्त्येवेत्यभ्युपे-यम् । न चात्र जीवमुपासीतेत्युक्त्यभावात्कथं जीवस्य कर्तृत्वव्यपदेश इति चेन्नैवम् । न हि क्रिया

कर्तृशून्या तस्यां सकर्तृत्वनियमात् । न चात्र जडं कर्तृ, असम्भवात् । यदि जीवस्य तत्र कर्तृत्वेन श्रुत्यनभिमतत्वं तदा परमात्मैव तत्र कर्तृत्वेन श्रुत्यभिमतोऽङ्गीकार्यः स्यात् । अन्यथा तच्छ्रुति-वैयर्थ्यापातात् । तथाच तस्यैव तत्र कर्तृत्वेन व्यपदेशान्न कर्मत्वेन व्यपदेशः स्यात् । अतो जीवस्यै-वात्र कर्तृत्वं श्रुत्यभिप्रेतमिति वाच्यम् । न च जीवस्यापि कर्तृत्वाभ्युपगमे कल्पनागौरवदोषः ईश्वरस्यैव तदभ्युपगमे कल्पनालाघवं चेति वाच्यम्, उक्तरीत्या जीवकर्तृत्वस्यापि प्रामाणिकत्वात् । प्रामाणिकस्य च गौरवस्यादोषत्वादिति ।

नन्वेवं जीवस्यापि कर्तृत्वे कथमीश्वरस्यैव कर्तृत्वं पूर्वं समर्थितं, कथं च तत्कर्तृत्वावेदकश्रुति-रुपपद्येत । अतस्तद्विरोधस्तदवस्थो जीवकर्तृत्वावेदकश्रुतीनामित्याशङ्क्याह— **उपलब्धिवदनियमः** इति । उपलब्धिवत् यथा ज्ञाने इदं वस्तु ज्ञास्यामीति सङ्कल्पपूर्वकं यत्नेऽपि जीवस्य स्वेच्छानुसारेण न ज्ञानलाभनियमः । एवमिदं कर्म करिष्यामीति सङ्कल्पपूर्वकं यत्नेऽपि जीवस्य स्वेच्छानुसारेण अनियमो न कर्मलाभनियमः इति सूत्रार्थः । अयं भावः— इदं वस्त्वहं ज्ञास्यामीत्येवं निरूपिते यथा जीवस्य न ज्ञाने नियमोऽस्ति स्वेच्छानुसारेण न ज्ञानलाभः, तथेदं करिष्यामीति निरूपितेऽपि जीवस्य कर्मणि नियमाभावादीश्वरस्य तु तद्भावात् स एव कर्ता न जीव इत्युक्तं प्राक् न तु सर्वथा कर्तृत्वाभावादिति । न चायं दृष्टान्तः साध्यसमः । न हि जिज्ञासुर्ज्ञानक्रियायामेव साक्षात् व्याप्रियते किं तु तत्साधन एवेति । नन्वीश्वरस्यैव नियमेन कर्तृत्वं न जीवस्येत्यत्र किं प्रमाणमिति चेत् 'य आत्मानमन्तरो यमयतीति श्रुतिरि'ति ब्रूमः इति ।

ननु कर्तृत्वाविशेषेऽपीश्वरस्यैव नियमनकर्तृत्वं न जीवस्येत्यत किं निबन्धनं वैलक्षण्यमिति पृच्छायां स्वातन्त्र्यपारतन्त्र्यनिबन्धनावीशजीवयोर्नियमानियमाविति परिहारं वक्तुं तयोः स्वातन्त्र्य-पारतन्त्र्ये साधयति— **शक्तिविपर्ययात्** इति । जीवस्येति शेषः । जीवस्य शक्तिविपर्ययात् पूर्णशक्तिविपर्ययात् अल्पशक्तित्वादिति सूत्रार्थः । ईश्वरस्यैव पूर्णशक्तित्वात् स्वातन्त्र्यं जीवस्य तु तद्विपर्ययात् अस्वातन्त्र्यम् । श्रुतिषु तथैव प्रतीतेरिति भावः ।

युक्त्यन्तरेण तदेव प्रतिपादयति— **समाध्यभावाच्च** इति । समाधिः समाधानं अलम्बुद्धिरस्तद-भावादपि जीवस्यास्वातन्त्र्यं प्रतीयते इति सूत्रार्थः । अयं भावः— समाधानमलम्बुद्धिरीश्वरस्यैवेति तस्य स्वातन्त्र्यम् । जीवस्य तु तदभावादस्वातन्त्र्यम् । अलम्बुद्धिश्च पूर्णकामस्य । पूर्णकामत्वं च स्वतन्त्रस्येश्वरस्यैव न जीवस्य । तथा चेशजीवयोः स्वातन्त्र्यपारतन्त्र्यप्रतीतेस्ताभ्यामेवोक्तनियमा-नियमव्यवस्थोपपन्नेति ।

नन्वेवं यदि जीवस्य न स्वातन्त्र्येण कर्तृत्वमपि त्वीश्वरेच्छाधीनतयैव कथं तर्हि स कर्तेत्युच्यते, लोके स्वतन्त्रः खलु कर्तोच्यत इत्याशङ्कां परिहरति— **यथा च तक्षोभयथा** इति । यथा तक्षा उभयथा किञ्चित्कुर्वन्नपि कारयितृनियतः सन् कुरुते, तथा जीवोऽपि किञ्चित् कुर्वन् कारयित्रीश्वर-नियतः स कुरुते तथापि तक्षवदेव स कर्तेति व्यपदेष्टुमर्ह इति सूत्रार्थः ।

ननु किं तक्ष्ण इव जीवस्य कर्तृत्वशक्तिर्जीवाधीनैव ईश्वराधीनता तु वचनवेतनदानादिवदुत कर्तृत्वशक्तिरपीश्वराधीना । यद्याद्यः तर्हीश्वरस्यैव कर्तृत्वमिति पक्षो गतः । द्वितीये तु न जीवस्य कर्तृत्वमित्याशङ्क्याह— **परात्तु तच्छ्रुतेः** इति । तुरवधारणार्थः । जीवस्य कर्तृत्वशक्तिः परादेव, कुतः ? 'कर्तृत्वं करणत्वं च स्वभावश्चेतना धृतिः । यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया' इति पैङ्गिश्रुत्या तथैवावेदनादिति सूत्रार्थः । नास्माभिस्तत्कर्तृत्वसामर्थ्यं जीवाधीनमुच्यते, येनापसिद्धान्तः स्यात् । किं तु परमात्माधीनमेव तथा श्रुतिसद्भावादिति भावः ।

नन्वस्मिन्नपि पक्षे दोष उक्तः, कर्तृत्वशक्तेरीश्वराधीनत्वे तस्यैव कर्तृत्वं न जीवस्येत्यापन्नमिति, पुनः शास्त्रवैयर्थ्यमित्येतामाशङ्कां परिहरति— **कृतप्रयत्नापेक्षस्तु विहितप्रतिषेधावैयर्थ्यादिभ्यः** इति । कृतं कर्मप्रयत्नश्च । उपलक्षणमेतत् स्वरूपयोग्यता च । तदपेक्ष एव परः परमेश्वरो जीवस्य कर्तृत्वशक्तिं प्रयच्छति तस्मै प्रयोजनाय । विहितप्रतिषेधावैयर्थ्यादिभ्यः । अत्र विहितशब्देन विधि-रुच्यते, आदिशब्देन वैषम्यनैर्घृण्यपरिहारश्च । एवञ्च विधिप्रतिषेधरूपशास्त्रावैयर्थ्याय स्वस्ववैषम्य-नैर्घृण्यपरिहाराय च परमेश्वरो जीवानादिकर्मप्रयत्नयोग्यतापेक्ष एव सन् तस्य कर्तृत्वशक्तिं प्रयच्छतीति सूत्रार्थः । एवं च शास्त्रावैयर्थ्याय स्वस्ववैषम्यनैर्घृण्यपरिहाराय चेश्वरो जीवस्यानादिकर्मप्रयत्नयोग्यतापेक्ष एव सन् तत्तत्कर्मसु जीवं प्रेरयति । न तु तदनपेक्षः । अतो न जीवगतकर्तृत्वशक्तेरीश्वराधीनत्वे शास्त्रवैयर्थ्यम् । तदपेक्षया प्रेरणे हि तत्स्यादिति हृदयं पर्यवस्यतीति । यद्यपि वैषम्यनैर्घृण्यदोषपरिहारः प्रागेवोक्तस्तथापि स्मारयितुं पुनरत्रादिशब्देनोक्त इत्यदोषः । 'पूर्वं कर्म प्रयत्नं च संस्कारं चाप्यपेक्ष्य तु । ईश्वरः कारयेत् सर्वं तच्चेश्वरकृतं स्वयम् । अनादित्वाददोषश्च पूर्णशक्तित्वतो हरेः' इति भविष्य-त्पर्ववचनेन सह संवादात् एवमेव सूत्रार्थो वर्णनीयः । न त्वन्यथेत्येतदधिकरणार्थोऽप्युक्तरीत्यैव स्वीकार्यः । नान्यथा । 'एतदेवं न चाप्येवमेतदस्ति च नास्ति च' इति मोक्षधर्मवचनात् । एतत् जीवस्य कर्तृत्वं एवं प्रामाणिकं न चाप्येवं ईश्वरवत्स्वातन्त्र्येण । अत एतद् चास्ति नास्ति च इत्युच्यत इति मोक्षधर्मवचनार्थः । अतः श्रुत्यविरोधेन जीवस्य कर्तृत्वसिद्धेर्युक्तो भगवति श्रुति-समन्वय इति ।

## १८. अंशाधिकरणम्

ननु हरौ श्रुतिसमन्वयो निरूपितोऽनुपपन्नः, जीवविषयश्रुति विरोधेनाप्रामाण्यप्राप्तेः । 'अंशा एव हीमे जीवा अंशी हि परमेश्वरः । स्वयमंशैरिदं सर्वं कारयत्यचलो हरिः' इति गौपवनश्रुतौ जीवस्यांशत्वप्रतीतेः 'नैवांशो न सम्बन्धो नापेक्ष्यो जीवः परस्य । तथापि तु यथायोगं फलदः प्रभुरेकराट् । न नियम्यः स कस्यापि स सर्वस्य नियामकः' इति भाल्लवेयश्रुतौ जीवस्यानंशत्वप्रतीतेः । न चैतच्छ्रुत्योरर्थकृतविरोधे सति प्रामाण्यमुपपद्यते । नैवांश इति श्रुतावपि चांशा एवेति श्रुतावप्यवधारणसत्त्वाविशेषेण समबलतया तयोरन्यतरश्रुत्यैवार्थनिर्णये तदनुसारेण तदितरश्रुतिनयनमित्याश्रयणायोगात् । न च नैवेति श्रुतौ परस्येति जीवान्तरविवक्षा । तथासति तथापीत्यादि वाक्यशेषविरोधात् । न च विकल्पेनाविरोधो यवव्रीहिश्रुत्योरिव, वस्तुनि विकल्पायोगात् । अन्यथा तयोः श्रुत्योरीशा एव नैवांश इत्यवधारणानुपपत्तेः । न च देशकालविभेदेन व्यवस्थितविकल्पोऽयमिति वाच्यम्, विशेषप्रमाणमन्तरेण तादृशनिश्चयासम्भवात् । न च जीवेशाभेदस्य सयुक्तिकत्वं, निरस्तत्वात् । तत्र नांशत्वश्रुतिर्बलीयसीति वाच्यम्, भेदाभेदेऽप्यंशित्वस्याविरोधात् । समस्तपटाद्भिन्नस्याप्येकस्य तन्तोस्तदंशत्वदर्शनादित्यत आह— **अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके** इति ।

जीवः परमात्मांशो भवत्येव, कुतः ? 'मां रक्षतु विभुर्नित्यं पुत्रोऽहं परमात्मनः । अवः परेण पितरं', 'यो अस्यानुवेद पर एनावरेण यस्तद्वेद स पितुः पिताऽसत् यस्ता विजानात्स पितुष्पिताऽसत्', 'द्वा सुपर्णा सयुजा सखाया' इत्यादिना नानाव्यपदेशात् । नानाप्रकारेण जीवस्येशसम्बन्धित्वेन व्यपदेशात् । तत्सम्बन्धित्वार्थमेव हि तदंशत्वमिति वक्ष्यते । किं च 'अन्यः परोऽन्यो जीवो नासावस्य कुतश्चन' इति काषायणश्रुतावन्यथा मे दाशा इत्यस्मिन्नेव सूत्रे दाशकितवादित्वमधीयत एक' इति वाक्येन वक्ष्यमाणाभेदापेक्षया प्रकारान्तरेण जीवेशयोर्भेदस्योक्तत्वात् । 'ब्रह्म दाशा ब्रह्म कितवा इत्येकेषां शाखिनां जीवेशयोरभेदेनाभिधानात् । अंशो ह्येष परस्य भिन्नं ह्येनमधीयिरे अभिन्नं ह्येनमधीयिरे' इत्याग्निवेश्यश्रुतेश्चैतच्छ्रुतिद्वयान्यथानुपपत्त्या च जीवांशो भवत्येवेति सूत्रार्थः । अत्रावः परेणेति श्रुतेरयमर्थः— 'या पराद्धरेरवमो जीवो अस्य जगतः पितरं वेद अनेनापरेणायं परो जात' इति व्यपदिश्यते । तज्ज्ञानं च दुर्लभं को नु सर्वज्ञकल्पः प्रजासु ब्रह्म प्रावोचत् कस्य चैतत् देवं मनो ज्ञानमाधिक्यो जातमिति । यस्तद्वेदेति श्रुतेरयमर्थः– यस्तद् बाह्यं वेद स तस्य पितुः पिता अभवत् । यस्ताविज्ञानादिति श्रुतेरयमर्थः— या भगवन्मूर्तयो मदुपास्यस्त्रीलिङ्गशब्दवाच्यास्ता एव परमपुरुषा-

नाहुः यस्ताः पश्यति स एव चक्षुष्मान् यो न जानाति सोऽन्धः यः सर्वज्ञो भगवत्पुत्रो विरिञ्चः स एव सम्यग्जानाति स तस्य जगत्पितुर्भगवतोऽभिव्यञ्जकत्वात् पिताऽभवदिति । किं च 'पुत्रभ्रातृसखित्वेन स्वामित्वेन यतो हरिः । बहुधा गीयते वेदैर्जीवोंऽशस्तस्य तेन तु । यतो भेदेन तस्यायमभेदेन च गीयते । अतश्चांशत्वमुद्दिष्टं भेदाभेदौ न मुख्यतः' इति वराहपुराणवचनपर्यालोचनया उक्त एव सूत्रार्थ इत्यवसीयते । तेन च भेदाभेदश्रुत्योरुदाहृतयोरन्यतरबाधोऽयुक्तः, अबाधेनैवोपपत्तौ बाधस्यान्याय्यत्वात् । न च साक्षाद्भेदाभेदपरे एव ते किं न स्यातामिति वाच्यम्, विरोधादिति भावः ।

श्रुत्या चैतमेवार्थं साधयति— **मन्त्रवर्णात्** इति । 'पादोऽस्य विश्वा भूतानी' ति मन्त्रवर्णाच्च जीवोंऽश इति सूत्रार्थः । मन्त्रवर्णोऽप्यंशपर इति । स्मृत्याप्येतमेवार्थं साधयति— **अपि स्मर्यते** इति । 'ममैवांशो जीवलोके जीवभूतः सनातनः' इति स्मर्यत इति सूत्रार्थः । जीवलोके जीवच्छरीरे जीवभूतः जीवत्वं प्राप्तो जीवाख्यचेतन' इति स्मृत्यर्थः ।

ननु जीवस्येश्वरांशत्वं न युक्तम्, तथा सत्यंशत्वाविशेषात् मत्स्यादिसाम्यापातात् 'नैवांशो न सम्बन्धो नापेक्ष्यो जीवः परस्य' इत्युदाहृतजीवनांशत्वावेदकश्रुतिविरोधाच्च इति आशङ्कां परिहरति— **प्रकाशादिवन्नैवं परः** इति । मत्स्यादिरूपी परमात्मा नैवंविधजीवरूपांशप्रकारः, तत्कथमिव, प्रकाशादिवत् यथा तेजोंऽश एव कालाग्निः खद्योतश्च नैकविधस्तद्वदिति सूत्रार्थः । आदिशब्दार्थश्च जलांशोऽमृतसमुद्रमूत्रादिश्च नैकविधः । यथा च पृथिव्यंशो मेरुर्विष्ठादिश्च नैकविधस्तद्वदिति बोध्यः । अयमाशयः— जीवानां मत्स्यादीनां च भगवदंशत्वाविशेषेऽपि न सर्वसाम्यं मत्स्यादीनां स्वरूपांशत्वं जीवानां च भिन्नांशत्वात् । न चांशत्वाविशेषात् भेदाभेदानुपपत्तिः, कालाग्निखद्योतादिष्वग्न्याद्यंशेष्वंशत्वाविशेषेऽपि तददर्शनात् यथा प्रमाणं तस्योपेयत्वादिति ।

ननु कालाग्निखद्योतादीनां तेजःप्रभृतिभूतकार्याणां भेदाभेदसाम्यात् कथमत्रैते दृष्टान्ता इति चेत् न, अभिमानिदेवतापेक्षया तेषां दृष्टान्तीकरणोपपत्तेः । तेजोजलपृथिव्यभिमानिनां कालाग्निअमृताब्धिमेर्वभिमानिनामभिन्नत्वात् । खद्योताद्यभिमानिनां तु भिन्नत्वात् तद्दृष्टान्तत्वोपपत्तेरिति ।

ननु तत्र तथात्वेऽपि जीवानां मत्स्यादीनामिवाभेदः किं न स्यादित्याशङ्क्याह— **स्मरन्ति च** इति । यथा मत्स्यादीनां स्वरूपांशत्वं न तथा जीवानामितीममर्थं स्मृतिकारा अपि स्मरन्ति चेति सूत्रार्थः । तत्स्मरणमेवंरूपम्— 'ऋषयो मनवो देवा मनुपुत्रा महौजसः । कलाः सर्वे हरेरेव सप्रजापतयः स्मृताः । एते स्वांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् । अतः परं यदव्यक्तमव्यूढगुणबृंहितम् । अदृष्टाश्रुतवस्तुत्वात् स जीवो यः पुनर्भवः । (भागवते) स्वांशश्चाथो विभिन्नांश इति द्वेधांश इष्यते ।

अंशिनो यत्तु सामर्थ्यं यत्स्वरूपं यथास्थितिः । तदेव नाणुमात्रोऽपि भेदः स्वांशांशिनो क्वचित् । विभिन्नांशोऽल्पशक्तिः स्यात् किञ्चित्सादृश्यमात्रयुक् । न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः' इति । अत्र परमपुरुषांशो सर्वमवतिष्ठत इत्युक्ते के तेंऽशा इत्याकाङ्क्षायां सविस्तरं पूर्वं वराहादीनां भगवदंशत्वमुक्त्वा, 'ऋषयो मनवो देवा' इत्यादिना जीवानामपि तदुच्यते । एते स्वांशकलाः इत्यादिना वराहादीनां स्वरूपांशत्वमभिधीयते । तत्रैते स्वांशकला इत्यस्यायमर्थः— 'एते परमपुरुषस्य स्वरूपांशा विभागाः । स्वयं भगवान् कृष्णो मुक्तैरिज्यते वीतमोहैः' इत्यादि । तस्य तस्मिन्प्रयोगात् । अतः परं यदव्यक्तमित्यादि वराहवचनेन जीवानां भिन्नांशत्वमुच्यते । तदर्थस्तु— परतः पुरुषात् भिन्नं कार्यम् अनाद्यपगतसत्त्वादिगुणयुक्तं चैतन्यं स जीवः, यश्चादृष्टाश्रितभगवद्रूपत्वात् संसारीति स्वांशश्चेति, मत्स्यादीनां जीवानां च स्वरूपांशास्वरूपांशलक्षणयोगित्वाच्च अंशिना भेदाभेदाविति दर्शयति । अत्रांशिनो यत्तु सामर्थ्यमित्यंशेन स्वरूपांशत्वलक्षणमुच्यते । यत्स्वरूपं यथानन्दादि यथास्थिति यथा सर्वोत्तमत्वादि तदेव स्वरूपांशस्य सम्भवतीति तदर्थः । एतच्च स्वरूपांशलक्षणं कृष्णाद्यवतारेष्वस्तीत्याह— नाणुमात्रोऽपीति । भिन्नांशलक्षणमाह— भिन्नांश इति । जीवेषु भिन्नांशलक्षणं त्वनुभवसिद्धमेवेति । 'न त्वत्सम' इत्यनेन भिन्नांशाभिन्नांशयोरुक्तलक्षणवत्त्वमेवोपपाद्यते । एवं जीवादीनां मत्स्यादीनाम् अंशिना भेदाभेदसद्भावान्नैकविधेत्युक्तम् ।

युक्त्यन्तरेणाप्येकविधां पराकरोति— **अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत्** इति । अत्रानुज्ञापदेन परमात्माज्ञापूर्वकप्रवृत्तिरुच्यते । परिहारपदेन परमात्माधीनबन्धनिवृत्तिरुच्यते । जीवानां प्रतीयत इति शेषः । जीवानां देहसम्बन्धादनुज्ञापरिहारौ प्रतीयेते । अतस्तेषां मत्स्यादिवदंशत्वसाम्येऽपि ज्योतिरादिवन्नैकविधत्वमिति सूत्रार्थः । तथाच श्रुतयः— 'य आत्मानमन्तरो यमयति, तमेवं विद्वानमृत इह भवति, वासुदेवः सङ्कर्षणः प्रद्युम्नोऽनिरुद्धोऽहं मत्स्यः कूर्मो वराहो नारसिंहो वामनो रामो रामः कृष्णो बुद्धः कल्किरहं शतधा अहं सहस्रधा अहममितोऽहमनन्तोऽहं नैवेते जायन्ते न म्रियन्ते नैषामनुज्ञा न बन्धो न मुक्तिः सर्व एव ह्येते पूर्णाः अजरा अमृताः परमाः परमानन्दा' इत्येवंरूपाः । अत्र परानुज्ञया प्रवृत्तिः परतो बन्धनिवृत्तिश्च जीवानामित्यत्र 'य आत्मानमन्तरो यमयति, तमेवं विद्वानमृत इह भवति' इति श्रुती क्रमेण प्रमाणे । मत्स्यादीनामपि जीववत्तत्प्रवृत्तिबन्धनिवृत्ती ईश्वराधीने किं न येन मत्स्यादीनां जीवविधता नेति स्यादिति शङ्कापरिहाराय वासुदेवः सङ्कर्षण इति चतुर्वेदशिखावाक्यं प्रमाणमिति विवेकः । अस्मिन् चतुर्वेदशिखावाक्ये शतधा नारायणादिः सहस्रधा विश्वादिः अमितो बहुरूपादिः परादिः अनन्तोऽजितादिरिति द्रष्टव्यम् ।

नन्वेतावता प्रबन्धेन जीवोंऽश्यधीनप्रवृत्तिमान् देहसम्बन्धित्वादित्यनुमानं प्रमाणीकृतम्, तन्न युज्यते। व्याप्त्यभावादिति चेत् न, ज्योतिरादेरेव व्याप्तिस्थलत्वात्। तथाहि— यथादित्यो मण्डलाभिमानी वियद्गततत्प्रकाशाभिमानी तदंशश्चैकप्रकारोऽनुज्ञादिरहितः चक्षुरभिमानी तु स्वयं सूर्यांशोऽपि सन् सूर्येणांशिना नैकप्रकारस्तदनुज्ञापरिहारवांश्च तथा जीव ईश्वरांशोऽपि सन् तेन मत्स्यादिवन्नैकप्रकारस्तदनुज्ञापरिहारवांश्च। न च चक्षुरभिमानिनः सूर्यांशत्वे मानाभावः, त्रिवृदिव वै चक्षुः, शुक्लं कृष्णं कनीनिकेति श्रुतेरेव मानत्वात्। अत्र चक्षुषः सूर्यमण्डलसाम्योक्त्या तदंशत्ववर्णनेन तदभिमानिनोऽपि तदंशत्वलाभात्। तस्यापभ्रष्टस्य देहदोषलब्धत्वादन्याधीनप्रवृत्त्यादिमत्त्वम्। सूत्रे आदिशब्दार्थश्च यथा बाह्यामृतजलोऽमृतसमुद्रश्चैकप्रकारः, तथाच तदभिमानिनोऽप्येकप्रकारावनुज्ञापरिहाररहितौ। यथा श्लेष्मा तदभिमानी च तदंशो नैकप्रकारस्तदनुज्ञापरिहारवांश्च तथा जीवोऽपीति द्रष्टव्यम्। एवं च व्याप्तिग्रहस्थलसत्त्वान्न व्याप्त्यभाव इति। चक्षुरभिमानिसूर्यांशे परिहारस्तमोनिवर्तकत्वलक्षणं श्लेष्माभिमानिवरुणांशे तु श्लेष्मधातुविरोधिपित्तधातुनिवर्तकत्वलक्षणम् इति द्रष्टव्यम्। अत्रायं प्रयोगः— जीवः स्वांश्यधीनप्रवृत्तिमान्, स्वांशिक्रियानिर्मितशरीरसम्बन्धत्वात् अपभ्रष्टवदिति। ननु मत्स्यादीनां नांश्यधीनप्रवृत्त्यादिमत्त्वमिति तन्न, तेषामप्युक्तविधदेहसम्बन्धात्। तथा निर्विशेषः। देहसम्बन्धित्वेऽपि नांश्यधीनप्रवृत्तित्वमित्यङ्गीकारे च तत्रैव हेतोर्व्यभिचार इति चेत् न, 'यत्किञ्चिदिह लोकेऽस्मिन् देहबद्धं विशाम्पते। सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः। ईश्वरो हि महद्भूतं प्रभुर्नारायणो विराट्। भूतान्तरात्मा विज्ञेयः सगुणो निर्गुणोऽपि च। भूतप्रलयमव्यक्तं शुश्रूषुर्नृपसत्तम' इत्यवतारप्रसङ्गोदाहृतमोक्षधर्मवचनेन जीवरूपांश एव स्वांशिक्रियानियमितशरीरसम्बन्धित्ववर्णनेन मत्स्यादिरूपांशेषु ............ क्रियाशरीरसम्बन्धित्वाभावाविवागत्या जीवरूपांशाद्विशेषसद्भावात्। अत्र शुश्रूषुस्तस्येति शेषः। अत्राप्येवं प्रयोगः— मत्स्यादि स्वांश्यधीनप्रवृत्तिर्न, स्वक्रियानिमित्तदेहसम्बन्धित्वात्, वियद्गततत्प्रकाशाद्यभिमानिवदिति। एतेन मोक्षधर्मवचनेन ज्योतिरादिवदिति सूत्रोपात्तदृष्टान्तो विवृतः।

नन्वनुज्ञापरिहाराविति सूत्रार्थ उक्तरीत्यैव किमिति वर्णनीयः, अन्यथापि तद्वर्णनसम्भवादिति चेन्न, 'अंशाश्च देहयोग्यत्वात् जीवा बन्धादिसंयुताः। अनुग्राह्याश्चेश्वरेण न तु मत्स्यादिको हरिः। अदेहबन्धयोग्यबाद्यपथा सूर्यप्रभाक्षिणि। यथाऽमृतसमुद्रस्य श्लेष्मादेश्च द्विरूपता। अनुग्राह्यत्वमन्यस्य तेनैवावृतिरोधनम्' इति वाराहवचनसंवादेन उक्तरीत्यैव तत्सूत्रार्थस्य विज्ञातव्यत्वात्। देहयोग्यत्वादित्युक्त्या मुक्तानामपि सङ्ग्रहः कृतो भवति। सूर्यप्रभाक्षिणि अनेकप्रकारेति शेषः।

युक्त्यन्तरेण मत्स्यादीनां जीवानां चैकविधत्वं निराकरोति— **असन्ततेश्चाव्यतिकरः** इति। किं च जीवस्यासन्ततेः सन्ततिः सम्यक्करणं कृतिः तदभावोऽसन्ततिः अशक्त्यसम्यक्कृत्यभावः तस्माच्च

कारणात् मत्स्यादीनां तत्सम्भवाच्चांशत्वाविशेषेऽपि अव्यतिरेकः व्यतिरेको व्यत्यासस्तदभावः । अत्र उक्तस्येति शेषः । मत्स्याद्यंशानामंशिनैकविधत्वं जीवानां तु न तथेत्युक्तस्य व्यतिरेको नेति सूत्रार्थः ।

ननु भवेदेवं यदि मत्स्यादीनामेव पूर्णशक्तित्वं न जीवस्य एतत्प्रामाणिकं स्यात् तदेव कुत इति चेत् तस्य ह वा एतस्य परमस्य त्रीणि रूपाणि कृष्णो रामः कपिल इति । 'तस्य ह वा एतस्य परमस्य पञ्च रूपाणि दशरूपाणि शतरूपाणि सहस्ररूपाणि अमितरूपाणि । तानि ह वा एतानि सर्वाणि पूर्णानि सर्वाण्यनन्तानि सर्वाण्यसम्मितानि । अथावरा सर्व एवापूर्णाः सर्व एव बद्ध्यन्तेऽथ मुच्यन्ते च केचन' इति चतुर्वेदशिखावाक्यसत्त्वादिति गृहाण । अत्र कृष्णादिः कश्चन व्यूहः । पञ्च नारायणादीनि असम्मितानि निरुपमानीत्यर्थः ।

युक्त्यन्तरेणोक्तं साधयति— **आभास एव च** इति । किं च जीव आभास एव प्रतिबिम्ब एवेति सूत्रार्थः । अंशत्वाविशेषेऽपि जीवानामेव 'रूपं रूपं प्रतिरूपो बभूव' इति श्रुतेः प्रतिबिम्बत्वमस्ति, मत्स्यादीनां तदभावान्न तेषां मत्स्यादिभिरेकविधतेति जीवसमुदायः परमेश्वरस्य रूपं रूपं प्रतिरूपः प्रतिबिम्बो भूत्वा वर्तते तद्बिम्बरूपमस्य जीवसमुदायस्य मुक्त्यर्थं साक्षात्कारविषयो भवति । स च परमेश्वरः स्वसामर्थ्येनानन्तजीवप्रतिबिम्बरूपो जायते । अस्यानन्तानि हरिनामकानि रूपाणि व्यूहशः सन्तीति प्रसिद्धमिति तच्छ्रुत्यर्थः । नन्वेवं सूत्रार्थवर्णने किं कारणमिति चेत् 'द्विरूपावंशकौ तस्य परमस्य हरेर्विभोः । प्रतिबिम्बांशकश्चाथ स्वरूपांशक एव च । प्रतिबिम्बांशका जीवाः प्रादुर्भावाः परे स्मृताः । प्रतिबिम्बेष्वल्पसाम्यं स्वरूपाणीतराणि तु' इति वाराहवचने तथावर्णनमेव कारणमिति गृहाण । परे स्वरूपांशा इत्यर्थः ।

ननु जीवस्य परमात्मांशत्वं प्रतिबिम्बत्वरूपमयुक्तम्, तदतिरिक्तोपाध्यभावात्, लोके प्रतिबिम्बोपाधेरतिरिक्तत्वदर्शनादिति चेन्न, 'सोपाधिरनुपाधिश्च प्रतिबिम्बो द्विधेयते । जीवः परस्यानुपाधिरिन्द्रचापो यथा रवेः । यथैता पुरुषे छाया एतस्मिन्नेतदाततम्' इति श्रुतिभ्यामेव सोपाधिनिरुपाधिभेदेन प्रतिबिम्बद्वैविध्यमुक्त्वा, तत्र जीवरूपेशप्रतिबिम्बस्यैवानुपाधित्वस्य सदृष्टान्तं प्रतिपादनात् । एवं चांशत्वेन श्रुत्यादिसिद्धस्य जीवस्य मत्स्यादिवदंशत्वं नेति नैवांश इति जीवस्यानंशत्वावेदकश्रुतिरप्युपपन्नेत्युक्तं भवति । न च तच्छ्रुतेरप्रामाण्यमेव किं न स्यात्, किं यथाकथञ्चिदुपपादनेनेति वाच्यम्; वाक्याप्रामाण्यस्य वक्तृमिथ्याज्ञानमूलत्वेन वेदस्य चापौरुषेयत्वेन तदभावादिति । अतः श्रुत्यविरोधेन जीवस्येश्वरांशत्वसिद्धेर्युक्तो हरौ श्रुतिसमन्वय इति ।

## १९. अदृष्टाधिकरणम्

ननु तथापि हरौ श्रुतिसमन्वयो नोपपद्यते, जीवप्रतिबिम्बत्वविषयतदप्रतिबिम्बत्वविषयकश्रुतीनां परस्परविरोधेनाप्रामाण्यात् । ननु रूपं रूपं प्रतिरूपो बभूव' इति प्रतिबिम्बत्वावेदकश्रुतिवत् तद-प्रतिबिम्बत्वावेदकश्रुतेरनुपलम्भाद्विरोधाभावेनाप्रामाण्यप्रसक्तिरेव नेति चेत् विरोधपरिहारार्थं भगवतः सूत्रकारस्य यत्नदर्शनात् । प्रकरणवशाज्जीवप्रतिबिम्बत्वावेदकश्रुतिविरुद्धश्रुत्यन्तरस्यानुमानात्, अनु-मितश्रुतेः सयुक्तिकत्वेन प्राबल्यात् । अस्ति खल्वयं जीवानाम् अन्योन्यं भेदः सुरासुरनरतिर्यगादि-रूपः । न चैकेश्वरप्रतिबिम्बानां मिथो वैचित्र्यं सम्भवति । भवति चेत् भवत्येको भगवत्प्रतिबिम्बेन तु सर्वोऽपि एकप्रतिबिम्बेषु क्वापि वैचित्र्यादर्शनात् । तदयं प्रयोगः— न जीवा एकप्रतिबिम्बाः अभेद-वत्त्वात् घटवदिति । अतः सयुक्तिकश्रुतिविरोधात् प्रतिबिम्बत्वश्रुतिरप्रमाणमिति नोक्तसमन्वयसिद्धि-रित्याशङ्क्याह— **अदृष्टानियमात्** इति । प्रतिबिम्बा एव जीवाः ।

'रूपं रूपं प्रतिरूपो बभूव' इत्यादिश्रुतेः । न च तत्त्वे वैचित्र्यानुपपत्तिः, कारणाभावादिति वाच्यम्; अदृष्टानियमादेव वैचित्र्योपपत्तेरिति सूत्रतात्पर्यगोचरोऽर्थः । अदृष्टस्यानाद्यविद्याकर्मादि-रनियमादेकविधत्वाभावान्नानाविधत्वादेतद्वैचित्र्यात् प्रतिबिम्बानां जीवानामपि वैचित्र्यमुपपद्यते । न च वाच्यं वैचित्र्यान्यथानुपपत्त्यैव सर्वेषां प्रतिबिंबत्वमिति । अशेषजीवानामुदाहृतश्रुत्या भगवत्प्रतिबिंब-त्वेऽपि विद्याद्यदृष्टवैचित्र्येण देवदानवमानवादिवैचित्र्यस्योपपत्तेः । 'यथाप्रज्ञं हि सम्भवाः' इत्यादि-श्रुतेः । न च अदृष्टवैचित्र्यमेवासम्भावितम्, तस्यापि पूर्वादृष्टवैचित्र्यादुपपत्तेः तस्याप्येवमित्यनादि-त्वादिति ।

ननु किं वैचित्र्यस्य विचित्रादृष्टकारणकत्वकल्पनया, रागद्वेषमोहादिदोषाणामेव तन्निमित्तत्वोप-पत्तेरित्याशङ्कां परिहरति— **अभिसन्ध्यादिष्वपि चैवम्** इति । अभिसन्ध्यादिष्वपि इच्छाद्वेषमोहादि-दोषेष्वपि वैचित्र्यं च अदृष्टानियमात् विचित्रादृष्टादेवेति सूत्रार्थः । प्रतिक्षणवैचित्र्यं चशब्दार्थः । न च वाच्यं दोषवैचित्र्यादेव तद्वैचित्र्यमिति; तस्यापि सादित्वेन कारणगवेषणायां अदृष्टस्यैव ग्राह्यत्वात् । न च पूर्वदोषवैचित्र्यादुत्तरदोषवैचित्र्योपपत्तौ किमदृष्टेनेति । दोषवैचित्र्यस्यादृष्टवैचित्र्यं विना जीव-वैचित्र्यनिमित्तत्वे तदभावेऽप्येकस्मिन् पुंसि प्रतिक्षणं वैचित्र्यं न स्यात् । अस्ति च एतत् । अत-स्तदन्यथानुपपत्त्या अदृष्टमेव तत्र कारणत्वेन ग्राह्यमिति भावः । ननु स्वर्गस्थाः सुरा भूमिनिष्ठा नरा इत्यादिस्थानवैचित्र्यादेव तद्वैचित्र्योपपत्तेः किमदृष्टेनेत्याशङ्क्याह— **प्रदेशादिति चेन्नान्तर्भावात्** इति । प्रदेशात्प्रदेशविशेषादेव तद्वैचित्र्यमिति चेदिति सूत्रे शङ्कावाक्यार्थः । न स्थानविशेषकृतं

वैचित्र्यम्, अन्तर्भावात् स्वर्गादिस्थानविशेषस्याप्यदृष्टकार्येष्वेवान्तर्भावादिति परिहारांशस्यार्थः । अयं भावः— न स्थानवैचित्र्यमेव स्थानिवैचित्र्यहेतुः । निष्कारणस्थानवैचित्र्यस्यैवानुपपत्त्या तत्कारणान्वेषणे दूरे गत्वा अदृष्टस्यैव तन्नियामकत्वेनाङ्गीकार्यत्वात् । स्थानैक्येऽपि स्थानिवैचित्र्यदर्शनाच्चेति । एवं श्रुतेरविरुद्धत्वात् अन्या श्रुतिर्निरुपाधिप्रतिबिम्बत्वविषयेति द्रष्टव्यम् । तदेवं श्रुत्यविरोधेन जीवस्य प्रतिबिम्बत्वसिद्धेर्युक्तो जगत्कारणे नारायणे श्रुतिसमन्वय इति ।

*इति श्रीविजयीन्द्रभिक्षुणा कृते भाष्यतत्त्वप्रकाशिकावाक्योद्धाररूपे*
*मुकुरनाम्नि ग्रन्थे द्वितीयाध्यायस्य तृतीयः पादः ॥*



# अथ द्वितीयाध्यायस्य चतुर्थः पादः

## १. प्राणाधिकरणम्

अत्र पादे ईश्वरस्य श्रुतिसमन्वयेन जगत्कारणत्वसिद्ध्यर्थं श्रुत्यादिसिद्धयुक्तिसहितश्रुतिविरोधः परिह्रियते । अत्र प्रथमाधिकरणे इन्द्रियोत्पत्तिविषयश्रुतिविरोधः परिह्रियते । ननु तथापि विष्णौ श्रुतिसमन्वयोऽनुपपन्नः, इन्द्रियोत्पत्त्यनुत्पत्तिविषयश्रुतीनां परस्परविरोधेनाप्रामाण्यात् । 'प्राणा एवेदमग्र आसुः तेभ्यो भूतानि जज्ञिरे, भूतेभ्योऽण्डम्, अण्डस्यान्तस्त्विमे लोकाः, अथ प्राणा एवानादयः । प्राणा नित्याः' इति श्रुतौ प्राणानामनुत्पत्तिप्रतीतेः । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति श्रुतौ तदुत्पत्तिप्रतीतेश्च विरोधात् । अत्र परिमाणा इतीन्द्रियानुत्पत्तिश्रुतेः स्पष्टार्थाया निरवकाशत्वेन, प्राणा नोत्पत्तिमन्ति निरुपादानत्वात्, व्यतिरेकेण घटवदिति युक्तियुक्तत्वेन च 'एतस्माज्जायते प्राण' इति तदुत्पत्तिश्रुत्यपेक्षया प्राबल्यात् । न च निरुपादानत्वहेतुरसिद्धः, 'नोपादानं हीन्द्रियाणामतोऽनुत्पत्तिरिष्यते । उपादानकृता सृष्टिः सर्वलोकेषु दृश्यते' इति भविष्यत्पर्ववचनसिद्धत्वात् इत्याशङ्कानिरासार्थमिदं सूत्रम्— **तथा प्राणाः** इति । यथा आकाशादयः परमात्मन उत्पद्यन्ते तथा प्राणा अपि इन्द्रियाण्यपीति सूत्रार्थः । उत्पत्तिमन्त एव प्राणाः । आकाशादिनामुत्पत्तिमत्त्वे कथिते युक्तिसमुदायस्य अत्रापि सत्त्वादिति भावः ।

नन्विदमनुपपन्नम्, आकाशस्यानुत्पत्तिमत्त्वाभावे न वियदश्रुतेरिति श्रुत्यश्रवणस्य हेतूकरणात् प्रकृते च प्राणानुत्पत्तिमत्त्वे श्रुतेः सत्त्वादित्याशङ्क्याह— **गौण्यसम्भवात्** इति । प्राणानादित्व-

श्रुतिर्गौणी गौणानादित्वपरा असम्भवात् प्राणानां मुख्यानुत्पत्तिमत्त्वासम्भवादिति सूत्रार्थः । मुख्यार्थ-सम्भवे गौणार्थस्वीकारस्यान्यायप्राप्तत्वात् । अन्यथा 'एतस्माज्जायते प्राणः' इति श्रुतिरसम्भवार्था स्यात् इति भावः । ननूदाहृतप्राणानादित्वश्रुत्या प्राणानामुच्यमानं गौणानादित्वं किंरूपं कथं च मुख्यासम्भवः । प्रत्युतोत्पत्तिरेव प्राणानामसम्भवि उपादानविरहादिति चेन्न, 'नित्यान्येतानि सौक्ष्म्येण हीन्द्रियाणि तु सर्वशः । तेषां भूतैरुपचयः सृष्टिकाले विधीयते । परेण साम्यसम्प्राप्तेः कस्य स्यान्मुख्य-नित्यता' । इति भविष्यत्पर्ववचनेन प्राणानां सूक्ष्मरूपेण नित्यत्वकथनात् । गौणानादित्वस्वरूपस्य परेण साम्यसम्प्रतिपत्तेरित्यादिना तेषां मुख्यानुत्पत्तिमत्वासम्भवस्य तेषां भूतैरुपचय इत्यनेन तेषामुपादान-सम्भवस्य च वर्णनात् । अत्रोपचयात्प्रागसमर्थानीन्द्रियाणि न संसारकारणानि स्युरिति शङ्कावारणाय सृष्टिकाल इत्युक्तिः । प्रलये विभक्तांशानां तेषां प्रति सृष्टिकाले भूतैरुपचयो विधीयत इति भावः । अत्राहङ्कारकारणत्वस्याप्यनिषेधादविरोधः । अहङ्कारोत्पन्नभूतानामपि सूक्ष्मप्राणैरुपचयोऽस्तीति तत्रा-प्यविरोधः । मुख्यनित्यतायां को दोष इति चेत्तथा सति प्राणानां परमात्मवत् स्वातन्त्र्यमेव स्यात् । अनेन 'यावद्विकारं तु विभागो लोकवत्' इत्यादियुक्तयोऽत्र गृहीता भवन्तीति द्रष्टव्यम् । 'प्रतिज्ञा-हानिरव्यतिरेकाच्छब्देभ्यः' इत्युक्तयुक्त्याप्येतमर्थं समर्थयते— **प्रतिज्ञानुपरोधाच्च** इति । 'इदं सर्वमसृजत' इति प्रतिज्ञानुपरोधाच्च प्राणानामुत्पत्तिर्दुर्निवारेति सूत्रार्थः । अतः श्रुत्यविरोधेन प्राणानां परमात्मोत्पन्नत्वस्य सिद्धेर्युक्तमीश्वरस्य श्रुतिसमन्वयेन जगत्कारणत्वमिति ।

## २. मनोऽधिकरणम्

ननु न श्रुतिसमन्वयेनेश्वरस्य जगत्कारणत्वं युज्यते, 'द्विधा हैवेन्द्रियाणि नित्यानि चानित्यानि च' । तत्र नित्यं मनोऽनादित्वात्, न ह्यमनाः पुमांस्तिष्ठति । अनित्यान्यन्यानीति मनसो नित्यत्वा-दिश्रवणात् । न चोत्पत्तिश्रुत्यनुसारेण इन्द्रियानुत्पत्तिश्रुतिवत् तन्नित्यत्वादिश्रुतेर्गौणार्थत्वाश्रयणं युक्तम्; इन्द्रियाणां तत्रानित्यत्वमुक्त्वा मनसो विशिष्य नित्यत्वाभिधानात् । किं च मनसः सादित्वे तेन विनापि पुरुषस्यावस्थानं स्यात् । किं चात इति चेन्न; तदा तस्य संसाराभावापत्तेः । मनो हि संसारहेतुः । यदाह श्रुतिः— 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः' इति । संसारसादित्वं त्वप्रामाणिकं सर्वप्रमाणविरुद्धं च । अतो नित्यत्वमेव मनसः । एवं युक्तियुक्तविशेषश्रुतेः प्राबल्यात् तद्विरोधेन तदुत्पत्तिश्रुतेरप्रामाण्यं स्यादित्याशङ्क्याह— **तत्प्राक् श्रुतेश्च** इति । तन्मन उत्पत्तिमदेव, कुतः ? 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति तस्येन्द्रियान्तरापेक्षया प्राक्पूर्वमुत्पत्तिश्रुतेरिति सूत्रार्थः । अत्र चशब्दस्तु 'पूर्वं मनः समुत्पन्नं ततोऽन्येषां समुद्भवः । तदनुत्पत्तिवचनमल्पोपचयकारणात्' इति वायुप्रोक्तवचनग्रह-

णार्थः । अयं भावः— नानुत्पत्तिर्मनसः, तदुत्पत्तौ श्रुतिसद्भावात् । पृथङ्मनसो जन्माभिधायकत्वेन तच्छ्रुतेर्विशेषश्रुतितयाऽर्थान्तरपरत्वाश्रयणायोगात् । न चान्येन्द्रियवत् मनसोऽप्युत्पत्तिमत्त्वे तस्येन्द्रियान्तर्गतस्य पृथगभिधानं व्यर्थमिति वाच्यम्; अन्येन्द्रियेभ्योऽपि प्रागुत्पन्नत्वाभिप्रायेण तदुपपत्तेरिति ।

ननु कुतो मनसः पूर्वमुत्पत्तिः । कथं चोत्पत्त्यङ्गीकारे श्रुत्यादिविरोधपरिहार इति चेत् 'मनः सर्वेन्द्रियाणि च' इति 'पूर्वं मनः समुत्पन्नम्' इत्युदाहृतवायुप्रोक्तवचनाच्चेति ब्रूमः । न चैवमपि तत्र 'नित्यं मनोऽनादित्वात्, न ह्यमनाः पुमांस्तिष्ठति' इति श्रौतयुक्तिविरोधः, प्रलयेऽपीन्द्रियान्मनसोऽपि सूक्ष्मस्वरूपसत्ताभ्युपगमात् । न च द्विधेत्युदाहृतश्रुतौ विशिष्य तस्य पृथगुक्तिविरोधः, अन्येन्द्रियेभ्योऽल्पोपचयाभिप्रायेणेव तदुपपत्तेरिति । अत्र श्रुत्यविरोधेन मनसो भगवदुत्पन्नत्वसिद्धेर्युक्तो जगत्कारणे ब्रह्मणि श्रुतिसमन्वय इति ।

## ३. वागधिकरणम्

ननु श्रुतिसमन्वयेन जगत्कारणत्वं विष्णोरुक्तमयुक्तम्, 'मनः सर्वेन्द्रियाणि च' इत्यादिवागुत्पत्तिश्रुतीनां सयुक्तिकतदनुत्पत्तिश्रुतिविरोधेनाप्रामाण्यात् 'नित्ययाऽनित्यया स्तौमि परमात्मानमच्युतम्' इति 'वाग्वाव नित्या न ह्येषोत्पद्यतेऽस्यां हि श्रुतिरवतिष्ठते' इति हि पौष्यायणश्रुतिः । न चेयं श्रुतिर्वेदविषया नित्ययानित्यया स्तौमि श्रुतिर्वाव नित्या अनित्या वा ताः स्मृतयो याश्चान्या वाच इति समाख्याश्रुतौ नित्ययानित्यया स्तौमीत्यवतार्य श्रुतिर्वाव नित्येति व्याख्यातत्वात् । सामान्यवाक्छब्दस्य विशेषेणार्थकल्पनोपपत्तेरुत्पत्तिश्रुत्यानुकूल्याच्चेति वाच्यम्; 'अस्यां हि श्रुतिरवतिष्ठत इति पौष्यायणश्रुतौ वाक्यशेषात्तस्या विशेषश्रुतित्वात् । न हि श्रुतौ श्रुतिरवतिष्ठते । किं चोत्पत्तिमत्त्वे वाचः श्रुतं श्रुत्याश्रयत्वं तस्या नोपपद्यते । न ह्यनित्यो नित्याश्रयः क्वचित् दृष्टः । न च वाच्यं सूक्ष्मरूपानादित्वपरा सा श्रुतिरिति किं न स्यात्, उत्पत्तिश्रुत्यानुकूल्यादुपचयोऽपीति श्रुतश्रुत्याश्रयत्वादेव । श्रुत्याश्रयत्वं नाम वाचो नित्यं श्रुत्युच्चारणसामर्थ्यम् । अन्यथा नित्यसर्वगतानां वर्णानां विशिष्य वागाश्रयोक्तिवैयर्थ्यात् । सदा च वेदोच्चारणसमर्थाया वाचो व्यर्थमुपचयकल्पनम् । अतः सयुक्तिकश्रुतिविरोधादप्रामाण्यं वागुत्पत्तिश्रुतेरित्यत आह— **तत्पूर्वकत्वाद्वाचः** इति । तस्मात् 'मन एव पूर्वरूपं वागुत्तररूपमि'ति श्रुत्या वाचो वागिन्द्रियस्य तत्पूर्वकत्वान्मनःपूर्वकत्वात् मनःकारणत्वाभिधानान्नानुत्पत्तिरिति सूत्रार्थः । श्रुतौ पूर्वोत्तरशब्दौ कार्यकारणपरौ । न च वागुत्तररूपमिति श्रुतौ वाक्शब्दस्य व्याहरणार्थत्वं, 'वाचा व्याहरतीति' पूर्ववाक्यबलेनेन्द्रियार्थत्वेऽस्याः विशेषश्रुतित्वात् ।

न चैवं 'नित्ययानित्यया स्तौमि परमात्मानमच्युतम्' इति तन्नित्यत्वावेदकश्रुतिविरोधः। 'वागिन्द्रियस्य नित्यत्वं श्रुतिसन्निधियोग्यता। उत्पत्तिर्मनसो यस्मान्न नित्यत्वं कुतश्चन' इति वायुप्रोक्तवचनानुसारेण तस्या नित्यत्वश्रुतिसन्निधानरूपौपचारिकनित्यत्वपरत्वेन मुख्यनित्यत्वपरत्वासिद्धेः। न च नित्याश्रयत्वादेव नित्यत्वम्। यतो नित्याश्रयत्वं च न नित्यदा, अपि तु तद्योग्यतैव। अत एव नोपचयवैयर्थ्यम्। वायुप्रोक्तवचने मनस इत्यस्य मनसः सकाशादित्यर्थः। एवमभ्युपगमे वाग् वाव नित्येति नित्यत्वश्रुतिरप्युपपन्ना, न मुख्यनित्यत्वे, तस्या अप्येतदर्थत्वात्। वाग्वाव नित्येत्युक्ते कथमित्याशङ्कायामुपचारोऽयमिति। तत्रैव श्रुतौ 'अस्यां हि श्रुतिरवतिष्ठत' इत्युपचारबीजमुच्यते। एवञ्च सति वेदाश्रयत्वेन नित्यया पुराणाश्रयत्वेन चानित्ययेति वाक्यार्थो घटते। एवञ्च समाख्या श्रुतिरप्यनुकूलिता भवति। अन्यथा वाक्यार्थोपपत्तिरिति भावः। अतः श्रुत्यविरोधेन वाच उत्पत्तिसिद्धेर्युक्तः श्रुतिसमन्वयो जगत्कारणे हराविति।

## ४. सप्तगत्यधिकरणम्

नन्वथापि श्रुतिसमन्वयो न युज्यते। इन्द्रियसङ्ख्यावेदकश्रुत्योः परस्परविरोधेनाप्रामाण्यात्। 'सप्त प्राणाः प्रभवन्ति तस्मात्' इति श्रुतौ प्राणशब्दितानामिन्द्रियाणां सप्तत्वस्य, द्वादश वा एते प्राणाः' इति कौण्डिन्यश्रुतौ तेषां द्वादशत्वस्य च वर्णनात्। अन्यतरप्राबल्ये कारणादर्शनात्। एवं क्वचिच्छ्रुत्यप्रामाण्येऽन्यत्रापि श्रुतावनाश्वासादित्यत आह— **सप्तगतेर्विशेषितत्वात्** इति। 'सप्त प्राणाः' इति श्रुतौ सप्तत्वं चक्षुःश्रोत्रघ्राणरसनत्वङ्मनोबुद्धिरूपज्ञानेन्द्रियापेक्षया, गुहाशयां बुद्धिमुद्दिश्य प्रतिशरीरं निहिता इत्यर्थके गुहाशयां निहिताः सप्तसप्त' इति तद्वाक्यशेषे तेषामवगत्यर्थत्वेन विशेषितत्वात् 'सप्त प्राणास्त्ववगतेः, पञ्च प्राणाश्च कर्मणः। एवं प्राणद्वादशकं शरीरे नित्यसंस्थितम्' इति भविष्यत्पर्ववचनाच्चेति सूत्रार्थः।

ननु सप्त प्राणेभ्योऽन्ये प्राणाः सन्ति चेत् तैः सह पठ्येरन्। अतस्तत्सहपाठाभावेऽनादित्वेन परमात्मा अकारणत्वेन वा भवेत् तदुभयं चोक्तविरुद्धमिति अत आह— **हस्तादयस्तु स्थितेऽतो नैवम्** इति। हस्तादयः पाणिपादपायुगुदादयः स्थिते कर्मणि तद्विषयाणीन्द्रियाणीत्यतो हेतोः नैवं ज्ञानेन्द्रियैः सह न पठ्यन्ते, न त्वनादित्वेन परमात्माऽकारणत्वेन वेति सूत्रार्थः। अत इन्द्रियसङ्ख्याविषयश्रुत्यविरोधेन युक्तं श्रुतिसमन्वयेन विष्णौ जगत्कारणत्वमिति।

## ५. अणुत्वाधिकरणम्

ननु तथापि विष्णौ श्रुतिसमन्वयो न युज्यते । 'प्राणा वा अणवः' इतीन्द्रियाणुत्वावेदकश्रुतेः 'दिवीव चक्षुराततम्' इति श्रुतिविरोधेनाप्रामाण्यात् । अत्र भगवद्व्याप्तौ चक्षुर्व्याप्तेर्दृष्टान्ततयोपादानात् दूरस्थलवस्तुदर्शनश्रवणादिकार्यदर्शनरूपयुक्तिसहितत्वेन च तद्व्याप्तत्वश्रुतेः प्राबल्यादित्यत आह— **अणवश्च** इति । अणवः प्राणाः तेजसा व्याप्ताश्चेति सूत्रार्थः । न चात्र प्रमाणाभावः, 'अणुभिः पश्यत्यणुभिः कृणोति तद्यथा ह्यणुनश्चक्षसः प्रकाशो व्याततः एवमेवास्य पुरुषस्य प्रकाशो व्याततः' इति शाण्डिल्यश्रुतेः । अत्रापि अणुभूतजीवप्रकाशव्याप्तौ अणुभूतचक्षुर्व्याप्तेर्दृष्टान्ततयोपादानात् । अस्याः श्रुतेर्विशेषश्रुतित्वात् 'दिवीव चक्षुराततमि'त्यादेस्तु सामान्यश्रुतित्वात् व्याप्तप्रकाशधर्ममादायाप्युपपन्नत्वात् दूरवस्तुदर्शनादियुक्तेरपि तथात्वोपपत्तेश्चेति भावः । अत इन्द्रियपरिमाणश्रुतीनामप्यविरोधाद्युक्तं विष्णोः श्रुतिसमन्वयेन जगत्कारणत्वमिति ।

## ६. मुख्यप्राणाधिकरणम्

ननु तथापि विष्णौ श्रुतिसमन्वयो न युज्यते । 'नैष प्राण उदेति नास्तमेति' इति श्रुतिविरुद्धाया 'आत्मत एष प्राणो जायते' इति मुख्यप्राणोत्पत्त्या वेदिकायाः श्रुतेरप्रामाण्यात् । 'यत्प्राप्तिर्यत्परित्याग उत्पत्तिर्मरणं तथा । तस्योत्पत्तिर्मृतिश्चैव कथं प्राणस्य युज्यते' इति स्मृत्युक्तयुक्तिसाहित्येन तदनुत्पत्तिश्रुतेः प्राबल्यादित्यत आह— **श्रेष्ठश्च** इति । अत्र चकारोऽप्यर्थः । यथेतरे प्राणा उत्पद्यन्ते तथा श्रेष्ठो मुख्यप्राणोऽपि जायत इति सूत्रार्थः । न चोत्पत्तिश्रुतेरनुत्पत्तिश्रुतिविरुद्धत्वेनाप्रामाण्यम्, 'सौक्ष्म्येण ह वा एषोऽवतिष्ठते, स्थूलत्वेनोदेति सूक्ष्मश्चाथो स्थूलश्च प्रकृतितः सूक्ष्मोऽन्यतः स्थूलोऽथैनमाहुः सादिरनादिः' इति श्रुत्यनुसारेणोत्पत्त्यनुत्पत्तिश्रुत्योरविरोधादिति । अत्र श्रुतौ प्रकृतितः स्वभावतः । अन्यतः शरीरादित इत्यर्थः ।

ननूत्पत्तिश्रुतिमात्रेण सयुक्तिकानादित्वश्रुतिः कथमन्यथा व्याख्यायते, उत्पत्तिश्रुतिरेव चेष्टा बाह्यवायुविषयतया कुतो न व्याख्यातव्या ? 'चेष्टायां बाह्यवायौ च मुख्यप्राणे च गीयते । प्राणशब्दस्त्रिषु ह्येषु मुख्ये मुख्यः प्रकीर्तितः' इति तयोरपि प्राणशब्दवाच्यत्वोक्तेरित्यत आह— **न वायुक्रिये पृथगुपदेशात्** इति । प्राणोत्पत्तिश्रुतेर्न वायुक्रिये विषयः, 'स प्राणमसृजत, प्राणाच्छ्रद्धा खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्रकर्म लोकेषु नाम च' इति प्राणोत्पत्तिव्यतिरेकेण वायुकर्मोत्पत्तेः पृथगुपदेशादिति । अतः श्रुत्यविरोधेन युक्तं श्रुतिसमन्वयेन विष्णोर्जगत्कारणत्वमिति ।

## ७. चक्षुराद्यधिकरणम्

ननु तथापि विष्णौ श्रुतिसमन्वयो न युज्यते। 'प्राणस्यैतत् वशे सर्वं प्राणः परवशे स्थितः' इति श्रुतेः 'प्राणादेवेदमाविरासीत् प्राणो धत्ते प्राणे लयमभ्युपैति न प्राणः किञ्चिदाश्रितः'। इति श्रुति-विरुद्धत्वेन अप्रामाण्यात् 'यदाश्रयादस्य चेष्टा सोऽन्यं कथमुपाश्रयेत्। यथा प्राणस्तथा राजा सर्वस्यैकाश्रयो भवेत्'। इति भारतोक्तयुक्तिसहितत्वेन प्राणस्वातन्त्र्यावेदकश्रुतेः प्राबल्यादित्यत आह— **चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः** इति। चक्षुरादिवन्मुख्यप्राणोऽपि ईश्वरपरतन्त्रः, 'सर्वं ह्येवैतत्परमेऽवतिष्ठते प्राणश्च प्राणाश्च प्राणिनश्च स ह्येक एवैतान्नयत्युन्नयति वशीकरोती'ति श्रुतौ तस्य तैश्चक्षुरादिभिः सहेश्वरवशत्वेन शिष्टे शासनस्य प्रतीतेः 'नान्योऽतोऽस्ति द्रष्टे'त्यादावीश्वरान्यस्य स्वातन्त्र्येण द्रष्टृत्वाद्यभाववर्णनात् 'सर्वकर्ताऽपि सन् प्राणः परमाधारतः स्थितः। कथमेवान्यथा स स्याद्यतो नैवेश्वरद्वयम्। अवान्तरेश्वरत्वेन तस्येश्वरवचो भवेत्। अतो मध्यमतामाहुस्तस्य वेदेषु वेदिनः'। इत्यादिस्मृत्या तत्स्वातन्त्र्यावेदकश्रुतेर्गतिरुक्तत्वाच्चेति सूत्रार्थः।

ननु चक्षुरादितुल्यस्य तस्य कथं विष्णौ नियन्तृराहित्यमित्यत आह— **अकरणत्वाच्च न दोषस्तथाहि दर्शयति** इति। अकारणत्वात् कारणभिन्नत्वाच्च मुख्यस्य करणेन्द्रियनियन्तृत्वेन न दोषः। 'तानि ह वा एतानि सर्वाणि करणान्यथ प्राण एवाकरणस्तस्मान्मुख्यस्तस्मान्मुख्य इत्याचक्षत' इति श्रुतौ तथैव दर्शनादिति सूत्रार्थः। तस्माच्छ्रुत्यविरोधेन विष्णौ श्रुतिसमन्वयो युक्त इति।

## ८. पञ्चवृत्त्यधिकरणम्

ननु तथापि विष्णौ श्रुतिसमन्वयो न युज्यते 'सर्वे वा एते मुख्या दासाः प्राणोऽपानो व्यान उदानः समानः' इति, 'मुख्यस्यैव स्वरूपाणि प्राणाद्याः पञ्च वायवः। स एव प्राणिनां देहे पञ्चधा वर्ततेऽनिशम्' इति कौण्डिन्यगौपवनश्रुत्योः परस्परविरोधेनाप्रामाण्यात् क्वचित्पञ्चानां मुख्यदासत्व-वर्णनात् तत्स्वरूपत्ववर्णनाच्च। 'प्राणापानादयः सर्वे मुख्यदासा यतोऽनिशम्। अतस्तदाज्ञया नित्यं स्वानि कर्माणि कुर्वते'। इति वायुप्रोक्तोक्तयुक्तिसहितत्वेन 'मुखनासिकाभ्यां प्राणः स्वयं प्रतिष्ठते मध्ये तु समानः एष ह्येव हुतमन्नं नयति' इत्यादि श्रुत्युक्ततदीयगुणाभिव्यक्तियुक्तिसहितत्वेन द्वयोरपि प्राबल्यादित्यत आह— **पञ्चवृत्तिर्मनोवद्व्यपदिश्यते** इति। यथा मनो द्विविधैर्मनःप्रभृतिभिः पञ्चवृत्ति पञ्चदासं च तथा मुख्योऽपि द्विविधैः प्राणादिभिः पञ्चवृत्तिपञ्चदासश्च। तथा हि श्रुतौ व्यपदिश्यते 'प्राणो वा व पञ्चवृत्तिः प्राणोऽपानो व्यान उदानः समानः' इति 'तेभ्यो वा एतेभ्यः पञ्चदासाः प्रजायन्ते, प्राणाद्वाव प्राणोऽपानादपानो व्यानाद्व्यान उदानादुदानः समानादेव समानो यथा ह वै मनः पञ्चधा

व्यपदिश्यते मनो बुद्धिरहङ्कारश्चित्तं चेतनेति तेभ्यो वा एतेभ्यः पञ्चदासाः प्रजायन्ते मनसो वा व मनो बुद्धेर्बुद्धिरहङ्कारादहङ्कारश्चित्ताच्चित्तं चेतनाया एव चेतनैवमिति सूत्रार्थः । तस्य स्वरूपभूताः प्राणादयो मुख्यगुणपूर्णाः दासास्तु किञ्चित्तदीयगुणयुक्ता इति विवेकः । 'अशेषगुणपूर्णानि मुख्यरूपाणि पञ्च च । तद्दासाः पञ्च चान्येऽपि प्राणाद्याः सद्गुणैर्युताः' इति स्मृतेः । अतो विषयभेदेन श्रुत्योरविरोधात् विष्णौ युक्तः श्रुतिसमन्वय इति ।

## ९. प्राणाणुत्वाधिकरणम्

ननु तथापि श्रुतिसमन्वयो न युज्यते । 'अणुनैतद्धार्यते अणौ लयमभ्युपैति प्राणो वा अणुः प्राणो ह्येतद्भवति' इति मुख्यप्राणाणुत्वावेदकसौत्रायणश्रुतेः 'प्राण एवाधस्तात् प्राण उपरिष्टात् प्राणो मध्यतः प्राणः सर्वतः प्राण एवेदं सर्वम्' इति तद्व्याप्तिप्रतिपादकश्रुतिविरुद्धत्वेन अप्रामाण्यात् । 'यतः सर्वं जगद्व्याप्य तिष्ठति प्राण एव तु । अतो धृतं जगत्सर्वमन्यथा केन धार्यते' इति वायुप्रोक्तयुक्तिसहितत्वेन व्याप्तिश्रुतेः प्राबल्यादित्यत आह— **अणुश्च** इति । मुख्यप्राणोऽणुरेव, बहिर्देहाद्वर्तमानेन मुख्यवायु-रूपेण व्याप्तश्चेति सूत्रार्थः । न चात्र प्रमाणाभावः 'स वा एष प्राणोऽणुर्महान्नामाऽन्तर्वा अणुर्बहिर्महान्' इत्यादि कौण्डिन्यश्रुतेः 'अणुर्वै मुख्यप्राणः य उत्क्रामति नाडीभिः' इति मुख्याणुत्वे सयुक्तिक-श्रुत्यन्तराच्चेति भावः । अतः श्रुत्यविरोधेन जगत्कारणे ब्रह्मणि युक्तः सकलश्रुतिसमन्वय इति ।

## १०. ज्योतिरधिकरणम्

ननु तथापि विष्णौ श्रुतिसमन्वयो न युज्यते । 'ब्रह्मणो वा एतानि करणानि चक्षुः श्रोत्रं मनो वागिति प्राणानां ब्रह्मकारणत्वावेदककाषायणश्रुतेः 'जीवस्य करणान्याहुः प्राणानेतांस्तु सर्वशः । यस्मात्तद्वशगा एते दृश्यन्ते सर्वदेहिषु' इति सयुक्तिक सौत्रायणश्रुतिविरोधेनाप्रामाण्यादित्यत आह— **ज्योतिराद्यधिष्ठानं तु तदामननात्** इति । ज्योतिरादीनां तेजःप्रभृतीनामधिष्ठानं नियामकं ब्रह्मैव, तदंशानां चक्षुरादीनामपि प्रेरकमिति ब्रह्मकारणान्येव प्राणाः 'यः चक्षुषि तिष्ठन् यः श्रोत्रे तिष्ठन् यो मनसि तिष्ठन्' इति तदामननादि'ति सूत्रार्थः ।

नन्वेवं जीवकरणत्वावेदकश्रुतिविरोध इत्यत आह— **प्राणवता शब्दात्** इति । एष ह्यनेनात्मना चक्षुषा दर्शयति श्रोत्रेण श्रावयति मनसा मानयति बुद्ध्या बोधयति' इति भाल्लवेयश्रुत्यनुसारेण तस्याः ब्रह्मैव तैः स्वकरणैर्दर्शनादिकार्यं प्राणवता जीवेन कारयतीत्यर्थपरत्वेनाविरोधादिति सूत्रार्थः ।

ननु अस्तु ब्रह्म जीवेन चक्षुरादिना दर्शनादि कारयतीति । तथापि जीवकरणत्वश्रुतिस्तदर्थेत्येतत् कुत इति चेत् 'करणैः कारणं ब्रह्म पुरुषापेक्षयाखिलम् । श्रोत्रादिभिः कारयति करणानीत्यतो विदुः । न जीवापेक्षया मुख्यं कारयेत्परमेश्वरः । केवलात्मेच्छया तस्मान्मुख्यत्वं तस्य निश्चितम्' इति वाराह-वचनात् । स्वतन्त्रकर्तुः कर्माणि अन्याधीनान्यपि साधनत्वात् तत्करणानीत्युच्यन्ते । यथा परकीय-कुठारेण व्रश्चतोऽसौ करणमुच्यते तद्वदिति भावः । वराहवचने मुख्यं प्राणमित्यर्थः ।

जीवकरणत्वश्रुतावर्थान्तरं च आह— **तस्य च नित्यत्वात्** इति । नित्यत्वमनादित्वस्याप्युप-लक्षणम् । तस्य जीवकरणसम्बन्धस्यानादिनित्यत्वाद्युज्यते जीवकरणत्वश्रुतिरिति सूत्रार्थः । परकीयेऽपि बहुकालसम्बन्धिन्युपचारतस्तदीयत्वव्यवहारदर्शनादिति भावः । ननु 'जीवकरणसम्बन्धस्यानादि-नित्यत्वे मानाभावः', 'अथावियोगीनि करणैर्वाव न वियुज्यते देहेनैव वियुज्यत इत्येतद्वाव करणानां करणत्वं, यद्वाव न वियुज्यत' इति सौत्रचकारसूचितगौपवनश्रुतेः सत्त्वात् । अतः श्रुत्यविरोधेन प्राणानां ब्रह्मकरणत्वसिद्धेर्युक्तो जगत्कारणे विष्णौ श्रुतिसमन्वय इति ।

## ११. इन्द्रियाधिकरणम्

ननु तथापि विष्णौ श्रुतिसमन्वयो न युज्यते । द्वादशैवेन्द्रियाण्याहुर्मनोबुद्धी तु द्वादश' इति काषायणश्रुतेः 'अथेन्द्रियाणि प्राणा वा इन्द्रियाणि प्राणा हीदं द्रवन्ती'ति सयुक्तिकपौत्रायणश्रुति-विरुद्धत्वेन अप्रामाण्यात् । प्राणशब्दवाच्यानां त्रयोदशानां मध्ये कस्यचिदिन्द्रियत्वपरित्यागे विशिष्य प्रमाणाभावादित्यत आह— **त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्** इति । श्रेष्ठान्मुख्यप्राणादन्यत्र 'द्वादशैवेन्द्रियाण्याहुः प्राणो मुख्यस्तदिन्द्रियम् । द्रवतां हीन्द्रियाणां तु नियन्ता प्राण एकराट्' इति पौत्रायणश्रुतौ विशिष्य तथा व्यपदेशात् 'श्रोत्रादीनि तु पञ्चैव तथा वागादिपञ्चकम् । मनोबुद्धि-सहायानि द्वादशैवेन्द्रियाणि तु । विषयद्रवणात्तेषामिन्द्रियत्वमुदाहृतम् । तेषां नियामकः प्राणः स्थित एवाखिलप्रभुः' इति बृहत्संहितावचनाच्चेति सूत्रार्थः । 'प्राणा वा इन्द्रियाणी'ति श्रुतेः सामान्यश्रुति-त्वादिति भावः ।

ननु यदि मुख्यप्राणस्य नेन्द्रियत्वं तर्हि चक्षुरादेरपि तन्न स्यात्, विशेषाभावादित्याशङ्क्याह— **भेदश्रुतेः** इति । मुख्यप्राणस्य न चक्षुराद्यविशेषः, स्थित एव हीदं मुख्यप्राणः करोति कारयति बलयति बालयति धत्ते धारयति प्रभुं वा एनमाहुरथेन्द्रियाणि न स्थितानि न कुर्वन्ति न कारयन्ति न बलन्ति न बालयन्ति न दधते न धारयन्ति तानि ह वा एतान्यबलानि तस्मादाहुरिन्द्रियाणि करणानीति तद्भेदश्रुतेरिति ।

ननु मुख्यः प्राणः परमात्मवशो न वा । आद्ये न तस्य अनिन्द्रियत्वसिद्धिः । ईशवशत्व-साम्यात् । अवान्तरवैलक्षण्यस्य अन्यत्रापि सम्भवात् । द्वितीये चोक्तविरोध इत्याशङ्क्याह— **वैलक्षण्याच्च** इति । मुख्यप्राणस्येन्द्रियाणां चेश्वराधीनत्वेऽपि जाग्रति सुप्तौ चान्वयव्यतिरेकाभ्यां इन्द्रियप्रवृत्तिर्जीवप्रयत्नापेक्षा । मुख्यस्य तु केवलेच्छाधीनेति वैलक्षण्यादेव 'पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते नाभिवदते नादत्ते न नन्दयते न विसृजते स्वपिति इत्याचक्षते' इति इन्द्रियाणां सुषुप्तौ प्रवृत्त्यभावमभिधाय 'प्राणाग्नय य एवैतस्मिन् पुरे जाग्रति' इति मुख्यप्राणरूपाणां पुरुषे प्रवृत्तिः पुरुषप्रयत्नानपेक्षा किन्तु भगवदधीनेत्यावेदिकायाः सौत्रशब्दसूचितायाः श्रुतेश्च इति सूत्रार्थः । अतः श्रुत्यविरोधेन मुख्यप्राणस्यानिन्द्रियत्वसिद्धेर्युक्तो जगत्कारणे विष्णौ श्रुतिसमन्वय इति ।

## १२. संज्ञाधिकरणम्

ननु तथापि श्रुतिसमन्वयो न युज्यते । 'अथ कस्मादुच्यते, परम इति परमाद्ध्येते नामरूपे व्याक्रियते, तस्मादेनमाहुः परम इति, अथ कस्मादुच्यते ब्रह्मेति बृहत्वात् बृंहणाच्च' इति परमात्मनो नामरूपव्याकर्तृत्वावेदिकायाः अग्निवेश्यश्रुतेः, 'विरिञ्चो वा इदं विरेचयति विदधाति, ब्रह्मा वा व विरिञ्च एतस्माद्धीमे रूपनामनी'ति विरिञ्चस्य नामरूपव्याकर्तृत्वावेदकगौपवनश्रुतिविरुद्धत्वेन अप्रामाण्यात् । 'यस्मात् विरेचयेत् सर्वं विरिञ्चस्तेन भण्यते, एको हि कर्ता जगतो ब्रह्मैव च चतुर्मुखः' इति ब्रह्म-वचनोक्तयुक्तिसहितत्वेन गौपवनश्रुतेः प्राबल्यादित्यत आह— **संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्** इति । संज्ञामूर्तिक्लृप्तिः नामरूपात्मकशरीरसृष्टिः । तत्कुर्वतः त्रिवृत्करणं कुर्वतः परमात्मनः सकाशादेव 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन् यदास्ते' इति श्रुतिरूपोपदेशादिति सूत्रार्थः । सूत्रे त्रिवृत्कुर्वत इति हेतुगर्भं विशेषणम् । त्रिवृत्करणापेक्षत्वान्नामरूपात्मकशरीरसृष्टेः । उदाहृतपुरुषसूक्तमन्त्रे यदि लिङ्गविपर्यासः 'विरिञ्चो वा इदं सर्वमि'त्युदाहृतश्रुतेस्तु 'सर्वनाम्नां च रूपाणां व्यवहारेषु केशवः । एक एव यतः स्रष्टा ब्रह्माद्यास्तदवान्तराः' इति परमात्मवचनानुसारेण सावकाश-त्वेनाविरोधादिति भावः । अतः श्रुत्यविरोधेन शरीरस्य विष्णुकर्तृकत्वसिद्धेः श्रुतिसमन्वयेन युक्तं तस्य जगत्कारणत्वमिति ।

## १४. मांसाधिकरणम्

ननु तथापि विष्णौ श्रुतिसमन्वयो न युज्यते 'इमास्तिस्रो देवताः पुरुषं प्राप्य' इति शरीरस्य भूतत्रयात्मकत्वावेदकश्रुतेः 'अम्मयं तु यतो मांसमतस्तृप्तिश्च मांसतः' इति स्मृत्युक्त्या 'आपो वा व माँसमस्थि च भवन्त्यापः शरीरमाप एवेदं सर्वं' इति शरीरस्याम्मयत्वावेदककौण्डिन्यश्रुत्या 'यत्कठिनं

सा पृथिवी'ति श्रुत्युक्तयुक्तिसहितया 'पृथिवीशरीरमिति' शरीरस्य पृथिव्यां लयावेदकश्रुत्या औष्ण्यदर्शनादियुक्तिसहितया 'योऽग्नेर्देवयोन्याहुतीभ्यः सम्भूय हिरण्य शरीर ऊर्ध्वं स्वर्गं लोकमेति' इति शरीरस्य तैजसत्वावेदकश्रुत्या विरुद्धत्वेनाप्रामाण्यादित्यत आह— **मांसादि भौमं यथाशब्दमितरयोश्च** इति। 'सकलभूतात्मकमेवेदं शरीरम्। यत्कठिनं सा पृथिवी यद्द्रवं तदापो यदुष्णं तत्तेजः' इति श्रुतेः। किं तु तत्र मांसाद्ध्येव भौमं पार्थिवं न सर्वशरीरम्। तत्र तयोरप्तेजसोश्च कार्यत्वस्य 'यद्वा वाथो विमिश्रं मिश्राद्ध्येतद्भवति मिश्राणि हि भूतानि तस्मादेवैवमाचक्षते भूतानी'ति काषायणश्रुतिरूपशब्दानुसारेणाङ्गीकृतत्वादिति सूत्रार्थः। न च मांसस्य पार्थिवत्वे तदाप्यत्वावेदकश्रुतिविरोध इति वाच्यम्, 'पञ्चभूतात्मकं सर्वं तथाप्येकविवक्षया। एकभूतात्मकत्वेन व्यवहारस्तु वैदिके। भौममित्येव काठिन्यात् शौक्ल्यादौदकमित्यपि। तेजिष्टत्वात्तैजसं च यथास्थ्नां वचनं श्रुतावि'ति वायुप्रोक्तवचनानुसारेण मांसानामेकभूतकार्यत्वसत्त्वेन तदपेक्षया तत्र तथा क्लृप्त्युपपत्तेरिति भावः।

कथं तर्हि शरीरस्याप्यत्वाद्यावेदकविशेषवचनमित्यत आह— **वैशेष्यात्तु तद्वादस्तद्वादः** इति। तद्वादो विशेषव्यवहारो वैशेष्यात्तत्तद्भूतविशेषसंयोगापेक्षया इति सूत्रार्थः। न चात्र प्रमाणाभावः, 'पार्थिवानां शरीराणामर्धेन पृथिवी स्मृता। इतरेऽर्धे त्रिभागिन्य आपस्तेजस्तु भागतः। इति सामान्यतो ज्ञेयं भेदश्च प्रतिपूरुषम्। स्वर्गस्थानां शरीराणामर्धं तेज उदाहृतम्' इति बृहत्संहितावचनसत्त्वादिति भावः। सूत्रे द्विरुक्तिस्तु सर्वाध्यायार्थावधारणार्था। अध्यायान्ते द्विरुक्तिः स्याद्वेदे वा वैदिकेऽपि वा। विचारो यत्र सज्येत पूर्वोक्तस्यावधारणे। अनुक्तानां प्रमाणानां स्वीकारश्च कृतो भवेत्। विनिन्द्य चेतरान् मार्गान् सम्पूर्णफलता तथा। इति गरुडवचनात्। अतः श्रुत्यविरोधेन शरीरस्य पाञ्चभौतिकत्वसिद्धेः श्रुतिसमन्वयेन युक्तं विष्णोर्जगज्जन्मादिकारणत्वमिति।

*इति श्रीविजयीन्द्रभिक्षुणा कृते भाष्यतत्त्वप्रकाशिकावाक्योद्धाररूपे*
*मुकुरनाम्नि ग्रन्थे द्वितीयाध्यायस्य चतुर्थः पादः॥*

*द्वितीयाध्यायः समाप्तः॥*

★ ★ ★

॥ श्रीवेदव्यासाय नमः ॥

# अथ तृतीयाध्यायः

## १. तदन्तराधिकरणम्

एवं समन्वयाविरोधाभ्यां जगत्कारणं ब्रह्म सप्रपञ्चं निरूपितम् । अत्र तृतीयाध्याये साधनविचारः क्रियते । तत्र प्रथमपादे साधनेषु प्रथमापेक्षितस्य वैराग्यस्य सिद्धये जीवस्य गत्यागतिनिरूपणं क्रियते । ननु किं वैराग्यादिसाधनेन, तद्विनैव मोक्षसम्भवात् । भूतबन्धनिवृत्त्योरेव संसारमुक्तिपदार्थ-त्वात् । 'भूतबन्धस्तु संसारो मुक्तिस्तेभ्यो विमोचनम्' इति वाराहवचनात् । भूतनिवृत्तिश्च मरणं भवति । 'भूतानां विनिवृत्तिस्तु मरणं समुदाहृतम्' इति भारतवचनादित्यत आह— **तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम्** इति । तच्छब्देन पूर्वपादोपान्त्याधिकरणोक्तं शरीरं गृह्यते । तदनन्तरप्रतिपत्तौ शरीरान्तरप्राप्तौ भूतसम्परिष्वक्त एव जीवो रंहति गच्छति 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति तु 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'ति प्रश्न-परिहाराभ्यां इति सूत्रार्थः । येन क्रमेण प्रकारेण च पञ्चम्यामाहुतावद्भिः सम्परिष्वक्तो जीवो लब्धदेहः पुरुषमानवान् भवति इति क्रमं प्रकारं च किं वेत्थेति श्वेतकेतुं प्रति प्ररोहणप्रश्नवाक्यस्यार्थः । भूत-बन्धनिवृत्तेर्मोक्षत्वेऽपि पूर्वशरीरं परित्यज्य शरीरान्तरप्राप्तौ तदारम्भाय भूतसम्परिष्वक्तस्यैव गतिनियमेन जीवस्य मरणे सत्यपि तस्या अभावादिति भावः । अतो मरणमात्रेण मोक्षायोगादनुष्ठेयमेव साधनमिति युक्तं शास्त्रस्य सार्थक्यमिति ।

## २. त्र्यात्मकत्वाधिकरणम्

ननु प्रश्नप्रतिवचनयोरपामेव गतिश्रवणात् तस्य समस्तभूतपरिष्वङ्गाभावादेकस्य च भूतस्य शरीरानारम्भकत्वान्मरणे एव तादृशमोक्षसिद्धेर्न वैराग्याद्यपेक्षेति । अत आह— **त्र्यात्मकत्वात्तु भूयस्त्वात्** इति । प्रश्नप्रतिवचनयोरप्शब्देनान्यभूतानामपि ग्रहणम्, अपां त्र्यात्मकत्वात् क्षिति-सलिलानलात्मकत्वात् सर्वशरीरेषु गतान्तरापेक्षया अपाम्भूयस्त्वात् तत्राप्शब्दोपपत्तिरिति सूत्रार्थः । न चापां त्र्यात्मकत्वे भूयस्त्वेनाप्शब्दवाच्यत्वे च प्रमाणाभावः । 'तासां त्रिवृतं त्रिवृतमेकैकामकरो-न्मिश्राणि भूतानि' इति श्रुतेः 'तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमाः' इति स्मृतेश्चेति भावः । अतः समस्तभूतानां जीवं परिष्वज्य गमनमिति मरणमात्रे मुक्त्यभावात् अनुष्ठेयं वैराग्यादीति ।

## ३. प्राणगत्यधिकरणम्

ननु किं वैराग्यादिसाधनेन, स्वाभाविकमरणस्यैव मुक्तित्वात् प्रश्नप्रतिवचनयोर्भूतैः सह गमनस्यानुक्तत्वात् विशेषप्रमाणान्तरेण कल्पनायोगाच्चेत्यत आह— **प्राणगतेश्च** इति । 'करणैर्वाव न वियुज्यत' इति श्रुतौ प्राणानामिन्द्रियाणां जीवेन सह गमनश्रवणात् 'यत्र वाव भूतानि तत्र करणानि, नित्यानि ह वा एतानि भूतानि करणानि च नैतानि कदाचिद्विलीयन्ते न च वियुज्यन्ते' इति भाल्लवेयश्रुतौ करणानां भूतानां च अविनाभावप्रतिपादनात् प्रश्नप्रतिवचनयोरप्शब्दवाच्यैर्भूतान्तरैः सह गमनं जीवस्य प्रसिद्धमिति सूत्रार्थः । अत्रैवं प्रयोगो भवति— भूतानि जीवेन सह गमनवन्ति, तत्सहगन्तृप्राणाविनाभूतत्वात्, यद्येन सह गन्त्रविनाभूतं तत्तेन सह गच्छति, यथा राज्ञा सह गन्त्रमात्याविनाभूतो भृत्य इति । अतो मरणमात्रेण मोक्षासिद्धेरपेक्षितं वैराग्यादि इति ।

## ४. अग्न्याद्यधिकरणम्

ननु प्राणा न जीवेन सह गच्छन्ति 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रम्' इति प्राणानामग्न्यादीन् प्रति गतिश्रवणादिति चेन्न, तस्य प्राणानां भागेनाग्न्यादीन् प्रति गतिरित्यर्थपरत्वात् प्राणानां जीवेन स गतिर्नायुक्तेत्याह— **अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्** इति । न च श्रुतेर्भागेन प्राणानामग्न्यादीन् प्रति गतिरित्यर्थपरत्वे मानाभावः, 'पुरुषस्य मृतौ ब्रह्मन्प्राणा भागत एव तु । अधिदैवं प्राप्नुवन्ति भागतोऽनुव्रजन्ति तम् । पुनः शरीरसम्प्राप्तौ तमेवानुविशन्ति च । मृतिकाले जहत्येनं प्राणा भूतानि पञ्च च । भागतो भागतस्त्वेनमनुगच्छन्ति सर्वशः' इति स्मरणादिति भावः । अतोऽस्ति प्राणानां जीवेन सह गतिः तत्रभूतानामिति मरणमेव न मोक्षोऽतोऽनुष्ठेयं साधनमिति ।

## ५. प्रथमश्रवणाधिकरणम्

ननु तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वतीति श्रुतावुत्क्रान्तस्य श्रद्धयेष्टवतः पुंसः श्रद्धया सहितस्यैव पर्जन्यपुरुषयोषिदाख्याग्न्यपेक्षया द्व्याख्ये प्रथमाग्नौ होमश्रवणात् भूतसहितस्य तदश्रवणान्नास्ति भूतानां जीवेन सह गतिरिति चेत्तत्रापः पुरुषवचस इत्युपसंहारश्रुतावापः श्रद्धारूपेणोपक्रान्ता एव, तथासत्येवोपक्रमोपसंहारयोरैकरूप्योपपत्तेरित्याह— **प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः** इति । यद्यपि प्रथमाग्नौ श्रद्धासहितस्यैव जीवस्य होम्यता श्रूयते तथापि अजहत्स्वार्थलक्षणया श्रद्धयाऽद्भिश्च युक्तं जीवमाह । अतो अन्यथोपक्रमोपसंहारैकरूप्यानुपपत्तेरिति भावः । अतो भूतानां जीवेन सह गतिसद्भावान्मरणमात्रस्य मुक्तित्वाभावेनापेक्षितं वैराग्यादिसाधनमिति ।

## ६. अश्रुतत्वाधिकरणम्

ननु भूतानां जीवेन सह गमनं न युज्यते। प्राणानामग्न्यादिगतिवत् भूतैः सह गमनस्य छान्दोग्ये प्रत्यक्षतोऽश्रुतत्वात्। न ह्यश्रुते कल्पना युज्यत इति चेन्न, 'अथैनं यजमानं किं न जहाति भूतान्येव भूतैरेव गच्छति भूतैर्भुङ्क्ते भूतैरुत्पद्यते भूतैश्चरति भूतैर्विचरति' इति कौण्ठरव्यश्रुताविष्टादिकारिणामिष्टा-पूर्तादिकर्मणां भूतैः सह गमनस्य प्रत्यक्षत एव प्रतीतेरित्याह— **अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीते**ः इति। न हि क्वचिद्वाक्ये तदश्रवणं तदभावसाधकम्। किं तु सर्वत्र तदस्तीति भावः। अतो मरणमात्रेण मोक्षासिद्धेरनुष्ठेयं वैराग्यादिसाधनमिति।

## ७. भाक्ताधिकरणम्

ननु किं वैराग्यादिना, अवश्यकर्मणैवामृतत्वसम्भवात्। 'अपाम सोमममृता अभूम' इत्यादिश्रुते-रित्यत आह— **भाक्तं वाऽनात्मवित्त्वात् तथाहि दर्शयति** इति। काम्यसोमयागादिसाध्यममृतत्वं भाक्तम्, भागतः अमुख्यममृतत्वं, काम्यकर्मिणामनात्मवित्त्वात्। आत्मविद एव मुख्यममृतत्वं नाना-त्मविदाम्। 'तमेवं विद्वानमृत इह भवति। नान्यः पन्था अयनाय विद्यते' इति। वाशब्दात् काम्य-सोमयागादिसाध्यममृतत्वमन्तःकरणशुद्धिजिज्ञासाज्ञानादि प्रणाडिकया पारम्पर्येण मुख्यम्। 'स एन-मविदितो न भुनक्ति यथा वेदो वाऽननूक्तोऽन्यद्वा कर्माकृतम्। यदिह वा अप्यनेवंवित् महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवात्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते अस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते' इति श्रुतावात्मविदां मुख्यामृतत्वं नानात्म-विदामित्यर्थस्य 'अमृतो वाव सोमपो भवति, यावदिन्द्रो यावन्मनुर्यावदादित्यः' इति श्रुतौ भागतस्तद-मृतत्वमित्यर्थस्य, कर्मणा ज्ञानमातनोति ज्ञानेनामृतीभवति' इति श्रुतौ पारम्पर्येणेत्यर्थस्य च दर्शनादिति सूत्रार्थः। कामनां विना ज्ञान्यनुष्ठितकर्मणोऽपि ज्ञानलभ्ये मोक्षेऽतिशयाधायकत्वमेवेति न तेनापि संसारनिवृत्तिरूपमोक्षसिद्धिरिति भावः। तत्र भुनक्ति भोजयतीत्यर्थः। उपास्ते जानाति च। स मुक्तो यद्यत्कामयते तत्तत्परमात्मप्रसादद्वारा कर्म सृजतीत्यर्थः। अतो वैराग्याद्यनुष्ठानमन्तरेण मोक्षासिद्धेर्न तत्प्रतिपादकशास्त्रवैयर्थ्यमिति।

## ८. कृतात्ययाधिकरणम्

ननु किं वैराग्यादिसाधनेन, कर्मणां स्वर्गादिषु भोगेन निश्शेषक्षयात् तत्र च कर्मान्तरानार्जना-च्छरीरानारम्भेण संसारनिवृत्तेः सद्य एव सम्भवादित्यत आह— **कृतात्ययेऽनुशयवान् दृष्टस्मृति-**

**भ्याम्** इति । कृतस्य कर्मणोऽत्यये भोगेन क्षये अनुशयवान् भुक्तशेषकर्मशेषानुशयवान्, दृष्टश्रुतिभ्यां 'ततः शेषेण कर्मणेमं लोकमायाति पुनः कर्म कुरुते पुनर्गच्छति पुनरागच्छति भुक्तशेषानुशयवानिमां प्राप्य भुवं पुनः । कर्म कृत्वा पुनर्गच्छेत् पुनरायाति नित्यशः', 'आचतुर्दशमाद्वर्षात्कर्माणि नियमेन तु । दशावराणां देहानां कारणानि करोत्ययम् । अतः कर्मक्षयान्मुक्तिः कुत एव भविष्यति' इति श्रुतिस्मृतिभ्यामिति सूत्रार्थः । आ चतुर्दशमाद्वर्षात् चतुर्दशमं वर्षमारभ्येत्यर्थः । दश अवरा येषु ते तथोक्तास्तेषाम् । अतो वैराग्यादिसाधनमन्तरेण मोक्षाभावात् तदर्थं वैराग्यादिसाधनमनुष्ठेयमिति ।

## ९. यथेतराधिकरणम्

ननु किं वैराग्यादिना 'यथेतमेव गच्छति यथेतमागच्छति स भुङ्क्ते स कर्म कुरुते स परिवर्तत' इति श्रुतौ प्राज्ञात् गतिमार्गेण गतिप्रकारेणागतिप्रतिपादनेन स्वर्गादिफलस्यातिक्लेशानुषङ्गाभावादित्यत आह— **यथेतमनेवं च** इति । यथा येन प्रकारेण इतं गतं तद्भिन्नप्रकारेणाप्यागमनम्, 'धूमादभ्रं अभ्रादाकाशमाकाशाच्चन्द्रलोक यथेतमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षतीति विशेषश्रुतेरि'ति सूत्रार्थः । 'यथेतमागच्छती'ति श्रुते-रुदाहृतविशेषश्रुत्यनुसारेण क्वाचित्कतया व्याख्येयत्वात् । तत्रापि जीवस्य अस्वातन्त्र्येण प्रथमप्रज्ञान-स्यानुपभोगादिति भावः । तस्मादागतेरतिक्लेशयुक्ततया स्वर्गादिफलवैराग्यमवश्यमनुष्ठेयमिति ।

## १०. चरणाधिकरणम्

उक्तमाक्षिप्य समाधत्ते— **चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः** इति । गता-गतं न यज्ञादितः, किं तु चरणात् 'तद्य इह रमणीयचरणा रमणीयां योनिमापद्यन्ते कपूयचरणाः कपूयां योनिमापद्यन्ते' इति श्रुतेरिति सूत्रे आक्षेपांशार्थः । न च कर्माचरणयोरभेदः 'स यथाकारी यथाचारी भवति' इति श्रुतौ 'आचार इति सम्प्रोक्तः कर्माङ्गत्वेन शुद्धिदः । अशुद्धिदस्त्वनाचारः चरणं तूभयं मतम्' इति स्मृतौ तयोर्भेदप्रतीतेरिति भावः । गतागतं न चरणफलम्, किं तु कर्मफलमेव, 'इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वा इमं लोकं हीनतरं वाविशन्ति' इत्यादिश्रुत्या 'त्रैविद्या मां सोमपाः पूतपापाः यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते' इति स्मृत्या च गतागतस्य कर्मफलत्वोक्त्या चरणश्रुतिर्लक्षणया आचारानाचारयुक्तयज्ञाद्यर्थेति कार्ष्णाजिनि-राचार्यो मन्यते ।

नन्वेवं चरणशब्दस्यानर्थक्यं, चरणकपूयामित्येवोक्ताविष्टादिकारिणां प्रकृतत्वेन तन्मध्ये ये रम-णीयाः कपूयाश्चेत्यर्थलाभादित्याशङ्क्य यज्ञादिकर्तृत्वे समाने कथमेकेषां रमणीयत्वमन्येषां कपूयत्व-

मिति शङ्कानिरासाय रमणीयत्वकपूयत्वोपपादनस्याचारानाचारापेक्षया तत्प्रत्यायकत्वेन चरणशब्दस्य नानर्थक्यमिति भावेन आह **आनर्थक्यमिति चेन्न तदपेक्षत्वात्** इति सूत्रार्थः ।

प्रकारान्तरेण समाधत्ते— **सुकृतदुष्कृते एवेति तु बादरिः** इति । रमणीयत्वकपूयत्वविशेषिते चरणे सुकृतदुष्कृते एव 'धर्मं चरत माऽधर्मं' इत्याद्यभियुक्तप्रयोगदर्शनादिति बादरिर्मन्यते । तुशब्दोऽयमेव सिद्धान्त इति सूचयति 'तुशब्दस्तु विशेषे स्यात् स्वसिद्धान्तेऽवधारणे' इति वचनात् । अतो गतागतस्य कर्मफलत्वाद्युक्तं तत्र वैराग्यमिति ।

## ११. अनिष्टाधिकरणम्

ननु 'बिभ्यत्पतति पादपात्' इति न्यायेन इष्टादिकारिणामेव प्रत्यवायभयवत्त्वेन गतागतं न तु प्रत्यवायरहिततया फलकामनारहिततया च विहितमिष्टादिकर्म कुर्वतां निषिद्धं च तद्विरुद्धमाचरताम् । अतः पुण्यतत्फलेभ्य एव वैराग्यं नान्येभ्य इत्यत आह— **अनिष्टादिकारिणामपि च श्रुतम्** इति । अनिष्टादिकारिणामपि गतागतम् । 'तत्र इह शुभकृतो ये चाशुभकृतस्ते शुभमनुभूयावर्तन्ते । पुनः कर्म कुर्वन्ति पुनर्गच्छन्ति पुनरागच्छन्ति' इति श्रुतौ तथा श्रुतत्वादिति सूत्रार्थः । भयकामरहितस्यापि भुक्तगरलस्य मरणदुःखदर्शनादिति भावः ।

न केवलमनिष्टादिकारिणां गतागतमात्रम्, अतिदुःखं चान्यदस्तीत्याह— **संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्** इति । तुशब्दोऽवधारणार्थः । इतरेषामनिष्टादिकारिणां मध्ये यमशासनप्रयुक्तदुःखमनुभूयैव केषाञ्चित् ब्रह्मद्विट्स्तेनसुरापानादीनामारोहः केषाञ्चित्तु भगवद्गुरुश्रुतिद्विषामवरोहस्ततोऽपि नीचस्थले नित्यनरके पातः भवत इति शेषः । कुतः ? 'सर्वे वा एते अशुभकृतः संयमने प्रपतन्ति तत्र ये परद्विषो गुरुद्विषः श्रुतिद्विषस्तदवमन्तारः शठा मूर्खा इति ते वै ततोऽवरुह्य तमसि प्रपतन्ति नैवेते उत्तिष्ठन्तेऽपि कर्हिचिद् वव्रं वा एतदित्याहुः अथ येऽन्ये ब्रह्मद्विषः स्तेनाः सुरापा इति ते वैतदनुभूयेमं लोकमनुव्रजन्ति' इति श्रुतौ तद्गतिदर्शनात् तथाविधगतिभेददर्शनादिति सूत्रार्थः । द्वेषः प्रतीपबुद्धिः । अवमतिर्नीचतया विज्ञानं शाठ्यं गूढद्वेषः । मौर्ख्यं तत्त्वज्ञानराहित्यम् । नैवेत उत्तिष्ठन्ते इत्यस्योपपादनं वव्रमिति । स्वस्थितान्वारयति गन्तुं न मुञ्चतीत्यर्थः ।

उक्तार्थं स्मृत्या च समर्थयते— **स्मरन्ति च** इति । 'गच्छन्ति पापिनः सर्वे नरकं नात्र संशयः । तत्र भुक्त्वा पतन्त्येव ये द्विषन्ति जनार्दनम् । महातमसि मग्नानां न तेषामुत्थितिः क्वचित् । इतरेषां तु पापानां व्युत्थानं विद्यतेऽपि च । सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् । इति सर्वत्र नियमः पञ्च कष्टे तु तत्सदा । तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । इत्यादिवृत्तार्थमभियुक्ताः

स्मरन्ति' इति सूत्रार्थः । पञ्च कष्ट इत्यस्य रौरवादिपञ्चभ्योऽपि कष्टेभ्यो नित्यं नरकदुःखमेव सदेत्यर्थः । अतोऽनिष्टादिकारिणामपि महानर्थवत्त्वेन मोक्षाशायाः पूर्वोत्सारितत्वात् भवितव्यं तत्रापि विरक्तेनेति ।

## १२. सप्ताधिकरणम्

ननु 'संयमने त्वि'ति सूत्रे भगवद्विषां नरकान्न पुनरावृत्तिरित्युक्तमयुक्तम् । नित्यनरके मानाभावात् । प्रत्युत 'यावदिन्द्राश्चतुर्दश' इत्यादौ नरकभोगस्यानित्यत्ववर्णनात् । न च वाच्यं 'तत्र ह्येव परिद्विष' इति श्रुतौ 'ते वै ततोऽवरुह्य तमसि पतन्ति नैवेते उत्तिष्ठन्तेऽपि कर्हिचिदि'ति भगवद्विषां पुनरावृत्तिराहित्यस्यापि वर्णनाद्वचनद्वयानुसारेण नित्यत्वमनित्यत्वं च किं न स्यादिति । एकस्मिन्नेव नरके नित्यत्वानित्यत्वयोर्विरुद्धत्वात् । 'चकार नरकं शून्यम्' इत्यादिवचनविरोधेन एकस्यैव पुरुषभेदेन व्यवस्थाश्रयणस्याप्ययोगादित्याशङ्क्याह— **अपि च सप्त** इति । सप्तेति द्वितीयान्तम् । नरकाणीति शेषः । स्मरन्तीत्यनुषङ्गः । अपिपदं स्मरन्तीत्यस्यानुकर्षणार्थम् । 'रौरवोऽथ महांश्चैव वह्निर्वैतरणी तथा । कुम्भीपाक इति प्रोक्तान्यनित्यनरकाणि तु । तामिस्रश्चान्धतामिस्रौ द्वौ नित्यौ सम्प्रकीर्तितौ । इति सप्त प्रधानानि बलीयस्तूत्तरोत्तरम् । एतानि क्रमशो गत्वैवारोहोऽथावरोहणम्' इति भारतादौ रौरवाद्यन्धतामिस्रान्तानि नरकाण्यभियुक्ताः स्मरन्तीति सूत्रार्थः । 'नित्यनरके नैवेत उत्तिष्ठन्ते अपि कर्हिचिदि'ति श्रुतिरेव मानम् । न च यावदविरोधः, नरकभेदविषयत्वेनाविरोधोपपत्तेः । उदाहृतस्मृतौ महान् महारौरवाख्यः एतानि पञ्चेत्यर्थः । सप्तप्रधानानीत्यनेन बहुनरकाभिधायकपुराणविरोधोऽपि परिहृतः । अतो भगवद्द्वेषादिफलस्य नरकस्य नित्यत्वादितरपापेभ्योऽतिशयेन तत्र वैराग्येण भवितव्यमिति ।

## १३. तद्व्यापाराधिकरणम्

ननु भगवद्द्वेषाद्यापादितनरकेभ्योऽतिशयेन विरक्तेन भवितव्यमित्युक्तम्, नरकस्य दुःखापादकत्वनियमाभावेन वैराग्यस्यामृग्यत्वात् । नरकस्य दुःखत्वेन तत्र प्रेरकेश्वरं विना दुःखायोगेनेश्वरसत्त्वावश्यंभावे तस्यापि दुःखप्रसङ्गात्, तस्यादुःखे चेश्वरस्य सर्वज्ञत्वाभावप्रसङ्गात् सर्ववित् सर्वं विसृजति सर्वं विलापयति सर्वं रमयति सर्वं प्रवर्तयत्यन्तरस्मिन्निविष्टः इति श्रुत्या ईश्वरस्य सर्वज्ञत्वसर्वप्रेरकत्वसर्वान्तर्निविष्टत्ववर्णनविरोधात्, सर्वान्तःप्रविष्टस्य ईश्वरस्य सर्वप्रेरकत्वसर्वज्ञत्वनिर्वाहाय नरकस्य दुःखत्वत्यागावश्यम्भावात् तत्र विरक्तेन अवश्यम्भाव्यमित्याशङ्क्याह— **तत्रापि च तद्व्यापारादविरोधः** इति । तथापि सदुःखनरकेऽपि अदुःखानुभवेन तद्व्यापारादीश्वरव्यापारसत्त्वाङ्गीकारात् तस्य न सर्वज्ञत्वाद्यावेदकश्रुतिविरोध इति सूत्रार्थः । अत्र दुःखानुभवाभावश्चशब्दार्थः । कुतोऽयमर्थोऽवसित इति 'स स्वर्गे स भूमौ स नरके सोऽन्धेतमसि प्रवृत्तिकृदेक एवानुप्रविष्टो नासौ दुःखभुगीश्वरः, प्रभु-

त्वात् सर्वं पश्यति सर्वं कारयति नासौ दुःखभुग्य एवं वेद' इति श्रुतेः 'नरकेऽपि वसन्नीशो नासौ दुःखभुगुच्यते। नीचोच्चतैव दुःखादेः भोग इत्यभिधीयते। नासौ नीचोच्चतां याति पश्यत्येव प्रभुत्वतः इति स्मृतेश्चेति ब्रूम' इति भावः। अतो नरकस्य दुःखत्वात् भवितव्यं तत्र वैराग्येणेति।

## १४. विद्याकर्माधिकरणम्

ननु वैराग्येणावश्यंभाव्यमित्युक्तमयुक्तम्, जीवस्य स्वतन्त्रत्वेन विनापि वैराग्यं फलसम्पत्त्युपपत्तेः। जीवस्वातन्त्र्ये च 'अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्रमिश्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम्' इति भूतानां पितृयान तत्प्रकरणसन्निधापितदेवयानगतिस्वातन्त्र्यप्रतीतेरुक्तयोः पथोर्मध्ये यान्येकतरेणापि पथा न गच्छन्ति तानीमान्यल्पानि सुखदुःखमिश्राणि सदागत्यादिमन्ति पुनःपुनर्जायन्ते म्रियन्ते च। एतत्स्वर्गापवर्गयो रन्यतरद्भूतानामवस्थानमिति तच्छ्रुत्यर्थप्रतीतेः। न हि पुरुषप्रयत्नाविषये न गच्छन्तीति प्रयोगः उपपद्यते। जीवस्य स्वतःस्वातन्त्र्याभावेऽपि ईश्वराधीनस्वातन्त्र्यस्य सत्त्वात्। अन्यथा साधनस्यापि तन्न स्यात्। ईश्वराधीनस्यापि तस्याभावेऽपि जीवेन वैराग्यसाधनस्याप्ययोगात्। फलस्वातन्त्र्ये सर्वेषां तत्प्राप्तिः स्यादिति दोषः साधनेऽपि समः। अतो मूले लब्धफलेनैव शाखाग्रं गन्तुमिच्छति' इति न्यायात्। फल एव स्वतन्त्रस्य जीवस्य किं वैराग्यादिसाधनेनेति शङ्कानिरासायाह— **विद्याकर्मणोरिति तु प्रकृतत्वात्** इति। नैतच्छ्रुतिबलेन भूतानां गतिस्वातन्त्र्यं सिद्ध्यति। तस्याः श्रुतेर्देवयानपितृयाननामकमार्गद्वयसाधनविद्याकर्मविषयत्वात्। 'तद्य इत्थं विदुः ये चेमेऽरण्ये श्रद्धा तप इत्युपासाते, तेऽर्चिषमभिसम्भवन्ति, अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' इति विद्याकर्ममार्गद्वयोरपि प्रकृतत्वात् श्रौतैतच्छब्देन तत्परामर्शोपपत्तेरिति सूत्रार्थः। यद्यपि देवयानपितृयानयोरपि प्रकृतत्वादथैतयोः पथोरिति श्रौतैतच्छब्देन तत्परामर्शोऽप्युपपद्यते तथापि 'विद्यापथः कर्मपथो द्वौ पन्थानौ प्रकीर्तितौ। तद्वर्जितस्त्रिधा याति तिर्यग्वा नरकं तमः' इति भारतवचनसमाख्याबलेन साधनपरामर्शित्वमेव युक्तमिति भावः। न च साधनस्वातन्त्र्याभ्युपगमे फलेऽपि तत्स्यादित्याशङ्क्यम्, साधने विधिसद्भावात्फले तदभावात् विध्यादिशास्त्रावैयर्थ्याय हि साधने ईश्वरः स्वातन्त्र्यं जीवस्य प्रयच्छतीति 'कर्ता शास्त्रार्थवत्त्वात्' इत्यत्र व्युत्पादितम्। अतः फलस्वातन्त्र्याभावादपेक्षितं वैराग्यादिसाधनमिति।

## १५. न तृतीयाधिकरणम्

नन्वन्धन्तमोऽपि दुःखेनेव सुखेनापि युक्तमिति स्वीकार्यम्, दुःखस्य सुखेन व्याप्तत्वात्। न च अयं हेतुरसिद्धः, 'यत्र दुःखं सुखं तत्र सर्वत्रापि प्रतीयते। अपि नीचगतौ किञ्चित् किमु मानुषदेहिनः'

इति वचनेन दुःखस्य सुखेन व्याप्तौ पतितं प्रमाणयित्वा तिर्यग्गतावपि किञ्चित्सुखसद्भावसाधनम् अभिप्रेत्य मानुषदेहवतः कैमुतिकन्यायेन सिद्धवत्करणादित्यत आह— **न तृतीये तथोपलब्धेः** इति । अधोगतिषु तृतीये तमसि सुखं नास्त्येवेति स्वीकार्यम् । 'अथाविद्वान् कर्माऽवाग्गच्छति त्रिधाऽह वाऽवाग्गच्छति तिर्यग्यातनातम इति द्वे वाव सुखानुवृत्ते न तमः सुखानुवृत्तं केवलं ह्येवात्र दुःखं भवति' इत्यादिश्रुतौ तृतीयावाग्गतौ सुखाभावोपलब्धेरिति सूत्रार्थः ।

एतमेवार्थं स्मृत्यनुमानाभ्यां साधयति— **स्मर्यतेऽपि च लोके** इति । 'तिर्यक्षु नरके चैव सुखलेशो विधीयते । नान्धेतमसि मग्नानां सुखलेशोऽपि कश्चन' इति विशेषस्मरणात् । तमोगतस्य सुखलेशानुभवतः असङ्गतः अत्यन्तमीश्वराप्रियत्वात्, लोके अत्यन्तं राजाप्रिये सुखलेशस्याप्यभाव-दर्शनादित्यनुमानाच्चेति सूत्रार्थः । 'अतिप्रिये यथा राजा न दुःखं सहते क्वचित् । अत्यप्रिये सुखमपि तथैव परमेश्वरः' इति लोकसिद्धेः तदनुमानमूलभूतव्याप्तिरियं स्मृतिसिद्धा चेति सौत्रचशब्दार्थः ।

उक्तार्थे प्रत्यक्षमपि प्रमाणयति— **दर्शनाच्च** इति । भगवद्द्वेषेण तमसि मग्नानां सुखलेशोऽपि नास्तीत्यङ्गीकार्यम् । तेषां तदभावस्य हिरण्यगर्भेण दर्शनादिति सूत्रार्थः । तस्य हिरण्यगर्भदर्शनगोचरत्वे मानाभावः 'नारायणप्रसादेन समिद्धज्ञानचक्षुषा । अत्यन्तदुःखसल्लीनान्निःशेषसुखवर्जितान् । नित्यमेव तथाभूतान् विमिश्रांश्च गणान् बहून् । निरस्ताशेषदुःखांश्च नित्यानन्दैकभागिनः । अपश्यत् त्रिविधान् ब्रह्मा साक्षादेव चतुर्मुखः' इति स्मरणादिति भावः ।

अर्थापत्त्याप्युक्तमर्थं साधयति— **तृतीये शब्दावरोधः संशोकजस्य** इति । अत्र 'न तृतीये तथोपलब्धेः' इति सूत्रात् तृतीयशब्देऽनुवर्तमानेऽपि पुनस्तृतीयशब्दोपादानं तमोनामकेषु त्रिषु नरकेषु तृतीयनरकपरम् । तृतीयेति विषयसप्तमी । शब्देनावरोधः शब्दावरोधः प्राप्तिः, तमोनामकेषु तृतीय-तमोविषयकश्रवणात् यत् सम्यक् शोकः उत्कटदुःखं तज्जस्य मोहस्य मूर्च्छायाः प्राप्तिरिति सूत्रार्थः । तृतीयतमस्स्वरूपप्रतिपादकशब्दश्रवणमात्रेण श्रोतॄणां मोहापरपर्यायमूर्च्छाप्राप्तिर्भवतीति कुतोऽवसीयत इति चेत् तत्राह— **स्मरणाच्च** इति । 'महातमः त्रिधा प्रोक्तमूर्ध्वं मध्यं तथाऽधरम् । श्रवणादेव मूर्च्छादिरधरस्य यतो भवेत् । तस्मान्न विस्तरेणैतत् कथ्यते राजसत्तम इति स्मरणादि'ति सूत्रार्थः । एवञ्च तत्स्वरूपश्रोतॄणां मोहान्यथानुपपत्तिः सूत्रप्रमाणमित्युक्तं भवतीति । यद्यपि 'यत्र दुःखं सुखं तत्र सर्वत्रापि प्रतीयते । अपि नीचगतौ किञ्चित् किमु मानुषदेहिनः' इति वचनेन व्याप्तिरुच्यते तथापि बहुप्रमाणविरोधात् तद्व्याप्तिसङ्कोच इति भावः । अतोऽन्धे तमसि सुखलेशस्याप्यभावात् भवितव्यं तत्र तत्साधने च विरक्तेनेति ।

## १६. तत्स्वाभाव्याधिकरणम्

नन्वेवमपि वैराग्यं व्यर्थमेव, स्वर्गादवतीर्णानां यथागतमन्यथा वागच्छतां कर्मिणामागतौ 'धूमो भूत्वाऽभ्रं भवति' इति धूमादि देवतादिभावश्रवणात् तदैक्यतत्पदप्राप्तेर्वावश्यम्भावात् धूमादिदेवताभिः सह अनवस्थानप्रयुक्ततत्तद्देवतावशेन ताभिर्देवताभिः तेभ्यः स्वपददानसम्भवात्, विना बाधकं धूमादिदेवताभावप्रतिपादकोदाहृतश्रुतेरन्यथार्थपरत्वाश्रयणायोगात् तदैक्यतत्पदप्राप्त्योरन्यतरलाभेऽपि सकृदनुष्ठितयज्ञादिकर्मणां पुंसामाकल्पसमाप्ति परमसुखसम्पत्त्यसम्भवादिति शङ्कां निरस्यति— **तत्स्वाभाव्यापत्तिरुपपत्तेः** इति । धूमो भूत्वेत्यादिश्रुत्युक्तधूमादिदेवताभावप्राप्तिर्नाम धूमादिषु प्रविश्य तद्गतिः तत्स्थितौ स्थितिरित्यादिरूपतत्स्वभावापत्तिरूपैव । तेषां तद्रूपत्व एवोपपत्तिसत्त्वादिति सूत्रार्थः । न च 'धूमो भूत्वाऽभ्रं भवती'ति सामानाधिकरण्येन निर्देशदर्शनात् तदन्यथानुपपत्त्या तदभेदसिद्धिः । धूमाद्येकस्थानस्थितत्वेन सादृश्ये निवाससामानाधिकरण्यनिर्देशोपपत्तेः । धूमादिदेवतानां स्वर्गादवतीर्णानां कर्मिणां च धूमादिस्थानैक्यसत्त्वात् । न चैवं मुख्यार्थत्यागप्रसङ्गः, अन्यस्यान्यभावायोगरूपबाधकसत्त्वेनेष्टापादनात् । लोकवेदयोः 'सिंहो माणवकः आदित्यो यूपः नीरं क्षीरं जातं स विष्णुरेव भवती'त्यादौ सामानाधिकरण्यदर्शनाच्च । 'धूमादिभावप्राप्तिश्च तद्गतौ गतिरेव च । स्थितिः स्थितौ प्रवेशश्च लघुत्वादिस्तथैव च । न ह्यन्यस्यान्यथाभावो न च तत्पदमिष्यते । विद्यागम्यं पदं यस्मान्न तत्प्राप्यं हि कर्मणा । एकदेशस्वभावेन वागभेदोऽपि युज्यते । यथा जीवः परं ब्रह्म ब्रह्मेदं जगदित्यपि' इति गारुडवचनाच्चायमर्थोऽवसीयते । एतेन तत्पदप्राप्तिरपि निरस्ता । तत्पदप्राप्तेर्नियताधिकारित्वेन विद्ययैतस्यास्तद्गम्यत्वात् युगपदनेककर्मसमवधाने केषामेकस्य तत्प्राप्त्ययोगाच्चेति भावः । अतो धूमाद्यैक्याद्यभावाद्युक्तमेव कर्मतत्फलयोर्वैराग्यसम्पादनमिति ।

## १७. नातिचिरेणाधिकरणम्

ननु स्वर्गादागतेन कर्मणा कर्मिणि तत्फले वा न विरक्तेन भाव्यम्; तद्धेतुदुःखाभावात् । बहुस्थानप्राप्त्या तत्तद्देवतास्वाभाव्यप्रयुक्तमहासुखसम्भवेन चिरेणैव देहान्तरप्राप्तेः । न ह्येवं भूतसुखसम्भवे तद्विहायगमने किमपि प्रयोजनमस्ति । तथाच श्रूयते 'स्वर्गादागतस्य कर्मिणो यथेतमाकाशमाकाशाद्वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति अभ्रं भूत्वा मेघो भवति' इत्यादौ बहुस्थानप्राप्तिः । तथाच सकृदनुष्ठितयज्ञाद्यपि स्वर्गभोगावसाने मध्ये मार्गे कल्पान्तमपि तत्तद्देवतास्वाभाव्यलाभेनैव बहुसुखं स्यादेव कल्पावसान एव देवानां पदपर्यवसानादिति शङ्कानिरासायाह— **नातिचिरेण विशेषात्** इति । स्वर्गान्निर्गतस्य कर्मिणो नातिचिरेणैव अचिरेणैवागमनं भवति । तच्च इह रमणीयचरणा

अभ्याशो ह यत्ते रमणीयां योनिमापद्यन्ते इति विशेषश्रवणात् । तत्तत्र कर्मिषु ये रमणीयचरणास्त इह भूमौ रमणीयां ब्राह्मणादियोनिमापद्यन्त इति यत्तच्छब्दाभ्याशः कालसामीप्येनेत्येतच्छ्रुत्यर्थप्रतीतेः । 'स्वर्गाल्लोकादवाक्प्राप्तेर्वत्सरात्पूर्वमेव तु । मातुः शरीरमाप्नोति पर्यटन्यत्र तत्र वा इति विशेषस्मरणाच्चे'ति सूत्रार्थः । न च बहुस्थानगमनावेदकश्रुतिविरोधः, अचिरेणैव तस्योपपन्नत्वेनाविरोधादिति भावः । अतः कर्मिणोऽचिरेणैव गर्भवासादिदुःखप्राप्तिसम्भवात् भवितव्यं तेन कर्मादौ विरक्तेनेति ।

## १८. अन्या(धिष्ठिता)धिकरणम्

ननु वैराग्यं नानुष्ठेयं, मोक्षहेतुत्वेन वेदोपदिष्टस्यापि तस्य स्वर्गादिसुखविशेषसाधनत्वेन वेदोपदिष्टयज्ञादिवद्दुःखहेतुत्वशङ्कास्कन्दितत्वात् 'त इह व्रीहियवा ओषधिवनस्पतयः तिलाः माषा जायन्ते' इति श्रुत्या स्वर्गान्निर्गतानां कर्मिणां व्रीह्यादिभावावेदनात्, तद्भावे च छेदभेदादिप्रयुक्तदुःखावश्यंभावात् बाधकं विना धूमादिभावावेदकश्रुतिविरुद्धत्वेन व्याख्यानायोगात् । व्रीह्यादिभावैः सहावस्थानेऽपि छेदभेदादिसाधनतौल्येन तेषामपि दुःखावश्यम्भावाच्च । न हि तेषामीश्वरवत्स्वातन्त्र्यमस्ति । येन तैः सहावस्थानेऽपि छेदभेदादिप्रयुक्तं दुःखं तेषामेव न त्वेतेषामिति व्यवस्था स्यात् । अतो व्रीह्यादिभावे कारणान्तराभावात् सुखविशेषसाधनत्वेन वेदोपदिष्टयज्ञादिकर्मणामेव तत्र साधनभावो वाच्य इति तद्दृष्टान्तेन मोक्षहेतुत्वेन वेदोपदिष्टयज्ञादीनां दुःखसाधनत्वमापन्नमिति तत्सम्पादनं न युक्तमित्याशङ्क्याह— **अन्याधिष्ठिते पूर्ववदभिलापात्** इति । अन्यजीवाधिष्ठिते व्रीह्यादिशरीरे स्वर्गान्निर्गतानां कर्मिणां प्रवेशमात्रं न तु तद्भद्भोगोऽपि । 'धूमो भूत्वाऽभ्रं भवति' इति पूर्वोक्तिवत् 'सोऽवाग्गतः स्थावरान् प्रविश्याभोगेनैव व्रजन् स्थूलं शरीरमेति स्थूलाच्छरीराद्भोगाननुभुङ्क्ते इति कौषारवश्रुतौ', 'स्वर्गादवाग्गतो देही व्रीह्यादीतरदेहगः । अभुञ्जंस्तु क्रमेणैव देहमाप्नोति कालतः । इति स्मृतौ च विशेषाभिलापादि'ति सूत्रार्थः । एतेन व्रीह्यादिसहभावप्रयुक्तं दुःखं तेषामपि स्यादेवास्वातन्त्र्यादिति निरस्तम् । तेषामीश्वरवत् स्वातन्त्र्याभावेऽपि व्रीह्यादिशरीरे तच्छरीरकजीवैः सहावस्थानमात्रेण कर्मिणां दुःखं न भवतीत्युदाहृतश्रुतिस्मृतिभ्यामेवावेदनादिति भावः ।

ननु व्रीह्यादिभावेन तत्प्रवेशेन वा कर्मिणां दुःखं नेत्ययुक्तम्; यज्ञानां हिंसायुक्तत्वेन ततः पापस्य सम्भवात् पापकारणत्वे दुःखजनकत्वावश्यम्भावादिति चेत्, न यज्ञादीनां पापहेतुत्वम्, येन दुःखहेतुत्वं स्यात् । कुतो नेति चेत् शब्दादेव वेदरूपशब्दविहितत्वादेव हि यागीयहिंसायाः । पापहेतुत्वे हि हिंसात्वमप्रयोजकम् । येन यागीयहिंसायां तत्स्यात्, किं तु निषिद्धत्वमेव । न च तद्यज्ञीयहिंसायामस्ति । न केवलं हिंसात्वादनुमानमुपाधिग्रासेन दुष्टम्, किं तु 'हिंसा त्ववैदिका या तु तयाऽनर्थो ध्रुवं भवेत् ।

वेदोक्तया हिंसया तु नैवानर्थः कथञ्चन' इति स्मृतिविरोधेनापीत्याशयेनाह— **अशुद्धमिति चेन्न शब्दात्** इति । यज्ञादिकर्माशुद्धं ब्रह्महिंसावत् पापसाधनहिंसायुक्तत्वेनाशुद्धं अनिष्टसाधनं इति चेन्न, शब्दात् श्रुतिस्मृतिरूपशब्दविहितत्वादिति सूत्रार्थः । अतो यज्ञादेर्बलवद्दुःखानुबन्धिसुखविशेषसाधनयोपदिष्टस्य तादृशदुःखकारणत्वाभावान्न तद्दृष्टान्तेन मोक्षसाधनवैराग्यादेर्दुःखहेतुत्वं शङ्कार्हम् । ततश्च बलवद्दुःखाननुबन्धिसुखविशेषसाधनत्वादनुष्ठेयं मुमुक्षुणा वैराग्यादिकमिति ।

## १९. रेतोऽधिकरणम्

कर्मी व्रीह्यादिशरीरं प्रविशतीत्युक्तम्, तस्यैव च 'य एव गृहीभवति यो वा रेतः सिञ्चति तमेवानुविशति' इति पितृप्रवेशः श्रूयते । स चायुक्तः, तस्याः 'स्वर्गादवाग्गतश्चापि मातुरेवोदरं व्रजेत्' इति युक्तिसहितप्रबलवचनविरोधेन सिद्धप्रमाणभावत्वेन वैयर्थ्यायोगेन अन्यार्थत्वाश्रयणस्यैव उचितत्वात् । न हि पितृशरीरगमने किञ्चित्प्रयोजनं पश्यामः । एवं च महायासाभावेन न अतिवैराग्यं कर्मादावपेक्षितमित्याशङ्क्याह— **रेतस्सिग्योगोऽथ** इति । कर्मणः प्रथमं रेतस्सिग्योग्यः पितृप्रवेशोऽवश्यमङ्गीकार्यः । अथ तदनन्तरं मातृप्रवेशः । 'ततो रेतस्सिचमेवानुप्रविशति अथ मातरमथ प्रसूयते स कर्म कुरुते' इति श्रुतेरिति सूत्रार्थः । न च पितृप्रवेशस्य व्यर्थत्वाच्छ्रुतेर्दौर्बल्यम्, उत्पत्तौ पितृरूपयोगस्यान्वयव्यतिरेकासिद्धत्वेनावैयर्थ्यात् । न च तथापि पितृप्रवेशवैयर्थ्यतादवस्थ्यम्, शरीरपरिणामाय रेतसोऽपेक्षितत्वेन तत्सेचकस्योपयोगसत्त्वेऽपि तत्प्रयोगस्योपयोगादर्शनादिति वाच्यम्; 'ईशाक्लृप्त्यैव पितरं प्रविश्यायाति मातरम्' इत्यादिवचनबलेन तत्प्रवेशस्येश्वरकल्पितत्वेनावश्याङ्गीकार्यत्वात् । न हि वयं प्रत्यक्षानुमानमात्रप्रामाण्यवादिनः, येन श्रुतिस्मृत्याद्युक्तमनङ्गीकार्यं स्यात्, नन्वेवं चेन्मातुरेवोदरं व्रजेत्' वचनमप्रमाणमिति प्राप्तमिति चेत् न, मातृप्राप्तेः पश्चादपि भाव्यत्वेन तत्प्रमाणोपपत्तेरिति भावः । अतोऽत्यायासहेतुभूतपितृप्राप्तेर्विद्यमानत्वात् भवितव्यं कर्मादावतिवैराग्येणेति ।

## २०. योन्यधिकरणम्

नन्वथापि पितृशरीरान्मातृयोनिमनुप्रविश्य जीवः तदनन्तरं शरीरं प्राप्नोतीत्येव नास्त्येव 'देहं गर्भस्थितं क्वापि प्रविशेत् स्वर्गतो गत' इति वचनात् । न ह्यत्र योनिप्रवेश उच्यमानो दृश्यते । न च विशेषप्रमाणं विना तथा कल्पनं युक्तम्, व्यर्थश्च योनिप्रवेशः । पितृसकाशादेव तस्मिन् बहिरेव वा तदुत्पत्तिसम्भवात्, मातृप्राप्तेरपेक्षितत्वे वा पितुः सकाशात्संस्पर्शद्वारेण मातृप्राप्त्युपपत्तेः पितृप्रवेशोऽप्ययुक्तः, उक्तवचनादेव । न चेशाक्लृप्तिवचनविरोधः, तस्यैवैतद्वचनविरोध इति सुवचत्वात् । न च पितृप्राप्तिमन्तरेण मातृप्रवेशानुपपत्तिः, अन्यतोऽन्नादेरेव तस्य मातृप्रवेशोपपत्तेः । मातृस्थरेतसैव शरीर-

परिणामोपपत्तेः पितुरेवानुपयोगः । शरीरप्राप्तिरप्युपपन्ना, पूर्वसिद्धतत्प्रवेशस्योक्तत्वात् । स च मातुरुदरस्थगर्भस्थिते वा बहिर्निर्गते वोपपद्यते, क्वापीत्युक्तत्वात् । अतो महायासासम्भवात् नातिवैराग्येण कृत्यमित्याशङ्क्याह— **योनेः शरीरम्** इति । अत्राथेत्यनुषङ्गः । अथ पितृशरीरप्रवेशानन्तरं मातृयोनिमनुप्रविश्य स्वर्गान्निर्गतो जीवः तत एव शरीरं प्राप्नोति । प्रथमं पितृशरीरं प्रविश्य ततो मातृयोनिद्वारैव मातृशरीरं प्रविश्य तत्रैव प्रागसिद्धशरीरं प्राप्नोतीति यावत् । न चात्र मानाभावः, 'दिवः स्थास्नूनगच्छति स्थास्नुभ्यः पितरं पितुर्मातरं मातुः शरीरं शरीरेण जायत इति सम्मितमथासम्मितं स्थास्नुभ्यो जायन्ते पितुर्मातुरन्तरे वा गर्भे वा बहिरेवे'ति श्रुतेः । 'स्थावराणि दिवः प्राप्तः स्थावरेभ्यश्च पूरुषम् । पुरुषात् स्त्रियमापन्नस्ततो देही यथाक्रमम् । देहेन जायते जन्तुरिति सामान्यतो जनिः । विशेषजननं चापि प्रोच्यमानं निबोध मे । स्थास्नुष्वथापि पुरुषे प्रमदायामथापि वा । गर्भे वा बहिरेवाथ क्वचित्स्थानान्तरेषु च' इति स्मृतेश्च श्रुतौ सम्मितं विशेषकारणमन्तरेण साधारणं जन्म असाधारणजन्मविषयं प्रागुक्तमिति द्रष्टव्यम् । स्थास्नुषु शुकादयः पुरुषे मान्धातृमुख्याः प्रमदायामास्तीकप्रभृतयः जरत्कार्वाद्यनुग्रहात् । गर्भे पूर्वसिद्धमेव शरीरं केचित् बहिः द्रुपदादयः पितृसापेक्षाः स्थानान्तरे धृष्टद्युम्नादयः पित्रादिनिरपेक्षाः । एतदेवान्तर इति प्रोक्तम् । मातापित्रोर्मध्ये अन्योन्यदर्शनमात्रेण वेति विवेकः । एतेन प्रागुक्तशङ्का सर्वापि निरस्ता । अतः सामान्यजन्मनि पित्रादिप्रवेशस्य नियमेनापवर्गादितरत्र सर्वत्रापि महादुःखाविनाभूतत्वात् तत्र विरक्तेन भगवान् भजनीय इति ॥

*इति श्रीविजयीन्द्रभिक्षुणा कृते भाष्यतत्त्वप्रकाशिकावाक्योद्धाररूपे*
*मुकुरनाम्नि ग्रन्थे तृतीयाध्यायस्य प्रथमः पादः ॥*



# अथ तृतीयाध्यायस्य द्वितीयः पादः

## १. सन्ध्याधिकरणम्

एवं प्रथमपादे भगवद्भक्तिसाधनं वैराग्यं निरूपितम् । अत्र द्वितीयपादे भक्तिकारणं भगवन्महिमावर्णनं क्रियते माहात्म्यज्ञानपूर्विकायाः सुदृढायाः सर्वतोऽधिकायाः स्नेहरूपाया भक्तेः तन्महिमनिरूपणादेव सम्भवात् ।

ननु न भगवति भक्तिर्युज्यते । स्वप्नविषयस्य भगवदधीनत्वाभावेन तस्य महामहिमत्वासिद्धेः । तथाहि— स्वप्नविषयः किं नित्योऽनित्यो वा । उभयथापि पूर्वोत्तरकालदर्शनप्रसङ्गः । न च तदा

दृश्यते । न हि प्रतीतिकाल एव तत्सृष्टिनिरोधावित्यत्र किञ्चित्प्रमाणमस्ति । किञ्च कर्तृनिमित्तोपादानरूपसामग्रीबाधात् स्वप्नविषयसृष्टिर्बाधिता, क्लृप्तसामग्रीं विना कार्यानुत्पत्तेः । किञ्च किं स्वप्नविषयं पश्यन् शरीरे स्थित्वा पश्यति तन्निर्गतो वा । नाद्यः, मेरुमन्दरादिदर्शनाभावप्रसङ्गात् । न द्वितीयः, कुरुषु सुप्तस्य पाञ्चालान्पश्यतः प्रबोधे शरीरप्रवेशस्य पाश्चात्यप्रसङ्गात् । किञ्च हेमन्ते सुप्तस्यास्ति तावत् वसन्तप्रतीतिः । न हि तदा वसन्तादिसत्ता । न तावत्प्रतीतिकारणं, बहिरिन्द्रियादीनामुपरतत्वात् । मनसो बाह्यार्थेष्वस्वातन्त्र्यात् । किञ्च स्वप्नविषयः किं द्रष्टुर्भिन्नस्तदभिन्नो वा । आद्ये समीपस्थे न दृश्येत बाह्यार्थत्वात् । द्वितीये च कल्पितमेव स्यात्, द्रष्टुः करितुरगादिभावाभावात् । अतः प्रातीतिकत्वान्मरुमरीचिकाजलवन्न स्वप्नविषयस्येश्वराधीनत्वमिति न तस्य महामहिमत्वमित्याशङ्क्याह— **सन्ध्ये सृष्टिराह हि** इति । जाग्रत्सुषुप्तिसन्धौ भवतीति सन्ध्यं स्वप्नस्थानम् । तत्र प्रागसतामर्थानां सृष्टिरङ्गीकार्या। हि यस्मात्। अथ 'रथान् रथयोगान् पथः सृजते' इति श्रुतिः स्वाप्नार्थानां सृष्टिमाहेति सूत्रार्थः।

कर्त्रभावात् स्वप्नसृष्टिरयुक्तेत्यत आह— **निर्मातारं चैके पुत्रादयश्च** इति । एके शाखिनः स्वाप्नसृष्टावीश्वरं निर्मातारं कर्तारमाहुः । एके शाखिनः पुत्रादयश्च स्वाप्नपदार्थाः ईश्वरादेव जायन्त इत्याहुरिति सूत्रार्थः । न चात्र मानाभावः । 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः । एतस्माद्ध्येव पुत्रो जायते एतस्मात् भ्रातैतस्माद्भार्या यदेवं पुरुषमेष स्वप्नेनाभिहन्ति' इति श्रुत्योरेव तत्र मानत्वात् । 'न च य एष' इति श्रुतौ निर्मातृत्वस्यैवोक्तेः कथं तया स्वप्नकर्तृत्वसिद्धिरिति वाच्यम्; 'भुञ्जानो नोत्सृजेद्वाचमि'त्यादौ वाग्विसर्गनिषेधस्य भोजनकालीनत्ववत् प्रकरणबलेन निर्मातृत्वस्वाप्नकालीनसिद्धेः । सुप्ते जागर्तीति जागरणोक्त्या तदेव शुक्रं तद्ब्रह्म इति वाक्यशेषेण च सुप्तिकाले जाग्रतो जीवान्येश्वरत्वसिद्धेश्चेति भावः ।

ननूक्तरीत्या स्वाप्नसृष्टेरीश्वरकर्तृत्वसिद्धावपि निमित्तोपादानसामग्रीबाधान्न स्वाप्नः सुषुप्तिरुपपन्नेत्याशङ्कां परिहरति— **मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्** इति । तुरवधारणार्थः । स्वप्नपदार्थजातं मायामात्रमेव । माया ईश्वरेच्छा तन्मात्रं तन्निमित्तकम्, मनोगतान् पूर्वानुभूतवस्तु संस्कारानुपादानानि तु निमित्तभूतया स्वेच्छयैवेश्वरेण निर्मितमिति यावत् । न तु क्लृप्तसामग्रीजन्यम् । कुतः कार्त्स्न्येन सम्यगनभिव्यक्तस्वरूपत्वात् । यदि स्वाप्नविषया बाह्यक्लृप्तकारकाः स्युस्तदा सम्यगभिव्यज्येरन् । न चैवम्, अतः सन्ध्यं संस्कारोपादानकमेवेति श्रुत्यर्थाभ्यां लघुसूत्रार्थः । न चात्र मानाभावः, 'मनोगतांस्तु संस्कारान् स्वेच्छया परमेश्वरः । प्रदर्शयति जीवाय स स्वप्न इति गीयते । तदन्यथात्वं जाग्रत्त्वं सा भ्रान्तिस्तत्र तत्कृता । अनभिव्यक्तरूपत्वान्नान्यसाधनजं भवेत्' इति स्मृतेरेव मानत्वादिति ।

ननु यदि स्वप्नविषयाः बाह्यार्थजन्याः न तर्हि तेषां सत्त्वं न स्याच्छुक्तिरजतादिवदित्याशङ्कायामाह— **सूचकश्च हि श्रुतेराचक्षते च तद्विदः** इति। प्रथमचशब्दो यस्मादित्यर्थः। यस्मात्स्वप्नविषयः सूचकः तस्मात्स सन्नेव। न ह्यविद्यमानशाकुनं कस्यचित् सूचकं दृष्टचरम्। किन्तु सदेव। न च स्वप्नविषयस्य सूचकत्वे मानाभावः। 'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति। समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने', 'पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति' इत्यादिश्रुतेः। हिशब्दात् प्रत्यक्षतः तत्फलदर्शनाच्च। 'यद्वापि ब्राह्मणो ब्रूयाद्देवता वृषभोऽपि वा। स्वप्नस्थमथवा राजा तत् तथैव भविष्यति' इति स्वप्नविदो व्यासादय आचक्षते चेति सूत्रार्थः। एतेन स्वाप्नपदार्थस्य क्लृप्तकारणजन्यत्वाभावे शुक्तिरूपादिवत् कल्पितत्वं स्यादिति दूषणमपास्तम्। कल्पितत्वे श्रुतौ सृष्ट्यनुक्तिप्रसङ्गात्। अत एव तस्य नित्यत्वप्रसङ्गोऽपि प्रत्यूढः। बाह्यसाधनजन्यत्वे सम्यगनभिव्यक्तस्वरूपत्वं न स्यात् इत्युक्तम्।

एतेनोक्तकण्ठकोलाहलाः सर्वेऽपि प्रत्युक्ताः। स्वप्नपदार्थानां संस्कारोपादानत्वेन आन्तरत्वस्यैवोपगमात्। तदा बाह्येन्द्रियानामुपरतत्वेऽपि मनसैव तद्दर्शनोपपत्तेश्च। अत एव स्वाप्नपदार्थाः स्वप्नद्रष्टुरन्ये जागृत्त्वाद्यंश एव बाधदर्शनेन तस्यासत्त्वेऽपि जगत्तुरगाद्यंशो तदभावेन पारमार्थिकत्वमित्युक्तप्रायम्। अतः स्वप्ने भगवदधीनत्वसिद्धेर्महामाहात्म्यं तस्येति युक्ता तत्र भक्तिरिति।

## २. पराभिध्यानाधिकरणम्

ननु तथापि नेश्वरे भक्तिर्युक्ता, स्वप्नवत्तत्तिरोभावस्य तदधीनत्वाभावेन तस्य भक्तिप्रयोजकमहामाहात्म्यवत्त्वाभावात्। सर्वस्य तदधीनत्वे हि तस्य माहात्म्यं सिद्ध्यतीति। नान्यथा स्वप्नतिरोभावश्च बाह्यज्ञाने सति स्वप्नदर्शनात्। बाह्यविज्ञाने सति तद्दर्शनान्वयव्यतिरेकाभ्यां बाह्यविज्ञानादेव तदुपपद्यते इति न तदर्थमीश्वरापेक्षेत्यत आह— **पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ** इति। तुशब्दोऽवधारणार्थः। पराभिध्यानात्तु परमेश्वरेच्छात एव तस्य स्वप्नस्य तिरोहितं तिरोधानं भवति न तु बाह्यविज्ञानेन। हि यस्मात्, अस्य जीवस्य, बन्धविपर्ययौ बन्धमोक्षौ ततः पराभिध्यानात् भवतः तस्मादिति सूत्रार्थः। यथाऽज्ञाननिमित्तो बन्धः मोक्षस्तु ज्ञाननिमित्त इति सुप्रसिद्धौ सत्यामपि ज्ञानाज्ञानयोरचेतनत्वेनास्वातन्त्र्यान्न तयोस्तदधीनत्वं किं त्वीश्वराधीनत्वमेव तथा बाह्यज्ञानतद्विज्ञानयोरन्वयव्यतिरेकाभ्या ........ द..........ति न तत्तिरोभावनिमित्तत्वप्रसिद्धौ सत्यामपि तयोरचेनत्वेनास्वातन्त्र्यात् भगवदधीनमेवोपेयम्। तयोस्तु निमित्तमात्रत्वमेवोपेयम्। नेदं दृष्टान्तमात्रं किं तु यतः 'स्वप्नादिबुद्धिकर्ता च तिरस्कर्ता स एव च। तदिच्छया यतो ह्यस्य बन्धमोक्षौ प्रतिष्ठितौ' इति स्मृतिरप्युक्तदृष्टान्तावष्टम्भेन स्वप्नतिरोधानस्य भगवदधीनत्वमाह। न च बन्धमोक्षयोरीश्वराधीनत्व एव

किं मानमिति वाच्यम्। 'बन्धको भवपाशेन भवपाशाच्च मोचकः' इत्यादेरिति भावः। अतः स्वप्नतिरोभावस्यापि भगवदधीनत्वसिद्धेस्तस्य महामहिमत्वाद्युक्ता तत्र भक्तिरिति।

## ३. देहयोगाधिकरणम्

ननु तथापि न भगवति भक्तिर्युक्ता, जागरणस्य तदधीनत्वमिति वाच्यम्, प्रत्यक्षदृष्टतदधीनत्वस्य दुरपह्नवत्वात्। बाधकं विना तद्भ्रान्तित्वाश्रयणायोगादित्याशङ्क्य आह— **देहयोगाद्वासोऽपि** इति। देहयोगतो वासोऽपि जाग्रदपि तत एव पराभिध्यानादेव न तु कालतः तस्याचेतनत्वेनास्वातन्त्र्यादिति सूत्रार्थः। न चात्र मानाभावः, 'स एव जागरिते स्थापयति स स्वप्ने स प्रभुस्तुराषाट् स एको (हि) बहुधा भवति' इति श्रुतेः। उक्तप्रत्यक्षं तु श्रुतिविरोधात् कालस्य निमित्तमात्रत्वविषयमिति भावः। तुराषाट् वैरिवेगसहः। अतो हरेर्जगत्प्रवर्तकत्वेन महामहिमत्वाद्युक्ता तत्र भक्तिरिति।

## ४. तदभावाधिकरणम्

नन्वथापि न भगवति भक्तिर्युक्ता, तुल्यन्यायेन स्वप्नजाग्रद्वत्सुप्तेर्भगवदधीनत्वे विवादाभावेऽपि सुप्तस्य केवलपरमात्मप्राप्तत्वेन नाडीनियामकतया नाडिस्थपरमात्मप्राप्यत्वेन महामाहात्म्याभावात् 'सता सोम्य तदा सम्पन्नो भवती'ति श्रुतौ सुप्तस्य परमात्ममात्रस्थत्वमेव वर्ण्यत इति वाच्यम्। अणोर्जीवस्य साक्षान्नाडीपरमात्मोभयस्थत्वायोगात् सुप्तस्य परमात्मनोऽन्यत्रावस्थाने जाग्रत्स्वप्नयोरिव दुःखित्वापत्तेः। उभयत्रावस्थानेऽपि परमात्मसम्बन्धप्रयुक्तसुखित्वस्येवान्यसम्बन्धप्रयुक्तदुःखित्वस्याप्यापत्तेश्च। न चैवं मुक्तवत् सुप्तस्य सुखमात्रानुभवात्, सुखमहमस्वाप्समित्युत्तरकालीनस्मृतेरेव तत्र अननुभूतस्य स्मरणायोगात्। अतः सुखैकानुभवानुसारिश्रुतिबलात् सुप्तस्य केवलपरमात्मप्राप्यत्वमेव सिद्ध्यति न तु तदननुसारिदुर्बलोदाहृतश्रुत्या न नाडीस्थत्वमिति। नाडीनां तदा परमात्मानधिष्ठितत्वप्राप्त्या परमात्मनस्तन्नियामकत्वलक्षणमाहात्म्याप्राप्तेर्न तस्मिन्नतिशयेन भक्तिर्युक्तेति शङ्कापरिहाराय आह— **तदभावो नाडीषु तच्छ्रुतेरात्मनि च** इति। तदभावः तयोर्जाग्रत्स्वप्नयोरभावः सुप्तिरिति यावत्। चशब्दः समुच्चयार्थः। जीवस्य सुप्तिर्नाडीषु परमात्मनि च। 'आसु तदा नाडीषु सुप्तो भवति, सता सोम्य तदा सम्पन्नो भवति इति च श्रुतेरि'ति सूत्रार्थः। न चैकस्यैवाणोर्जीवस्योभयत्र सुप्तिर्विरुद्धेति वाच्यम्, आसु नाडीषु परमात्मा तस्मिन् जीवः सुप्त इत्यङ्गीकारेणोभयोरुपपत्तेः। एतेन परमात्मान्यनाडीसम्बन्धप्रयुक्तदुःखित्वप्रसङ्गः प्रत्यूढः। एवं श्रुतिद्वयस्याप्यबाधेनैव प्रामाण्योपपत्तावन्यतरश्रुत्यान्यतरश्रुतिबाधायोगादिति भावः। श्रुतौ सुप्तः प्राप्त इत्यर्थः। अतः परमात्मनोऽधिष्ठातृतया नाडीस्थस्यैव सुप्तप्राप्यत्वमाहात्म्यवत्त्वाद्युक्ता तत्रातिशयेन भक्तिरिति।

## ५. प्रबोधाधिकरणम्

नन्वथापीश्वरे अतिशयेन न भक्तिर्युक्ता, सुप्तप्रबोधस्य भेरीताडनाद्यन्याधीनदर्शनेन भगवदधीनत्वाभावेन सर्वस्य भगवदधीनत्वासिद्ध्या सर्वनियामकत्वरूपमहामाहात्म्यासिद्धेरित्याशङ्क्याह— **अतः प्रबोधोऽस्मात्** इति । यतः परमात्मन्येव जीवस्य सुप्तिरतः प्रबोधोऽपि तस्मात्परमात्मनः सकाशादेव भवति । न हीश्वरेण सुषुप्तिकाले स्वान्तर्निवेशितो जीवः तत्प्रेरणमन्तरेणोद्बोध्यं क्षमत इति सूत्रार्थः । ननु भेरीताडनाद्यन्वयव्यतिरेकदर्शनात् प्रबोधस्य कथं भगवदेकाधीनत्वमिति चेत् 'एष एव सुप्तं प्रबोधयति, एतस्माज्जीव उत्तिष्ठति एष प्रमातैष परम' इति श्रुतेरेवेति ब्रूमः । भेरीताडनाद्यन्वयव्यतिरिक्तानुविधानदर्शनं तु तेषां भगवदधीनतन्निमित्तत्वमात्रविषयकमित्यविरोध इति भावः । अतः सुप्तप्रबोधकत्वेनातिमाहात्म्यवति हरावतिशयेन युक्ता भक्तिरिति ।

## ६. कर्मानुस्मृत्यधिकरणम्

नन्वथापि भगवत्यतिशयेन भक्तिर्न युक्ता, सर्वजीवानां सर्वकालीनसर्वावस्थानियामकत्वाभावात् । राजादीनां खण्डेश्वरत्वदर्शनेन भगवतोऽपि केषाञ्चिज्जीवानामेव किञ्चित्तदवस्थाप्रेरकत्वकल्पनात् । न च लोकवैलक्षण्यमीश्वरस्यैवमेवाभ्युपगन्तुं शक्यम्, अतिप्रसङ्गात् । न हि असङ्कुचितसर्वनियामकत्व ईश्वरस्य किमपि नियामकमस्ति । अतः सर्वावस्थाप्रेरकत्वाभावेन न हरेः सर्वैश्वर्यवत्त्वमिति शङ्कायामाह— **स एव च कर्मानुस्मृतिशब्दविधिभ्यः** इति । पक्षान्तरव्यावृत्त्यर्थश्चकारः । स एव परमात्मैव सर्वावस्थाप्रेरकः, न तु केषाञ्चित् किञ्चिदवस्थाप्रेरकः । 'एष ह्येव साधुकर्म कारयति' इति सर्वकर्मणां भगवदधीनत्वस्य श्रवणात् । स्वप्नादिप्राप्तेश्च तदन्तर्भावात् । 'प्रदर्शकस्तु सर्वेषां स्वप्नादेरेक एव तु । परमः पुरुषो विष्णुस्ततोऽन्यो नास्ति कश्चन' इत्यनुस्मृतेः । एष स्वप्नान् प्रदर्शयत्येष प्रबोधयत्यथैष एव परम आनन्द' इति शब्दात् 'आत्मानमेव लोकमुपासीते'ति परमात्मन एव उपास्यत्वविधानाच्चेति सूत्रार्थः । अन्यस्यापि प्रेरकस्य सद्भावे उदाहृतप्रमाणेषु सर्वत्रावधारणानुपपत्तेरिति भावः । अतः सर्वदा सर्वत्र सर्वावस्थाप्रेरके महामहिम्नि ईश्वरेऽतिशयेन भक्तिर्युक्तेति ।

## ७. मुग्धप्राप्त्यधिकरणम्

ननु मोहावस्थाशब्दितमूर्च्छावस्थायाः सुषुप्त्यवस्थान्तर्गतत्वेन भगवतः सुषुप्त्यवस्थाजीवप्राप्यत्वसिद्धावपि मोहावस्थाविशिष्टजीवप्राप्यत्वरूपातिशयान्तरासिद्धेस्तस्य तत्प्रयुक्तमहामाहात्म्यासिद्धेः तस्मिन् भगवत्यतिशयेन वृत्तिः न युक्तेत्यत आह— **मुग्धेऽर्धसम्पत्तिः परिशेषात्** इति ।

मुग्धे मोहावस्थायां जीवस्येश्वरेऽर्धसम्पत्तिः परिशेषादिति सूत्रार्थः । परिशेषस्त्वेवं न तावदयं मोहः सुप्तिः, दुःखानुसन्धानात् । सुप्तस्य हृदयस्थे ब्रह्मणि समग्रप्रवेशेन दुःखानुसन्धानानुपपत्तेः । नापि जागरणं स्वप्नो वा, दुःखात्मकालातिरिक्तविषयादर्शनेन हृदयस्थाद् ब्रह्मणो दूरेऽक्षिणि तत्समीपे कण्ठे च विद्यमानयोरेव क्रमेण जाग्रत्स्वप्नावस्थात्वेन च मोहावस्थाया अतथात्वात् । तथाच परिशेषात् मोहे जीवस्येश्वरेऽर्धसम्पत्तिरेव जायते । न च अत्र मानाभावः 'हृदयस्थात्पराज्जीवो दूरस्थो जाग्रदेष्यति । समीपस्थस्तथा स्वप्नं स्वपित्यस्मिन् लयं व्रजन् । यत एवं त्रयोऽवस्था मोहस्तु परिशेषतः । अर्धप्राप्तिरिति ज्ञेयो दुःखमात्रप्रतिस्मृतेः' इति भावः । एतेन मोहावस्थातत्प्रबोधयोर्भगवदधीनत्वस्यासमर्थनान्न्यूनतेति शङ्का निरस्ता ।

सुप्तजागरसुषुप्तन्यायेन 'मूर्च्छा प्रबोधनं चैव यत एव प्रवर्तते । स ईशः परमो ज्ञेयः परमानन्दलक्षणः' इति कौर्मवचनेन च भगवदधीनत्वसिद्धेरुक्तशङ्कानवकाशेन तदवस्थानस्यैवेह चिन्तौचित्यादिति, अतो मोहावस्थाया अपि भगवदधीनत्वेन महामहिमत्वात् युक्ता निरतिशयेन भक्तिरिति सिद्धम् ।

## ८. न स्थान(तोऽप्य)भेदाधिकरणम्

तथापि जगदाद्युक्तसर्वशरीरेषु जाग्रदादिस्थानेषु च स्थितस्य हरेर्नानात्वावश्यंभावेन भिन्नानां चानुगुणादितारतम्यानुग्राह्यानुग्राहकभावदर्शनेन तस्यापि तथात्वापत्त्या निरतिशयैश्वर्यायोगात् भिन्नभिन्नस्थानस्थितेषु घटादिषु परस्परभेददर्शनात् आकाशादिवदैक्योपपत्तावपि तस्य तद्वदेवावयवित्वे पाणिपादाद्यवयवावच्छेदेनानेकस्थानस्थितत्वापत्त्या समग्ररूपेण तत्र तत्र स्थित्यभावप्रसङ्गात् विश्वादीनां 'सप्ताङ्ग एकोनविंशतिमुखः' इति प्रत्येकं रूपश्रवणात् । असमग्ररूपेण च स्थित्यङ्गीकारे आकाशादीनां दृष्टान्तत्वायोगादित्याशङ्क्याह— **न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि** इति । परस्य परमात्मनः स्थानतोऽपि अक्षिकण्ठहृदयादिस्थानतोऽपि उभयलिङ्गं भिन्नभिन्नरूपं नास्ति हि यस्मात्सर्वत्र चक्षुरादिस्थानेषु 'सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते', 'एकरूपः परो विष्णुः सर्वत्रापि न संशयः । ऐश्वर्याद्रूपमेकं च सूर्यवद्बहुधेयते', 'प्रतिदृशमिव नैकधार्कमेकं समधिगतोऽस्मि विधूतभेदमोहः' इति श्रुतिस्मृतिभिः तस्य परमात्मनो निर्दोषपूर्णगुणत्वमावेद्यते, तस्मादिति सूत्रार्थः । अत्र सूत्रे परस्योभयत्वमित्यनुक्त्वा उभयलिङ्गमित्युक्तिस्तु पूर्वपक्षिण इष्टापत्तिरिति शङ्कावारणाय । तेनापीश्वरस्याकाशादिवदेकैकदेशेत्यनेकस्थानस्थितत्वस्य स्वीकृतत्वात् । सिद्धान्तिना परमात्मनः समग्ररूपेणानेकस्थानत्वस्य साधनात् । न चैवं भिन्नस्थानानुमानविरोधः, सर्वेषु भूतेष्विति श्रुतिविरोधेन

तदनुमानस्य बाधितविषयत्वात् । सर्वेषु भूतेषु चक्षुरादिस्थानेष्वेव तमेकमेव पूर्णगुणमाचक्षत इति तच्छ्रुत्यर्थप्रतीतेरिति भावः । अत्र समग्ररूपेणानेकस्थानत्वं कथं हरेरुपपद्यते, अन्यत्रादर्शनादिति शङ्कानिरासाय 'एकरूपः परो विष्णुरि'ति मात्स्यवचनमिति द्रष्टव्यम् । 'प्रतिदृशमिवे'ति भागवतवचनस्य प्रतिदृशं प्रेरकत्वेनैश्वर्यवशान्नैकधास्थितमर्कं यथैकमेव समधिगच्छन्ति तथाभूतानां प्रति हृदयं समग्रत्वेनैश्वर्यबलादनेकधा व्यवस्थितमीश्वरमेकं समधिगतोऽस्मीत्यर्थः । मां प्रति मां प्रतीति बहुधा स्थितमिति वा । उक्तमर्थमाक्षिप्य समाधत्ते— **न भेदादिति चेन्न प्रत्येकमतद्वचनात्** इति । न विश्वादीनामभेदो वाच्यः, 'कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ । प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिद्ध्यतः' इति श्रुत्या विश्वतैजसयोः कार्यभ्रमरूपजाग्रद्बाध्यत्वतत्कारणभ्रमरूपसुप्तबद्धत्वयोः प्राज्ञस्य तत्कारणाज्ञानरूपसुप्तैकबद्धत्वस्य तुरीयस्य तु कार्यकारणभ्रमरूपजाग्रत्स्वप्नबद्धाभावस्य तत्कारणानुरूपसुप्तिबद्धत्वराहित्यस्य च वर्णनेन भेदावश्यम्भावादिति चेदिति सूत्रे आक्षेपांशार्थः । नैतच्छ्रुतिबलेनेश्वराणां भेदो वाच्यः, 'एष त आत्मान्तर्याम्यमृतः', 'यश्चायमस्यां पृथिव्यां पुरुषो यश्चायमध्यात्मं अयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वं', 'अयं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च' तदेतत् ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम्' इति श्रुतिषु प्रत्येकं परस्परं अतद्वचनादभेदवचनादिति परिहारांशार्थः । तत्र प्रत्येकमित्यादरं सूचयति । तत्र 'यः पृथिव्यां तिष्ठन्' इत्यादिना अन्तर्यामिब्राह्मणे पृथिव्याद्यन्तर्यामित्वेनोक्तस्यैव याज्ञवल्क्येनोद्दालकान्तर्यामित्ववर्णनात् । 'यश्चायमस्यां पृथिव्याम्' इत्यादिना मधुब्राह्मणेऽपि पृथिवीस्थस्यैव पुरुषस्यात्मनो भेदवर्णनात्, 'अयं वै हरय' इति बह्वृचवाक्येनापि अयं मूलरूपेण बहवो हरय इति भगवद्रूपाणां परस्परं मूलरूपेण च भेदवर्णनात्, 'तदेव ब्रह्मे'ति श्रुतावपूर्वमनपरमिति पदाभ्यां आद्यन्तशून्यत्वं, अनन्तरमबाह्यमिति पदाभ्यां नान्तर्बहिरन्यद्यस्य तदनन्तरं अबाह्यं ब्रह्मेति अनूद्य तस्य सर्वानुभूरिति सर्वज्ञत्वं चोच्यते । तस्मादुदाहृतानेकश्रुतिबलाद्विश्वादि भगवद्रूपाणां परस्परमभेद एव वाच्यः । न तु 'कार्यकारणबद्धौ तौ' इति श्रुत्या भेदः, उदाहृतबहुश्रुतिविरोधादिति भावः ।

ननु नैतच्छ्रुतिभिः भेदश्रुतेर्बाधो वक्तुं शक्यः, तासां कतिपयरूपविषयत्वस्यापि सम्भवात् । 'तदेव ब्रह्मे'ति श्रुतौ भेदाप्रतीतेश्चेत्यत आह— **अपि चैवमेके** इति । एवमभेदेनैव परस्य परमात्मनोऽनन्तरूपत्वम् 'अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः । ओङ्कारो विदितो येन स मुनिर्नेतरो जनः' इत्येके शाखिनः पठन्तीति सूत्रार्थः । चशब्दोऽनन्तरूपत्वसमुच्चयार्थः । अत्र श्रुतावमात्रो भिन्नांशशून्यः । पुनरनन्तांशद्वैतस्योपशमो मिथ्याज्ञानोपशमकर्ता ओमित्याहीयमाण ओङ्कार इत्यर्थः । तथाच विश्वाद्यनन्तरूपाणामभेदेनोदाहृतश्रुतौ पठितत्वात् 'न कार्यकारणबद्धौ तावि'ति भेदश्रुति-

मालम्ब्य तद्भेदो ग्राह्य इति भावः। अभेदेन सहैवेश्वररूपाणां बहुत्वस्य पठितत्वाच्च न भेदश्रुतिरभेदश्रुतिविरोधिनीति सूत्रार्थः। तर्हि श्रौतभेदव्यपदेशस्य का गतिरिति चेत् अक्ष्यादिस्थानस्थितत्वौपाधिकत्वेन तद्वत्युपपत्तेः। 'अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान्। प्रोच्यते भगवान् विष्णुरैश्वर्यात्परमेश्वरः' इति स्मृत्या भेदाभावेऽप्यचिन्त्यैश्वर्येण श्रौतभेदव्यपदेशनिर्वाहवर्णनाच्च। एतेन अभिन्नस्य परमात्मनः स्थानभेदोऽपि कुत इत्याशङ्कापि निरस्ता। तदैश्वर्यस्यैव स्थानभेदेऽपि कारणत्वादिति।

ननु निर्दोषस्य हरेः कथं श्रुतौ बद्धत्वोक्तिः, उच्यते— बन्धादिसाक्षित्वादेव तत्र तदुक्तिः, 'बद्धो बन्धादिसाक्षित्वात् भिन्नो भिन्नेषु संस्थितेः। निर्दोषाद्वयरूपोऽपि कथ्यते परमेश्वरः' इति ब्रह्मतर्कवचनेनैव बद्धत्वाद्युक्त्यालम्बनकथनादिति। निर्दोषी बद्धः, अद्वयरूपोऽपि भिन्नः, श्रुत्यादिषु कथित इति तद्वचनार्थः। अतो हरेः स्वगतभेदशून्यस्य सर्वत्र गुणपूर्णत्वाद्युक्ता तस्मिन्निरतिशयेन भक्तिरिति।

## ९. अरूपाधिकरणम्

नन्वथापि 'न भगवति भक्तिर्युक्ता, तस्य रूपवत्त्वे यज्ञदत्तवत् अनित्यत्वप्रसङ्गात् अनित्यशरीरे चातिशयितभक्त्यनुपपत्तेः। अरूपमव्ययं तदरूपं नामायम्' इति तद्रूपत्वावेदकश्रुत्यप्रामाण्यापत्तेश्च। अरूपत्वस्य 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशमादित्यवर्णम्' इत्यादिश्रुतिविरुद्धत्वात् रूपराहित्यैतच्छ्रुतिवैयर्थ्यापत्तेश्च सौन्दर्यसौलक्षण्याद्यभावापाताच्च। सौन्दर्यादिशून्ये च स्नेहविशेषरूपभक्त्यदर्शनात्। तदेवमुभयथापि परमेश्वरे भक्तेरनुपपन्नत्वात् व्यर्थोऽयं पाद इत्याशङ्क्याह— **अरूपवदेव हि तत्प्रधानत्वात्** इति। युक्तैव परमात्मनि निरतिशयिता भक्तिः। न चोक्तो दोषः, परमात्मा रूपवानित्यङ्गीकारेण तस्यानित्यत्वानापत्तेः। अरूपत्वश्रुत्यवैय्यर्थ्योपपत्तेश्च। न च तस्यारूपवत्त्वं कथमिति वाच्यम्, रूपं हि भवत्प्राकृतं वा भौतिकं वा स्यात्। न च तदुभयमपि परमात्मनि सम्भवति, कुतः, तत्प्रधानत्वात् प्रकृत्यादिप्रवर्तकत्वेन तस्य तदुत्तमत्वात्। न हि स्वाधीनः स्वात्मानं बध्नातीति सूत्रार्थः। ननु परमात्मनः स्वाधीनप्रकृत्यादिसामर्थ्येन रूपादिप्रयुक्तबन्धाभावेऽपि स्वेच्छादिनिमित्तेन रूपं किं न स्यादित्याशङ्कानिरासकश्रुतिप्रसिद्धार्थो हि शब्दः। सा श्रुतिः 'अस्थूलमनण्वित्यादिरूपा प्रसिद्धैव। नन्वेवं सूत्रार्थवर्णने किं मूलमिति चेत् 'भौतिकानि हि रूपाणि भूतेभ्योऽसौ परो यतः। अरूपवानतः प्रोक्तः क्व तदव्यक्ततः परे' इति मात्स्यवचनमिति गृहाण। परः प्रवर्तकत्वेनोत्तमः अव्यक्ततः परे तदाव्यक्तिकं रूपं क्वेति तद्वचनार्थः। कैमुत्यं वा।

ननु परमात्मनो रूपाभावे रूपत्वश्रुतिवैयर्थ्यं भक्तिप्रयोजकसौन्दर्याभावश्चेत्याशङ्क्याह— **प्रकाशवच्चावैयर्थ्यम्** इति। 'यदा पश्यः पश्यते रुक्मवर्णं, श्यामाच्छबलं प्रपद्ये, सुवर्णज्योतीः'

इत्यादिश्रुतीनां चावैयर्थ्यम्, अत एव न सौन्दर्याद्यभावश्च । न चैवं तस्य रूपित्वे तदभावावेदकश्रुति-वैयर्थ्यम्, रूपित्वप्रयुक्तमनित्यत्वं चापद्येत इति वाच्यम्; तद्रूपस्यानित्यत्वव्याप्तप्राकृतभौतिकरूप-विलक्षणत्वेनानित्यत्वाद्यप्रसरात् ।

ननु विलक्षणरूपवत्त्वे कथमरूपत्वश्रुत्यवैयर्थ्यमित्यत आह प्रकाशवदिति । यथा गृहान्तर्निय-मादिप्रकाशे विद्यमानेऽपि नास्ति प्रकाश इत्यादिव्यवहारो भवति, चाक्षुषादिप्रकाशस्य लौकिकप्रकाश-विलक्षणत्वात्, एवमात्मनो रूपित्वेऽपि प्राकृतभौतिकरूपविलक्षणत्वादरूपत्वश्रुत्यवैयर्थ्यमिति सूत्रार्थः ।

ननु सर्वरूपाणां प्रकृत्याद्यात्मकत्वनियमात् कथं ब्रह्मणो विलक्षणरूपत्वम्, येन तत्प्रयुक्तानित्य-त्वादिदोषो न स्यादित्यत आह— **आह च तन्मात्रम्** इति । तन्मात्रमिति भावप्रधानो निर्देशः । भगवद्रूपस्य ज्ञानानन्दादिमात्रात्मकत्वेन वैलक्षण्यं च 'ऐकात्म्यप्रत्ययसारम्' इति 'आनन्दमात्रमजरं पुराणमेकं सन्तं बहुधा दृश्यमानम् । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् । इति च श्रुतिराहे'ति सूत्रार्थः । श्रुतावेकशब्दः प्रधानार्थः । तेन प्रधानात्मभाव एव स्वरूपं यस्य तदैकात्म्यं तच्च तत्प्रत्ययसारं ज्ञानस्वरूपमित्यर्थः । अत्र सूत्रे 'तद्गुणसारत्वादि'ति प्रकृतौ ज्ञानानन्दौ तच्छब्देन परामृश्येते इति न काचिदनुपपत्तिः ।

नन्वेतच्छ्रुत्या ब्रह्मणो ज्ञानानन्दात्मकत्वमेव वर्ण्यते नत्वानन्दादेः ब्रह्मरूपत्वम्; अतो रूपित्व-श्रुतेर्वैयर्थ्यमेव । सौन्दर्याद्यभावश्च रूपाभावप्रयुक्तोऽपरिहृत इत्याशङ्क्याह— **दर्शयति चाथो अपि स्मर्यते** इति । आनन्दस्य ब्रह्मरूपत्वं च 'तद्विज्ञानेन परिपश्यन्ति धीराः आनन्दरूपममृतं यद्विभाति' इति श्रुतिर्दर्शयति । अथो अथ ज्ञानस्यापि ब्रह्मरूपत्वं 'शुद्धस्फटिकसङ्काशं वासुदेवं निरञ्जनम् । चिन्तयीत यतिर्नान्यं ज्ञानरूपादृते हरेः' इति स्मर्यते चाभियुक्तैरिति सूत्रार्थः । अतो ज्ञानानन्दादि सुन्दरविग्रहे हरौ अतिशयेन भक्तिर्युक्तेति ।

## १०. उपमाधिकरणम्

नन्वथापि परमात्मनि भक्तिर्न युक्ता, जीवस्य परमात्माभिन्नत्वात्, न हि स्वस्मिन्नेव स्वस्य भक्तिर्युज्यते । जीवः परमात्मनो न भिद्यते, चेतनत्वात्, तदंशत्वान्मत्स्यादिवदित्यनुमानस्यैव जीवस्य परमात्माभिन्नत्वे मानत्वात् । यद्यपि जीवस्य परमात्मभिन्नत्वं समर्थितं तथापि सर्वचेतनसमुदाय-स्येशत्वेनैकैकजीवस्य परमात्मना भेदाभेदात् अभेदेऽपि भेदाविरोधात् इत्याशङ्क्याह— **अत एव चोपमा सूर्यकादिवत्** इति । अत एव चोपमेति पूर्वपक्षांशः । चशब्दो भिन्नक्रमः । सूर्यकादिव-

दिति सिद्धान्तांशः । अत्र न स्थानतोऽपीत्यनुवर्तते । अपि चैवमेके इत्यत एवमिति । यत एव न स्थानतोऽपीत्युक्तप्रकारेणेश्वरस्वरूपाणां विश्वादीनामीश्वरेण मिथश्च अभेदः, एवं जीवस्यापि चेतनत्वांशत्वरूपोपमा सादृश्यमस्तीति ततस्तदभेदः स्यादिति पूर्वपक्षांशार्थः । साध्यत्वाभिमतभेदसमुच्चयार्थश्चकारः । सूर्यकादिवदिति दृष्टान्तवचनेनैव जीवे पक्षे प्रतिबिम्बत्वहेतुर्लभ्यते । तथाच विमतो जीवः ब्रह्माभिन्नो न भवति, तत्प्रतिबिम्बत्वात् । यो यत्प्रतिबिम्बः, स तेनाभिन्नो न भवति यथा सूर्यकः सूर्येणेति दृष्टान्तांशतात्पर्यार्थः । न च जीवस्येश्वरप्रतिबिम्बत्वमसिद्धम्, 'रूपं रूपं प्रतिरूपो बभूव', 'बहवः सूर्यका यद्वत् सूर्यस्य सदृशाजले । एवमेवात्मका लोके परात्मसदृशा मताः' इत्यादिश्रुतिस्मृतिसिद्धत्वात् । अथवा अत एवेति सूत्रं समग्रं सिद्धान्त एव । अस्मिन्पक्षे उत्सूत्र एव पूर्वपक्षः । स चोक्तप्रकार एव । तथाच यत एव स्यात् सूर्यकादिवदुपमा प्रतिबिम्बत्वम् । तस्य परमेश्वरांशत्वेऽपि सूर्यकस्य सूर्येणेव तस्य परमेश्वरेण भेद एवेति । अनेन ब्रह्माभेदसाधकोक्तचेतनत्वाद्यनुमानस्य प्रतिबिम्बत्वरूपोपाधिश्च सूचितो भवति । अभेदांश एव विवादात्तन्निरास एवात्र क्रियते । न च अप्रयोजकता, जीवस्य मत्स्यादिवदीश्वरस्वरूपांशत्वे ज्ञानैश्वर्याद्यविशेषापत्तेः विपक्षबाधकत्वात् । भेदस्यापि सद्भावेन ज्ञानैश्वर्यादिव्यवस्थोपपत्तिरिति चेन्न, ब्रह्मस्वरूपानुगतेः आवश्यकत्वात् ऐश्वर्यादेश्च स्वरूपत्वान्मत्स्यादिवदिति भावः ।

## ११. अम्बुवदधिकरणम्

ननु अथापि भगवद्भक्तिः न कार्या, प्रयोजनशून्यत्वात्, ज्ञानप्रसादादेः स्वतःप्रयोजनत्वाभावात् मोक्षस्यापि नित्यानन्दज्ञानादिरूपस्य नित्यसिद्धत्वात्, नित्यसिद्धस्यापीदानीमावृतत्वेन तदभिव्यक्त्यर्थं भक्त्यादिरित्युक्तमिति चेन्न, विद्यमानस्य तस्य सुप्ताविव भक्तिं विनैव कदाचित् स्वयमेवाभिव्यक्तिसम्भवादित्याशङ्क्याह— **अम्बुवदग्रहणात्तु न तथात्वम्** इति । अम्बुवत्स्नेहेन ग्रहणं ज्ञानं हि भक्तिः, तदभावात् तथात्वं जीवे विद्यमानमपि भगवत्सादृश्यं सम्यग् नाभिव्यज्यते इति सूत्रार्थः । भगवत्सादृश्याभिव्यक्तेस्तद्भक्तिसाध्यत्वे 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्', 'महत्त्वबुद्धिर्भक्तिस्तु स्नेहपूर्वाभिधीयते । तयैव व्यज्यते सम्यक् जीवरूपं सुखादिकम्' इति श्रुतिस्मृत्योः प्रमाणत्वात् । स्वां तनूं तत्स्वरूपमिति तच्छ्रुत्यर्थप्रतीतेः । न च विनापि भक्तिं सुप्ताविव स्वरूपसुखाभिव्यक्तिः स्वयमेव कदाचित् सम्भवतीति भक्तिवैयर्थ्यमित्युक्तमिति वाच्यम्, तथापि सम्यगभिव्यक्तेर्भगवद्भक्तिं विनाऽनुपपत्तेः उदाहृतस्मृत्या तथैवावेदनात् । अन्यथानादिसंसारप्रवाहानुपपत्तेरिति भावः । अतः प्रयोजनवती भक्तिः कार्यैव इति ।

## १२. वृद्धिह्रासाधिकरणम्

ननूक्तरीत्या भक्तेः स्वरूपानन्दाभिव्यक्तिविशेषकारणत्वेनावश्यकत्वेऽपि सा एकप्रकारैव कार्या, न तु तरतमभावापन्ना, तत्फलस्य मुक्तित्वादेः सर्वेषु साम्यात्, फलसाम्ये च साधनतारतम्यस्य वैयर्थ्यात्, अन्यथा तन्न्यूनाधिकभावप्रयुक्ता मुक्तिः केषाञ्चित् सम्यक्, केषाञ्चिच्च असम्यगिति स्यात् । नैवम्, अतो भक्तिरेकप्रकारैवेति स्वीकार्यमित्यत आह— **वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्** इति । भक्तिज्ञानादिसाधनानां 'वृद्धिह्रासभाक्त्वं न्यूनाधिकभावः तारतम्यम् । ब्रह्मादीनामधिकफलानामल्पफलानामस्मदादीनां च भक्तत्वेन मोक्षाधिकारान्तर्भावात् । एवं भक्तितारतम्ये सत्येवेश्वरस्योभयान् ब्रह्माद्यस्मदाद्युभयविधाधिकारिणः प्रति सामञ्जस्यात् । अन्यथा साधनतारतम्याभावे विषमफलदातुरीश्वरस्यासामञ्जस्यप्रसङ्गात् । उभयसामञ्जस्यादित्युपलक्षणम्, 'साधनस्योत्तमत्वेन साध्यं चोत्तम माप्नुयुः । ब्रह्मादयः क्रमेणैव यथाऽऽनन्दश्रुतौ श्रुताः' इति स्मृतिश्चात्र प्रमाणमिति द्रष्टव्यम् ।

ननु भवेदेवं यदि ब्रह्मादीनां फलतारतम्यं स्यात् तदेव कुत इत्यत आह— **दर्शनाच्च** इति । 'अथात आनन्दस्य मीमांसा भवति' इत्यादिश्रुतौ ब्रह्मपर्यन्तेष्वधिकारिषु सुखविशेषदर्शनात् 'यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे । तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदन' इति सौत्रचशब्दसूचितस्मृतेश्चेति सूत्रार्थः । एतेन भक्तिसाम्येऽपि फलतारतम्यस्य तदितरसाधनतारतम्येनोपपत्तिरिति निरस्तम् । अतो भक्तेः फलानुसारित्वाद्युक्तं तत्तारतम्यमिति ।

## १३. पालकत्वाधिकरणम्

ननु तथापि भगवति न निरतिशया भक्तिर्युक्ता, सृष्टिसंहारातिरिक्तपालनव्यापारस्यैवाभावेन जगत्पालनरूपव्यापारप्रयुक्तमहामाहात्म्यासिद्धेः । न ह्यतिरिक्तपालनव्यापारस्य कृत्यमस्ति । सृष्टपदार्थानां संहारकारणे स्थितिलक्षणस्य पालनस्य स्वत एव सिद्धेरित्यत आह— **प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः** इति । प्रकृतस्य सृष्ट्यादिकर्तृत्वस्यैतावत्त्वं तावन्मात्रत्वं, 'सृष्टिं च पालनं चैव संहारं नियमं तथा । एक एव करोतीशः सर्वस्य जगतो हरिः' इति सौत्रचकारसूचितविवक्षितार्थसमर्पकस्मृत्युपबृंहिता 'नैतावदेना परो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्ति' इति श्रुतिर्निषेधति । ततः सृष्ट्यादिकर्तृत्ववतो भूयोऽधिकतरं पालकत्वं च ब्रवीति हि यस्मात् तस्मात् हरेरतिशयितभक्तिप्रयोजकं माहात्म्यमस्तीति सूत्रार्थः । उदाहृतश्रुतेरयमर्थः । एना अनेनैवेश्वरेण भगवत्कार्यं नैतावत्, प्रागुक्तसृष्टिसंहारमात्रं न भवति । किं त्वन्यदस्ति किं तत् स परो भक्ताभिलषितसेचको द्यावापृथिवीं धत्ते पुष्णाति चेति । एतेन पालनस्य स्वतःसिद्धिर्निरस्ता । धारणपोषणादेः सृष्ट्याद्यतिरिक्तव्यापारस्योक्तत्वात् । अतो जगत्पालकत्वेन महामहिम्नि हरौ भक्तिर्युक्तेति ।

## १४. अव्यक्त(क्ता)त्वाधिकरणम्

ननु अथापि भगवति भक्तिर्न कार्या, प्रयोजनशून्यत्वात्, स्तम्भादिवत्, भक्तिं विनैव पुरुषप्रयत्नेनैव तदपरोक्षज्ञानसम्भवात् । तस्याव्यक्तत्वे च अव्यक्तस्वभावस्य साधनशतेनापि दर्शनसम्पादनायोगेन तदर्थं तद्भक्तिसम्पादनायोगादित्याशङ्क्याह— **तदव्यक्तमाह हि** इति । तद् ब्रह्माव्यक्तमेव स्वतः इत्यङ्गीकर्तव्यम्, हि यस्मात्, 'अरूपमक्षरं ब्रह्म सदाऽव्यक्तं च निष्कलम् । यज्ज्ञात्वा मुच्यते जन्तुरानन्दश्चाक्षयो भवेत्' इति श्रुतिर्ब्रह्माव्यक्तत्वमाहेति सूत्रार्थः ।

ननु स्वतोऽव्यक्तस्यापि ब्रह्मण आराधनरूपपुरुषप्रयत्नेन व्यक्तता स्यादेव, स्वतोऽव्यक्तस्यापि यक्षादेः समाराधनेन साक्षात्कारदर्शनादित्यत आह— **अपि संराधने प्रत्यक्षानुमानाभ्याम्** इति । सम्यगाराधनेऽपि तद् ब्रह्माव्यक्तमेव, कुतः ? ज्ञानिप्रत्यक्षात् तदितरेषामतिसूक्ष्मत्वहेतुकानुमानाच्चेति सूत्रार्थः । न च तथाविधज्ञानिप्रत्यक्षे मानाभावः परप्रत्यक्षस्यान्येन ज्ञातुमशक्यत्वात् तथाच उक्तार्थे तत्प्रमाणीकरणसङ्गतमिति वाच्यम् । 'न तमाराधयित्वाऽपि कश्चिद्व्यक्तीकरिष्यति । नित्याव्यक्तो यतो देवः परमात्मा सनातनः' इति स्मृतिरूपज्ञान्युक्त्यन्यथानुपपत्त्या निश्चिततत्प्रत्यक्षस्य तत्र प्रमाणीकरणसम्भवात् । अत एव व्यक्तं प्रत्यक्षं ब्रह्मेत्यत्र प्रत्यक्षस्य प्रमाणत्वोपन्यासो व्याहत इति निरस्तम् । निरासप्रकारश्च वक्ष्यते । स्मृतौ नित्याव्यक्त इत्युक्त्या यक्षादिप्रतिबन्दी परिहृता ।

ननु यथाग्न्यादयस्तन्मात्ररूपेणादृश्या अपि स्थूलरूपेण दृश्यन्ते तथा भगवानपि सूक्ष्मरूपेण अदृश्योऽपि स्थूलरूपेण दृश्यतामिति चेत्तत्राह— **प्रकाशवच्चावैशेष्यम्** इति । अत्र चशब्द उक्ताशङ्काव्यावृत्त्यर्थः । नैव इत्यनुवर्तते । तथाच प्रकाशवत् यथाग्न्यादिप्रकाशः स्थूलत्वसूक्ष्मत्व-रूपविशेषवान् स्थूलरूपविशेषेण व्यक्तः सूक्ष्मरूपविशेषेणाव्यक्तश्च, नैवं ब्रह्म किं त्ववैशेष्यम्, अविशेष एव वैशेष्यं सौख्यमितिवत् स्वार्थे ष्यञ् । न विद्यते वैशेष्यं स्थूलत्वसूक्ष्मत्वरूपविशेषो यस्मिन् तत्तथा । इदं च हेतुगर्भं विशेषणम् । तथाच ब्रह्म अग्न्यादिप्रकाशवत् भक्त्यादिकारणविशेषाभावान्न व्यक्तं नाप्यव्यक्तमिति सूत्रार्थः । नन्वयं हेतुरसिद्धः, 'नासौ सूक्ष्मो न च स्थूलः पर एव स भवति तस्मादाहुः परमः' इति, 'स्थूलसूक्ष्मविशेषोऽत्र न क्वचित्परमेश्वरे । सर्वत्रैकप्रकारोऽसौ सर्वरूपेष्वजो यतः । अव्यक्तव्यक्तभावौ च न क्वचित्परमेश्वरे । सर्वत्राव्यक्तरूपोऽयं यत एव जनार्दनः' इति श्रुति-स्मृतिभिः स्थूलसूक्ष्मत्वविशेषाभावसिद्धेरिति भावः । तच्छ्रुत्यर्थस्त्वयं— केनचिद्रूपेण सूक्ष्मः केन-चित्स्थूल इति न किन्तु सर्वत्र परमः सूक्ष्म एवेति । अत्र स्मृत्योः प्रथमा, उत्पन्नानुत्पन्नमूलरूपाव-ताररूपाणां कथं स्थूलसूक्ष्मविशेषाभाव इति शङ्कावारणाय । द्वितीयया तु एवं व्यापकानुपलब्ध्या सिद्धमेव ब्रह्मणि व्यक्ताव्यक्तत्वाभावं प्रतिपादितमिति विवेकः ।

नन्वेवं ब्रह्मणः सर्वथा अव्यक्तत्वे किं भक्त्यादिना प्रयोजनमित्यत आह— **प्रकाशश्च कर्मण्यभ्यासात्** इति । कर्मणि विषयभूते ब्रह्मणि अभ्यासाद्भक्तिपूर्वकश्रवणाद्यभ्यासात् प्रकाशश्च परोक्षज्ञानं च भवति । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुतेरिति सूत्रार्थः । न च वाच्यस्य शास्त्राविषयत्वाभावात् श्रवणादिपुरुषप्रयत्नसाफल्यमिति वाच्यम् । विषयत्वस्येक्षत्यधिकरण एव साधितत्वादिति भावः ।

ननु कथं नित्याव्यक्तस्य ब्रह्मणः प्रकाशः श्रवणादिनापि भवितुमर्हति, युक्तिविरोधात् । न हि साधनशतेनाप्यदृष्टं अपरोक्षीकर्तुं शक्यमित्यत आह— **अतोऽनन्तेन तथा हि लिङ्गम्** इति । अत्र प्रकाश इत्यनुवर्तते, अनन्तेनेत्यतः प्राक् शक्तित इति शेषः । उत्तरत्र प्रसन्नेनेति शेषः । अतःशब्दस्तदव्यक्तमाह, हिः प्रकाशश्च कर्मणीत्युक्ताव्यक्तत्वप्रत्यक्षत्वयोः प्रमाणसद्भावरूपहेतुपरः । तथाशब्दः समुच्चयार्थः । हिशब्दो यस्मादित्यर्थे वर्तते । लिङ्गशब्दश्च 'तस्याभिध्यानाद्योजनात्तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः' इति श्रुत्युक्तं यन्मोक्षस्य प्रसादसाध्यत्वलिङ्गं तत्परः । अत्र श्रुतावभिध्यानशब्दः प्रसादरूपेच्छाविशेषपरः । तथाच परमात्मनः सर्वत्राव्यक्तस्वभावत्वेन पुरुषप्रयत्नरूपसाधनसामर्थ्येन प्रकाशशब्दितप्रत्यक्षविषयत्वासम्भवेऽपि शक्तितोऽनन्तेन प्रसन्नेनैव परमात्मना स्वस्य प्रकाशविषयत्वं भवति । स्वस्याव्यक्तत्वप्रत्यक्षत्वयोः प्रमाणसद्भावात् । अन्यथा तदनुपपत्तेः । मोक्षस्य प्रसादसाध्यत्वरूपलिङ्गं च यस्मादस्ति तस्माच्चेति सूत्रार्थः ।

ननु नित्याव्यक्तस्य भगवतः कथं प्रसादेनापि प्रत्यक्षत्वमिति चेन्न; तस्यानन्तशक्तित्वादेव तदुपपत्तेरिति भावः । तथाच स्मृतिः 'नित्याव्यक्तोऽपि भगवानीक्ष्यते निजशक्तितः । तमृते परमात्मानं कः पश्येतामितं प्रभुम्' इति । अतो दर्शनप्रसादार्थं भगवति भक्तिरवश्यकर्तव्येति ।

## १५. अहिकुण्डलाधिकरणम्

नन्वथापि भगवति भक्तिर्न कर्तव्या, गुणरहितत्वात् । गुणहीने भक्तेरयोगात् । आनन्दादीनां तत्स्वरूपत्वाभ्युपगमात् । अन्यथा समवायनिराकरणानुपपत्तेः । स्वरूपभूतेन चानन्दादिना आनन्दित्वादेर्युक्तिविरुद्धत्वात् । तथापि तदङ्गीकारे गुणानां तत्स्वरूपरूपत्वत्यागापातात् । न चैवमपसिद्धान्तात् परिभाषामात्रत्वापत्तेश्च । आनन्दादीनां तत्स्वरूपत्वे च तद्भोक्तृत्वाद्यसिद्ध्या भगवतो महिमासिद्धेरित्याशङ्क्याह— **उभयव्यपदेशात्त्वहिकुण्डलवत्** इति । अत्र श्रुतिष्विति शेषः ।

'आनन्दं ब्रह्मणो विद्वान्', 'अथैष एव परम आनन्दः' इत्यादि श्रुतिषु भगवतो गुणात्मकत्वेन गुणित्वेन चोभयरूपेण व्यपदेशात् तस्मिन् गुणित्वप्रयुक्तभक्तिः कर्तव्यैव । ननूभयरूपत्वस्य श्रुतत्वेऽपि

गुणात्मकस्य तस्य गुणित्वं कथं युज्यते, अदर्शनादित्यत आह— **अहिकुण्डलवदिति** । यथा कुण्डलात्मकस्याप्यहेर्विशेषबलादेव कुण्डलित्वं एवमानन्दाद्यात्मकस्यापि ब्रह्मणि विशेषबलादेवानन्दित्वादिकं युज्यत इति सूत्रार्थः । नेश्वरो गुणवान् गुणात्मकत्वात् । यथा न स्ववान् । आनन्दाद्या न ब्रह्मगुणास्तत्स्वरूपत्वात् ब्रह्मवदिति युक्तिविरोधशङ्कानिवृत्त्यर्थस्तुशब्दो विशेषार्थः ।

भवेदत्र युक्तिविरोधो यदि ब्रह्मस्वरूपादि युक्तिगम्यं स्यात् । न चैतदस्ति, तस्य श्रुत्येकसमधिगम्यत्वात् इति भावः ।

दृष्टान्तान्तरेणाप्येतमेवार्थं समर्थयते— **प्रकाशाश्रयवद्वा तेजस्त्वात्** इति । यथा प्रकाशात्मकस्याप्यादित्यस्य प्रकाशकत्वं विशेषबलादेवं ब्रह्मणो गुणात्मकस्यापि गुणत्वं तद्बलादेव युज्यते इति सूत्रार्थः । नन्वत्र घटादीनामपि दृष्टान्तयितुं युक्तत्वात् विशिष्य प्रकाशाश्रयशब्देन आदित्यादिग्रहणे का विवक्षेत्यत आह— तेजस्त्वादिति । ब्रह्मणस्तेजोरूपत्वादित्यर्थः ।

दृष्टान्तान्तरेणाप्येतमेवार्थं समर्थयते— **पूर्ववद्वा** इति । यथा कालस्य पूर्वशब्दितकालेनाभेदेऽपि काल इति विशेष्यो भवति पूर्व इति विशेषकः विशेषबलादेव तथा गुणात्मकस्यापि ब्रह्मणः तथैव गुणि ब्रह्मेति विशेषणविशेष्यभावो युज्यत इति सूत्रार्थः ।

ननु व्यर्थोक्तेरपर्यवसानात् किमर्थोऽयं दृष्टान्त इति चेन्न, ब्रह्मणोऽत्यन्तसूक्ष्मत्वादेतद्दृष्टान्तोक्तेरवैयर्थ्यात् । अनेनैव दृष्टान्तेनालं किमाद्येन दृष्टान्तेनेति चेत् स्थूलमतीनामेकस्मिन्नेवाहौ विशेषणविशेष्यभावस्य क्लृप्तत्वेन तदुक्त्यवैयर्थ्यात् । तथाच स्मृतिः 'प्रकाशवत् कालवद्वा यथाङ्गे शयनादिकम् । ब्रह्मणश्चैव मुक्तानां आनन्दोऽभिन्न एव तु । आनन्देन त्वभिन्नेन व्यवहारः प्रकाशवत् । कालवद्वा यथाकालः स्वावच्छेदकतां व्रजेत्' इति । अत्र शयनमवस्थाविशेषोऽङ्गादभिन्नोऽप्यङ्गेन शयनमित्यङ्गविशेषणं भवतीत्यर्थः । आदिपदेन शेत इति कर्मकर्तृभावः । अभिन्न एव ब्रह्मणो मुक्तानामुच्यत इत्यर्थः । व्यवहारो विशेषणविशेष्यभावेनेति ।

ननु किमनेन गुणगुणिनोरभेदमभ्युपेत्य गुणित्वप्रतिपादनेन, भेद एव तयोः किं न स्यादित्याशङ्क्याह— **प्रतिषेधाच्च** इति । 'एकमेवाद्वितीयं नेह नानास्ति किञ्चन' इति ब्रह्मणि स्वगतभेदस्य प्रतिषेधाच्चेति सूत्रार्थः । अन्यथैकमेवेति श्रुतौ घटादिवत् सावयवैकत्वनिषेधार्थैवकारः, समाभ्यधिकनिषेधार्थकोऽद्वितीयशब्दः, नेह नानास्तीति श्रुतौ गुणगुण्याद्यर्थककिञ्चनशब्दश्चानर्थकः स्यात् । अत एव सूत्रे चशब्दः । अतो हरेर्गुणित्वात् कर्तव्यैव भक्तिरिति ।

## १६. परानन्दा(परमता)धिकरणम्

ननु परमेश्वरे निरतिशयभक्तिर्न कार्या, तदीयानन्दादिगुणानां लौकिकानन्दादिगुणसदृशत्वात् । परमेश्वरानन्दादिगुणानां लौकिकानन्दादिविलक्षणत्वे तेष्वानन्दादिपदानां व्युत्पत्त्यभावेन 'आनन्दं ब्रह्मणो विद्वान्' इत्यादौ तत्र तदप्रयोगप्रसङ्गात् तदबोधकत्वात्, प्रयोगस्य बोधार्थत्वात्, न हि घटविलक्षणार्थे घटपदं प्रयुज्यते । अस्ति च प्रयोगः । न हि तेषां तदानन्देष्वेव व्युत्पत्तिग्रहः सम्भवति । तदानन्दादीनां शब्दैकसमधिगम्यानां प्रत्यक्षाद्यविषयत्वात् । अनुपस्थितेषु व्युत्पत्तिग्रहायोगात् । अतो लोकानन्देष्वेव व्युत्पत्तिग्रहे तेषु तत्सादृश्ये मूलानुमानमनुसरणीयमिति तद्वैलक्षण्ये तत्र व्युत्पत्तिग्रह एवासम्भवी । अतो भगवदानन्दादिगुणानामपि लौकिकानन्दादिगुणसादृश्यमेव वाच्यम् । एवं चोक्तदोषो दुर्निरास इत्याशङ्क्याह— **परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः** इति । अत्र सेतून्मानशब्दौ भावप्रधानौ । मानमतिर्युक्ता उद्गतं मानं यस्य तत् तथा । पूर्णमिति यावत् । परमेश्वरानन्दादिगुणजातमतो लौकिकानन्दादितःपरं विलक्षणमेव, कुतः ? लौकिकानन्दादावसम्भावितस्य 'एष सेतुर्विधृतिः', 'य एष आनन्दः परस्य', 'एष नित्यो महिमा ब्राह्मणस्य' इति श्रुत्या, 'यतो वाचो निवर्तन्ते' इति श्रुत्या, एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुत्या, 'अन्यज्ज्ञानं तु जीवानामन्यज्ज्ञानं परस्य च । नित्यानन्दाव्ययं पूर्णं परज्ञानं विधीयते' इति श्रुत्या क्रमेण परमेश्वरानन्दादिगुणजाते सेतुत्वस्य पूर्णत्वापरनामकोन्मानत्वस्य बिम्बप्रतिबिम्बभावरूपसम्बन्धस्य भेदस्य च व्यपदेशादिति सूत्रार्थः ।

हेत्वन्तरेण तदानन्दादेः लौकिकत्वं समर्थयते— **दर्शनात्** इति । अन्यानन्दादीनां मनोवाग्गोचरत्वादिति सूत्रार्थः । कथं ब्रह्मानन्दादेरलौकिकत्वमिति चेत् 'अदृष्टमव्यवहार्यमव्यपदेश्यं सुखं ज्ञानमोजो बलमिति ब्रह्मणस्तस्माद् ब्रह्मेत्याचक्षते तस्माद् ब्रह्मेत्याचक्षते इति श्रुतेरिति ब्रूम' इति भावः ।

ननु ब्रह्मानन्दादेरेवमलौकिकत्वे कथं तद्विषये श्रुतिपुराणादिष्वानन्दादिपदप्रयोग इत्यत आह— **बुद्ध्यर्थः पादवत्** इति । अत्र प्रसिद्धपादविलक्षणे भूतपाद इति शेषः । पादवदित्यत्र पादशब्दः स्वरूपपादार्थकपादशब्दवदित्यर्थः । बुद्ध्यतेऽनयेति व्युत्पत्त्या बुद्धिशब्दो ज्ञापकपरः । व्यपदेश इत्यनुवर्तते । यथा प्रसिद्धपादविलक्षणे मूर्तित्रयविलक्षणे च भूतपादे 'पादोऽस्य विश्वा भूतानि' इति पादशब्देन व्यपदेशः, यथा पुरुषपादस्य तदंशत्वं तथा भूतानामिति जीवेश्वरयोरंशांशित्वसम्बन्धज्ञापनार्थं, तथा लोकविलक्षणेऽपि ब्रह्मानन्दादावनुकूलवेद्यत्वादिरूपेण किञ्चित्सादृश्येन सौवर्णे घटे घटशब्दस्येव व्युत्पत्तिग्रहसम्भवादानन्दादिशब्देन तज्ज्ञापनार्थं व्यपदेश इति सूत्रार्थः । अन्यथा तज्ज्ञापनस्योपयोगाभावात् । न चैवं तत्र अलौकिकत्वबुद्धिः कथमिति वाच्यम्, उक्तरीत्या बुद्ध्युपारूढे श्रुत्यन्तरबलेना-

लौकिकत्वबुद्ध्युपपत्तेरिति भावः । तथाच स्मृतिः— 'अलौकिकोऽपि ज्ञानादिस्तच्छब्दैरेव भण्यते । ज्ञापनार्थाय लोकस्य यथा राजेव देवराट्' इति तस्मादलौकिकगुणे हरौ निरतिशया भक्तिः कर्तव्येति ।

## १७. स्थानविशेषा(वैशेष्या)धिकरणम्

नन्वेतस्यैवानन्दस्येत्युदाहृत्य ब्रह्माद्यानन्दादीनां भगवदानन्दादि प्रतिबिम्बत्वमित्युक्तमयुक्तम्, तेषां तत्प्रतिबिम्बत्वे बिम्बावैचित्र्येण वैचित्र्याभावापातात् । न चादृष्टादिवैचित्र्यात्तद्वैचित्र्यं सम्भवति, अनादिस्वरूपभूतानानन्दादिवैचित्र्ये सादिकारणवैचित्र्यानुपयोगादित्यत आह— **स्थानविशेषात्प्रकाशादिवत्** इति । भवति ब्रह्माद्यानन्दादिकमीश्वरानन्दादिप्रतिबिम्बम् । न चैवं वैचित्र्यानुपपत्तिः, नापि बिम्बवैचित्र्यापत्तिः । बिम्बवैचित्र्याभावेऽपि जलसूर्यकादिस्थानविशेषगुणात् सूर्यादिप्रतिबिम्बेष्वग्निजनकत्वादिवैचित्र्यवत्, ब्रह्मादिस्थानविशेषगुणवैचित्र्यादविचित्रभगवदानन्दादि प्रतिबिम्बानां तदानन्दादीनां वैचित्र्योपपत्तिरिति सूत्रार्थः । तथाच स्मृतिः 'ब्रह्मादिगुणवैशेष्यादानन्दादिः परस्य च । प्रतिबिम्बत्वमायाति मध्योच्चादिविशेषतः' इति । अत्र प्रतिबिम्बत्वमायातीत्यस्य प्रतिफलितो भवतीत्यर्थः ।

युक्त्यन्तरेण बिम्बानन्दाद्यवैचित्र्येऽपि ब्रह्मादिप्रतिबिम्बाद्यानन्दवैचित्र्यमुपपादयति— **उपपत्तेश्च** इति । बिम्बभूतभगवदैश्वर्यरूपोपपत्तेश्च प्रतिबिम्बब्रह्माद्यानन्दादिवैचित्र्यमुपपद्यत इति सूत्रार्थः । न चैवं सूत्रव्याख्याने मानाभावः, 'ऐश्वर्यात्परमाद्विष्णोर्भक्त्यादीनामनादितः । ब्रह्मादीनां सूपपन्ना ह्यानन्दादेर्विचित्रता' इति स्मरणात् । अत्रानादित इति भावप्रधानो निर्देशः । अनादित्वादित्यर्थः । एतेन पुरुषापाद्यानां भक्त्यादिस्थानगुणानां कथमनादिस्वाभाविकानन्दादिवैचित्र्यहेतुत्वमिति शङ्का निरस्ता । ब्रह्मादिभक्त्यादीनामप्यनादित्वात् । एतेनैव स्थानगुणेनैवोपपद्यमाने प्रतिबिम्बवैचित्र्ये न बिम्बसामर्थ्यमुपयुज्यत इति शङ्का निरस्ता । सूर्यकान्तादिगतसूर्यकादिवैचित्र्ये बिम्बसामर्थ्यस्याप्युपयोगदर्शनात् । स्थानगुणस्यैव निमित्तत्वे मुखप्रतिबिम्बस्यापि तद्गतस्याग्निजनकत्वप्रसङ्गात् । न चैवं बिम्बसामर्थ्यमेवोपयोग्यस्त्विति शङ्क्यम्, तस्य सर्वत्रापि समत्वात् अतो युक्तं सूत्रद्वयमपि । अतो ब्रह्मादिगुणबिम्बालौकिकगुणके हरौ युक्तैव भक्तिरिति ।

## १८. तथान्यत्वा(प्रतिषेधा)धिकरणम्

ननु यत्प्रागुक्तं ब्रह्माव्यक्तमिति तन्न, ध्यानकाले अध्यातॄणां हृदि स्फुरणात् । न हि ब्रह्मणोऽन्यत् ध्येयम्, तदन्यज्ञानान्मुक्त्ययोगात् । न च ध्यानकाले प्रतीतस्य ब्रह्मत्वे ध्यातृबहुत्वेन तद्बहुत्वापत्ति-

र्दोषः । न हि सर्वेषामेकरूपमेव ध्यानम्, स्वरूपभेदाभावेऽपि ब्रह्मरूपाणां विशेषबलेन नानात्वोपगमात् । तथाच ध्यानकाले ब्रह्मणोऽव्यक्तत्वात् व्यक्त्यर्थं भक्तिर्न कार्येत्यत आह— **तथाऽन्यत्प्रतिषेधात्** इति । अत्र तथाशब्दबलात् यथेत्यध्याहारः । यथा जीवानन्दादीनामल्पत्वादिकारणेन ततो ब्रह्माद्यन्यत् तद्विलक्षणमेव तथोपासनाकृतस्य प्रतिमास्थानीयस्य दुर्लक्षणत्वादिना कारणेन ततो ब्रह्माप्यन्यत् तद्विलक्षणमेव, कुतः 'यन्मनसा न मनुते येनाहुर्मनो मतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इति श्रुतौ ध्यानगोचरस्य ब्रह्मत्वप्रतिषेधादिति सूत्रार्थः । न हि निर्दोषदोषिणोर्ब्रह्मोपासनाकृतयोरैक्यमुपपद्यत इति भावः । पुरुषो यद्वस्तु न मनुत इति श्रुत्यर्थः । ननु ध्यानकाले प्रतीतस्याब्रह्मत्वे ब्रह्म कथं फलप्रदं स्यात् । अन्यथातिप्रसङ्गादिति चेन्न, 'पश्यन्ति परमं ब्रह्मचित्ते यत्प्रतिबिम्बितम् । ब्रह्मैव प्रतिबिम्बे यदतस्तेषां फलप्रदम् । तदुपासनं च भवति प्रतिमोपासनं यथा । दृश्यते त्वपरोक्षेण ज्ञानेनैव परं पदम् । उपासनात्वापरोक्ष्यं गमयेत्तत्प्रसादतः' इति ब्रह्मतर्कवचनेनैव अतिप्रसङ्गपरिहारात् । अत्र वचने तदुपासनं च भवतीत्यनेन 'ननु कथं स्थितिमात्रेण तत्फलमनुपासितत्वादि'ति शङ्का निरस्ता । तदुपासनं प्रतिबिम्बोपासनमिति शेषः । 'ब्रह्मैतत्कुतो नेति शङ्का' दृश्यते त्वित्यादिना निरस्ता । 'तर्हि ज्ञानायैव प्रयतितव्यम्, किमुपासनये'ति शङ्का तु 'उपासना त्वापरोक्षमि'-त्यादिना निरस्तेति ज्ञातव्यम् । अतो ध्यानप्रतीतत्वस्याब्रह्मत्वेन तस्याव्यक्तत्वात् तद्व्यक्त्यर्थं कर्तव्यैव तद्भक्तिरिति ।

## सर्वगतत्वाधिकरणम्

नन्वथापि विष्णावेव न निरतिशया भक्तिर्युक्ता, देशान्तरकालान्तरेष्वन्यतोऽपि परमेश्वरदत्तस्वातन्त्र्यात् जगत्सृष्ट्यादेः सम्भवात् । न हि स्वतन्त्रोऽपि राजा सदा सर्वत्र राज्ये धुरमेक एव वहति, किन्तु तद्दत्तस्वातन्त्र्यस्तत्रतत्रान्योऽपि दृश्यत एवेत्यत आह— **अनेन सर्वगतत्वमायामयशब्दादिभ्यः** इति । सर्वदेशकालेष्वप्यनेन परमेश्वरेणैव सृष्ट्यादिकं प्रवर्तते । सर्वगतत्वात् मायामयशब्दात् मायामयशब्दव्याख्यानार्थं प्रवृत्तश्रुत्यन्तरात् आदिशब्दोपात्तात् परमेश्वरादन्यस्मिन् सृष्ट्यादिकर्तरि मानाभावाच्चेति सूत्रार्थः । अन्यतोऽपि देशकालान्तरे जगत्सृष्ट्यादि इति वदन् प्रष्टव्यः— किं विष्णोः सर्वकर्तृत्वादौ प्रमाणाभावायैतत्कल्प्यते, अन्यत्र प्रमाणसद्भावात् उत सम्भावनामात्रात् । नाद्यः बहुश्रुतिसद्भावात् । न द्वितीयः तदनुपलम्भात् । नान्त्यः, अप्रामाणिककल्पनस्य क्वाप्यनुपयोगात् । न चावतारेषु विविधलीलादर्शनादेतत्कल्प्यम् । 'स्वातन्त्र्यात् क्रीडते विष्णुर्न हि स्वातन्त्र्यमन्यगम् । करोति क्वापी'त्यादेरत्यक्तस्वातन्त्र्यस्यैव क्रीडावगमात् । न च सर्वगतत्वमायामयशब्दा ........ 'एष सर्व

एष सर्वगत एष सर्वेश्वर एषोऽचिन्त्यः' इति श्रुतेः । 'सर्वत्र सर्वमेतस्मात् सर्वदा सर्ववस्तुषु । स्वरूपभूतया नित्यशक्त्या मायाख्यया यतः । अतो मायामयं विष्णुं प्रवदन्ति सनातनम्' इति श्रुत्यन्तराच्च । अत्र सर्वसृष्ट्याद्यर्थमेव हि सर्वगतत्वमुच्यते । 'अनुप्रविश्य नामरूपे व्याकरोत्' इत्यादिश्रवणादिति भावः । श्रुत्यन्तरे सर्ववस्तुषु सर्वं सर्ववस्तुविषयं सृष्ट्यादीत्यर्थः । अतो ब्रह्मणि सर्वजगज्जन्मादिकर्तरि भक्तिर्युक्तेति ।

## फला(फलादाना)धिकरणम्

नन्वथापि न भगवति भक्तिः कार्या, अफलदातृत्वात् । तस्य फलदत्वमभ्युपगच्छतापि कर्मणः फलकारणत्वस्यावश्यमभ्युपगन्तव्यत्वात् । अन्यथा वैषम्यनैर्घृण्यकर्मवैय्यर्थ्यात् बोधकवेदाप्रामाण्यदोषापत्तेः । ततश्च कर्मण एव फलोपपत्तौ किमीश्वरेण, तस्य फलदत्वावेदकश्रुतीनां साध्वसाधुकर्मणोस्तत्कारितत्वेन औपचारिकत्वोपपत्तेः इत्याशङ्क्याह— **फलमत उपपत्तेः** इति । फलं अत एव ईश्वरत एव ईश्वरस्यैव फलदत्वात्कर्मणोऽचेतनत्वेन फलदातृत्वानुपपत्तेः । ईश्वरस्य चेतनत्वेन तद्दातृत्वोपपत्तिरिति सूत्रार्थः । अचेतनस्य स्वतः प्रवृत्त्यशक्यत्वात् तस्य फलदातृत्वं नैव स्यात् ।

न तु निश्चय इत्यत आह— **श्रुतत्वाच्च** इति । 'विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम्' इति परमेश्वरस्यैव फलदातृत्वश्रवणाच्चे'ति सूत्रार्थः । दातुर्यजमानस्य तिष्ठमानस्य स्वस्मिन् मनसा वर्तमानस्य रातिः फलप्रदमिति तच्छ्रुत्यर्थः । उक्तमाक्षिपति— **धर्मं जैमिनिरत एव** इति । अत्र अत इत्यावर्तते । पूर्वसूत्रादनुवर्तते वा । तत्रैकस्येश्वरपरत्वं अपरस्य प्रमाणपरत्वम् । फलप्रदमिति शेषः । तेन फलप्रदं कर्म ईश्वरादुत्पन्नमिति जैमिनिर्मन्यते 'एष ह्येव साधुकर्म कारयति' इति श्रुतेरिति सूत्रार्थः । ईश्वर एव फलप्रदो न कर्मेत्ययुक्तम्, फलस्य कर्मान्वयव्यतिरेकित्वात् । इदं तु न्याय्यम्— कर्मैव फलप्रदं तच्च कर्मेश्वरात् भवति, इतीश्वरोऽपि फलदातृतयोपचर्यते उदाहृतश्रुताविति । कर्मकारणत्वं चेश्वरस्योपचारबीजं 'एष ह्येवे'ति श्रुतिसिद्धम् । न केवलं कर्मणां फलप्रदत्वं न्यायप्राप्तम्, किं नाम जैमिनिराचार्यो मन्यत इति भावः । अत्र धर्मपदमधर्मस्याप्युपलक्षणम् । एतत्परिहरति— **पूर्वं तु बादरायणो हेतुव्यपदेशात्** इति । पूर्वं अत्र तुशब्दो विशेषार्थः । धर्मं जैमिनिरत एवेत्यतः धर्मशब्दोऽनुवर्तते एवशब्दश्च धर्मशब्दे विभक्तिविपरि ..........धर्मः कर्मेति यावत् । पूर्वं पूर्वोक्तं ब्रह्मधर्मश्च उभावपि फलकारणे कुतः ? हेतुव्यपदेशात् । हेतुशब्दो भावप्रधानः, हेतुत्वव्यपदेशात् फलहेतुत्वेन श्रुतिषु व्यपदेशादुक्तेः ॥

*(अत्रैव मातृका समाप्ता ।)*



॥ श्रीमन्मूलरामो विजयते ॥

# विषयानुक्रमणिका



★ ★ ★

॥ श्रीमन्मूलरामो विजयते ॥

## श्रीमद्विजयीन्द्रतीर्थश्रीपादविरचिता

# वादमालिका

॥ श्रीवेदव्यासाय नमः ॥

॥ हरिः ॐ ॥

उच्चैरारुह्य नीचैः पतति निजजनद्रोहकृत्सत्यमित्थं
वस्तु व्याहर्तु[1]कामः किल दनुजकुलं पाणिजप्रोतमभ्रे ।
उत्क्षिप्याधः क्षिपन् मे पदभजनपरं रक्षितैवं सदेति
प्रह्लादे दत्तदृष्टिर्नतजनमजहन् पौरुषः पातु सिंहः ॥ १ ॥

कल्याणगुणपूर्णाय वल्लभाय श्रियः सदा ।
श्रीमध्वदेशिकेष्टाय श्रीनृसिंहाय ते नमः ॥ २ ॥

तं पाणिपल्लवं बाहुशाखं सद्विज[2]शोभितम् ।
विद्याहासलतापुष्पमध्वकल्पद्रुमं[3] भजे ॥ ३ ॥

यस्य वाक्कामधेनुर्नः कामितार्थान् प्रयच्छति ।
सेवे तं जययोगीन्द्रं कामबाणच्छिदं सदा ॥ ४ ॥

यो व्यासमुनिदावाग्निः सच्छास्त्रमरुता सह ।
ददाह कुमतारण्यं प्रकाशाय तमाश्रये ॥ ५ ॥

श्रीसुरेन्द्रगुरोः पादपद्मे रागस्य पीडनात् ।
रक्ते नखदलोपेते सेवे शिष्यालि[4]सेविते ॥ ६ ॥

---

१. व्याकर्तु – पा०. २. सेवितम् – पा० ३. तरुं – पा० ४. शोभिते – पा०

सर्वतन्त्रस्वतन्त्रेण विजयीन्द्राख्यभिक्षुणा ।
तन्यते तत्त्ववित्तोषकारिणी वादमालिका ॥ ७ ॥

अर्वाचीनयतिप्रोक्तदूषणानामलग्नताम् ।
प्रदर्श्य गुरुपादोक्त(क्ति)महिमाऽत्र प्रकाश्यते ॥ ८ ॥

को लोके गुरुपादोक्त(क्ति)दूषणोद्धरणे क्षमः ।
तदुक्तिदूषणे वैषा कृतिस्तज्ज्ञापिकैव नः ॥ ९ ॥

# १. परमते ब्रह्मणोऽभिन्ननिमित्तोपादानत्वभङ्गः

यत्तु 'यः स्वाज्ञानाद्विश्वयोनिस्तदीश' इत्याद्यपद्ये विश्वयोनितदीशपदाभ्यां ब्रह्मणो जगत्प्रति कर्तृत्वे सत्युपादानत्वरूपमभिन्ननिमित्तोपादानत्वमभिप्रेतम्, तन्न । ब्रह्मणो वियदादिद्रव्योपादानत्वे [1]तत्कर्तृत्वायोगात्, कर्तृत्वे च तदुपादानत्वायोगात् । घटादिकर्तुः [2]कुलालादेः उपादानत्वादर्शनात्, मृदादेः तदुपादानस्य च तदकर्तृत्वात् । 'संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भजते विश्वमीशः', 'महान्तं विभुमात्मानं मत्वा धीरो न शोचति', मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव' इत्यादिश्रुतिस्मृतिभिः ब्रह्मसंयुक्ततया प्रतिपन्नं वियदादिकार्यं प्रति ब्रह्मण उपादानत्वायोगाच्च । न ह्युपादानोपादेययोः संयोगः क्वचिद् दृष्टचरोऽभ्युपगतो वा । 'महान्तं विभुम्' इति स्मृत्युक्तविभुत्वस्य सकलमूर्तद्रव्यसंयोगित्वरूपत्वेन वियदादेः मूर्तत्वेन ब्रह्मणस्तेन संयोगावश्यम्भावात् । 'मयि सर्वमिदं प्रोतं' इत्यत्रापि 'सूत्रे मणिगणा इव' इति दृष्टान्तानुरोधेन वियदादेर्ब्रह्मणश्च संयोगस्यैव सिद्धेश्च । वस्तुतो निर्धर्मिके ब्रह्मणि कर्तृत्वाद्ययोगाच्च ।

वस्तुतः तस्य कर्तृत्वादिशून्यत्वेऽपि कल्पितं तदस्तीति चेन्न । तथा सति अस्मदादेरपि जगत्कर्तृत्वाद्यापातात् (द्यापत्तेः) । अवस्थाविशेषे अस्मदादिष्वपि तदारोपसम्भवात् । न चेष्टापत्तिः । आरोपितवह्न्यादिकमादाय गुञ्जापुञ्जादेः दाहकत्वाद्यदर्शनात् । न च व्यावहारिकमेव वह्नित्वादिकं दाहादिप्रयोजकम्, अतो नोक्तदोष इति वाच्यम् । गुञ्जापुञ्जादौ व्यावहारिकत्वधर्मिसमसत्त्वविशिष्टवह्नित्वाद्यारोपसम्भवेन तथाप्युक्तदोषानिस्तारात् । पारमार्थिकवह्नित्वादिकमेव दाहादिकं प्रति प्रयोजकमित्यङ्गीकुर्वतः तवाप्येष दोषः समानः । पारमार्थिकत्वविशिष्टवह्नित्वादेः गुञ्जापुञ्जादावारोपसम्भवात् इति चेन्मैवम् । अनारोपितवह्नित्वादेरेव मया दाहादिकं प्रति प्रयोजकत्वाभ्युपगमात् । त्वयापि तथा[3]ङ्गीकारे विवादपर्यवसानात् । किञ्च कर्तृत्वमुपादानगोचरापरोक्षज्ञानादिमत्त्वम् । तच्च

---

१. कर्तृत्वं न स्यात् । २. कुलालादेरनुपादानत्वात् । ३. पारमार्थिकत्वविशिष्टवह्नित्वादेर्गुञ्जापुञ्जादावारोपाङ्गीकारे ।

उपादानभूतस्य ब्रह्मणो ज्ञानस्वभावत्वे न सम्भवति, ब्रह्मण एव ज्ञानरूपत्वाभ्युपगमेन स्वस्यैव स्वविषयकत्वापत्तेः । स्वस्यैव स्ववत्त्वापत्तेश्च । न चैवम् । वृत्तिविरोधेन त्वया तदनभ्युपगमात् ।

यत्तु ब्रह्मणो [१]ज्ञानस्वभावत्वेऽप्यविद्योपाधिवशात् प्रतिजीवकर्मसाध्यानित्यानुग्रहवत् चैतन्योपाध्यविद्यावृत्त्या तद्वत्वं युक्तम् इति । तन्न । अविद्यावृत्तेः जडत्वेन ज्ञानत्वाभावात् । चैतन्योपाधिना अविद्यावृत्तिरपि ज्ञानमिति चेत् तत्र किं जपाकुसुमोपाधिना स्फटिके लौहित्यवत् चैतन्योपाधिना स्वनिष्ठं ज्ञानरूपत्वम् अविद्यावृत्तावुत्पाद्यते ? किं वा तदुत्पादनं विनापि ज्ञाप्यते यद्वा चैतन्यमेवाविद्यावृत्त्यवच्छिन्नं भवतीति ? अथवा तदुपहितं भवतीति । नाद्यः अनभ्युपगमात् । वारिसौरालोकादिष्वपि चैतन्योपाधिसम्बन्धेन ज्ञानरूपत्वोत्पत्तिप्रसङ्गाच्च । चैतन्यमविद्यान्तःकरणवृत्तिष्वेवोपाधिः, नान्यत्रेत्यत्र प्रमाणाभावात् । कामादेरप्यन्तःकरणवृत्तित्वाविशेषेण चैतन्योपाधिना ज्ञानरूपत्वापत्तेश्च । [२]'एतत्सर्वं मन एवेति' सावधारणश्रुत्या अविद्यावृत्तेः ज्ञानत्वव्यवच्छेदाच्च । ब्रह्मणः कर्तृत्वोपपादकं ज्ञानमविद्यावृत्तिरूपमित्यत्र प्रमाणाभावाच्च । 'न च तदैक्षत', 'सोऽकामयत' इत्यादिश्रुत्या अन्तःकरणसृष्टेः प्रागपि ब्रह्मणो ज्ञानेच्छाद्यावेदनात् तस्य तत्कर्तृत्वोपपादकं ज्ञानम् अविद्यावृत्तिरूपं सिद्ध्यतीति वाच्यम् । तच्छ्रुत्या ब्रह्मणो ज्ञानादेरेव सिद्ध्या तस्य (तव) अविद्यावृत्तिरूपत्वासिद्धितादवस्थ्यात् । ब्रह्मणि कर्तृत्वोपपादकज्ञानादेः 'स्वाभाविकी ज्ञानबलक्रिया चे'ति श्रुत्या स्वाभाविकत्वावेदनेन चैतन्योपाधिकाविद्यावृत्तिरूपत्वाङ्गीकारे तद्विरोधापत्तेश्च । त्वया अविद्यावृत्तेरागन्तुकत्वस्वीकारेण अनागन्तुकतया श्रौतस्वाभाविकत्वोपपादनासम्भवाच्च । योगप्रभावालब्धत्वेन स्वाभाविकत्वोपपादनस्य च यावद्धर्म्यनुवर्तमानधर्मत्वरूपास्मदभिमतस्वाभाविकत्वाविरोधित्वाच्च । 'एष नित्यो महिमा ब्राह्मणस्य, तुर्यं तत्सर्वदृक् सदा । ज्ञानं नित्यं बलं नित्यं क्रिया नित्या परात्मन' इत्यादिश्रुत्यादिना ब्रह्मज्ञानादेर्नित्यत्वावेदनाच्च (प्रतिपादनाच्च) । 'न हि सर्वज्ञत्वसर्वशक्तित्वाद्यतिरेकेण ब्रह्मणो महिमा नाम अन्योऽस्ति । 'सत्यकामः सत्यसङ्कल्प' इति श्रुत्या ब्रह्मवत् तत्कामादेरपि सत्यत्वावेदनाच्च ।

न च तत्र सत्यपदममोघपरमिति युक्तम्, [३]अबाध्यत्वरूपप्रसिद्धार्थपरत्वे बाधकाभावात् । अन्यथा 'सत्यं ज्ञानमनन्तम्' इत्यादिश्रुतौ सत्यपदमपि तत्परं स्यात् । न द्वितीयः— अन्यथाख्यात्या(त्वस्याप्युप)पत्तेः ज्ञानरूपत्वासिद्धेश्च । न तृतीयः— अवच्छिन्नस्याविद्यावृत्तिचैतन्यतदुभयसम्बन्धातिरिक्तत्वे ज्ञानरूपत्वाभावप्रसङ्गात् । तदनतिरिक्तत्वे च स्वस्यैव स्ववत्त्वाद्यापत्तेः । न च ब्रह्मणो ज्ञानानन्दादिस्वभावत्वेऽपि कल्पितधर्मधर्मिभावमादाय स्वस्य स्ववत्त्वादिकम् अविरुद्धमिति वाच्यम् । उदाहृता-

---

१. अविद्योपाधिवशात् प्रतिजीवकर्मसाध्यानित्यानुग्रहवत् ।

२. 'एतत्सर्वं च न भाति वे'ति । ३. प्रथमप्रतीतार्थपरित्यागे कारणाभावादित्यर्थः ।

नेकश्रुतिविरोधात् । कल्पितभेदमादाय चैतन्यस्यैव चैतन्यविषयत्वसम्भवेन जगत इव ब्रह्मणोऽपि दृश्यत्वेन मिथ्यात्वापत्तेश्च । 'यत्तदद्रेश्यम्' इत्यादिश्रुतेः वास्तवदृश्यत्वनिषेधपरत्वेन अविरोधात् । न चतुर्थः— ब्रह्मणोऽप्युप-हितचैतन्यविषयत्वसम्भवेन दृश्यत्वापत्त्या मिथ्यात्वापत्तेः ।

अनुपहितचैतन्यविषयत्वरूपमेव दृश्यत्वं मिथ्यात्वापादकमिति चेन्न । सर्वस्य प्रपञ्चस्य इदानी-मुपहितचैतन्यविषयत्वेन अमिथ्यात्वप्रसङ्गात् । ब्रह्मचैतन्यस्य अनाद्यविद्योपहितत्वेनानुपहितचैतन्य-विषयत्वस्य अप्रसिद्धेश्च विशेष्यभूतचैतन्यविषयत्वमेव मिथ्यात्वसाधकम् । तच्च प्रपञ्चेऽस्ति । न तु चैतन्यरूपविशेष्ये इति चेन्न । विशेष्यभूतचैतन्यस्योपहितचैतन्यविषयत्वेऽप्युक्तदृश्यत्वसत्त्वेन उक्त-दोषानिस्तारात् । कर्तृत्वाभिमतचैतन्यस्यैवमपि वृत्तिविरोधेन ज्ञानवत्त्वासम्भवेन कर्तृत्वानुपपादनाच्चेति ।

एतेन परिभाषया शुक्त्यादिवद् अधिष्ठानत्वमात्रं वा, भ्रान्तवद् अध्यासदृष्टत्वं वा, मायिवद् व्यामोहकत्वं वा, कुलालादिवद् उपादानादिगोचरप्रयत्नादिमत्त्वं वा कर्तृत्वमिति निरस्तम् ।

तत्राद्ये त्वन्मतेऽप्यधिष्ठानत्वातिरिक्तोपादानत्वाभावेन कर्तृत्वोपादानत्वयोः सामानाधिकरण्यस्य अयोगात् । 'तदैक्षत नामरूपे व्याकरोत्' इत्यादिश्रुत्यनुपपत्तेश्च । न हि चेतनोऽचेतनो वा स्वस्मिन्ना-रोपितं सङ्कल्पं करोति । द्वितीयेऽपि भ्रान्तस्य प्रेक्षापूर्वकमारोपितकर्तृत्वाभावेन ब्रह्मणश्च तत्पूर्वककर्तृत्वेन वैषम्यात् । ब्रह्मणो वा अभ्रान्तत्वेन अकर्तृत्वस्य जीवस्य भ्रान्तत्वेन कर्तृत्वस्य चापाताच्च । न चेष्टा-पत्तिः । श्रुत्यादिविरोधात् । जगतः ईश्वरं मुक्त्वा संसारिण उत्पत्त्यादि सम्भावयितुमपि न शक्यमित्यादि भवद्भाष्यविरोधाच्च । न च शुद्धस्य अभ्रान्तत्वेऽपि मायाशबलितः कर्तेश्वरो भ्रान्त इति वाच्यम् । तथा सति ईश्वरस्य जीववत् संसाराद्यापातेन बहुश्रुत्यादिविरोधप्रसङ्गात् । तृतीयेऽपि व्यामोहनीयजीवादर्शने व्यामोहकत्वायोगः । तद्दर्शने च भ्रान्तत्वापत्तिः । 'नामरूपे व्याकरवाणी'त्यादि श्रुत्यनुपपत्तिश्च । न हि मायावी गजादिकं करवाणीति सङ्कल्प्य करोति । किन्तु दर्शनीयानीति सङ्कल्प्य दर्शयति ।

किञ्च पक्षत्रयेऽपि जन्मादिसूत्रे अर्थसिद्धसार्वज्ञादिस्फोरणार्थं शास्त्रयोनिसूत्रमिति पराङ्गीकारो न युज्येत । भ्रमाधिष्ठानत्वादिना सार्वज्ञालाभात् । चतुर्थेऽपि कार्यस्य कल्पितत्वेन तदयोगात् । न हि घटादिकं कुलालेनैव कल्पितं रूप्यादिभ्रान्तेन अन्येन वा क्रियते । एतेन कल्पितत्वेऽपि कार्यानुकूल-ज्ञानवत्त्वरूपं कर्तृत्वं सुलभमिति अर्वाचीनोक्तं निरस्तम् ।

कार्यानुकूलज्ञानस्योपादानगोचरत्वे निर्विशेषब्रह्मण एव जगदुपादानत्वेन स्वस्य स्वविषयकत्व-प्रसङ्गात् । तथा तस्य तदगोचरत्वे च अङ्कुरादावीश्वरस्येवास्मदादेरपि कर्तृत्वप्रसङ्गात् । अङ्कुरादिकार्यानु-

कूलबीजादिज्ञानस्य अस्मदादेरपि सत्त्वात् । अध्यासदृष्टत्वं कर्तृत्वमित्यादिपक्षोक्तदूषणानतिवृत्तेश्चेति । विस्तृतं चैतदन्यत्र ।

किञ्च ब्रह्मणो जगदुपादानत्वमपि न युज्यते । उपादानत्वं हि विकारिकारणत्वं न तद्ब्रह्मणः सम्भवति, तस्य निर्विकारत्वात् । तच्च, 'निर्विकारोऽक्षरः शुद्धः', 'निष्कलं निष्क्रियं शान्तम्' इत्यादि-श्रुतिसिद्धम् । किञ्च कार्ये च स्वभावानुवृत्तितत्स्वभावमेवोपादानं दृष्टम् । तथा आत्मव्यतिरिक्तस्य सर्वस्य जडस्वभावतया तत्स्वभावं जडमेव तदुपादानं न्याय्यम् । तच्च मायादिशब्दितमेव । 'मायां तु प्रकृतिं विद्यात्' इत्यादिश्रुतेः । अत एवाजामन्त्रे 'बह्वीं प्रजां जनयन्तीं सरूपाम्' इति मायाकार्ये तत्सरूपोक्तिः ।

ननु ब्रह्मणः परिणामितयोपादानत्वाभावेऽपि जगद्विवर्ताधिष्ठानत्वेन उपादानत्वं भविष्यति । माया तु परिणामितया जगदुपादानम् । न चैवमुपादानशब्दार्थाननुगमः । स्वात्मनि कार्यजनिहेतुत्वेन तदनुगमात् । तस्य च परिणाम्यपरिणामिकारणद्वयसाधारणत्वादिति चेन्न । देशे काले द्वयोरपि जग-दुपादानत्वप्रसङ्गात् । 'अत्र इदानीं घटो जात' इत्यादि प्रतीत्या तयोरप्युक्तरूपवत्त्वात् ।

किञ्च त्वयापि मिथ्याभूतस्य मिथ्याभूतमेवोपादानमन्वेषणीयम् । सत्यत्वे कार्यस्यापि कारण-स्वभावतया सत्यत्वप्रसङ्ग इति वदता सत्यस्य असत्यरूपान्तरापत्तेः निषेधात् तद्विरोधः । सत्या-रोपितधूमानुगतधूमत्वसामान्यस्येव सत्यासत्यरूपानुगतोपादानत्वसामान्यस्याभावाच्च । शुक्तिब्रह्म-णोरेव रूप्याकाशाद्युपादानत्वसम्भवे अविद्यान्वयव्यतिरेकयोः निमित्तत्वेनापि उपपत्त्या परिणामितया अविद्योपादानत्वकल्पनायोगाच्च । न च कार्यस्य परिणामिकारणसापेक्षत्वेन तत्कल्पनमिति वाच्यम् । विवर्तस्य (असत्यस्य) परिणामिकारणसापेक्षत्वस्य क्वाप्यदर्शनेन तत्कल्पनायोगात् । मृदादिपरिणामस्य घटादेरन्यविवर्तत्वे मानाभावाच्च । असत्यस्य रूप्यादेः सत्यरूपापत्तिमत्परिणाम्यपेक्षाभावाच्च । न च एवमेव अस्त्विति युक्तम् । 'मायां तु प्रकृतिं विद्यात्' इत्यादि मायोपादानत्वावेदकश्रुतिविरोधात् । किञ्च परिणामातिरिक्तविवर्तशब्दार्थो दुर्वचः ।

ननु वस्तुनः समसत्ताकोऽन्यथाभावः परिणामः । तदसमसत्ताकोऽन्यथाभावो विवर्त इति वा, कारणसलक्षणोऽन्यथाभावः परिणामः तद्विलक्षणो विवर्त इति वा, कारणाभिन्नकार्यं परिणामः तदभेदं विनैव तद्व्यतिरेकेण दुर्वचं कार्यं विवर्त इति वा विवर्तपरिणामयोर्विवेक इति चेत् । तत्र न तावदाद्यः । वियदादेः शुक्तिरूप्यादेश्च ब्रह्मशुक्तिविवर्तत्वेन अभिमतस्य कार्यत्वाभ्युपगमेन कार्यस्य च कारणवत् सत्त्वनियमेन कारणासमसत्ताकत्वायोगात् । तत्सत्त्वे कार्यत्वस्यैव अयोगात् ।

एतावांस्तु विशेषः । पूर्वकाले सत्कारणं पश्चात्काले सत्कार्यम् इति । न च कार्यकारणयोः कालसम्बन्धित्वरूपसत्त्वाविशेषे वियदादेः ब्रह्मवत्पारमार्थिकत्वरूपं सत्त्वं रूप्यादेश्च शुक्त्यादिवत् व्यावहारिकसत्त्वं नेति वाच्यम् । वियदादेः ब्रह्मवत् 'ऐतदात्म्यमिदं सर्वं', 'तत् सत्यमि'त्यादिश्रुत्या पारिमार्थिकसत्त्वावेदनेन तदसमसत्ताकत्वासम्भवात् । रूप्यादेरपि कार्यत्वेन कालसम्बन्धितया शुक्त्यादिवत् व्यावहारिकत्वावश्यंभावेन तदसमसत्ताकत्वानुपपत्तेश्च । न च उदाहृतप्रपञ्चसत्यत्वावेदकश्रुतिः व्यावहारिकसत्त्वपरेति युक्तम् । 'सत्यं ज्ञानमनन्तम्' इत्यादि ब्रह्मसत्यत्वावेदकश्रुतेरपि विशेषहेत्वभावेन व्यावहारिकसत्त्वपरत्वापत्तेः । तच्छ्रुतेः 'नेह नानास्ती'त्यादि निषेधाय अनुवादकत्वाभ्युपगमे सत्यज्ञानादिवाक्यस्यापि लक्षणम् इत्यादिनिषेधाय अनुवादकत्वप्रसङ्गः । न चैवम् । ब्रह्मणो निःस्वरूपत्वापत्तेः । कारणविलक्षणोऽन्यथाभावो विवर्त इति द्वितीयोऽपि न । ज्ञानानन्दत्वादिना वियदादेः शुक्तित्वादिना रूप्यादेश्च, अधिष्ठानभूतब्रह्मशुक्त्यादि[१]सालक्षण्याभावमादायापि कारणविलक्षणत्वसम्भवेन अतात्त्विकत्वासिद्धेः । न हि वियदादिः ब्रह्मविवर्तः रूप्यादिश्च शुक्तिविवर्त इति च त्वदभ्युपगमः कुलधर्मार्थः । पारमार्थिकत्वेन वियदादेः व्यावहारिकत्वेन रूप्यादेश्च ब्रह्मशुक्तिसालक्षण्याभावस्य च प्रथमलक्षणदूषणेनैव निरस्तत्वात् । अत एव न तृतीयोऽपि । कारणव्यतिरेकेण दुर्वचमित्यनेन किं कार्यमेव नेत्युच्यते ? किं वा तत्सत्त्वेऽपि इक्षुक्षीरादिमाधुर्यवत् विशिष्यवाचकशब्दप्रयोगविषयत्वं नेत्युच्यते । किं वा कारणसत्तातिरिक्ता कार्यसत्ता नेति । नाद्यः, वियदादिस्वरूपस्य त्वयाऽभ्युपगमात् । न द्वितीयः, तावतापि अतात्त्विकत्वासिद्धेः । नापि तृतीयः, ब्रह्मवत् तत्सत्त्वस्यापि श्रुत्यादिसिद्धत्वात् ।

एतेन रूपान्तरापत्तिप्रतीतिविषयत्वं वा, रूपान्तराभेदधीविषयत्वं वा, कार्याभेदधीविषयत्वं वा उपादानत्वम् । प्रतीतेः प्रमात्वाप्रमात्वाभ्यां परिणामविवर्ताविति निरस्तम् ।

आद्ये— शुक्तिः वा ब्रह्म वा रूप्यत्वं वा आकाशत्वं वा आपन्नमित्यप्रतीतेः । 'सच्च त्यच्चाभवदि'ति श्रुतेश्च आत्माश्रयप्रसङ्गेन स्वजन्यरूपान्तरापत्तिधीविषयकत्वप्रत्यायकत्वायोगात् । द्वितीये— तत्-त्वं-पदार्थयोः क्षीरनीरयोः खण्डगोत्वयोश्च उपादानोपादेयत्वाभावात् । तृतीये— सदृशे सन्निहिते निमित्तेऽपि कार्याभेदभ्रमसम्भवेनातिव्याप्तेः । ब्रह्मवत् स्वरूपेण वियदादिप्रतीतेश्चरमवृत्तिवत् प्रमात्वेन भ्रमत्वायोगाच्चेति ।

किञ्च वियदादिप्रपञ्चोऽज्ञानस्य परिणामः । ब्रह्मणस्तु विवर्त इत्यङ्गीकारे विवरणग्रन्थविरोधः । तत्र हि रज्वोः सूत्रद्वयवत् मायाविशिष्टं ब्रह्म जगत्कारणमिति वा मायाशक्तिमद्ब्रह्म कारणमिति वा

---

१. कर्तृत्वं न स्यात् । २. कुलालादेरनुपादानत्वात् । ३. पारमार्थिकत्वविशिष्टवह्नित्वादेर्गुञ्जापुञ्जादावारोपाङ्गीकारे ।

जगदुपादानमायाश्रयतया ब्रह्म कारणमिति वेति मतत्रयमुक्तम् । तत्राद्ये— रज्वाः सूत्रे इव माया-ब्रह्मणी उपादाने, निर्विकारश्रुतिस्तु केवलब्रह्मपरेति विवक्षितम् । द्वितीये— मायोपरागात् ब्रह्मविकारी निर्विकारश्रुतिस्तु तदनुपरक्ताभिप्रायेति विवक्षितम् । तृतीये— तन्तुद्वारांशुः पटस्येव मायाद्वारा ब्रह्मोपादानं निर्विकारश्रुतिस्तद्वारनिषेधिकेति विवक्षितम् । न च कार्यसत्त्वजाड्यादिप्रतीतिनिर्वाहकत्वाभिप्रायेण मायायाः, ब्रह्मणो विवर्ताधिष्ठानत्वनिर्वाहकत्वाभिप्रायेण, ब्रह्मणः स्वाध्यस्तमायाजगत्कारणत्वनिर्वाहकत्वाभिप्रायेण, च आकरेषु तथोक्तिरिति न तद्विरोध इति वाच्यम् । उदाहृतपक्षाणां त्वदुक्ताभिप्रायकत्वे पक्षत्रयेऽपि निर्विकारश्रुतिगत्यनुक्तिप्रसङ्गात् ।

मायाब्रह्मणी जगदुपादाने इत्युक्तिमात्रेण कार्ये सत्त्वजाड्यादिप्रतीतिनिर्वाहसम्भवेन रज्वाः सूत्रे इवेति तुल्यवद्विकारकारणत्वरूपोपादानत्वोपपादकदृष्टान्तोपादानायोगाच्च । तृतीयेऽप्यंशुरिव तन्तुद्वारा पटं प्रति निर्विकारिकारणत्वोपपादकदृष्टान्तानुक्तिप्रसङ्गाच्च । न च उदाहृतपक्षैरपि ब्रह्मणो जगदुपादानत्वसिद्धिः । तत्राद्ये— मायावत् तन्तुवच्च ब्रह्मापि विकारीति विशिष्य ब्रह्मणो निर्विकारित्वोक्त्ययोगात् । परमार्थसज्ज्ञानानन्दादिस्वभावस्य ब्रह्मणोऽप्युपादानत्वे कार्यमपि तथा स्यात् । अविद्योपादानत्वेऽपि सितासितसूत्रकार्ये पटे सितत्ववत् जगति परमार्थसत्त्वादेरपि दुर्वारत्वात् । न ह्युपादानस्वभावस्योपादेये धीमात्रम् । अविद्यास्वभावस्यानिर्वचनीयत्वस्यापि प्रपञ्चे धीमात्रप्रसङ्गात् । सन्मात्रोपादानत्वं सत्त्वे तन्त्रं चेत् अनिर्वचनीयत्वमपि न स्यात् । तन्मात्रोपादानत्वाभावात् । द्वितीये— मायाख्यहेतुपरभावाभावाभ्यां विकारभावाभावविवक्षा चेत् मृदादिसाधारण्यम् । 'मायाविशिष्टं ब्रह्म विकारि निर्विकारश्रुतिः विशेष्याभिप्राये'ति विवक्षायां तु विशिष्टस्य ब्रह्मत्वे निर्विकारश्रुतिविरोधः । अब्रह्मत्वे न नो हानिः, विशिष्टस्य मृदादिवत् धर्मिसमसत्ताकरूपान्तरापत्तिरूपपरिणामात् विवर्तमतहानिश्च । विशिष्टस्य परिणामः शुद्धस्य तु विवर्त इति चेत् तर्हि शुद्धे विवर्तार्थमारोपितविकारस्य आवश्यकत्वेन निर्विकारश्रुतेस्तत्परत्वं न स्यात् । श्रुतिर्विशेष्यस्यैव तात्त्विकविकाराभावपरा चेद्विशिष्टे विकारोक्तिरयुक्ता स्यात् । तत्त्वतो निर्विकारे आरोपितविकाराविरोधात् । तृतीयोऽप्ययुक्तः— अंशोस्तन्तुं प्रतीव ब्रह्मणो अनादिमायां प्रत्युपादानत्वाभावादिति दिक् ।

एतेन ब्रह्म जगदुपादानत्वे सति तत्कर्तृ इति ब्रह्मलक्षणम् । अत्र मायादौ तटस्थे ईश्वरादौ च अतिव्याप्तिवारणाय दलद्वयमिति प्रत्युक्तम् । ब्रह्मण एव जगद्रूपविवर्ताधिष्ठानत्वेनोपादानतया सत्यस्य सत्यरूपापत्तिमत्परिणाम्यपेक्षाभावेन कर्तृत्वाप्रवेशेऽप्यतिव्याप्तेरभावात् । जगद्रूपविवर्ताधिष्ठानत्वरूपोपादानत्वस्यैव लक्षणत्वसम्भवे शेषवैयर्थ्यात् । त्वदभिमततटस्थ-ईश्वरातिरेकेण त्वदभिमतलक्ष्यब्रह्मण

एव नृशृङ्गायितत्वेन जगत्कर्तृत्वस्यैव ब्रह्मलक्षणत्वोपपत्तौ विशेषणवैयर्थ्याच्च । कल्पितसार्वज्ञादिमत एव ईश्वरस्य वास्तवविशेषरहितत्वेन लक्ष्यब्रह्मतया जगत्कर्तृत्वद्वयासिद्धेश्चेति दिक् ॥

*॥ इति परमते ब्रह्मणोऽभिन्ननिमित्तोपादानत्वभङ्गः ॥ १ ॥*

★ ★ ★

## २. ब्रह्मण उपादानत्वे प्रमाणभङ्गः

किञ्च ब्रह्मणो जगदुपादानत्वे न तावत् 'यतो वा इमानि भूतानि जायन्ते', 'आत्मन आकाशः सम्भूत' इति श्रुतिर्मानम् । तस्याः नानार्थकत्वेन अनिर्णायकत्वात् । 'तदशिष्यं संज्ञा प्रमाणत्वादि'ति पाणिनिसूत्रे 'कुत्वं कस्मान्न भवति', 'चोः कुः पदस्ये'ति महाभाष्ये च हेतावपि तत्प्रयोगात् । न हि 'द्रष्टुर्दृष्टे विपरिलोपो विद्यते', 'अविनाशित्वात्' इत्यादि श्रुतावपि तत्र तत्र प्रयोगाच्च । अपादाने पञ्चमीत्वेऽप्यस्याः 'ध्रुवमपायेऽपादानमि'ति अपादानसंज्ञाप्रयुक्तत्वसम्भवाच्च ।

न च 'यतो वा इमानि भूतानि जायन्त' इति पञ्चम्याः 'जनिकर्तुः प्रकृतिरि'ति सूत्रविहितापादानसंज्ञाप्रयुक्तत्वेन प्रकृतिशब्दितोपादानार्थत्वं निर्णीतुं शक्यमिति वाच्यम् । तत्तत्सूत्रे वृत्तिकारेण 'पुत्रात्प्रमोदो जायत' इत्यस्याप्युदाहृतत्वेन सूत्रगतप्रकृतिशब्दस्य निमित्तोपादानोभयपरत्वज्ञापनात् । न्यासेऽपि प्रकृतिपदं हेतुमात्रपरमित्याश्रित्य असति प्रकृतिग्रहणे उपादानस्यैव स्यात् नेतरस्य, प्रत्त्यासत्तेः । प्रकृतिग्रहणात् सर्वस्य कारणस्य भवतीति प्रकृतिपदम् । 'पुत्रात् प्रमोदो जायत' इत्यादौ अनुपादानेऽप्युपादानसंज्ञार्थमित्युक्तत्वाच्च । वियदादिकार्ये सच्चिदानन्दब्रह्मस्वभावादर्शनेन ब्रह्मणस्तदनुपादानत्वे सिद्धे यत इति पञ्चम्याः 'पुत्रात् प्रमोदो जायत' इत्यत्रेवोपपादनीयत्वाच्च । न च परिणामस्यैव उपादानस्वभावत्वनियमः, न तु विवर्तस्यापीति युक्तम् । वियदादेः ब्रह्मविवर्तत्वस्य निरस्तत्वात् । 'शृङ्गाच्छरो जायते', 'गोलोमाविलोमभ्यो दूर्वा जायन्त' इत्यादावपि शराङ्कुरं प्रत्युपादानभूतो यः शृङ्गैकदेशः तत्संसृष्टशृङ्गैकदेशान्तरं शराङ्कुरनिमित्तमस्ति । माषाङ्कुरोपादानभूतो यस्तुषान्तरावस्थितो माषभागस्तत्संसृष्टो माषाङ्कुरनिमित्तभूतस्तुषभाग इव अपरिणतशृङ्गभागस्य अनुभवात् । तदेव शृङ्गादिति पञ्चम्यन्तेनोच्यते । अत एव महाभाष्ये— 'अयमपि योगः शक्यो वक्तुं, गोलोमाविलोमभ्यो दूर्वा जायन्ते, अपक्रामन्ति तास्तेभ्य' इत्यादिना लोमादीनां दूर्वादीन्प्रत्यवधित्वात् ध्रुवमपाये अपादानमित्यनेनैव अपादानसंज्ञासिद्धेरितीदं सूत्रं प्रत्याख्यातम् । तथा कैय्यटेऽपि अवधित्वमेवोपपादितम्, तदुक्तम्— 'शृङ्गाच्छरोऽविलोमभ्यो दूर्वा गोमयतस्तथा । वृश्चिकश्चेत्येवमाद्येष्वपादानत्वमिष्यत' इति ।

एतेन 'आकाशाद्वायुरि'ति अपादानपञ्चमी, साहचर्यादात्मन इत्यत्राप्यपादाने पञ्चमीति निरस्तम्। तत्रापि निमित्तांशस्यैव पञ्चम्या निर्दिष्टत्वात्। अन्यथा सम्भूत इत्ययुक्तं स्यात्। न हि शुक्ते रूप्यं सम्भूतमित्युच्यते, नापि 'सोऽकामयत बहु स्यां प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा। इदं सर्वमसृजत। यदिदं किञ्च। तत्सृष्ट्वा। तदेवानुप्राविशत्। तदनुप्रविश्य। सच्च त्यच्चाभवत्' इति श्रुतिरत्र मानम्।

तत्र न तावत् 'सच्च त्यच्चाभवदि'त्येतदंशेन ब्रह्मणो वियदाद्युपादानत्वसिद्धिः। सदादिभवनस्य जगत्सृष्टितदनुप्रवेशानन्तरभावित्वेन जगत्सृष्टित्वानुपपत्त्या तद्वाक्यस्य परमेश्वरसत्त्वादिगुणाभिव्यक्तिपरत्वात्। अन्यथा अभवदित्ययुक्तम्। न हि शुक्ते रूप्यमभवदित्युच्यते। मूर्तामूर्तात्मकप्रपञ्चस्य सत्यत्वासत्यत्वाभ्यामेव युक्तत्वेन 'निरुक्तं चानिरुक्तं चे'त्यादि वाक्यशेषस्थनिरुक्तादिपदवैयर्थ्यं च। नापि 'सोऽकामयत बहु स्यां प्रजायेये'त्यंशेन तत्सिद्धिः। तेन परमेश्वरस्य 'अजायमानो बहुधा व्यजायते', 'यदेकमव्यक्तमनन्तरूपमि'त्यादिश्रुतिसिद्धतत्तदनन्तपदार्थप्रेरकानन्तरूपैः बहुभवनसङ्कल्पस्यैवावेदनात्।

न च स्वस्यानन्तरूपैर्बहुर्भावं सङ्कल्प्य 'इदं सर्वमसृजते'ति प्रपञ्चसर्जनानुपपत्तिः। नियामकरूपैर्बहुभावस्य नियम्यसापेक्षत्वान्नियम्यं सर्वं सृष्ट्वा नियामकरूपैः प्रवेशोक्त्युपपत्तेः। दृश्यते हि लोके वेषधारिणोऽनेकवेषसम्पादनानन्तरं तदनुप्रवेशपूर्वकं तत्तद्वेषनियमनम्। उक्तं हि— 'बहु स्यामि'ति सङ्कल्प्य तेजःप्रभृति सर्जनम्। 'गुरुः स्याम्' इति सङ्कल्प्य शिष्यसम्पादनानन्तरं तद्वदिति। 'अन्यथा स्याम्' इति सत्त्वोक्तिरयुक्ता। सृष्टेः पूर्वं अन्तःकरणाभावेन तद्विशिष्टाहमर्थाभावात् उत्तमपुरुषानुपपत्तिश्च। न च तदा कारणात्मना अन्तःकरणस्य सत्त्वात् अहमर्थसत्त्वमिति वाच्यम्। कारणसत्त्वेन कार्यसत्त्वप्रयुक्तकार्यानुपपादनात् परेण कार्यकारणयोरत्यन्ताभेदाभ्युपगमाच्च।

एतेन 'तदैक्षत बहु स्यां प्रजायेय' इत्येतदपि व्याख्यातम्।

किञ्च 'तत्तेजो असृजते'ति यत् तेजःप्रभृति सृज्यं तदात्मना हि त्वया परमेश्वरस्य बहुभावो वाच्यः। न च तद्वक्तुं शक्यते। तेजःप्रभृतेश्चेतनत्वात् 'तत्तेज ऐक्षत। तदपोऽसृजत। ता आप ऐक्षन्त। ता अन्नमसृजन्त। तिस्रो देवताः' इति वाक्यशेषे ईक्षितृत्वादेः श्रवणात्। न च चेतनं प्रत्युपादानता न तवापीष्टा। नापि 'असद्वा इदमग्र आसीत्। ततो वै सदजायते'ति श्रुतिस्तत्र मानम्। 'तदात्मानं सृजाम्यहम्', 'सम्भवामि युगे युगे' इत्यादिवदुपपत्तेः। न ह्यत्र आत्मानमाकाशाद्यात्मना अकुरुतेति श्रूयते। अन्यथा अकुरुतेति सत्त्वोक्तिरयुक्ता।

किञ्च परमते 'ततो वै सदजायते'ति पूर्ववाक्येनैव तच्छब्दनिर्दिष्टब्रह्मणः प्रपञ्चोत्पत्तेः सिद्धत्वात् तदात्मानमिति व्यर्थम् । नापि 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ती'ति ब्रह्मण्येव सृष्टिलयोक्तिः तत्र मानम् । निमित्तेऽप्यूर्णनाभौ तन्तोर्लयदर्शनात् । ब्रह्मणोऽप्यूर्णनाभिवदेव संहर्तृत्वस्य 'यथोर्णनाभिरि'त्यादिश्रुतिसिद्धत्वात् । न चोर्णनाभिरपि तन्तूपादानम् । ऊर्णनाभिनाशेऽपि तन्तूपलम्भेन तदन्यस्यैव तन्तूपादानतयाऽभ्युपगन्तव्यत्वात् ।

नापि 'एकमेवाद्वितीयमि'ति वस्त्वन्तरनिषेधाद्ब्रह्मण एव जगदुपादानत्वं सिद्ध्यतीति युक्तम् । सृष्टेः पूर्वं अनाद्यविद्यादेरपि सत्त्वेन तत एव जगल्लक्षणकार्यनिर्वाहसम्भवेन ब्रह्मणो जगदुपादानत्वाकल्पकत्वात् । निषेधबलेन तस्मिन्मिथ्यात्वस्यैव सिद्ध्या तत्स्वरूपासत्त्वा(तस्मिन्नुपादानत्वा)सिद्धेः । 'यद्भूतयोनिमि'ति योनिशब्दस्तु 'योनिष्ठ इन्द्रसदने'त्यादि प्रयोगान्नोपादानत्वे नियत इति परैरप्यङ्गीकृतः । नाप्येकविज्ञानेन सर्वविज्ञानानुपपत्त्या तत्सिद्धिः । सादृश्यप्राधान्याभ्यामेव तदुपपत्तिरिति अन्यत्रास्माभिः प्रतिपादनात् । नापि 'सर्वं खल्विदं ब्रह्मे'त्यादि सामानाधिकरण्यान्यथानुपपत्तिस्तत्र मानम् । 'सर्वं समाप्नोषि ततोऽसि सर्वः' इत्यादि स्मृत्यैव अन्यथाव्याख्यातत्वात् । प्रकृत्यधिकरणं तु भाष्य एवान्यथा व्याख्यातम् । एवं मूलभूतश्रुत्यादिप्रमाणाभावेन ब्रह्मणो जगदुपादानत्वसाधकानुमानान्यपि निरसनीयानि ॥

*॥ इति ब्रह्मण उपादानत्वे प्रमाणभङ्गः ॥ २ ॥*

★ ★ ★

# ३. अविद्यालक्षणभङ्गः

यच्चोक्तं 'केवलं ब्रह्म न जगदुपादानं किन्तु स्वाश्रितं स्वविषयं चाज्ञानं सहायीकृत्य तत्तदुपादानमि'ति, तन्न । अज्ञानस्वरूपानिर्वचनात् । अत्र कश्चिदाह— 'जन्यसविकल्पकाजन्यसंशयविरोध्यप्रतिबन्धकलौकिकापरोक्षप्रमाणज्ञानोत्पत्त्यव्यवहितोत्तरक्षणनियतोत्पत्तिकापरोक्षध्वंसप्रतियोगित्वम् अज्ञानत्वमि'ति सुवचम् । अस्यार्थः— जन्यं यत्सविकल्पकं तदजन्यं संशयविरोध्यसम्भावनाविपरीतभावनादिप्रतिबन्धकरहितं लौकिकमपरोक्षं प्रमाणं वृत्तिरूपं च यज्ज्ञानं तदुत्पत्त्यव्यवहितो य उत्तरक्षणः तस्मिन् नियतोत्पत्तिको योऽयमपरोक्षध्वंसः तत्प्रतियोगित्वम् अज्ञानत्वमिति सविकल्पकाजन्येत्यादीनि ज्ञानविशेषणानि । अत्र धारावाहिकद्वितीयज्ञानमादाय असम्भववारणार्थं जन्यसविकल्पकाजन्येति प्रथमविशेषणम् । तत्रापि परपक्षे सर्वस्यापीश्वरज्ञानजन्यत्वेन घटाद्यपरोक्षज्ञानस्य निर्विकल्पकजन्यत्वेन च असम्भवः स्यादत उक्तं 'जन्यसविकल्पके'ति । धर्मिज्ञानं आपातज्ञानं अन-

भ्यासदशोत्पन्नजलादिज्ञानं चादाय असम्भववारणार्थं संशयविरोधीति द्वितीयं विशेषणम्, प्रतिबन्धकापरोक्षज्ञानमादाय असम्भवो मा भूदिति अप्रतिबन्धकमिति तृतीयविशेषणम् । अलौकिकापरोक्षज्ञानमनुमित्यादिकं साक्षिज्ञानं चादाय असम्भववारणार्थं क्रमेण लौकिकत्वापरोक्षत्वप्रमाणत्वविशेषणानि । अव्यवहितत्वं चोत्तरक्षणविशेषणम् अज्ञानकार्येऽतिव्याप्तिवारणार्थम् । नियतोत्पत्तिकत्वम् अपरोक्षत्वं च ध्वंसविशेषणम् । तत्र प्रथममुत्तरज्ञाननिवर्त्यपूर्वज्ञानेऽतिव्याप्तिवारणाय । द्वितीयं तु निर्विकल्पके सुषुप्त्यव्यवहितपूर्वक्षणवर्तिज्ञानादौ चातिव्याप्तिवारणाय । न च निर्विकल्पकादिध्वंसस्य ईश्वरं प्रति अपरोक्षत्वान्न तत्रातिव्याप्तिरिति वाच्यम् । अस्मदाद्यपेक्षयैव अपरोक्षत्वस्य विवक्षितत्वादिति ।

तन्न । ब्रह्माज्ञानातिव्याप्तेः । ब्रह्मावरकाज्ञाननिवर्तकस्य 'तत्त्वमस्यादि'वाक्यजन्यज्ञानस्य त्वयापि योग्यताज्ञान'त्वं'पदार्थज्ञानजन्यत्वाभ्युपगमेन जन्यसविकल्पकाजन्यत्वरूपविशेषणविरहात् । शब्दजन्यवाक्यार्थज्ञानस्यैव सामान्यरूपतया लाघवेन योग्यताज्ञानादिजन्यतावच्छेदकत्वात् । शब्दजन्यवाक्यार्थपरोक्षज्ञानत्वस्य विशेषरूपतया गुरुत्वात् ।

किञ्च ब्रह्माज्ञानेऽव्याप्तिः तद्ध्वंसस्य निर्विशेषब्रह्ममात्रत्वेन तस्य कुतोऽप्युत्पत्त्यभावात् । अज्ञानध्वंसस्य ब्रह्मातिरिक्तत्वेनोत्पत्त्यङ्गीकारेऽपि सुखाज्ञानपक्षे तस्य निरुक्तघटाद्यपरोक्षज्ञानोत्पत्त्यव्यवहितोत्तरक्षणनियतोत्पत्तिकत्वाभावेन असम्भवाच्च । तस्य चरमवृत्त्यनन्तरमेवोत्पत्तेः । किञ्च ब्रह्माज्ञानध्वंसस्य चरमवृत्तिमात्रसाध्यस्यापरोक्षज्ञानविषयत्वेन अपरोक्षज्ञानविषयत्वरूपापरोक्षत्वविरहात् विवक्षितध्वंसप्रतियोगित्वाभावेन तदज्ञानेऽव्याप्तिः । किञ्च त्वन्मतेऽलौकिकसाक्षात्कारस्याभावेन तदादाय असम्भववारकलौकिकविशेषणं व्यर्थम् । धारावाहिकस्थले त्वया तावत्कालवृत्त्येकज्ञानाङ्गीकारेण तत्स्थलीयद्वितीयज्ञानमादाय असम्भवस्यैव असम्भवात् तद्वारकं जन्यसविकल्पकाजन्येति विशेषणमपि व्यर्थम् । न च परीत्या तत्र द्वितीयज्ञानसत्त्वात् तदादाय असम्भववारकत्वात् तन्न व्यर्थमिति वाच्यम् । तथा सति त्वदभिमताज्ञानस्य परेणानभ्युपगमात् त्वया लक्षणमपि न वक्तव्यं स्यादिति दिक् ।

यद्यपि प्रमाणज्ञानत्वावच्छिन्नकारणतानिरूपितान्या[१]द्वारककार्यताश्रयध्वंसप्रतियोगिभावत्वम् अज्ञानत्वम् । अस्यार्थः— प्रमाणज्ञानत्वावच्छिन्ना या कारणता तन्निरूपिताऽन्याद्वारिका या कार्यता तदाश्रयो यो ध्वंसः तत्प्रतियोगित्वे सति भावत्वमिति । अत्र स्वरूपज्ञानमादाय असम्भवपरिहाराय प्रमाणेति विशेषणम् ।

---

१. अनन्यद्वारक... ।

उत्तरज्ञाननिवर्त्यपूर्वज्ञानेऽतिव्याप्तिवारणाय प्रमाणज्ञानत्वावच्छिन्नेति कारणता विवक्षिता । प्रपञ्चेऽतिव्याप्तिवारणाय अन्या[१]द्वारकेति । आत्मन्यतिव्याप्तिवारणाय ध्वंसप्रतियोगिकत्वविशेषणम् । संवादिव्यवहारप्रागभावेऽतिव्याप्तिवारणाय भावत्वविशेषणमिति ।

तन्न । अज्ञाननिवर्तकेष्वनुमित्यादिषु प्रमाणज्ञानत्वस्य सत्त्वेन अतिप्रसक्ततया तस्याज्ञाननिवर्तकतानवच्छेदकत्वात् । न च तत्रापि योग्यता अस्त्येव । अज्ञाननिवृत्तिरूपकार्याभावस्तु वृत्तिनिर्गमनरूपसहकारिविरहादुपपद्यत इति वाच्यम् । अनुमित्यादिस्थले क्वचिदपि त्वया ज्ञाननिवृत्तिरूपकार्यस्यानभ्युपगमेन योग्यताया एवासिद्धेः । यदवच्छिन्ने क्वचित्फलोपधानं तस्यैव योग्यतात्वात् ।

वस्तुतस्त्वनुमित्यादिस्थले वृत्तिनिर्गमनाभावेऽपि विषयसम्बन्धमात्रेण तद्गताज्ञानं निवर्तत इति भवति प्रमाणज्ञानत्वमज्ञाननिवर्तकतावच्छेदकम् । अपरोक्षस्थल इव तत्राप्यज्ञानं निवृत्तमित्यनुभवात्, न जानामीत्यननुभवाच्च । न चैवमनुमेयस्य वह्न्यादेरापरोक्ष्यापत्तिः आवरणभङ्गमन्तरेणाज्ञाननिवृत्त्यभावेन अनावृतसंवित्तादात्म्यलक्षणापरोक्ष्यस्य तत्रापि दुर्वारत्वादिति वाच्यम् । अपरोक्षज्ञानविषयत्वस्यैव विषयापरोक्षतयानुमेयवह्न्यादेस्तदभावेन उक्तदोषाभावात् । ज्ञानापरोक्ष्यं च जातिरेव, सा च वृत्तिचैतन्योभयनिष्ठा । न च सानुगतब्रह्मरूपा तथा अविद्यारूपैव वेति वक्ष्यते । न चैवं केवलसाक्षिभास्याकाशादीनामापरोक्ष्यापत्तिः । सुखादिवदिष्टापत्तेः ।

किञ्च अनावृतसंवित्तादात्म्यं न विषयापरोक्ष्यप्रयोजकम् । अज्ञानान्तःकरणवृत्तिदुःखादिषु तदभावेऽप्यापरोक्ष्यदर्शनात् । न हि अहमज्ञानं दुःखमिति वा कदापि प्रवृत्तिरस्ति । भेदसहिष्णवभेदरूपस्य वा भिन्नत्वे सति अभिन्नसत्ताकत्वरूपस्य वा स्वरूपेण सत्तानवच्छेदकभेदशून्यत्वरूपस्य वा तादात्म्यस्य 'सन् घट' इत्यादि सामानाधिकरण्यप्रतीतिव्यवहारनिर्वाहार्थमेव स्वीकारात् ।

एतेन अनुमितिस्थलेऽप्यज्ञाननिवृत्त्यभ्युपगमे शङ्खश्वैत्यानुमित्यनन्तरं पीतः शङ्ख इति भ्रमो न स्यादिति निरस्तम् ।

तत्र अज्ञाननिवृत्तावपि दोषमहिम्ना भ्रमसम्भवात् पीतार्थिप्रवृत्त्यदर्शनेन तत्र पीतोत्पत्तेरनङ्गीकारत्वाच्च ।

एतेन अनुमितिसाक्षात्कारविषययोरविशेषापत्तिरिति निरस्तम् ।

उभयत्राज्ञाननिवृत्तावप्युक्तविधयैव तद्विशेषसम्भवात् । यत्त्वनुमितिविषयो ज्ञात इति व्यवहाराभावश्च ज्ञात इति व्यवहारसामग्रीप्राबल्यादुपपद्यत इति । तन्न । तत्राज्ञानसत्त्वे व्यवहर्तव्यज्ञानव्यव-

---

१. अनन्यद्वारक... ।

जिहीर्षादिरूपव्यवहारसामग्र्यामज्ञात इति व्यवहारस्याप्यवर्जनीयत्वात्, वैपरीत्यापत्तेः, अज्ञानसत्त्वे ज्ञात इति व्यवहारानुदयाच्च । अज्ञानस्य ज्ञातैकसत्त्वाभ्युपगमाच्च ।

किञ्च धारावाहिकद्वितीयज्ञानादावज्ञानाभावेन तन्निवृत्त्यभावेऽपि तद्योग्यतायाः सत्त्वान्न तत्र अतिप्रसङ्ग इति न वक्तव्यमेव । त्वया हि धारावाहिकबुद्धेस्तावत्कालवृत्त्येकज्ञानरूपत्वाभ्युपमगमात् । पररीत्या त्वदभिमताज्ञानस्यासत्त्वाच्च ।

एतेन अज्ञानविषयकज्ञानस्यैव प्रमाणज्ञानपदेन विवक्षितत्वान्न द्वितीयज्ञानादावतिप्रसङ्ग इति निरस्तम् ।

अज्ञातत्वस्य अज्ञानविषयत्वरूपतया आत्माश्रयप्रसङ्गात् । न च अत्र अज्ञातत्वं सम्भवत्संशयकोटिकत्वं विवक्षितमिति नोक्तदोष इति वाच्यम् । तथासति 'अहमज्ञो', 'मामन्यं च न जानामी'ति 'त्वदुक्तमर्थं न जानामि', 'शास्त्रार्थं न जानामी'त्यादिप्रत्ययानामपि तद्विषयत्वोपपत्त्या त्वदभिमताज्ञानासाधकत्वप्रसङ्गात् । किञ्च एतल्लक्षणमपि ब्रह्माज्ञानेऽतिव्याप्तम्, त्वया तन्निवृत्तेः ब्रह्मरूपत्वाभ्युपगमात्, ब्रह्मणश्च अजन्यत्वात् ।

किञ्च साक्षान्निरुक्तं ज्ञाननिवर्त्यतावच्छेदकं मिथ्यात्वमिति अ(न)न्याद्वारकेति विशेषणेऽपि अज्ञानकार्येऽतिव्याप्तिर्दुर्निवारा । न च मिथ्यात्वावच्छेदेन ज्ञाननिवर्त्यत्वमित्येको निवर्त्यनिवर्तकभावो मिथ्यावारकत्वावच्छेदेन साक्षादज्ञाननिवर्त्यत्वमित्यपरः । यत्सामान्ययोरिति न्यायादिति वाच्यम् । मिथ्यात्वावच्छेदेन ज्ञाननिवर्त्यतासम्भवेन रूपान्तरेण निवर्त्यनिवर्तकभावाकल्पनात् । न चैवमुपादेयनाशं प्रति उपादाननाशस्यान्वयव्यतिरेकसिद्धं कारणत्वं भज्येतेति वाच्यम् । उपादाननाशं विनाऽप्यसमवायिनाशेन निमित्तकारणनाशेन च उपादेयनाशस्य बहुलमुपलम्भात् । तन्तूनां पूर्ववत्सत्त्वेऽपि तेषां परस्परसंयोगनाशेन पटनाशदर्शनात् । न हि तन्तुसंयोगोऽप्युपादानम् । अपेक्षाबुद्धिनाशेन द्वित्वादिरूपोपादेयनाशदर्शनाच्च । अज्ञानस्यैव 'तदा विद्वान्नामरूपाद्विमुक्तः' एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति', 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' इत्यादि श्रुतिस्मृतिभिरज्ञानकार्यस्य नामरूपात्मकप्रपञ्चादेः साक्षाज्ज्ञाननिवर्त्यत्ववर्णनाच्च । न च साक्षाज्ज्ञाननिवर्त्यत्वं न तदर्थः । प्रमाणानां साक्षादर्थविषयत्वस्यौत्सर्गिकत्वेन बाधकं विना तत्त्यागायोगात् ।

अन्यथा मुद्गरप्रहारादिना नाशस्थलेऽप्युपादाननाशद्वारता स्यात्, न चैवम् । अनुभवविरोधात् । यत्रोपादानोपादेयनाशौ प्रतीयेते तत्रापि युगपदेव तन्नाशौ । उपादाननाशानन्तरं उपादेयनाश इति क्रमे मानाभावात् । न चात्र क्लृप्तत्वादुक्तस्थलेऽपि क्रमेण नाशकल्पनमिति वाच्यम् । तथा सति 'तदा

विद्वान्' इत्याद्युदाहृतश्रुतिस्मृतीनां न्यायसिद्धार्थानुवादित्वापातात् । न हि उक्तरीत्या अपूर्वार्थत्वसम्भवे निष्प्रयोजनानुवादित्वं स्वीकारार्हम् । न च अत्र विधिंनिषेधौ पश्यामः । यदर्थोऽयमनुवादः स्यात् ।

किञ्च अज्ञानस्य अनादिभावत्वेन ध्वंसप्रतियोगित्वाभावादसम्भवः । न च आत्मत्वमुपाधिः, असत्यत्यन्ताभावान्योन्याभावादौ आकाशे च साध्याव्याप्तेः । न च असतो धर्ममात्रशून्यत्वात् अत्यन्ताभावादेश्च अधिष्ठानमात्रत्वादधिष्ठानरूपे च तस्मिन् क्वचित्साध्यत्वस्यैवासत्त्वात् क्वचिदुपाधेः सत्त्वात् आकाशादेश्च ध्वंसप्रतियोगित्वान्नोक्तदोष इति वाच्यम् । असति धर्ममात्रशून्यत्वरूपधर्मस्य सत्त्वे व्याहतेः । तदसत्त्वे ध्वंसाप्रतियोगित्वरूपसाध्याभावसाधनानुपपत्तेः । असतो ध्वंसाप्रतियोगित्वाभावे ध्वंसप्रतियोगित्वापत्तेश्च । अभावाभावस्य भावत्वनियमात्, असतोऽसत्त्वरूपधर्माभावेऽसत्त्वव्याघाताच्च । न च असतो धर्माधिकरणत्वे घटादितुल्ययोगक्षेमतया ध्वंसप्रतियोगित्वं स्यादिति शङ्क्यम् । धर्माधिकरणत्वमात्रस्यात्मनि सत्त्वेन व्यभिचारात् । धर्मिसमसत्ताकधर्माधिकरणत्वस्य हेतुत्वे त्वसिद्धिः, असत्त्वादिधर्माणां सत्त्वात् ।

एतेन असन्नाम किञ्चिदस्ति चेद् असत्त्वव्याकोपः नास्ति चेत् कुत्र साध्याव्याप्तिरिति निरस्तम्।

अतीतादेः साध्याव्याप्त्यादिदोषानुद्भावनप्रसङ्गात् । नन्वतीतादि क्वचित्कदाचिदस्तीति चेन्न, कदाचित्सत्त्वस्य इदानींतनसाध्यसत्त्वानुपपादकत्वेन साध्याव्याप्त्याद्यनुपपादकत्वात् । एतावांस्तु विशेषः । अतीतादि कदाचित्स्वरूपेणासत् । नृशृङ्गादि तु सर्वदेति ।

एतेन असतः प्रतियोगित्वाश्रयत्वे भावरूपत्वेन द्रव्याद्यन्यतमत्वापत्त्या त्रिकालसर्वदेशीयनिषेधो न स्यादिति निरस्तम् । घटवति घटाभावो नास्तीत्यादि प्रतीत्या घटाद्यभावस्यापि प्रतियोगित्वाश्रयत्वात् ।

यत्तु असतोऽत्यन्ताभावप्रतियोगित्वाभ्युपगमे घटादेरविशेषेण असदिति नाममात्रमेव स्यादिति, तन्न । ब्रह्मणो निर्धर्मिकत्वाभ्युपगमेन नृशृङ्गादितो विशेषाभावेन तस्यैव ब्रह्मेति तव नाममात्रमेव स्यादिति आपादनसम्भवात् कालसम्बन्धित्वतदभावाभ्यां विशेषस्तु उभयत्रापि तुल्य इति दिक् ।

किञ्च अत्यन्ताभावो नाधिष्ठानात्माङ्गीकर्तुं शक्यते जगन्मिथ्यात्वासिद्धिप्रसङ्गात् । अत्यन्ताभावस्य ब्रह्मरूपाधिष्ठानात्यन्ताभिन्नत्वेन तन्निष्ठत्वासम्भवेन प्रतिपन्नोपाधिस्थत्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वानुपपत्तेः । वस्तुतः तन्निष्ठत्वाभावेऽपि कल्पितं तन्निष्ठत्वमस्तीति चेत् । तथा सति प्रपञ्चे वस्तुतो मिथ्यात्वाभावप्रसङ्गात् । किञ्च अत्यन्ताभावस्य निर्विशेषब्रह्मरूपत्वे त्वदभिमतं मिथ्यात्वं

ब्रह्मसम्बन्धित्वरूपमेवापद्यते । किञ्च जगन्निषेधस्य जगत्कारणब्रह्माभिन्नत्वे प्रतियोगिजनकाभावत्वेन प्रागभावत्वमेव स्यात् न त्वत्यन्ताभावत्वम् । न चैवम् । वियदादिजगदुत्पत्तौ ब्रह्मणोऽपि नाश-प्रसङ्गात् । किञ्च भावैकस्वभावस्य ब्रह्मणो जगद्विरहरूपाभावात्मकत्वं विरुद्धमित्यन्यत्र विस्तरः । किञ्चाकाशस्य 'स यथाऽनन्तोऽयमाकाश एवमनन्त आत्मा वेदितव्यः', 'आकाशवत् सर्वगतश्च नित्यः' इत्यादिश्रुत्या ब्रह्मवदाकाशस्यापि ध्वंसाप्रतियोगित्वरूपानन्तत्वावेदनेन तत्र साध्याव्याप्तिर्दुर्वारा ।

एतेनैवानादिभावत्वरूपसाधनावच्छिन्नसाध्यव्यापकमात्मत्वम् उपाधिरिति निरस्तम् ।

आकाश एव साध्याव्याप्तितादवस्थ्यात्, किं च अज्ञानस्य न ध्वंसप्रतियोगित्वं युक्तम् । 'गौरना-द्यन्तवती'ति श्रुत्या कण्ठत एव गोशब्दिताज्ञानस्य ध्वंसाप्रतियोगित्वावेदनात् ।

ननु 'अनादिश्चासावन्तवती चे'ति तच्छ्रुत्यर्थः । न तु आदिश्च अन्तश्च आद्यन्तौ, तौ अस्याः स्तः इति आद्यन्तवती सा न भवतीत्यनाद्यन्तवतीति । तथा सति 'तस्याभिध्यानाद्योजनात् तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः', 'दैवी ह्येषा गुणमयी मम माया दुरत्यया', 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते', 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः', 'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः', 'तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परमि'त्यादि श्रुतिस्मृतिविरोधापत्तेरिति चेन्न । 'विश्वमायानिवृत्तिः' इत्यत्र विश्वशब्दसमभिव्याहृतमायाशब्देन 'ज्ञात्वा देवं मुच्यते सर्वपाशैः ज्ञात्वा देवं सर्वपापापहानिः' इत्यादि पूर्वोत्तरवाक्यानुसारेण पाशानामेव ग्राह्यत्वात् बन्धकत्वेन पुण्यपापादिकर्मणामेव पाशशब्देन निर्दिष्टत्वात् । पाशशब्देनापि जगत्कारणमायाग्रहणे सर्वशब्दानुपपत्तेः । तत्रैव तस्मादेवात्मशक्तिं स्वगुणैर्निगूढां 'क्षरं प्रधानं तस्मिंश्च', 'अन्यो मायया सन्निरुद्धः, मायां तु प्रकृतिं विन्द्यादि'त्यादिनैक-त्वावेदनात् । 'अजामेकामि'त्यादौ जगत्कारणस्य एकत्वावेदनाच्च । 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे । सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि, ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन' इत्यादि श्रुतिस्मृत्यनुसारेण विश्वमायानिवृत्तिरिति श्रुत्यर्थस्य वर्णनीयत्वाच्च ।

एतेन 'मायामेतां तरन्ति ते' इत्यत्र मायाशब्दोऽपि व्याख्यातः । यद्वा मायाशब्देनात्र मूलप्रकृतिरेवोच्यते ।

किञ्च, 'एनं सेतुं तीर्त्वे'त्यादाविव स्ववशीकरणमेव निवृत्तिः । 'ज्ञानेन तु तदज्ञानं येषां नाशित-मात्मन' इत्यत्रापि अज्ञानशब्देन कर्मैवोच्यते । 'नादत्ते कस्यचित्पापं न चैव सुकृतं विभुरि'ति पूर्ववाक्ये कर्मणां प्रकृतत्वात् । 'सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसी'ति पूर्वाध्याये स्पष्टमभिधानाच्चेति । यद्वा 'काम एष क्रोध एष रजोगुणसमुद्भवः' 'आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणे'ति तृतीयोक्तं कामा-

दिकमेव अज्ञानशब्देनोच्यते । तथाच 'गौरनाद्यन्तवति' इत्यत्र आद्यन्तवति न भवतीति अनाद्यन्तवति इत्येवार्थः । एवञ्च 'एषोऽश्वत्थः सनातनः', 'अश्वत्थं प्राहुरव्ययम्' इत्यादिश्रुतिस्मृतयोऽप्यनुकूलिता भवन्ति ।

संसारस्य स्वरूपेण सदातनत्वाव्ययत्वाभावात् प्रवाहाविच्छेदेन वाच्यः । तत्प्रवाहश्च मूलकारण-भूतायाः मायाया विनाशाभ्युपगमे न सम्भवतीति । न च संसारस्य सदातनत्वाव्ययत्वे बहुकालाव-स्थितत्वरूपे उक्तरीत्या बाधकाभावेन प्रवाहाविच्छेदस्यैव तथात्वात् ।

एतेन सादिभावत्वमनादिभावत्वं वा निवर्त्यत्वानिवर्त्यत्वयोः न तन्त्रम् । किन्तु विरोधिसन्निपाता-सन्निपातावेव, अज्ञाने विरोधिसन्निपातश्च विश्वमायानिवृत्तिरित्याद्यागमैरन्वयव्यतिरेकाभ्यां च सिद्धो नापह्नोतुं शक्यत इति निरस्तम् ।

अनादिभावत्वे गौरनाद्यन्तवतीत्यागमेन च त्वदभिमताज्ञाने विरोध्यसन्निपातस्यैव सिद्धेः । विश्वमायानिवृत्तिरित्याद्यागमार्थस्य वर्णनीयत्वात् । अन्वयव्यतिरेकयोश्च मूलाज्ञानाविषयत्वात् ज्ञाना-भावादिविषयत्वोपपत्तेश्च । एतेन अज्ञाने विरोध्यसन्निपातानुमाने प्रत्यक्षागमबाध इति निरस्तम् ।

किञ्च त्वन्मतेऽज्ञानस्य ज्ञानेन निवृत्तिः न युज्यते, अज्ञानसत्त्वे ज्ञानस्यैवानुदयात् । अन्ध-काराद्यावरणसत्त्वे घटाद्यपरोक्षादर्शनात् । तथाच अज्ञाननिवृत्तौ ब्रह्मज्ञानोदयः तदुदये च अज्ञान-निवृत्तिरित्यन्योन्याश्रयो दुर्वारः । किञ्च स्वरूपेण स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्ववतो अज्ञानस्यासत इव निवृत्तिः न सम्भवति ।

यत्तु पारमार्थिकत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावेन तत्स्वरूपेण प्रतियोगिनो अविरोधवत् तन्निवृत्तेरप्यविरोध इति, तन्न । स्वरूपेण स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वमेव मिथ्यात्वमिति पक्षे अज्ञाननिवृत्त्यभावस्यापादनात् । पारमार्थिकत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावेन स्वरूपेण प्रतियो-गिनो विरोधाभावे मिथ्यात्वस्य पारिभाषिकत्वापाताच्च । वियदादिस्वरूपवत् तत्पारमार्थिकत्वस्यापि प्रतिपन्नतया स्वरूपेण प्रतियोगिनो निषेधायोगेन पारमार्थिकत्वाकारेण निषेधे तत्र तत्रैवमित्यनवस्था-पाताच्च ।

किञ्च पारमार्थिकत्वावच्छिन्नस्यातिरिक्तत्वे तस्यैव निषेधः स्यात् । न तु विशेषणविशेष्य-सम्बन्धानां विशेषणविशेष्यसम्बन्धरूपत्वे च विशेषणतत्सम्बन्धयोरेव निषेधः स्यात् न तु वियदादेः विशेष्यस्येति तस्य ब्रह्मत्ववत्सत्यत्वमेव स्यादित्यन्यत्र विस्तरः ।

किञ्च [1]प्रतीतिशरीरमात्रस्य अज्ञानस्य यावत्साक्षिप्रतीतिसत्त्वमनुवृत्तौ न निवर्त्यत्वं युक्तम् । न च अविद्यावृत्त्यवच्छिन्नसाक्षिचैतन्यस्य तत्प्रतीतित्वेन यावत्तत्सत्त्वमनुवृत्तस्यापि निवृत्तिरुपपद्यते । शुक्तिरूप्यादेः यावत् चिन्मात्रसत्त्वमनुवृत्त्य दर्शनाच्चेति वाच्यम् । सुषुप्तौ सर्वस्यापि विलीनतया तदा अज्ञानप्रतीतेः केवलचिन्मात्रत्वेन क्लृप्तत्वात् यावत् तत्सत्त्वमज्ञानस्य अवस्थानं दुर्निवारमिति ध्वंस-प्रतियोगित्वायोगात् । अविद्यावृत्त्यवच्छिन्नचैतन्यस्य अविद्याप्रतीतित्वे अज्ञानस्यानादित्वायोगात् । अविद्यावृत्तेः कादाचित्कत्वात् । अवच्छिन्नाविद्यावृत्तिधाराभ्युपगमे च प्रमाणाभावात् । सुषुप्तिकाले तद्विच्छेदावश्यंभावाच्च । 'सुषुप्तिकाले सकले विलीने तमोभिभूतं सुखरूपमेती'ति श्रुतेः ।

किञ्चावच्छिन्नस्योपहितस्य वा साक्षित्वे 'साक्षी चेता केवलो निर्गुणश्च', 'तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः' इत्यादिश्रुतिविरोधः । शुक्तिरूप्यादेः केवलचिन्मात्रभास्यत्वे तदतिरिक्त-कादाचित्कत्वसाधकाभावेन यावत् तत्प्रतीतिसत्त्वमनुवृत्त्यापत्त्या तदन्यूनातिरिक्तकालप्रतीतिविषय-त्वस्याभ्युपगन्तव्यत्वाच्च ।

एतेन वस्तुतस्तु त्वन्मते कल्पितस्य प्रतीतिशरीरत्वं न प्रतीत्यात्मकत्वं कल्पिताकल्पितयोः ऐक्यायोगात् । किन्तु प्रतीतिव्यतिरेकेण परमार्थतो दुर्निरूपत्वमिति तत्प्रतीतिसत्त्वेऽपि तन्निवृत्तिरुप-पद्यते । अतः प्रतीतिमात्रशरीरस्याज्ञानस्य यावत्प्रतीतिसत्त्वमनुवृत्तौ निवर्त्यत्वं न युक्तमिति दूषणम् अस्मत्सिद्धान्तानभिज्ञकृतमिति निरस्तम् ।

घटादीनामपि प्रातीतिकत्वापत्तेः । प्रातीतिकव्यावहारिकव्यवस्थोत्त्ययोगाच्च । वियदादीनां शुक्ति-रूप्यादीनां च स्वरूपसत्ताभ्युपगमेन दुर्निरूपत्वायोगाच्च । स्वरूपेण सुनिरूपत्वेऽपि पारमार्थिकत्वा-भावेन दुर्निरूपत्वे च ब्रह्मणोऽप्यनिर्वचनीयत्वप्रसङ्गात् । न हि धर्मखण्डनव्यतिरेकेण धर्मिणो दुर्नि-रूपत्वमन्यदस्ति, यावत्प्रतीत्यनुवर्तमानत्वातिरेकेण प्रतीतिशरीरत्वस्य मयाऽप्यनुक्तेश्चेति ।

किञ्च जीवन्मुक्तिदशानुवृत्ताज्ञाने सोपाधिकभ्रमस्थलीयाज्ञाने चाव्याप्तिः । सत्यप्यधिष्ठान-तत्त्वज्ञाने तदनुवृत्तेः । न च प्रारब्धकर्मणामुपाधीनां च प्रतिबन्धकत्वात् तदपगमे तदनन्तरभाविना अधिष्ठानतत्त्वज्ञानेन तन्निवर्तत इति वाच्यम् ।

निष्पन्नतत्त्वज्ञानेनावरणशक्तिनिवृत्तौ प्रारब्धनाशेनोपाध्यपगमेन च विक्षेपनाशे ज्ञानान्तरेणाज्ञान-स्वरूपनिवृत्तेरनङ्गीकार्यतया कर्मणामुपाधीनां च प्रतिबन्धकत्वे प्रमाणाभावात् । 'तस्य तावदेव चिरं

---

१. प्रतीतिमात्रशरीरस्य ।

यावन्न विमोक्ष्येऽथ सम्पत्स्ये' इति श्रुतेरन्वयव्यतिरेकयोश्च विक्षेपशक्तितन्नाशविषयत्वोपपत्तेः, न च तत्रोभयत्र न जानामीति व्यवहाराभावादज्ञानं निवृत्तमेवेति वाच्यम्, तथा व्यवहारस्यावरण-शक्त्यभावविषयत्वोपपत्तेः । अज्ञानरूपोपादानाभावे प्रारब्धकर्मणां विक्षेपादीनां चावस्थानायोगाच्च । न च अज्ञानस्य स्वरूपेण सत्त्वे संसारदशायामिव दुःखादिप्रसङ्गः । आवरण विक्षेपशक्तिमदज्ञानस्यैव तद्धेतुत्वेन तदभावादेव तदभावोपपत्तेः । न च अज्ञानस्य स्वरूपेण सत्त्वे आवरणविक्षेपादिकं पुन-रप्यापद्येत । अज्ञानस्य तत्स्वभावत्वादिति वाच्यम् । जीवन्मुक्तिदशायां आवरणशक्तिनिवृत्तेरात्य-न्तिकत्ववत् प्रारब्धनाशानन्तरभाविविक्षेपशक्तिनिवृत्तेरप्यात्यन्तिकत्वोपपत्तेः ।

किञ्च प्रातिभासिकाभावे उपादानाज्ञाने भावत्वाभावात् अव्याप्तिः । अभावस्य भावोपादान-त्वानुपपत्तेः । न च प्रातिभासिकाभावस्य ध्वंसत्वा(व)न्निरुपादानत्वमिति युक्तम् । तथा सति तस्य ज्ञाननिवर्त्यत्वाभावप्रसङ्गात् । त्वया कार्यनिवृत्तेरुपादानभूताज्ञाननिवृत्त्यधीनत्वोपगमात् । न च तत्तन्त्र-त्वमात्रेण अविद्यासम्बन्धवत् ज्ञाननिवर्त्यत्वं तस्य इति युक्तम् । प्रातिभासिकाभावेऽविद्यातन्त्रत्वं तत्सम्बन्धित्वं वा तन्निमित्तत्वं वा तत्स्थितिहेतुत्वं वा ? नाद्यः— ब्रह्मणोऽपि नाशप्रसङ्गात् । न द्वितीयः— दण्डादिनाशेऽपि घटादिनाशादर्शनात् । अपेक्षाबुद्ध्यादिनाशेन द्वित्वादिनाशो दृश्यत इति चेत् न । अपेक्षाबुद्धेर्द्वित्वादिप्रतीतिनिमित्तत्वेन तन्निमित्तत्वासम्प्रतिपत्तेः । तथापि व्यभिचारा-परिहाराच्च । न तृतीयः— घटत्वादिजातिस्थितिहेतुघटादिव्यक्तिनाशेऽपि घटत्वादीनामविनाशात् । न च भावरूपाज्ञानस्य विचित्रशक्तियोगितया अघटितघटनापटीयस्त्वात् प्रातिभासिकाभावोपादानत्वं युक्त-मिति वाच्यम् । तथा सत्यनादिभावान्तराणामपि अज्ञानोपादेयत्वापत्तेः । अनादित्वस्योपादेयत्व-विरोधित्ववदभावत्वस्यापि भावोपादेयत्वविरोधित्वात् । जगतः शून्योपादेयत्वनिराकरणायोगाच्च । भावोपादानत्वे भावत्वस्य दुर्निवारत्वाच्च । न च पूर्वापूर्वाभावसंस्कारजन्यत्वेन प्रातिभासिकाभावस्य अभावत्वमिति वाच्यम् । पूर्वपूर्वाभावानुभवजनितसंस्कारस्य निमित्तत्वेन भावत्वेन च कार्ये तेना-भावत्वोपादानायोगात् । संस्कारात्मना विद्यमानः कल्पितः पूर्वपूर्वाभाव एव तदुपादानमिति चेत् तर्हि शुक्तिरूप्यादावपि तथेति त्वदभिमताज्ञानं नृशृङ्गायितमेव स्यात् ।

एतेन अत एव एकस्मादज्ञानात् रङ्गरजतादिसंस्कारसहायात् रङ्गरजतादिपदार्था उत्पद्यन्त इति निरस्तम् । तत्तत्संस्कारैरेव तत्तत्कार्योपपत्तौ त्वदभिमताज्ञानासिद्धिप्रसङ्गात् इत्यन्यत्र विस्तरः ।

एतेन अनादिभावत्वे सति ज्ञाननिवर्त्यं अज्ञानम् इति लक्षणान्तरं निरस्तम् ।

अविद्यासम्बन्धादावतिव्याप्तेः । न च भावपदमुपादानपरम् । ज्ञानपदवैय्यर्थ्यात् ।

ननु ज्ञाननिवर्त्यमित्यनेन साक्षाज्ज्ञाननिवर्त्यत्वं विवक्षितम् । न च विशेषणवैय्यर्थ्यम् । उत्तर-ज्ञाननिवर्त्यपूर्वज्ञानेऽतिव्याप्तिवारकतया अनादित्वविशेषणस्य, इष्टसाधनताज्ञाननिवर्तेच्छाप्रागभावेऽतिव्याप्तिवारकतया भावत्वविशेषणस्य च सार्थकत्वादिति चेन्न । अनन्यद्वारकत्वरूपपूर्वलक्षण-विशेषणन्यायेन अविद्यासम्बन्धादेरपि साक्षाज्ज्ञाननिवर्त्यत्वेन अतिव्याप्तितादवस्थ्यात् । ब्रह्मावरका-ज्ञाननिवृत्तेर्ब्रह्ममात्रतया तत्र ज्ञानजन्यनिवृत्तिप्रतियोगिकत्वाभावेन अव्याप्तेश्च ।

किञ्च अज्ञानस्य कल्पितत्वे अनादित्वविशेषणासम्भवः, कल्पितस्य दोषजन्यत्वनियमात् । दोषाजन्यं कल्पितम् इत्यस्य व्याहतत्वात् । एतेन कार्यत्वे सति कल्पितत्वमेव दोषजन्यत्वनियत-मिति निरस्तम् । एतेन स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वं कल्पितत्वं तच्च साध्यानादि-साधारणमिति निरस्तम् ।

एवंविधकल्पितत्वस्य ब्रह्मण्यपि सत्त्वात् । 'नेह नाने'त्यादिश्रुत्या प्रपञ्च इव ब्रह्मण्यपि तदा-वेदनात् । न हि ब्रह्म नाना किञ्चनशब्दार्थो नेत्यस्ति । किञ्चनशब्दस्य सर्वनामत्वात् ब्रह्मणोऽपि कुतश्चिद्भिन्नत्वाच्च ।

किञ्चाज्ञानस्य अनादित्वे 'अज्ञानं नानादि अभावान्यत्वे सति साक्षाज्ज्ञाननिवर्त्यत्वादि'-त्यनुमानविरोधः । न च ज्ञानप्रागभावो नानादिः उपादानान्यत्वे सति ज्ञाननिवर्त्यत्वात् इत्याभास-समानयोगक्षेमत्वात्, अज्ञानसिद्ध्यसिद्धिभ्यां व्याघाताच्च नेदमनुमानमिति वाच्यम् । मदीयानुमाने कल्पितत्वाभावप्रसङ्गरूपविपक्षबाधकतर्कवत् त्वदीयानुमाने तदभावेन वैषम्यात् । वादिप्रसिद्धिमादाय तद्दूषणानुमानसम्भवेन व्याघाताभावाच्च । अन्यथा जगत्पारमार्थिकत्वादावपि त्वया दूषणं नोद्भाव्येतेति यत्किञ्चिदेतत् ।

किञ्च सादिष्ववस्थाज्ञानेषु अव्याप्तिः । न च मूलाज्ञानस्यैव इदं लक्षणम् । अज्ञानशब्दार्था-ननुगमप्रसङ्गात् । न च चैतन्यावरकत्वेन तदनुगमः । चैतन्यस्वरूपानावरकत्वेन असम्भवात् । अन्यथा जगदान्ध्यप्रसङ्गात् । न च चैतन्यस्वरूपस्य अनावृतत्वेऽप्यानन्दांश एव आवृत इति वाच्यम् । तस्य भिन्नत्वे अद्वैतहानेः । अभिन्नत्वे उक्तदोषानिस्तारात् । न ह्येकमावृतमनावृतं चेति सम्भवति । न च आनन्दांशस्य वस्तुतो भिन्नत्वेऽपि कल्पितं भेदमादाय स्फुरणास्फुरणे युज्येते इति वाच्यम् । कल्पकाज्ञानस्य अद्याप्यनिर्वाहात् । तल्लक्षणप्रमाणयोरिदानीमेव विचार्यमाणत्वाच्च ।

एतेन चैतन्यावरकत्वमेव अनुगतमज्ञानलक्षणम् । तच्च 'अस्ति प्रकाशत' इति व्यवहारयोग्ये 'नास्ति न प्रकाशत' इति व्यवहारकारित्वमिति निरस्तम् ।

चैतन्यस्वरूपस्य स्वयंप्रकाशतया नास्ति न प्रकाशत इति व्यवहारायोगात् । आनन्दस्यापि तन्मात्रत्वेन तादृशव्यवहारायोगाच्च । किञ्च चैतन्यावरकत्वस्यैव अज्ञानलक्षणत्वसम्भवेन अनादित्वादि-विशेषणघटितलक्षणकरणप्रयासो व्यर्थः । अनुगमार्थं अस्य आवश्यकत्वात् ।

एतेन भ्रमोपादानत्वमज्ञानस्य लक्षणमिति निरस्तम् ।

भ्रमशब्देनात्र किमागन्तुकदोषजन्यारोपो विवक्षितः किं वा अनागन्तुकदोषजन्यारोपो विवक्षितः । नाद्यः— आकाशाद्युपादानाज्ञाने अव्याप्तेः । न च तदेव शुक्तिरूप्योपादानमिति वाच्यम् । शुक्तितत्त्व-साक्षात्कारेण तन्निवृत्तेः । तत्र तन्निवृत्तेरन्यविषयत्वे च स्वरूपेण मूलाज्ञाननिवृत्तिरपि न स्यात् । न च आकाशाद्युपादानस्य स्वप्नभ्रमोपादानत्वात् न तत्राव्याप्तिरिति वाच्यम् । सुप्तोत्थितस्य गजाद्यदर्शनिनो-पादानेन सह तन्निवृत्तेरावश्यकत्वात् । न च तत्र प्रविलयमात्रं न निवृत्तिः, अधिष्ठानतत्त्वज्ञानाभावा-दिति वाच्यम् । आश्रयत्वेन प्रतिपन्नस्यैवाधिष्ठानत्वेन चैतन्यस्य तदधिष्ठानत्वाकल्पनात् । अन्यथा शुक्तिरूप्यादेरपि चैतन्यमेवाधिष्ठानमिति निवृत्तिरङ्गीकार्यैव स्यात् । इष्टापत्तावनुभवविरोधः (निषेधः) । न द्वितीयः— शुक्तिरूप्योपादानभूताज्ञानेऽव्याप्तेः । न च भ्रमशब्देन दोषजन्यारोपो विवक्षितः । घटादिप्रतीतेः सर्वस्या आरोपत्वे मानाभावेन तदुपादानाज्ञाने अव्याप्तितादवस्थ्यात् । न च अविद्या-रूपदोषजन्यत्वात् घटादिप्रतीतेः आरोपितत्वमिति वाच्यम् । अविद्यायाः दोषत्वकल्पनस्य घटादेः भ्रमत्वसिद्ध्यधीनतया अन्योन्याश्रयात् । न च नेह नानेत्यादि श्रुत्या घटादिप्रतीतेर्भ्रमत्वे सिद्धे तन्नि-र्वाहाय अविद्यायाः दोषत्वकल्पनमिति वाच्यम् । भूतले घटः वृक्षे संयोग इत्यादि प्रतीतेश्चत्वरे घटो न वृक्षसंयोगो नेत्यादि प्रतीत्येवेतद् भूतले घटः यस्मिन्द्यौः पृथिवी चान्तरिक्षमित्यादिप्रत्यक्षश्रुति-जन्यप्रतीतेः नेह नानेत्यादि श्रुतिजन्यप्रतीत्या बाधासम्भवेनारोपत्वासिद्ध्या अविद्याया दोषत्वाकल्प-नात् । ब्रह्मणि श्रुत्या विहितस्य वियदादिस्वरूपस्य सर्वात्मना श्रुत्या निषेधायोगात् । अन्यथा षोडशि-ग्रहणस्यापि तथात्वापत्तेः । यस्मिन्द्यौरिति विशिष्य विहितस्य नेह नानेत्यादि सामान्यनिषेधविषय-त्वायोगाच्चेत्यन्यत्र विस्तरः ।

किञ्च भ्रमोपादानत्वस्यात्मन्यपि सत्त्वेन अतिव्याप्तिः । न च विकारित्वरूपमेवोपादानत्वम् । अतो नातिव्याप्तिरिति वाच्यम् । आत्मनोऽपि विवर्तरूपविकारवत्त्वात् । न च विकारशब्देन परिणामो विवक्षितः । तथा सत्यात्मनः परिणामित्वरूपोपादानत्वाभावेन अभिन्ननिमित्तोपादानत्वासिद्धिप्रस-ङ्गात् । विवर्ताधिष्ठानत्वरूपोपादानत्वस्य शुक्त्यादौ व्यवहाराभावेन पारिभाषिकत्वेनानुपादानत्व एव पर्यवसानात् ।

किञ्च भ्रममनुत्पाद्य यदज्ञानं घटाद्यपरोक्षज्ञानेन नष्टं तत्राव्याप्तिः। न च भ्रमोपादानत्वयोग्यत्वमेव लक्षणं विवक्षितमिति वाच्यम्। योग्यताया अनुगतावच्छेदकमन्तरेण अनिरूपणात्। चैतन्यावरकत्वेनानुगमस्य च दूषितत्वात्। न च भ्रमोत्पादनं विना निवृत्तिस्थले आवरणशक्तिमदज्ञानमात्रस्य निवृत्तिः। न विक्षेपशक्तिमदज्ञानस्य। ततश्च तदेव समयान्तरे भ्रममुत्पादयतीति नाव्याप्तिरिति वाच्यम्। तथा सति विक्षेपशक्तिमदज्ञानस्यापि समयान्तरे तज्ज्ञानादनिवृत्तिप्रसङ्गात्। अनावृत्त्यधिष्ठानविक्षेपशक्तिमदज्ञानेन समयान्तरे तत्र भ्रमोत्पादनायोगाच्च। अज्ञानान्तरे तदावरणकल्पने च तदेव भ्रमोपादानमिति तत्र अव्याप्तिः दुर्वारा। किञ्च अभावारोपनिवर्तकभ्रमनिवर्त्ये अज्ञाने अव्याप्तिः। अभावरूपभ्रमं प्रति भावरूपाज्ञानस्योक्तरीत्योपादानत्वायोगात्। अभावस्य निरुपादानत्वाच्च। अनुगतोपादानत्वावच्छेदकाभावेन तद्रूपयोग्यताया अप्यसम्भवात्।

किञ्च अर्थज्ञानात्मकस्य भ्रमस्य भावविलक्षणत्वेन नोपादानत्वम्। अज्ञानस्यापि भावविलक्षणत्वेन नोपादानत्वमित्यसम्भवः। अभावमात्रे उपादानत्वादर्शनात्। ध्वंसे उपादानत्वस्यादर्शनाच्च। न चैवं भावत्वमुपादानोपादेयभावे प्रयोजकमित्यात्मादेरपि उपादेयत्वं रूप्यादेरप्यपादानत्वं स्यात् इति वाच्यम्। भावत्वस्योपादानोपादेयभावप्रयोजकत्वस्य मया अनभ्युपगमात्। भावकार्यत्वद्रव्यत्वयोरेव प्रयोजकत्वाभ्युपगमाच्च। त्वया भावविलक्षणत्वाभ्युपगमाच्च।

एतेन सादित्वमुपादेयत्वे प्रयोजकं कार्यानुगतकारणत्वमुपादानत्वमिति निरस्तम्।

ध्वंसस्यापि सोपादानत्वापत्तेः। न चेष्टापत्तिः। अभावस्य भावरूपाज्ञानोपादानत्वायोगस्योक्तत्वात्। बन्धध्वंसस्याप्यज्ञानोपादानकत्वापाताच्च। बन्धध्वंसस्याधिष्ठानात्ममात्रत्वे च घटादिध्वंसस्याप्यधिष्ठानमात्रत्वापत्तेः। विशेषहेत्वभावेन घटादिध्वंसस्यापि ब्रह्ममात्रत्वापाताच्च। अद्वैतश्रुतिविरोधेन बन्धध्वंसस्यात्ममात्रत्वाभ्युपगमे च तत एव सर्वस्यापि ब्रह्ममात्रत्वाङ्गीकारप्रसङ्गात् इति। तस्मादज्ञानभ्रमयोर्भावविलक्षणतया उपादानोपादेयभावो न युक्तः।

एतेन वस्तुतो भावत्वाभावेऽपि भावतया प्रतिभासात् प्रातिभासिकभावत्वेनैव अज्ञानस्योपादानत्वमिति निरस्तम्।

शून्यस्यापि त्वदुक्तन्यायेन भावत्वसम्भवेन जगदुपादानत्वापत्तेर्दुर्वारत्वात्। न च शून्यस्योपादानत्वे तदनुविद्धतया प्रतीत्यापत्तिः। अज्ञानोपादानत्वेऽपि तदनुविद्धतया प्रतीत्यापादानसम्भवात्। तत्र जाड्यादि यत्किञ्चित् स्वभावानुवेधोऽस्तीति चेत् तुल्यम्।

एतेन अलौकिकप्रत्यासत्त्यजन्यजन्यापरोक्षप्रमाणज्ञानत्वावच्छिन्नकारणताप्रतियोगिकस्वजन्यानपेक्षजन्यताधिकरणनिवृत्तिप्रतियोग्यभावविलक्षणत्वमज्ञानत्वम्। पारमार्थिकसत्त्वानधिकरणकर्तृत्वा-

नधिकरणगुणत्रयाश्रयत्वं चित्त्वानधिकरणभूतत्वानाश्रयोपादानत्वं वेति लक्षणान्तराणि । अत्र प्रथम-लक्षणेऽलौकिकप्रत्यासत्तिजन्यज्ञानेनेश्वरज्ञानेन परोक्षज्ञानेन संशयादिना च अज्ञानस्य निवृत्तेः असम्भव इति लौकिकप्रत्यासत्त्यजन्यत्वजन्यत्वापरोक्षत्वप्रमाणत्वरूपज्ञानविशेषणानि । अविद्याकार्यादौ संवाद्य-परोक्षव्यवहारतत्प्रागभावयोश्च अतिव्याप्तिवारणाय क्रमेण स्वजन्यानपेक्षत्वरूपं निवृत्तिविशेषणम् । निवृत्तिप्रतियोगित्वविशेषणं अभावविलक्षणत्वविशेषणं चेति द्रष्टव्यम् । स्वपदं च अज्ञानपरं न समभि-व्याहृतपरम् । तेनाविद्यासम्बन्धादावतिव्याप्तिवारकं स्वजन्यानपेक्षत्वविशेषणं न व्यर्थमिति बोध्यम् । द्वितीयेऽपि ब्रह्मण्यन्तःकरणे भूतसूक्ष्मे च अतिव्याप्तिवारणाय क्रमेण पदत्रयम् । एकैकगुणाश्रयत्वं केवलसात्त्विकज्ञानेन्द्रियादिषु केवलराजसकर्मेन्द्रियादिषु केवलतामसघटादिषु च अतिव्याप्तमिति तृतीयोपादानम् । तृतीयेऽपि ब्रह्मणि वियदादौ अविद्यासम्बन्धादौ च अतिव्याप्तिवारणाय चित्त्वा-नधिकरणत्वभूतत्वानाश्रयत्वोपादानत्वादीनीति लक्षणत्रयं निरस्तम् ।

त्वयाऽलौकिकप्रत्यासत्तेरनभ्युपगमेन प्रथमलक्षणेऽप्यापत्त्याऽप्रसिद्धेः । जीवन्मुक्तिकालीनाज्ञान-स्योक्तरीत्या निवृत्त्यभावेन तत्राव्याप्तेः । अविद्यासम्बन्धादिनिवृत्तेरुक्तरीत्याऽविद्यानिवृत्तिसमानकाली-नत्वेन स्वजन्यानपेक्षत्वविशेषणवैयर्थ्यात् । अज्ञाननिवृत्तेरविनाश्यात्मस्वरूपत्वाभ्युपगमेन जन्यता-धिकरणत्वविशेषणाभावेन तत्प्रतियोगित्वस्य ब्रह्मावरकाज्ञानेऽव्याप्तेः । प्रातिभासिकोपादानाज्ञाने-ऽभावविलक्षणत्वाभावाच्चेति द्वितीयलक्षणमपि न सम्यक् ।

अज्ञानस्य पारमार्थिकसत्त्वात् । एतावन्तं कालं मम शुक्त्यज्ञानमासीदित्यादि प्रत्यक्षेण, 'माया चाविद्या च स्वयमेव भवति', 'तम आसीदि'त्यादि श्रुत्या, च तत्रापि पारमार्थिकत्वस्याभ्युपगन्त-व्यत्वात् । अन्यथा 'सत्यं ज्ञानं', 'अस्ति ब्रह्मेति चेद्वेदे'त्यादि श्रुत्या ब्रह्मण्यपि तन्न सिद्ध्येत् । न च अज्ञाने कालसम्बन्धित्वरूपमेव सत्त्वं प्रमाणेन विषयीक्रियते ब्रह्मणि पारमार्थिकसत्त्वमिति वाच्यम् । विशेषहेत्वभावात् । वैपरीत्यापत्तेश्चेति । तृतीयलक्षणमपि अयुक्तम् । वियदादिकार्यं प्रति विवर्ताधि-ष्ठानतया ब्रह्मण एवोपादानत्वेन अज्ञानस्य तदभावात् । काचकामलादिदोषवदज्ञानस्य निमित्तत्व-मात्रेण ब्रह्मणो विवर्ताधिष्ठानत्वोपपादनसम्भवेन तदर्थं परिणामिकारणस्य अस्वीकार्यत्वाच्च । एवं ज्ञानत्वेन स्वजन्यानपेक्षज्ञानजन्यनिवृत्तिप्रतियोगित्वं अज्ञानत्वं इत्यादीनि अज्ञानलक्षणान्तराण्यपि निरसनीयानीति ॥

*॥ इति अविद्यालक्षणभङ्गः ॥ ३ ॥*



# ४. अज्ञाने प्रत्यक्षप्रमाणभङ्गः

किञ्च अज्ञाने किं प्रमाणम्। न तावदहमज्ञो मामन्यं च न जानामीत्यादि प्रत्यक्षम्। त्वन्मतेऽहमिति प्रतीयमानस्याहङ्कारत्वेन तदाश्रयत्वेन प्रतीयमानाज्ञानस्य चिन्मात्राश्रितत्वदभिमतभावरूपाज्ञानत्वायोगात्। न चायो दहतीतिवच्चिदहङ्कारयोस्तादात्म्याध्यासेन अहमज्ञ इत्यादिप्रतीतेः चिन्मात्राश्रिताज्ञानविषयत्वं युक्तमिति वाच्यम्। अयो दहतीत्यत्र अन्वयव्यतिरेकवत् तादात्म्याध्यासेन अहमिति प्रतीयमाने चैतन्यस्यापि प्रवेश इत्यत्र प्रमाणाभावात्। न च अहङ्कारस्यागन्तुकतया अनाद्यज्ञानाश्रयत्वं न सम्भवतीति चितोऽपि तत्र प्रवेश इति वाच्यम्। सर्वावस्थायामहमिति प्रतीयमानस्यागन्तुकत्वासिद्धेः। न च न किञ्चिदवेदिषमिति सौषुप्तिकपरामर्शेन न विजानाम्ययमहमस्तीत्यादि सुप्तिविषयश्रुत्या चाहङ्कारस्यागन्तुकत्वं सिद्ध्यतीति वाच्यम्। अहङ्कारस्यापि सुखमहमस्वाप्समिति परामर्शविषयत्वेन तस्य न किञ्चिदवेदिषमित्युक्तपरामर्शविषयत्वायोगात्। अन्यथा त्वद्रीत्या सुप्तिकालाज्ञानचैतन्यानामपि सौषुप्तिकानुभवविषयत्वप्रसङ्गात्। न च सुप्तोत्थितस्य सुखमहमस्वाप्समिति परामर्शः तत्कालोत्पन्नाहङ्कारविषय इति वाच्यम्। सुषुप्तिकालादीनामपि तथात्वापत्तेः। न विजानाम्ययमहमस्तीति सुषुप्तिविषयश्रुतेश्च नात्मानं न यत्रांश्चैवेत्यादि श्रुतेरिव औत्तरीयकपरामर्शविषयातिरिक्तविषयत्वस्यैवोचितत्वात्। अन्यथा नात्मानमिति श्रुत्या आत्मनोऽपि सुषुप्तावप्रकाशापत्तेः इति।

किञ्च अतीते परकीये च सुखादौ शुक्तिरूप्यादौ च ज्ञातैकसति 'न जानामी'ति प्रत्ययस्य ज्ञानाभावविषयत्वस्य क्लृप्तत्वेनाहमज्ञ इत्यादेरपि ज्ञानाभावविषयत्वमेवोचितम्। नन्वतीते परकीयसुखादौ च 'अस्ति प्रकाशत' इति व्यवहारसामग्रीकालीनविपरीतव्यवहाराभावेन तद्व्यवहारोन्नेयावरणादिमदज्ञानानावश्यकतया न जानामीति प्रत्ययस्य तत्रागत्या ज्ञानाभावविषयत्वेऽपीह तादृशव्यवहारोन्नेयस्य तादृशाज्ञानस्यावश्यकत्वेन अहमज्ञ इत्यादि प्रत्ययस्य तद्विषयत्वत्यागायोगादिति चेन्न।

आत्मनोऽप्यहमस्मीति सर्वथा प्रतीयमानतया व्यवह्रीयमाणतया च 'नास्ति न प्रकाशत' इति व्यवहाराभावेन तादृशव्यवहारोन्नेयस्यावरणशक्तिमदज्ञानस्य तत्राप्यनावश्यकतया अहमज्ञ इत्यादि प्रतीतेरविज्ञातविशेषाभावविषयत्वौचित्यात्। न च स्वरूपमात्रव्यवहारस्यानन्दव्यवहारस्य चेदानीमभावेन तादृशव्यवहारोन्नेयावरणशक्तिमदज्ञानं तत्रावश्यकमिति स्वरूपमात्रव्यवहारस्य अप्रसिद्धत्वात्। अपरिच्छिन्नानन्दव्यवहारस्य अज्ञानकार्यत्वेन मोक्षे तदभावादेव तदभावात्। जीवन्मुक्तिकाले अपरिच्छिन्नानन्दव्यवहारोऽस्तीति चेन्न। आवृत्त्य विक्षिपतीति न्यायेन तदानीमप्यावरणशक्तिमदज्ञानस्य

आवश्यकत्वेन अपरिच्छिन्नानन्दव्यवहारस्य अयोगात् । अन्यथा शुक्तिरूप्यादिस्थलेऽप्यधिष्ठानतत्त्व-साक्षात्कारानन्तरं रजतादिविक्षेपप्रसङ्गात् । अपरिच्छिन्नानन्दस्य चिन्मात्रतया चिन्मात्रव्यवहारस्य च सर्वदा सत्त्वेन तत्प्रतिबन्धकतयावरणशक्तिमदज्ञानकल्पनानुपपत्तेश्च । तस्मादतीतसुखादौ न जानामीति प्रत्ययस्य ज्ञानाभावविषयत्वस्य क्लृप्ततया अहमज्ञ इत्यादावपि तद्विषयत्वमेव युक्तम् ।

एतेन अतीते परकीये च सुखादौ न जानामीति प्रत्ययस्य तदवच्छिन्नचैतन्यगतमूलाज्ञानविषय-त्वेन ज्ञानाभावविषयत्वं असम्प्रतिपन्नमिति निरस्तम् ।

अतीतसुखादेः अविद्यमानतया चैतन्यावच्छेदकत्वायोगेन तदवच्छिन्नस्य मूलाज्ञानाश्रयत्वा-योगात् । सूक्ष्मरूपेणातीतमपि विद्यत इति चेन्न । व्याघातात् । तदुपादानमेव विद्यत इति तदुक्तेः पर्यवसानात् । उपादानोपादेययोरत्यन्तभेदाभ्युपगमाच्च । किञ्च मूलाज्ञानस्य सुखं न जानामि शुक्तिरूप्यं न जानामीत्यज्ञानप्रकारीभूते सुखत्वरूप्यत्वादिप्रकारकत्वायोगेन तस्य सुखं न जानामीति प्रतीति-विषयत्वायोगः । तस्य निर्विशेषचिन्मात्रविषयत्वात् । अपि च सुखं न जानामीत्यत्रोभयसिद्धज्ञाना-भावविषयत्वसम्भवे अप्रामाणिकसुखदुःखावच्छिन्नचैतन्यगताज्ञानविषयत्वस्वीकारप्रसङ्गः । अपि च एवमभावपदार्थमात्रमुच्छिद्येत । घटो नास्ति घटं न साक्षात्करोमि घटं नानुमिनोमि न करोमि न द्वेष्मी-त्यादीनामपि भावरूपाज्ञानवद् भावरूपपदार्थान्तरत्वप्रसङ्गात् ।

किञ्च अतीतसुखादिविषयकस्य न जानामीति प्रत्ययस्य तदवच्छिन्नचैतन्यगताज्ञानविषयत्वे वर्तमानसुखादावपि तदवच्छिन्नचैतन्यगताज्ञानस्य सत्त्वेन तदपेक्षावभासो न स्यात् । न जानामीति प्रतीतिश्च स्यात् । न च तत्र विद्यमानमपि अज्ञानं तदा वर्तमानसुखादिविषयकापरोक्षप्रतिबन्धका-वरणाजनकमिति तदपरोक्षप्रतिभासो युज्यते । जानामीति व्यवहारसामग्रीप्राबल्येन तदा न जानामीति व्यवहाराभावश्चेति वाच्यम् । तथापि वर्तमाने परकीयसुखादौ न जानामीति प्रत्ययस्य तदवच्छिन्न-चैतन्यगताज्ञानविषयत्वानुपपादनात् । न हि एकं एकेनावृतं चेति युज्यते । ज्ञानभेदादुपपद्यत इति चेन्न । पुरुषभेदेऽप्यावरणविषयस्यैकत्वे अन्धकारावृतघटादिवत् तस्य सर्वान्प्रत्यावृतत्वावश्यंभावात् । अन्यं प्रत्यनावृतत्वे स्फीतालोकमध्यवर्तिघटवदन्यं प्रत्यप्यनावृतत्वावश्यंभावाच्च । एकस्यैव वह्नेः प्रहरमेनं मा दहेत्यभिसन्धिपूर्वकमन्त्रप्रतिबद्धस्य पुरुषविशेषं प्रत्यप्रतिबद्धत्वेऽपि एकविषयकावरणे अन्धकारादौ तथात्वादर्शनाच्च ।

एतेन अतीतसुखादौ तदवच्छिन्नचैतन्यविषयस्य पुरुषगतस्य परोक्षप्रमानिवर्त्यस्य मौढ्यरूपा-ज्ञानस्य अङ्गीकारात् तद्विषयस्य न जानामीति प्रत्ययस्य ज्ञानाभावविषयत्वं न सम्प्रतिपन्नमिति निरस्तम् ।

मौढ्यस्य 'पृच्छामि त्वां धर्मसम्मूढचेता' इत्यादिस्मृत्या मनोधर्मत्वावेदनेन तादृशमनोधर्मविषयत्वेनातीतं सुखं न जानामीत्याद्यनुभवोपपत्त्या तस्य भावरूपत्वेऽपि त्वदभिमताज्ञानरूपत्वासिद्धेः । अहमज्ञ इत्याद्यनुभवस्यापि निरुक्तमौढ्यविषयत्वोपपत्तेः ।

ननु परोक्षप्रमानिवर्त्येन प्रमातृगतेन मौढ्यरूपाज्ञानेन शुक्तिरूप्यवियदादिकार्यानिर्वाहात् तन्निर्वाहाय विषयगतमधिष्ठानापरोक्षज्ञानापरोक्षनिवर्त्यं मदभिमतमज्ञानान्तरमपि स्वीकार्यमिति चेन्न । तादृशविषयावरकाज्ञानान्तरसत्त्वे परोक्षतो ज्ञातेऽपि न जानामीत्यनुभवस्य व्यवहारयोर्वज्रलेपत्वात् । न जानामीति प्रत्ययश्च त्वदभिमतमौढ्यरूपाज्ञानैकप्रयोज्य इत्यत्र प्रमाणाभावात् । अज्ञानरूपविषयस्यापि सत्त्वे तस्य ज्ञातैकसत्त्वाभ्युपगमेन तद्व्यवहारस्याप्यवर्जनीयतया जानामीति व्यवहारसामग्रीप्राबल्यकल्पनायोगाच्च । वैपरीत्यापत्तेश्च । न जानामीत्यनुभवव्यवहाराभावेऽपि विषयगताज्ञानस्य असिद्धिप्रसङ्गाच्च । न च रूप्यवियदाद्यकार्यार्थतत्कल्पनमित्युक्तमिति वाच्यम् । कार्यस्य काचकामलादि पुण्यपापादिदोषसहकृतशुक्तिब्रह्मविवर्ततया परिणाम्यपेक्षाभावेन तत्कल्पनायोगात् । न च पुण्यपापादेर्दोषत्वाभावः । क्वचित्कश्चिद्दोष इत्यभ्युपगमात् । त्वदभिमताज्ञानमेव दोषो न तु कर्मेत्यत्र प्रमाणाभावात् । क्लृप्तकर्मणामेव दोषत्वकल्पनौचित्याच्चेति ।

किञ्च त्वन्मते जडावरकाज्ञानाभावेन घटं न जानामीति प्रत्ययस्य ज्ञानाभाववद् अहमज्ञ इत्यादि प्रत्ययस्यापि तद्विषयत्वं युक्तम् । न च जडेऽज्ञानाभावेऽपि तदवच्छिन्नचैतन्ये तत्सत्त्वेन घटं न जानामीति प्रत्ययस्य तद्विषयत्वमिति वाच्यम् । तथात्वे घटं जानामीत्यादि प्रतीतेरपि घटाद्यवच्छिन्नचैतन्यमात्रविषयत्वापत्तेः । न चेष्टापत्तिः । घटज्ञानेनापि चिन्मात्रगताज्ञाननिवृत्तिप्रसङ्गात् । श्रवणादावप्रवृत्त्यापत्तेश्च ।

न च श्रवणादिसाध्यमेव ज्ञानमज्ञाननिवर्तकमिति नियमोऽभ्युपगम्यत इति वाच्यम् । शुक्त्यादितत्त्वसाक्षात्कारेण अज्ञानस्य अनिवृत्तिप्रसङ्गात् । न च श्रोतव्यो मन्तव्य इत्यादि श्रुतिबलादात्मज्ञान एव तथा नियमोऽभ्युपगत इति वाच्यम् । त्वन्मते निर्विशेषचिन्मात्ररूपाविद्यानिवृत्तौ नियमादिदृष्टसाध्यस्य कस्यापि अभावात् । श्रोतव्य इत्यादेः नित्यानुवादत्वोपपत्तेश्च । न च सच्चिदानन्दादिरूपेणात्मज्ञानमज्ञाननिवर्तकम्, घट इति ज्ञानं तु न तादृशमिति वाच्यम् । सन्घटः स्फुरति प्रिय इत्यादि प्रतीत्या तन्निवृत्त्या अयं घट इति ज्ञानेनापि घटावच्छिन्नचैतन्यगताज्ञाननिवृत्त्यभ्युपगमाच्च । अज्ञाननिवर्तकस्य त्वया नित्यप्रकारत्वाभ्युपगमाच्च । न च घटादीनां जडत्वेन तत्र न जानामीति प्रत्ययस्य तदवच्छिन्नचैतन्यगताज्ञानपर्यन्तधावनं जानामीत्यादेः घटादिमात्रविषयत्वे बाधकाभावेन ज्ञानविषयत्वसम्भवेन च,

न चैतन्यपर्यन्तानुधावनमिति वाच्यम् । त्वया ब्रह्मणः सर्वप्रत्ययवेद्यत्वाभ्युपगमात् । घटादिषु जडत्वस्याज्ञानविषयत्वविरोधित्ववत् सदा स्वतःस्फुरदात्मत्वस्यापि तद्विषयत्वविरोधित्वात् । तस्मात् घटं न जानामीत्यादि प्रत्ययस्य अनुभवविरोधेन घटविषयत्वे दुर्वारे तस्य त्वद्रीत्या ज्ञानाभावविषयत्वेन अहमज्ञ इत्यादि प्रतीतेरपि विषयत्वं दुर्वारम् ।

अस्तु वा जडेऽज्ञानावरणं तथापि यत्र परोक्षतो ज्ञायमानेऽर्थे शब्दाभासादिना विशेषोत्पत्तिः तत्र तन्निर्वाहार्थं विक्षेपशक्तिमदज्ञानमावश्यकमिति तत्र न जानामीतिप्रत्ययप्रसङ्गो दुर्वारः । ननु परोक्षभ्रमस्थलेऽर्थोत्पत्तेरङ्गीकारात्, ज्ञानस्यान्तर्वर्तित्वेन विषयनिष्ठत्वाभावादयोग्यतानिश्चयेन तत्र शाब्दभ्रमानुत्पत्तेश्च, न जानामीति प्रत्ययापादनमयुक्तमिति चेन्न । अपरोक्षभ्रमस्थले अपरोक्षानिर्वचनीयात् परोक्षभ्रमस्थलेऽपि परोक्षानिर्वचनीयोत्पत्तेरङ्गीकार्यत्वात् । विशेषनियामकाभावात् । न च अपरोक्षप्रतीतेः विषयाविनाभूतत्वात् तत्रानिर्वचनीयार्थोत्पत्तिरङ्गीक्रियते । न तु परोक्षप्रतीतेरपि । विषयं विनापि तदुत्पत्तेरिति वाच्यम् । भूतले घटो नास्ति सोऽयं गकार इत्याद्यपरोक्षज्ञाने सामान्यलक्षणादिजन्यापरोक्षज्ञाने आहार्यापरोक्षभ्रमे च विषयाविनाभावादर्शनेन रजतापरोक्षभ्रमादावप्यनिर्वचनीयरजतोत्पत्तेरनभ्युपेयत्वात् । अपरोक्षज्ञानमात्रे विषयाविनाभावाभावेऽपि क्वचित्तदभ्युपगमे च परोक्षस्थले सर्वत्र तदनभ्युपगमे क्वचिद्विषयसत्त्वदर्शनात् । उक्तस्थलेऽपि तदङ्गीकारो दुर्वारः । न च परोक्षतो ज्ञायमाने घटे योग्यताव्यतिरेकनिश्चयात् ज्ञानमेव नोदेतीति वाच्यम् । तन्निश्चयेऽपि वादिप्रतिवादिनोः तत्तद्वाक्येन तत्तदर्थविषयकज्ञानोदयदर्शनात् । अन्यथा वादिप्रतिवादिनोः कथा बधिरकलह एव स्यात् इति दिक् ।

किञ्च मयि ज्ञानं नास्तीतिवद् अहमज्ञ इत्यादि प्रतीतेरपि ज्ञानाभावविषयत्वमेव । 'भूतले घटाभावः', 'अघटं भूतलमि'ति प्रतीत्योरिव विशेषणविशेष्यव्यत्यासमात्रं विशेषः । अन्यथा अघटानिच्छाद्वेषाकृत्यसाक्षात्कारानुमित्यादिकमपि भावरूपं सिद्ध्येत् इत्युक्तम् ।

एतेन त्वदुक्तयुक्त्यैव अहमज्ञ इति ज्ञानवत् मयि ज्ञानं नास्तीति अपरोक्षज्ञानस्य ज्ञानास्तित्वविरोधिभावपदार्थविषयत्वमेवेति निरस्तम् । तस्मात् अहमज्ञ इत्यादि प्रतीतेः ज्ञानाभावविषयत्वमिति स्थितम् ।

ननु तत्र न तावदज्ञानसामान्याभावो विषयः । धर्मिप्रतियोगिज्ञानविरोधात् । अहमज्ञ इति ज्ञानविरोधाच्च । ज्ञानसामान्यात्यन्ताभावयोरात्मन्यसम्भवाच्च । सामान्यप्रागभावप्रध्वंसयोरनङ्गीकाराच्च । अत एव न यावद्विशेषाभावकूटो विषयः । विरोधादेव । नापि यत्किञ्चिज्ज्ञानविशेषाभावो विषयः ।

ज्ञानविशेषोल्लेखापत्तेरिति चेन्न । भावरूपाज्ञानवादेऽप्येतद्दोषसाम्यात् । न तावदज्ञानं ज्ञानमात्रविरोधि । यत्किञ्चिदज्ञानस्य सर्वथा सत्त्वेन अज्ञानस्वरूपस्यालाभापत्तेः । नापि ज्ञानविशेषविरोधि । ज्ञान-विशेषोल्लेखापत्तेरिति । तथापि वस्तुतो ज्ञानस्य ज्ञानविशेषविरोधित्वाननुभवेऽपि अहमज्ञो मामन्यं च न जानामीति ज्ञानसामान्यविरोधित्वावेदकशब्देनानुवादः । ब्राह्मणविशेषविरोधिनि कस्मिंश्चिदयं ब्राह्मणविरोधीति ब्राह्मणमात्रविरोधित्वावेदकशब्देन अनुवादवदिति चेत् । समं प्रकृतेऽपि । अत एव प्रागभावप्रध्वंसयोः विशेषप्रतियोगिकत्वेनानुभवेऽपि कपाले घटो नासीद्भविष्यति भूतले घटो ध्वस्त इति घटत्वादिसामान्यधर्मपुरस्कारेणानुवादः ।

नन्वहमज्ञ इत्यादि प्रतीतेः ज्ञानविशेषाभावविषयत्वमपि न युक्तम् । यत्किञ्चिज्ज्ञानविशेषस्य सर्वथा सत्त्वादिति चेत् । भ्रान्तोऽसि । न हि वयं विद्यमानज्ञानविशेषाभावविषयत्वं ब्रूमः । किन्तु यत्तदा नासीदुत्पत्स्यते तत्प्रतियोगिकाभावविषयत्वमिति ।

एतेन अभावत्वेनाभावविशेषगोचरसाक्षात्कारस्य प्रतियोगिविशेषोल्लेखनियमाद् अहमज्ञ इति प्रत्ययादीनां न ज्ञानविशेषाभावविषयत्वमिति । अन्यथाज्ञातेऽपि घटे न जानामीति प्रतीत्यापत्तिरिति निरस्तम् ।

अहमज्ञो न जानामीत्यस्य व्यवहारमात्रत्वात् । प्रतीत्या प्रतियोगिविशेषस्यैवोल्लेखात् । विशेष-प्रतियोगिकाभावप्रतीतेः सामान्यधर्मपुरस्कारेणाभिलापादर्शनाच्च । येनाकारेण प्रतीतिः तेनाकारेण व्यवहर्तव्यमिति नियमाभावात् । केनचिदाकारेण ज्ञातेऽपि घटे प्रकारान्तरेण ज्ञानविशेषाभावमादाय न जानामीति प्रतीत्यापादानस्येष्टत्वात् । सर्वथा ज्ञाते घटे न जानामीति प्रतीत्यापादनस्य आपा-दकाभावेनायोगात् ।

किञ्चाहमज्ञो मामन्यं च न जानामीत्यादिप्रतीतेर्भावरूपाज्ञानविषयत्वमभ्युपगच्छता क्वचिज्ज्ञाना-भावोऽभ्युपगम्यते न वा । न द्वितीयः । घटाद्यभावानामनभ्युपेयत्वप्रसङ्गात् । विशेषहेत्वभावात् । न चेष्टापत्तिः । घटाद्यभावानामनुपलब्धिप्रमाणकत्वाभ्युपगमविरोधात् । न प्रथमः । धर्मिप्रतियोगि-ज्ञानेन विरोधात् ।

नन्वस्मन्मते ज्ञानाभावो न साक्षिप्रत्यक्षगोचरः । किन्तु लिङ्गेनानुपपत्त्या अनुपलब्ध्या वा अध्यवसेयः । तत्र ज्ञानसामान्याभावस्य यावद्विशेषाभावकूटस्य वा पूर्वकालीनस्य क्वचिद्भावरूपाज्ञानेन क्वचिज्ज्ञानसामग्रीविरहेण इदानीमनुमाने इदानींतनधर्मिप्रतियोग्यादिज्ञानं न विरोधीति चेत् । तर्हि

तद्रीत्यैवाहमज्ञो न जानामीति प्रतीतेरनुपपत्त्या अनुपलब्ध्या वा ज्ञानाभावविषयत्वसम्भवेन त्वदभिमताज्ञानासाधकत्वप्रसङ्गात् । किञ्च त्वन्मतेऽपि प्रतियोगित्वाभिमतज्ञानज्ञानस्य वृत्तिरूपस्य विषयतया तदवच्छेदकविषयविषयत्वाद्विरोधतादवस्थ्यम् । वृत्तिज्ञानस्य प्रतियोगिभूतज्ञानविषयत्ववत्स्वातन्त्र्येण तदवच्छेदकविषयविषयकत्वादविरोध इति चेत् । ज्ञानाभावस्य साक्षिविषयत्वपक्षेऽप्येवमेव विरोधसम्भवात् । न च अस्मिन्मते धर्मिप्रतियोग्यंशे साक्षिरूपमेव ज्ञानम् । न वृत्तिरूपम् । तच्च नात्मवृत्ति । तस्मिन् सत्यपि तद्वति वृत्तिघटज्ञानाभावानुमानं न विरुध्यत इति वाच्यम् । धर्मिप्रतियोग्यंशे तज्ज्ञानं साक्षिरूपमित्यत्र मानाभावात् । वैपरीत्यस्यापि सुवचत्वात् । विशेषहेत्वभावात् । साक्षात्साक्षिविषयस्य विद्यमानत्वनियमेन प्रतियोगिभूतज्ञानस्य साक्षिविषयत्वायोगाच्च । अविद्यमानस्यापि साक्षात् तद्विषयत्वे सर्वदा तदुल्लेखापत्तेश्च । न च अभावज्ञाने प्रतियोग्यंशेऽभावविषयकवृत्तेरेव साक्षिसम्बन्धघटकत्वेन न सर्वदा ज्ञानप्रसङ्ग इति वाच्यम् । केवलाभावविषयकापरोक्षवृत्तेः क्वाप्यदर्शनेन प्रतियोगिविशिष्टाभावविषयके वक्तव्ये विशिष्टविषयकवृत्तेश्च प्रतियोगिज्ञानं विना अयोगात् । साक्षिणश्चातीतप्रतियोगिज्ञानत्वस्य विशिष्टविषयकवृत्तिरूपसम्बन्धाधीनतया अन्योन्याश्रयात् । अन्यविषयकवृत्तेरन्यसम्बन्धघटकत्वायोगात् । अन्यथा अतिप्रसङ्गात् । अभावविषयकवृत्तेः प्रतियोगिभूतज्ञानविषयत्वे सम्बन्धघटकत्वायोगाच्च ।

एतेन अविद्यावृत्त्यभिव्यक्तसाक्षिचैतन्यमेव घटज्ञानादिप्रतियोगिविषयकं ज्ञानम् । न च तद्घटं न जानामीति घटज्ञानाभावानुभवविरोधि । घटं न जानामीत्यत्र घटविषयकप्रमाणज्ञानानुभवात् । घटं न जानामीति ज्ञाततापादकस्यैव प्रमाणज्ञानत्वात् । उक्तं च विवरणे 'ज्ञाततया विषयः प्रमाणवृत्तिमपेक्षत इती'ति निरस्तम् ।

अहमज्ञ इत्यादिप्रतीतेरभावविषयत्वेऽप्येवमविरोधस्य वक्तुम् अशक्यत्वात् । तस्मात् त्वन्मते वेदान्तश्रवणादिसाध्यमोक्षहेतुब्रह्मज्ञानप्रागभावज्ञानवत् साक्षिवेद्यघटादिप्रमाणवृत्त्यभावज्ञानवच्च अहमज्ञो मामन्यं न जानामि इत्यादावपि ज्ञानविशेषाभावज्ञानं विरुद्धम् । विरुद्धत्वं च भावरूपाज्ञानपक्षेऽपि मानम् । तस्य ज्ञानविरोधित्वेनैव अनुभवात् ।

ननु मूढोऽहं मूढोऽहमितिवदखण्डमेवाज्ञानमनुभूयते । अज्ञानशब्दस्य मुग्धमूढादिपर्युषणस्य अश्वकर्णादिशब्दवदनुद्भूतावयवशक्तिकस्य अखण्डार्थत्वादिति चेन्न । शब्दादखण्डस्योपस्थितावपि न जानामीति प्रतीतेः ज्ञानविरोधिविषयकत्वेन विरोधतादवस्थ्यात् । मुग्धमूढादिशब्देष्वपि प्रलयनाशादिशब्दवत् नञुल्लेखाभावेऽप्यभावेऽपि अभावविषयत्वेन दृष्टान्तासम्प्रतिपत्तेः ।

प्रलयादिपदार्थे प्रतियोगिप्रतीत्यपेक्षा न मुग्धादिशब्देष्वित्येतच्च साहसमात्रम् । वैपरीत्यस्यापि सुवचत्वात् । अज्ञानमिति ज्ञानपर्युदासेन जडात्मिकाविद्याशक्तिरुच्यत इति पञ्चपादिकाविरोधाच्चेति दिक् । तदेवमहमज्ञो मामन्यं च न जानामि त्वदुक्तमर्थं न जानामीत्यादिप्रत्यक्षं न पराभिमतभाव-रूपाज्ञाने मानम् ।

यत्तु सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति परामर्शसिद्धं सौषुप्तिकप्रत्यक्षमपि भावरूपाज्ञाने मानमिति । तन्न । तस्य सौषुप्तिकज्ञानाभावविषयत्वेनाप्युपपत्तेः ।

ननु सौषुप्तिकज्ञानाभावस्य न साक्षिविषयत्वं युक्तम् । प्रतियोगिविशेषज्ञानं विना तदयोगात् । साक्षिण एव तद्विषयत्वे च तस्यैव प्रतियोगिभूतज्ञानावच्छेदकसकलार्थविषयकज्ञानत्वेन तत्सत्त्वे तज्ज्ञानासम्भवात् । न च साक्षिणि प्रतियोगिभूतज्ञानमात्रं विषयः । न तु तद्विषयोऽपीति युक्तम् । न किञ्चिदवेदिषमिति तदनुवादविरोधात् । ज्ञानगोचरापरोक्षज्ञानस्य विषयालिङ्गितज्ञानगोचरत्वनियमात् ससम्बन्धिकनिरूपणस्य सम्बन्धितावच्छेदकरूपवत्तया सम्बन्धिविषयत्वनियमाच्चेति चेन्न । भावरूपा-ज्ञानपक्षेऽपि एतद्दोषसाम्यात् । ज्ञानवदज्ञानस्यापि सविषयत्वात् ससम्बन्धिकत्वाच्च ।

ननु सुषुप्तावज्ञानं विषयीकुर्वत् साक्षिज्ञानमवच्छेदकतया तद्विषयमपि विषयीकरोति । न च तावता विरोधः । प्रमाणवृत्तेरेव तद्विरोधित्वात् । प्रमाणवृत्तेश्च तदाऽभावात् । तत्सत्त्वे सुप्तिव्याको-पात् । सकलजन्यज्ञानोपरमस्यैव सुप्तित्वादिति चेन्मैवम् । अभावविषयत्वपक्षेऽप्येवं परिहारसम्भवा-दित्यलं पिष्टपेषणेन ।

किञ्च न किञ्चिदवेदिषमिति परामर्शसिद्धसौषुप्तिकानुभवस्य भावरूपाज्ञानविषयत्वमभ्युपगच्छता सुषुप्तौ ज्ञानाभावोऽभ्युपगम्यते न वा । द्वितीये सुप्तिविरोधात् । ज्ञानाभावाभावे ज्ञानसत्त्वावश्य-म्भावात् । घटाद्यभावासिद्धिप्रसङ्गाच्च । आद्ये किं तत्सिद्धिः किं परामर्शसिद्धसौषुप्तिकप्रत्यक्षेण प्रमाणा-न्तरेण वा । नाद्यः । त्वदुक्तविरोधात् । वृत्तप्रत्यक्षस्यैव तद्विषयत्वसम्भवाच्च । अत एव न द्वितीयः ।

एतावांस्तु विशेषः । सुप्तिकालीनज्ञानाभावोऽस्मन्मते साक्षिविषयः त्वन्मते प्रमाणान्तरविषय इति । वस्तुतस्तु सुप्तिकालीनज्ञानाभावो मानान्तरेण सिद्ध्यति इति अनुपपन्नम् । बहुकल्पना-प्रसङ्गात् । सुप्तोत्थितस्य न किञ्चिदवेदिषमिति परामर्शस्याज्ञानाद्यंशे सौषुप्तिकानुभवमूलत्वम् । ज्ञाना-भावांशे सुप्तोत्थित्यनन्तरावतीर्णानुमानादिरूपमानान्तरजन्यानुभवमूलत्वमिति कल्पनीयत्वात् । न च तथा कल्पनं युज्यते । सुप्तोत्थितस्य व्याप्त्याद्यनुसन्धानप्रयुक्तविलम्बं विनैव हठात्परामर्शोदयात् । किञ्च परामर्शकल्पितसौषुप्तिकानुभवस्य भावरूपाज्ञानविषयत्व इव ज्ञानाभावविषयत्वेऽनुपपत्ति-

तत्परिहारयोः अविशेषाक्लृप्तज्ञानाभावविषयत्वस्वीकार एव न्याय्यः । न तु अक्लृप्तभावरूपाज्ञानविषयत्वस्वीकारः । न किञ्चिदवेदिषमिति प्रत्ययस्य यः परामर्शविषयत्वे विप्रतिपद्यते तं प्रति समाधानं त्वयापि कर्तव्यमिति नास्माकमतीवातुरः । किन्तु त्वत्पक्षे एव समाधानं वक्तव्यम् । न किञ्चिदवेदिषमिति प्रत्ययस्य अज्ञानांशे परामर्शत्वं, अहङ्कारांशे त्वपरोक्षत्वमिति क्षरतिरन्तनः प्राह । न च अहङ्कारस्य सौषुप्तिकेन तदनुभवाभावेऽपि तत्पूर्वजागरादौ अनुभूताहङ्कारस्य सुषुप्त्यनुभूताज्ञानादेश्च भिन्नकालानुभूतकोटिद्वयस्य स्मरणवत् परामर्शोपपत्तेरिति वाच्यम् । परामर्शनिर्वाहार्थं तत्कालीनाहमर्थस्य स्वीकर्तव्यत्वेन तद्विषयतयैवोपपन्नस्य परामर्शस्य सुप्तिपूर्वकालीनाहङ्कारविषयत्वकल्पना न न्याय्या । किञ्च त्वन्मते सुप्तावज्ञानानुभविता न अहङ्कार इति तस्य कथं सुप्त्यनन्तरं तत्परामर्शकत्वं न ह्यन्यानुभूतमन्येन स्मर्यते । न चाविद्योपहितचैतन्यमेव अज्ञानानुभवितृ परामर्शः । किञ्च तत्र दैववशसम्पन्नोऽयं अहङ्कारः परामृष्टकोटितया च भासत इति वाच्यम् । अविद्योपहितत्वे तदवभासकचैतन्यस्य नित्यत्वेन ह्यन्धकाराजनकत्वेन तदभावे परामर्शानुपपत्तेः । न च परामर्शरूपकार्यबलेन अविद्यावृत्तिप्रतिबिम्बितचैतन्यमेवाविद्याभासकं तस्य च अनित्यत्वात् संस्कारसम्भवेन परामर्शोपपत्तिरिति वाच्यम् । सुप्तित्वव्याकोपात् । व्यवहारौपयिकवृत्तिमात्रविलयस्यैव सुप्तित्वात् । एवञ्च सुषुप्तिकाले सकले विलीन इति श्रुतिरर्थानुकूलिता भवति ।

ननु तवापि सौषुप्तिकानुभवेन कथं परामर्शनिर्वाहः । तस्य नित्यत्वेन संस्काराजनकत्वादिति चेन्न । स्मरामि इत्यनुभवेन स्मरणे सिद्धे तन्निर्वाहाय, अहमित्यनुभवेनापि संस्कारजननाभ्युपगमात् । मयाप्येवं अङ्गीक्रियत इति चेत् न । अपसिद्धान्तात् । न चैवमीश्वरस्यापि स्मरणप्रसङ्गः । ईश्वरस्य स्मरणानुभवे ज्ञानाभावात् । कार्यबलेन कल्पनस्य तदभाव उपपत्तेश्चेति दिक् । तस्मात् भावरूपाज्ञाने प्रत्यक्षं न प्रमाणम् ॥

*॥ इति अज्ञाने प्रत्यक्षप्रमाणभङ्गः ॥ ४ ॥*

★ ★ ★

# ५. भावरूपाज्ञाने परोक्तानुमानप्रमाणभङ्गः

ननु भ्रान्त्यनिवर्तकं प्रमाणज्ञानं स्वजन्यव्यवहारविरोधिसमानविषयव्यवहारनिमित्तनिवर्तकं प्रमाणज्ञानत्वात् । भ्रान्तिनिवर्तकज्ञानवत् । ज्ञाननिवर्त्यः प्रागभावो ज्ञाननिवर्त्यानादेरन्यः अभावत्वात् घटाभाववत् । भावत्वं अनादिज्ञाननिवर्त्यवृत्तिसाक्षात्पदार्थविभाजकोपाधित्वात् इत्यनुमानानि

भावरूपाज्ञाने प्रमाणानि । अत्र आद्यानुमाने भ्रान्तमादाय सिद्धसाधनमिति तत् भ्रान्त्यनिवर्तकेति पक्षविशेषणम् । साध्ये विषयपदं विशेष्यपरम्, तेन दृष्टान्ते भ्रमप्रमाणजन्यव्यवहारयोरसमानविषयत्वेन न साध्यवैकल्यम् । भ्रमे व्यभिचारवारणाय प्रमाणेति । द्वितीयेऽपि घटादिप्रागभावमादाय सिद्धसाधनमिति ज्ञाननिवर्त्य इति पक्षविशेषणम् । तृतीये असिद्धसाधनवारणाय साध्ये ज्ञाननिवर्त्येति । पूर्वज्ञाननिवर्त्योत्तरज्ञानमादाय सिद्धसाधनमित्यनादेरिति । एवं तृतीयानुमानेऽप्यनादिपदकृत्यं बोध्यम् । ब्रह्मणि व्यभिचारवारणाय साक्षादितीति चेत् । अत्र ब्रूमः । आद्यानुमाने भ्रान्त्यनिवर्तकमित्यत्र किं भ्रान्तिनिवृत्तिजननस्वरूपायोग्यत्वं विवक्षितं किं वा भ्रान्तिनिवृत्तिरूपफलानुपधानम् । नाद्यः । अप्रसिद्धेः । प्रमाणज्ञानत्वस्यैव तद्योग्यतात्वात् । अन्त्येऽपि विरोधिव्यवहारनिमित्तनिवर्तकत्वस्य स्वरूपयोग्यत्वविवक्षायां भ्रान्तिं आदाय सिद्धसाधनम् । फलोपधानविवक्षायां च ज्ञानानिवर्तकभ्रान्त्यनिवर्तकानुमित्यादौ व्यभिचारः । व्यभिचारपरिहाराय साध्ये स्वरूपयोग्यत्वविवक्षायां भ्रान्तिमादाय सिद्धसाधनमित्युभयतः पाशारज्जुः । न च अनुमित्यादिस्थले तादृशव्यवहारनिमित्तस्य मौढ्यरूपाज्ञानस्य निवृत्तेः न व्यभिचार इति वाच्यम् । तथा सति अपरोक्षस्थलेऽपि तादृशमौढ्यमादाय साध्यपर्यवसानेन त्वदभिमतविषयावरकाज्ञानासिद्धिप्रसङ्गात् । 'पृच्छामि त्वां धर्मसम्मूढचेताः' इति स्मृत्या मौढ्यस्य मनोधर्मत्वावेदनाच्च । किञ्च धारावाहिकद्वितीयादिबुद्धौ धर्म्यंशप्रमायां च व्यभिचारः । न च सम्भवत्संशयकोटिताकधर्मप्रकारकयथार्थज्ञानत्वं प्रमाणज्ञानत्वं इह विवक्षितमिति न व्यभिचार इति वाच्यम् । सम्भवच्छब्दस्य वर्तमानार्थकत्वेऽसिद्धेः । त्वया भ्रान्त्यनिवर्तकत्वेन पक्षस्य विशेषितत्वात् । संशयस्यापि भ्रान्तिविशेषत्वात् । भवितुं योग्यत्वार्थकत्वे च द्वितीयादिबुद्धौ व्यभिचारतादवस्थ्यात् । अज्ञातविषयकज्ञानत्वं प्रमाणज्ञानत्वमिति विवक्षायां असिद्धिः । अज्ञातत्वस्य अज्ञानविषयत्वरूपत्वात् । किञ्च भ्रमनिवर्तकज्ञानत्वं उपाधिः । न च प्रतियोगितया विपरीतव्यवहारनिमित्ते तन्निवृत्तिजनके च व्यवहारे साध्याव्याप्तिरिति वाच्यम् । साधनावच्छिन्नसाध्यव्यापकत्वात् । न च प्रमाणज्ञानत्वमेव सामान्यरूपतयोक्तसाध्यप्रयोजकं लाघवात् । न तु भ्रमनिवर्तकज्ञानत्वम् । विशेषरूपत्वेन गौरवादिति वाच्यम् । प्रमाणज्ञानत्वस्य निरुक्तसाध्यं विनापि धर्म्यंशप्रमायां सत्त्वेन साध्यं प्रत्यप्रयोजकतया लाघवस्य अकिञ्चित्करत्वात् ।

किञ्च प्रागभावनिवृत्तिरतिरिक्तेति मते प्रमाणज्ञानप्रागभावमादाय अर्थान्तरता । अनतिरिक्तेत्यभ्युपगमे च ज्ञाननिवर्त्यः प्रागभावो ज्ञाननिवर्त्यानादेरन्य इति द्वितीयानुमानं विरुद्ध्येत । किञ्च अप्रयोजकत्वम् । न च प्रमाणज्ञानानन्तरमज्ञानं निवृत्तं इत्यनुभवाभावप्रसङ्ग एव विपक्षे बाधक इति वाच्यम् । तदनुभवस्य ज्ञानविशेषप्रागभावनिवृत्तिविषयत्वेनावश्यकत्वात् । न च भावरूपाज्ञाना-

नभ्युपगमे ब्रह्माभिन्ने प्रत्यगात्मनि स्वयंप्रकाशमाने तत्कृतावरणाभावेन तत्कर्तृत्वादिप्रतिभासाभाव-प्रसङ्ग एव विपक्षे बाधक इति वाच्यम्। उभयसिद्धकर्मादीनामेव तदावरकत्वोपपत्तेः। श्रुत्यादिप्रमाणभङ्गे चैतदुपपादयिष्यामः।

एवं द्वितीयानुमानमपि न सम्यक्। अविद्यासम्बन्धमादाय अर्थान्तरत्वात्। न चाविद्यासिद्धिं विना तत्सम्बन्धस्यैवासिद्धिः तत्सिद्धौ चार्थान्तरशङ्कानुदय इति वाच्यम्। तथापि जीवब्रह्मविभागादिना अर्थान्तरत्वस्य दुर्वारत्वात्। न हि जीवब्रह्मविभागो अविद्याधीन इत्यद्यापि सिद्धम्। जीवब्रह्मविभागा-दीनामपि साक्षाज्ज्ञाननिवर्त्यत्वस्योक्तत्वाच्च अवसानासम्भवेन तस्य साध्यवैकल्यापत्तेः। अज्ञान-सिद्धिं विना अज्ञानत्वेन ज्ञाननिवर्त्याप्रसिद्ध्या साध्याप्रसिद्धेश्च।

एवं तृतीयानुमानमपि न युक्तम्। जीवब्रह्मविभागादिकमादाय अर्थान्तरत्वात्। किञ्च घटादि-प्रागभावमादाय सिद्धसाधनम्। न च अज्ञाननिवर्त्यपदेन तद्व्यावृत्तिः। तस्यापि घटादिजनकेन मृदाद्यु-पादानगोचरापरोक्षज्ञानेन निवृत्तेः। न च अज्ञानत्वेन ज्ञाननिवर्त्यत्वं विवक्षितम्। अतो नोक्तदोष इति वाच्यम्। ज्ञानप्रागभावस्य प्रतियोगियोग्यत्वेनैव ज्ञाननिवर्त्यतदन्यत्वेन दृष्टान्ते साध्यपर्यवसानात्। अनादिभावत्वस्य अनिवर्त्यत्वव्याप्यतया तत्रानादिनिवर्त्यवृत्तित्वसाधनस्य बाधितत्वात्।

किञ्च ज्ञाननिवर्त्यवृत्तित्वं किं ज्ञानत्वेन ज्ञाननिवर्त्यवृत्तित्वं विवक्षितं यथाकथञ्चिज्ज्ञाननिवर्त्य-वृत्तित्वं वा। नाद्यः। दृष्टान्तस्य साध्यवैकल्यापत्तेः। न द्वितीयः। भावत्वं सादिज्ञानानिवर्त्यवृत्ति। साक्षात्पदार्थविभाजकोपाधित्वादभावत्ववदित्यपि साधयितुं शक्यत्वेन ध्वंसवदुत्पत्तिमदनिवर्त्यभाव-पदार्थस्यापि सिद्धिप्रसङ्गात्। विपक्षे बाधकाभावाच्चेति दिक्।

ननु विवादगोचरापन्नं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगत-वस्त्वन्तरपूर्वकम्। अप्रकाशितार्थप्रकाशत्वात्। अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति विवरणोक्तमनु-मानमज्ञाने प्रमाणम्। अत्र स्वप्रागभावं स्वोत्पादकादृष्टं स्वप्रतिबन्धकादृष्टं विषयगतमज्ञातत्वं च व्युदसितुं साध्यविशेषणानीति चेत्। अत्रास्मद्गुरुचरणाः। न तावदत्र यथार्थज्ञानं पक्षः। सुखादिज्ञाने बाधात्। नापि वृत्तिज्ञानं, अनुमितौ बाधात्। नाप्यपरोक्षवृत्तिः। तत्रैव व्यभिचारात्। धारावाहिक-द्वितीयादिबुद्धौ बाधाच्च। किञ्च आत्मज्ञानं न पक्षः। अनात्मज्ञाने व्यभिचारात्। तस्यापि पक्षत्वे तत्रावरकाज्ञानाभावेन बाधात्। साध्ये चाद्यं विशेषणं व्यर्थम्। प्रतियोगिन एव प्रागभावनिवृत्तितया स्वनिवर्त्यविशेषणेनैव ज्ञानप्रागभावव्यावृत्तेः। कथञ्चिदवैयर्थ्येऽपि स्वप्राक्पदवैयर्थ्यात्। द्वितीय-विशेषणमप्यसङ्गतम्। वृत्तेश्चिदुपरागार्थत्वेन अज्ञानस्य विषयावरकत्वासम्भवात् द्वितीयविशेषण-

मप्यसङ्गतम् । अनादिभावस्यात्मवदनिवर्त्यत्वात् । चतुर्थविशेषणमप्यसङ्गतम् । चिन्मात्रगतस्य अज्ञानस्य पक्षीकृतप्रमादादेश्च अन्तःकरणे अभावात् ।

हेतावपि प्रकाशत्वं न तावत् ज्ञानत्वम् । दृष्टान्ते साधनवैकल्यात् । नापि ज्ञानजनकत्वम् । असिद्धेः । चक्षुरादौ व्यभिचाराच्च । अत एव न साक्षात्परम्परया वा व्यवहारजनकत्वम् । नापि तमोनिवर्तकत्वम् । अज्ञानान्धकारानुगततमस्त्वाभावात् । नाप्यावरणनिवर्तकत्वम् । साध्याविशेषात् । अत एव न अज्ञानान्धकारयोरन्यतरनिवर्तकत्वम् । चक्षुरादौ व्यभिचाराच्च । अत एव न साक्षात्परम्परया वा व्यवहारजनकत्वम् । नापि प्रकाशशब्दवाच्यत्वम् । गोशब्दवाच्यत्वेन पृथिव्या अपि शृङ्गित्वानुमान-प्रसङ्गात् । अप्रकाशितत्वं नाज्ञानविषयत्वम् । साध्याविशेषात् । नापि ज्ञानाविषयत्वम् । अप्रयोजक-त्वात् । किञ्च अनुमितेरप्रकाशितार्थप्रकाशकत्वाभावे वैयर्थ्यम् । तत्प्रकाशकत्वे च तत्रैव व्यभिचारो बाधो वा । न ह्यज्ञानावरणमज्ञानमस्ति । दृष्टान्ते द्वितीयादिप्रभाया अन्धकारेऽनुत्पन्नत्वेन प्रथमपदं व्यर्थम् । दृष्टिसृष्टिपक्षे दृष्टान्ते उभयवैकल्यम् । अनादित्वे सति भावत्वं भावविलक्षणत्वं वा न निवर्त्यनिष्ठम्, अनादिभावमात्रवृत्तित्वात्, अनाद्यभावविलक्षणमात्रवृत्तित्वाद्वा आत्मत्ववदित्यादिना सत्प्रतिपक्षत्वाच्च । पूर्वकृत्यभावमात्रेण कृतस्य कृतिवन्मृत्यभावमात्रेण अस्मृतिवच्च पूर्वप्रकाशभाव-मात्रेण अप्रकाशितस्य प्रकाशोपपत्तेरप्रयोजकत्वं च । किञ्च घटादिविषय आलोकप्रकाशस्तमोविरोधी तन्निवर्तकोऽस्तु । ज्ञानप्रकाशस्तु नाज्ञानविरोधी । घटाद्यधिष्ठानचैतन्यस्य ज्ञानाविरोधित्वात् । वृत्तेश्च ज्ञानरूपत्वाभावादिति ।

अत्र नवीनाः । न तावत्पक्षानिर्वचनम् । विवादगोचरापन्नं प्रमाणज्ञानमित्यनेन स्वविषयविषय-सविकल्पकाजन्यलौकिकविशिष्टसंशयविरोध्यपरोक्षज्ञानस्य विवक्षितत्वात् । अस्यार्थः— स्वस्य पक्षत्वाभिमतघटविषयकज्ञानस्य विषयो घटादिर्विषयो यस्य सविकल्पकस्य तदजन्यं लौकिकं विशिष्टं संशयविरोध्यपरोक्षज्ञानं तस्येति । अत्र अजन्येत्यन्तेन धारावाहिकद्वितीयादिबुद्धिनिरासः । तदन्तर्गते च विशेषणद्वयमपीश्वरज्ञाननिर्विकल्पकजन्यत्वेन पक्षासम्भववारणाय । लौकिकेत्यादिविशेषणानि तु अलौकिकप्रत्यक्षनिर्विकल्पकज्ञानानुमितिधर्म्यंशप्रमाभ्रमप्रत्यक्षव्यावृत्त्यर्थानि । यद्वाऽपरोक्षप्रमाणज्ञानमेव पक्षः । अलौकिकप्रत्यक्षस्य निर्विकल्पकस्य च उभयवाद्यसम्मतस्यासत्त्वेन तत्र बाधाभावात् । न च धारावाहिकद्वितीयादिबुद्धौ बाधः । द्वितीयादिक्षणोपहितस्यैव तद्बुद्धिविषयत्वेन तद्विषयकाज्ञानस्य तेनैव निवृत्तिसम्भवात् । प्रथमबुद्धिसमानविषयत्वेऽपि यावन्ति ज्ञानानीत्यभ्युपगमात् द्वितीयादिबुद्धिप्राग-भाववत् तत्तन्निवर्त्यस्याज्ञानस्यापि भावाच्च । प्रागभाववद् ज्ञानानामपि प्रतिभानविशेषविरोधित्व-मेवाभ्युपेयते । अत एव न धर्म्यंशप्रमायां बाधः । तत्रापि तन्निवर्त्यस्याज्ञानस्य स्वीकारात् । अन्यथा

तदापरोक्ष्यानुपपत्तेः । इदमंशस्यारोप्य तादात्म्यापन्नस्य मिथ्यात्वेन तज्ज्ञानस्य प्रमात्वासिद्धेश्च । तदुक्तं फलैक्येन पृथक् प्रथतो इति । यद्वा प्रमाणज्ञानमेव पक्षोऽस्तु । न च अनुमित्यादौ बाधः । तत्रापि प्रमातृगतस्य अज्ञानस्य निवृत्तेः । अत्राद्यपक्षद्वयं यथाश्रुतसाध्यसाधने । तृतीयपक्षस्तु विवक्षित-साध्यसाधन इति विवेकः ।

तद्विवक्षा चेत्थं स्वप्रागभावत्वं स्वविरोधिप्रागभावत्वं स्वविषयावरणत्वं स्वजन्यव्यवहारहेतु-त्वम् । स्वनिवर्त्यत्वं स्वहेतुप्रयुक्तध्वंसप्रतियोगित्वं स्वदेशगतत्वं स्वाश्रये विद्यमानत्वं वस्त्वन्तरत्वं ज्ञानत्वानधिकरणत्वम् । एतैश्च विशेषणैः इच्छाप्रागभावस्वसामग्र्यां सान्धकारभ्रमा व्यावर्त्यन्त इति न साध्ये किञ्चिद्विशेषणं व्यर्थमसङ्गतं वा ।

यद्वा स्वप्रागभावत्वं स्वप्रतियोगिकप्रागभावप्रतियोगित्वं स्वविषयावरणत्वं च स्वजन्यव्यवहार-विरोधित्वं स्वनिवर्त्यत्वं स्वजन्यध्वंसप्रतियोगित्वं स्वदेशगतत्वं स्वदेशः स्वविषयस्तद्गतत्वं तद्विषयत्वं स्वविषयसम्बन्धित्वमिति यावत् । एवञ्च आद्यं विशेषणं ज्ञानप्रागभावव्यावर्तकम् । न च स्वप्राक्पद-वैयर्थ्यम् । अखण्डाभावे वैयर्थ्याभावात् । द्वितीयं पक्षीकृतज्ञानं जनकादृष्टनिवर्तकम् । तृतीयं च तत्प्रतिबन्धकादृष्टनिवर्तकम् । न च चरमसाक्षात्कारोत्पत्तिप्रतिबन्धकादृष्टस्य तदनिवर्त्यत्वे मिथ्यात्वा-सिद्धिः । तन्निवर्त्यत्वे च न तेन तस्य व्यावृत्तिरिति वाच्यम् । तत्सत्त्वकालेऽनुत्पन्नसाक्षात्कारेण तस्य अनिवर्त्यत्वात् । न च मिथ्यात्वसिद्धिः । इदानीं नष्टघटवत् ज्ञाननिवर्त्यत्वयोग्यतया तत्सिद्धेः । तत्रापि दृश्यत्वेन योग्यतायाः सत्त्वात् सूक्ष्मरूपेण तस्य ज्ञाननिवर्त्यत्वाच्च । चतुर्थं च स्वनिवर्त्यभिन्नविषयक-पूर्वज्ञाननिवर्तकम् । पञ्चमं भ्रमव्यावर्तकम् ।

न च विशेषणानामसाङ्गत्यम् । प्रागभावः प्रतियोगिनिवर्त्य इति मतानुसारेण आद्यविशेषणस्य तदभावात् । द्वितीयविशेषणं च वृत्तिरावरणनिवृत्त्यर्थेति मतानुसारेणेति न तत्राप्यसङ्गतिः । न च जडे घटादौ आवरणाभावादसाङ्गत्यम् । तत्र तदभावेऽपि तदवच्छिन्ने चैतन्ये तत्सत्त्वात् । घटाद्यवच्छिन्नत्वं च न तद्विशिष्टत्वं किन्तु तदुपहितत्वमिति न तत्रावरणं विरुध्यते । न च चैतन्यस्य अप्रत्यक्षत्वात् असाङ्गत्यम् । स्वतो प्रत्यक्षस्यापि घटाद्यवच्छेदेन राह्वादेः चन्द्राद्यवच्छेदेनेव प्रत्यक्षज्ञानविषयत्वो-पपत्तेः । अनादिभावस्य लक्षणप्रस्तावे निवर्त्यत्वस्य साधनान्न तृतीयविशेषणासङ्गतिः । चतुर्थविशे-षणमपि नासङ्गतम् । अज्ञानाश्रये चिन्मात्रे प्रमाश्रयस्य प्रमातुरभेदाध्यासेन तयोः समानदेशत्वो-पपत्तेः । हेतावप्यप्रकाशितत्वं अपरोक्षव्यवहारविषयत्वं तदविषयत्वं वा । न च विरोध्यज्ञानमेवेति साध्यावैशिष्ट्यम् । तस्य ज्ञानप्रागभावान्धकारादिसाधारणत्वेन तदभावात् । प्रकाशत्वं च ध्वंसान्य-

प्रमात्राद्वारकापरोक्षव्यवहारजनकत्वम् । जनकत्वं च कार्याभावव्यापकाभावप्रतियोगित्वं कार्यसहभूतत्वं वेति न व्यवहारप्रागभावे व्यभिचारः । प्रमाणज्ञानमात्रपक्षकानुमाने तु न हेतोरपरोक्षत्वविशेषणमिति न भागासिद्धिः । एवं च अपरोक्षव्यवहारविरोध्यर्थविषयस्तादृशव्यवहारविषयीकृतार्थविषयो वा योऽयं ध्वंसान्यमात्राद्वारकापरोक्षव्यवहारः तज्जनकत्वादिति हेत्वर्थः पर्यवसितः । अत्र धारावाहिकद्वितीयादिबुद्धौ व्यभिचारवारणाय विषयेत्यन्तम् । चक्षुरादौ तद्वारणाय अद्वारकान्तम् । दृष्टान्ते साधनवैकल्यपरिहाराय तदन्तर्गतविशेषद्वयमिति ।

अत्रोच्यते । न तावदाद्ये पक्षनिर्वचने अस्माभिर्दूषणमभिधातव्यम् । पक्षान्तरं प्रदर्शयता त्वयैव तस्य दूषितत्वात् । अनुमित्यादिस्थलेऽपि मौढ्यरूपाज्ञाननिवृत्तिमभ्युपगच्छता द्वितीयनिर्वचनेऽपि अस्वारस्यं प्रकटीकृतम् । यदुक्तं द्वितीयपक्षनिर्वचने द्वितीयादिक्षणोपहितस्यैव द्वितीयादिबुद्धिविषयत्वेन तद्विषयकाज्ञानस्य तेनैव निवृत्तिरिति न द्वितीयादिबुद्धौ बाध इति । तन्न । प्रथमबुद्ध्यैव तद्विषयकसर्वज्ञानानां निवृत्तत्वात् । अन्यथा अज्ञानान्तरावरणसत्त्वेन प्रथमज्ञानमेव नोत्पद्येत । तदुत्तरत्र भ्रमरूपकार्यदर्शनात् तत्राज्ञानं कल्प्यत इति चेन्न । तदपेक्षया ज्ञानापसरणकल्पनस्य न्याय्यत्वात् । उत्पत्तावपि विषयापरोक्ष्यं न स्यात् । अनावृतसंवित्तादात्म्याभावात् । न च यत्किञ्चिदावरणरहितसंवित्तादात्म्यमेव विषयापरोक्ष्यप्रयोजकम् । अतो नोक्तदोष इति वाच्यम् । सकृदपरोक्षीकृतस्य घटादेः सर्वदा आपरोक्ष्यापत्तेः । यावन्ति ज्ञानानि तावन्त्यज्ञानानीत्यभ्युपगमेऽप्येकज्ञानस्यापि सर्वावरणनिवृत्तिसापेक्षत्वात् । अनेकपटाद्यावृतस्य घटादेरेकावरणापनयनेऽप्यपरोक्षज्ञानस्यादर्शनात् । द्वितीयादिक्षणस्योपाधित्वेन तस्य अज्ञानविषयत्वायोगे घटादेरेव तद्विषयत्वे च द्वितीयादिक्षणरूपोपाधिकल्पनायोगाच्च । उपहितस्य भिन्नत्वे च तद्बुद्धेर्धारावाहिकत्वव्याकोपः । न च ज्ञानान्तराणां स्वरूपेण सत्त्वेऽपि न तदा विषयावरकत्वम् । द्वितीयादिक्षणे तु तदावरकत्वमिति नोक्तदोष इति वाच्यम् । ज्ञानानां विषयोल्लेखित्ववदज्ञानानामपि विषयावरकत्वस्वाभाव्यात् ।

किञ्चैवमपि द्वितीयादिबुद्धौ विशेष्यांशमादाय बाधो दुर्वारः । अन्यथा धर्म्यंशप्रमायां बाधपरिहारः त्वया न क्रियेत । न च अंशविवक्षया परिहारवर्णनं पररीत्यैव । वस्तुतस्तु इदमंशस्य आरोप्यतादात्म्यापन्नस्य मिथ्यात्वेन तज्ज्ञानस्य प्रमात्वासिद्धेः । प्रमाणमित्यनेनैव तद्व्यावृत्तिरित्युक्तमिति वाच्यम् । त्वन्मते भिन्नत्वे सत्यभिन्नसत्ताकत्वस्य सत्तानवच्छेदकभेदशून्यत्वस्य वा तादात्म्यशब्दार्थतया तथोक्तेर्बालव्यामोहमात्रत्वात् । फलैक्येन न पृथक्प्रथत इत्यभियुक्तवचनेऽपि भानरूपफलैक्यस्यैवोक्तिः न विषयैक्येति त्वदुक्तार्थे तस्यासम्मतित्वाच्च ।

एतेन प्रमाणज्ञानमेव पक्षोऽस्त्विति तृतीयप्रकारोऽपि निरस्तः ।

प्रमाणज्ञानमित्यनेन यथार्थज्ञानविवक्षायां सुखादिज्ञाने बाधः । अन्तःकरणवृत्तिरूपतथाविध-ज्ञानविवक्षायामपि बाधः । एवमज्ञानस्य ज्ञानस्य च एकनिवर्त्यत्वाभ्युपगमात् । वृत्तेश्चाज्ञप्तित्वात् । अन्तःकरणवृत्त्युपहितं चैतन्यमेव पक्षत्वेन विवक्षितमिति चेन्न । अनुमित्यादौ बाधात् । तत्रापि प्रमातृगताज्ञानस्य निवृत्तिरभ्युपगम्यत इति न बाध इति चेत् । किमिदं कण्ठे पृष्टः कटिं चालयसि । प्रमातृगताज्ञानस्य स्वविषयावरकत्वाभावात् । साध्ये च स्वविषयावरणमिति विशेषणस्य प्रवेशात् ।

ननु तृतीयपक्षस्तु स्वविषयावरणत्वं स्वजन्यव्यवहाराहेतुत्वं स्वजन्यव्यवहारविरोधित्वं वा विवक्षितसाध्यसाधन इति युक्तमिति नोक्तदोष इति चेन्न । स्वोत्पादकादृष्टस्य स्वजन्यव्यवहारहेतुत्व-विवक्षया व्यावृत्तावपि तस्य स्वविषयावरणशब्दार्थत्वायोगात् । स्वविरोधित्ववदज्ञानस्य स्वव्यवहार-विरोधित्वेन बाधापत्तेश्च । स्वजन्यव्यवहारविरोधित्वमिति द्वितीयविवक्षायां चानुमित्यादाविव घटा-द्यपरोक्षज्ञानेन चरमवृत्त्या च निवर्त्यमज्ञानमपि तादृशमेव सिद्ध्येदिति त्वदभिमतस्य घटादिविषया-वरकस्य ब्रह्मावरकस्य च अज्ञानस्यासिद्धिप्रसङ्गादित्युक्तम् । मौढ्यं च मनोधर्मो न तु अनादि-भवदभिमतमज्ञानमिति चोक्तम् । किञ्च स्वनिवर्त्यपदेनैव प्रागभावव्यावृत्तेः । प्रथमं साध्यविशेषणं व्यर्थम् । प्रागभावनिवृत्तेः प्रतियोगिरूपत्वात् । अतिरिक्तत्वे प्रमाणाभावात् । न च स्वप्रागभाव-व्यावृत्तत्वेन तद्विशेषणम् । प्रागभावव्यावृत्तय इति वाच्यम् । तथापि स्वप्राक्पदवैयर्थ्यात् । अखण्डा-भावेन न वैयर्थ्यमित्यस्यानन्यगतिकत्वात् । स्वविषयावरणमिति विशेषणमपि अयुक्तम् । घटादीना-मज्ञानावृतत्वाभावात् । तदवच्छिन्नचैतन्यस्य अज्ञानावृतत्वे च तस्य प्रत्यक्षगोचरतया वैय्यधिकर-ण्यात् । स्वतो प्रत्यक्षस्यापि तस्य राहोरिवान्यावच्छेदेन प्रत्यक्षत्वं युक्तमिति वाच्यम् । औपनिष-दत्वव्याघातात् । न चक्षुषा पश्यति कश्चनैनमित्यादिश्रुतिविरोधात् । शास्त्रयोन्यधिकरणविरोधाच्च । तत्रौपनिषदत्वादिकं स्वरूपमात्रविषयमिति न विरोध इति वाच्यम् । श्रुतिमात्रस्य तत्तदवच्छिन्न-ब्रह्मविषयत्वेनानुवादित्वापातात् । स्वरूपमात्रप्रतिपादकस्य कस्याप्यभावात् । अवच्छिन्नस्वरूपस्यापि सत्त्वेन तदंशेऽनुवादित्वापाताच्च । लक्षणया स्वरूपमात्रप्रतिपादनस्य निर्विशेषसिद्ध्यधीनतया अन्यो-न्याश्रयत्वादिति अन्यत्र विस्तरः ।

किञ्च स्वनिवर्त्यत्वं स्वजन्यध्वंसप्रतियोगित्वम् । तच्च न युक्तम् । घटाज्ञानसत्त्वे घटज्ञान-स्यैवानुदयेन तत्पूर्वमेव घटाज्ञानस्य निवर्तनीयत्वात् । वृत्त्यावरणरूपकार्ये निवृत्ते तदवच्छिन्नचैतन्येन घटविषयेण तद्विषयाज्ञानं निवर्तत इत्यभ्युपगम्यत इति चेन्न । उक्तप्रणाड्यां प्रमाणाभावात् । आवरणनिवृत्तेरेवापेक्षितत्वेन स्वरूपेणाज्ञाननिवृत्तेरनपेक्षितत्वाच्च ।

एतेन स्वहेतुप्रयुक्तध्वंसप्रतियोगित्वं स्वनिवर्त्यत्वमित्यपास्तम् ।

किञ्च अनादिभावत्वलिङ्गेन लक्षणदूषणावसरोदाहृतश्रुत्यादिना चानाद्यनन्तत्वेन सिद्धस्याज्ञानस्य निवर्त्यत्वासम्भवेनासाङ्गत्यम् । किञ्च चिन्मात्राश्रुतस्याज्ञानस्य प्रमात्राश्रयप्रमाणज्ञानसमानदेशत्वाभावादसाङ्गत्यम् । न च अज्ञानाश्रयचिन्मात्रस्य प्रमाणज्ञानाश्रयप्रमातुश्चाभेदाध्यासेन प्रमाणज्ञानाज्ञानयोः समानदेशत्वमिति वाच्यम् । अन्धकाराश्रयज्ञानाश्रययोरप्यभेदाध्याससम्भवेन अन्धकारज्ञानयोरपि समानदेशत्वेन अन्धकारमादाय दोषतादवस्थ्यात् । न च अन्धकाराश्रयज्ञानाश्रययोरभेदाध्यासो नेति युक्तम् । अन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्य अहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहार इति त्वद्भाष्यविरोधात् ।

एतेन स्वदेशगतत्वं स्वविषयसम्बन्धित्वमिति नोक्तदोष इति निरस्तम् ।

अन्धकारमादाय अर्थान्तरत्वात् । अन्धकारस्यापि स्वहेतुप्रध्वंसप्रतियोगित्वरूपविवक्षिततृतीयविशेषणस्य सत्त्वात् । वस्त्वन्तरस्य ज्ञानत्वानधिकरणत्वेन विवक्षिततया तत एव पूर्वज्ञानव्यावृत्तेः तद्व्यावृत्त्यर्थस्य स्वविषयविषयत्वरूपस्वदेशगतत्वस्य विशेषणत्वायोगाच्च । वस्त्वन्तरपदे तथा विवक्षाभावे च भ्रममादाय अर्थान्तरत्वापत्तेरिति दिक् ।

किञ्च स्वविषयावरणपूर्वमित्येतावदेव साध्यमस्तु नान्यत् । व्यर्थत्वात् । न हि प्रमाप्रागभावः प्रमोत्पत्तिप्रतिबन्धकादृष्टं वा अज्ञानातिरिक्तमन्यत् किञ्चिदावरणम् । तथात्वे तेनैव स्वप्रकाशब्रह्मावरणसम्भवेन हेतोरप्रयोजकत्वापातात् । न च तमोऽपि व्युदसनीयम् । तस्य प्रमात्वविषयावरणत्वाभावात् । न च व्यापकविशेषणानामुद्देश्यप्रतीत्यर्थत्वादवैयर्थ्यमिति वाच्यम् । यत्राविशेषितसाध्यं प्रति हेतोरप्रयोजकत्वम् । विमतं भिन्नाभिन्नं समानाधिकृतत्वादित्यादौ तत्रैव विशिष्टप्रतीतेरुद्देश्यत्वात् । अन्यथा अतिप्रसङ्गात् । न च विशेषितसाध्येन सह गृहीतव्याप्तिकस्य हेतोरविशेषितसाध्येन सह गृहीतव्याप्तिकस्य हेतोरविशेषितसाध्ये हेतूच्छित्तिभावेनेह अप्रयोजकत्वं असुवचमिति वाच्यम् । तत्र प्रभायां व्याप्तेरपि अविशेषितसाध्येनैव ग्राह्यत्वापादनेनोक्तदोषानिस्तारात् । न च विशिष्टसाध्यसिद्धेरुद्देश्यत्वे अविशेषितसाध्यनिर्देशायोगेन विशेषणानां उपादेयत्वेन अवैयर्थ्यमिति वाच्यम् । प्रयोजनाभावेन विशिष्टसाध्यसिद्धेरुद्देश्यत्वस्यैवासिद्धेः । किञ्चैवं नीलधूमकारणानुमितेरुद्देश्यत्वे नीलत्वविशेषणमपि हेतावुपादेयं स्यात् । न च इष्टापत्तिः । व्याप्तिग्राहकप्रमाणेन धूमत्वावच्छेदेनैव व्याप्तेर्ग्रहणात् । प्रमाणस्य लघुधर्मपक्षपातित्वात् नीलधूमत्वस्य च गुरुत्वात् । कस्यचित् कदाचित् तदवच्छेदेन व्याप्तिग्रहेऽपि लाघवानुरोधेन त्याज्यत्वाच्चेति अन्यत्र विस्तरः ।

एतेन प्रथमद्वितीयपक्षाभिप्रायेणापरोक्षव्यवहारविध्यर्थविषयः तादृशव्यवहारविषयीकृतार्थविषयो

वा योऽयं ध्वंसान्यमात्रद्वारकापरोक्षव्यवहारस्तज्जनकत्वादिति हेतोर्विवक्षितार्थः । प्रमाणज्ञानमात्र-पक्षीकारे च नापरोक्षत्वविशेषणमिति च कुत्रापि व्यभिचार इति निरस्तम् ।

अपरोक्षव्यवहारविरोधित्वस्य ज्ञानप्रागभावान्धकारसाधारणत्वेऽपि तयोर्व्यावृत्ततया प्रकृते व्यक्तिवचनन्यायेन अज्ञानस्यैव विरोधिशब्दार्थत्वेन ग्राह्यतया साध्यावैशिष्ट्यस्य दुर्वारत्वात् । हेतौ अपरोक्षव्यवहारविरोधित्वस्य ज्ञानप्रागभावान्धकारसाधारण्येन प्रवेशे तयोरन्यतरमादाय साध्यपर्यव-सानापत्तेः । तद्वयावृत्तमेव साध्यं साध्यत इति चेन्न । अनादिभावरूपाज्ञानातिरिक्तेत्यपि साधनसम्भ-वेनाभिमतार्थासिद्धिप्रसङ्गात् । अनभिमतार्थान्तरसिद्धिप्रसङ्गाच्च । तथा साधने बाधो प्रयोजकत्वं वेति चेन्न । स्वप्रागभावातिरिक्तत्वेन स्वदेशगतत्वेन च साध्यविशेषणपूर्वकं तत्साधनेऽप्युक्तदोषापत्तेः ।

नन्वस्मदभिमतसाध्यं प्रति हेतोर्नाप्रयोजकत्वम् । विपक्षे बाधकसत्त्वात् । तथाहि— विषया-वरकस्य भावरूपाज्ञानस्य भावे परोक्षत्वापरोक्षत्वविभागो न स्यात् । अनावृतसंविदभिन्नत्वेनावृतत्वेन च तस्योपपाद्यत्वात् । उक्तार्थाविषयत्वविषयत्वव्यतिरेकेण ज्ञानगतयोः परोक्षत्वापरोक्षत्वयोः दुर्निरूप-त्वेन तादृशज्ञानविषयत्वेन तदुपपादनायोगाच्च । किञ्च 'सुखमहमस्वाप्सं', 'न किञ्चिदवेदिषम्' इत्येत-दनुसन्धानमेव नानुभव इत्युक्तम् । तथा च अज्ञानाभावे सौषुप्तिकपुरुषाभावेन कथमनुसन्दध्युः । अन्तःकरणस्य विलीनत्वेन तदानीं तद्वृत्त्ययोगात् । किञ्चाज्ञानाभावे प्रमात्वमेव दुर्निरूपं स्यात् । अनधिगतार्थगन्तृज्ञानं हि प्रमा । न यथार्थानुभवः । अनुमितेः पर्वताद्यंशेऽपि प्रमात्वापातात् । द्वितीयादिबुद्धेः प्रमात्वापाताच्च । अतो भावरूपाज्ञानविषयत्वमेवानधिगतत्वमित्यज्ञानसिद्धिः । किञ्च भावरूपाज्ञानाभावे घटोऽयमित्याद्यनुगतबुद्धिर्निरालम्बना स्यात् । महाप्रलये घटत्वादिसद्भावे प्रमाणा-भावात् । अनादिभावत्वे सति निवर्त्यानां तेषामज्ञानव्यतिरेकात् । अनुगतबुद्धीनामेकाज्ञानविषयत्व-सम्भवे ज्ञानतज्जातिविषयत्वकल्पनायोगाच्चेति ।

अत्रोच्यते । न तावद्विषयेषु परोक्षत्वमावृतत्वमपरोक्षत्वमनावृतसंविदभिन्नत्वमिति युक्तम् । घटादीनां जडत्वेनावृतत्वस्य अनावृतसंविदभिन्नत्वस्य च अयोगेन अव्याप्तेः । तत्तद्विषयावच्छिन्न-चैतन्यस्यावृतत्वमस्तीति चेत् । किं ततः । तावता घटादीनां परोक्षत्वानुपपादनात् । किञ्च धर्मादिरप्या-परोक्ष्यं स्यात् । तस्यापि अनावृतसाक्षिण्यध्यासात् । न च योग्यत्वे सत्यनावृतसंविदध्यस्तत्वमेव विषयापरोक्ष्यप्रयोजकम् । इन्द्रियसन्निकर्षस्य घटपरमाण्वादिसाधारण्येऽपि घटादावेव अपरोक्षज्ञानो-त्पत्तिरित्येतन्नियामकतया योग्यत्वस्य परैरप्यङ्गीकार्यत्वादिति वाच्यम् । युक्तं परमते योग्यत्वस्य प्रयोजकत्वम् । योग्येन्द्रियसन्निकर्षस्यापरोक्षज्ञानकारणत्वात् । न तु त्वन्मते । अनावृतसंविदध्यस्तत्वे अयोग्यत्वस्यैवायोगात् । तथाच परोक्षापरोक्षज्ञानविषयत्वमेव विषयगतपरोक्षत्वापरोक्षत्वरूपमिति

वाच्यम्, नान्यत् । न च सर्वस्यापि स्वतोऽपरोक्षज्ञानरूपचैतन्यविषयत्वेन अपरोक्षत्वापत्तिरिति वाच्यम् । सर्वस्यापि स्वतोऽपरोक्षब्रह्मचैतन्यविषयत्वासिद्धेः ।

ननु ज्ञाने किमपरोक्षत्वं न तावदिन्द्रियजन्यज्ञानत्वम् । अनुमित्यादेरपि मनोजन्यत्वात् । नापीन्द्रियत्वेनेन्द्रियजन्यज्ञानत्वम् । केवलसाक्षिभास्यसुखादेरापरोक्ष्याभावप्रसङ्गात् । नापि अपरोक्षत्वं जातिः । अनङ्गीकारादिति चेन्न । घटोऽयं घटोऽयं इत्यादिप्रतीत्या घटत्वादिधर्माणामिव घटादिकं साक्षात्करोमि, अपरोक्षतो जानामि, सुखादिकं साक्षात्करोमि, धर्मादिकं परोक्षतो जानामीत्यादि प्रतीत्या ज्ञानगतानामपरोक्षत्वादिधर्माणामवर्जनीयत्वात् । एतेषां चानुमितित्वशाब्दत्वादिधर्माणामिव विषय-प्रयुक्तत्वाभावेन सामग्रीप्रयुक्तत्वस्य स्वरूपप्रयुक्तत्वस्य वोपपत्तेश्चेति तस्माद् अज्ञानाभावेन परोक्षत्वा-परोक्षत्वविभागानुपपत्तिरिति । किञ्च अज्ञानाभावे सौषुप्तिकपुरुषाभावेन सुखमहमस्वाप्सं न किञ्चिद् अवेदिषमित्यनुसन्धानाभावप्रसङ्गः ।

विपक्षे बाधकमिति यदुक्तं जीवब्रह्मणोरत्यन्तभेदः, भेदश्च स्वाभाविको नित्यश्चेति वादिनं प्रति अज्ञानाभावे सौषुप्तिकपुरुषाभावापादानस्यायोगात् । त्वन्मतेऽपि सुषुप्तौ ज्ञानशक्तिमदन्तःकरणस्यैव लयो न तु क्रियाशक्तिमदन्तःकरणस्येति कल्पनसम्भवेन तदवच्छिन्नसौषुप्तिकपुरुषस्य तदानीं सत्त्वेन तदा अज्ञानस्य कल्पनीयत्वात् । कार्योपाधिरयं जीवः, कारणोपाधिरीश्वर इत्यादि प्रमाणबलेनान्तः-करणस्यैव जीवोपाधित्वाभ्युपगमस्य न्याय्यत्वात् । किञ्चाज्ञानाभावेऽपि प्रमात्वं सुनिरूपितम् । यथार्थानुभवस्य प्रमात्वात् । अनुमितेः पर्वताद्यंशे द्वितीयादिबुद्धेश्च प्रमात्वात् । न हि अत्र कस्यचिदिदं अप्रमाणमिति व्यवहारोऽस्ति । लोकव्यवहारानुसारेण लक्षणस्य वक्तव्यत्वात् । लोकविरुद्धपारिभाषिक-व्यवहारस्यातिप्रसङ्गित्वात् । अर्थेऽनुपलब्धे तत्प्रमाणमित्यादेश्च श्रुतिमात्रविषयत्वेन प्रमाणान्तरा-विषयत्वात् । धर्मस्यातीन्द्रियत्वेन तथोक्तेर्वेदार्थस्वरूपप्रतिपादनपरत्वेनानधिगतत्वस्य लक्षणे प्रवेशा-नीयत्वाच्च । अननुष्ठानलक्षणे प्रामाण्यवज्ज्ञातार्थविषयज्ञानाप्रामाण्यस्यापि परिभाषामात्रत्वाच्च ।

अस्तु वा अनधिगतार्थगन्तृज्ञानं प्रमा तावतापि नाज्ञानसिद्धिः । समानप्रकारकसमानविशेष्यक-समानाधिकरणज्ञानाविषयीकृतार्थविषयज्ञानस्यैवानधिगतार्थगन्तृत्वात् । न च रजतभ्रमादेरपि प्रमा-त्वापातः । स्मृतस्यैवारोप्यतयाधिगतार्थविषयत्वात् । पुरोवर्तिरजततादात्म्यस्य भ्रमविषयस्यानधि-गतत्वेऽपि यथार्थत्वस्यापि लक्षणे विवक्षितत्वेन तस्य प्रमात्वानापत्तेश्चेति ।

किञ्च घटोऽयमित्याद्यनुगतबुद्धीनां भावरूपाज्ञानविषयत्वं न युज्यते । तस्य अचाक्षुषत्वात् । न च स्वरूपेण चक्षुराद्यग्राह्यस्यापि तद्ग्राह्यव्यक्त्युपरक्ततया चन्द्रमण्डलोपरक्तराहुवत् चाक्षुषत्वं अवि-

रुद्धमिति वाच्यम् । गन्धादीनामपि चाक्षुषत्वाद्यापत्तेः । रूपादीनां श्रौततत्त्वाद्यापत्तेश्च । न चेष्टापत्तिः । अनुभवविरोधात् । चक्षुर्योग्यस्य घटादेरालोकसापेक्षतया चाक्षुषत्ववत् चक्षुर्योग्यस्यैव तमोग्रहस्य राहोश्चन्द्रमण्डलसम्बद्धतया चाक्षुषत्वेनानिरूपज्ञानस्य च तदयोग्यत्वेन वैषम्याच्च । किञ्च एकाज्ञानस्यैवानुगतबुद्ध्यालम्बनत्वे घटपटादिषु सर्वत्रैकाकारैव प्रतीतिः स्यात् । न च तत्तद्व्यक्त्युपहितस्यैकस्यैव तत्तद्व्यवहारालम्बनत्वमिति युक्तम् । व्यक्तिषु घटत्वादिधर्माभावे तत्तद्व्यक्तित्वस्य निरूपयितुमशक्यत्वात् । तत्तद्व्यक्तिविशेषस्यैव तत्तद्व्यक्तित्वे घटपटादिष्विव घटेष्वेव घटाः पटाश्चेत्यपि प्रतीतिव्यवहारौ प्रसज्येयाताम् । तयोरबाधितत्वमपि प्रसज्येत । भ्रमोच्छेदश्च प्रसज्येत ।

किञ्चैवं सर्वानुस्यूतब्रह्मचैतन्येनैव सर्वत्रानुगतव्यवहारस्योपपत्त्या तदर्थमप्रामाणिकपरिकल्पनायोगः । तथाच घटत्वादिधर्माणामेव अनुगतबुद्ध्यालम्बनत्वम् । न चैवं सति गौरवम् । प्रामाणिकत्वात् । अन्यथा व्यक्त्यपलापः प्रसज्येत । न च महाप्रलये घटत्वादिधर्मसद्भावे प्रमाणाभावात्, अनादिभावत्वे सति निवर्त्यानां तेषामज्ञानाव्यतिरेक इति वाच्यम् । सर्वस्याप्यज्ञानाव्यतिरेकप्रसङ्गात् । जीवब्रह्मविभागादीनामपि तदव्यतिरेकप्रसङ्गाच्च । अनादिभावत्वेन प्रलये ब्रह्मणोऽपि निवृत्तिप्रसङ्गाच्च । न च तत्र धर्मिग्राहकमानबाधः । अत्रापि तत्सत्त्वात् । आत्ममात्रावशेषितमहाप्रलये प्रमाणाभावाच्च इति । तस्माद्यथाश्रुतेर्विवक्षायां च पक्षसाध्यसङ्गतेन प्रयोजकत्वाच्च न विवरणोक्तमनुमानं भावरूपाज्ञानसाधकम् ।

एतेन विवादगोचरापन्नं प्रमाणज्ञानमित्यनेन जन्यसविकल्पाजन्यचाक्षुषप्रमाणज्ञानमन्धकारनिवृत्त्यव्यवहितोत्तरकालीनचाक्षुषज्ञानं वा पक्षत्वेनाभिमतम् । साध्यं च स्वसमानाधिकरणप्रागभावव्यतिरिक्तस्वजननायोग्यस्वजन्यध्वंसप्रतियोगिस्वसमानाश्रयवस्तुपूर्वकत्वं स्वप्रतियोगिकप्रागभावव्यतिरिक्तस्वविषयविषयकसंशयादिजनकस्वसत्ताक्षणनियतध्वंसप्रतियोगिस्वसमानाधिकरणवस्तुपूर्वकत्वं वा विवक्षितम् । हेतौ प्रकाशकत्वं चावरणनिवर्तकत्वं विवक्षितम् । धारावाहनद्वितीयादिबुद्धौ बाधवारणाय पक्षद्वयेऽपि चाक्षुषज्ञानं विवक्षितम् । ईश्वरज्ञाने निर्विकल्पकजन्यत्वासम्भव इत्यत उक्तं जन्यसविकल्पकेति । परोक्षवृत्तौ बाधवारणाय चाक्षुषेति । प्रथमसाध्यनिर्वचने इच्छाप्रागभावपक्षीभूतज्ञानजनकादृष्टात्मत्वपक्षीभूतज्ञानजन्यसंयोगप्रागभावव्यावृत्त्यर्थानि क्रमेण विशेषणानि । द्वितीयनिर्वचने तु स्वप्रतियोगिकप्रागभावपक्षीभूतज्ञानजनकादृष्टस्वविषयविषयकसंशयादिजनकादृष्टविशेषान्धकारव्यावृत्त्यर्थानि क्रमेण विशेषणानीति विवरणानुमानविवक्षान्तरमपि निरस्तम् । विषयावरणपूर्वमित्यस्य यथाश्रुतस्यैव साध्यत्वसम्भवेन कुसृष्टविवक्षावैयर्थ्यात् । न हि प्रमाप्रागभावादिक-

मज्ञानातिरिक्तं किञ्चिदावरणमस्ति । तथात्वे तेनैव स्वप्रकाशशब्दब्रह्मावरणसम्भवे हेतोरप्रयोजकत्वापातात् । इत्यादिपूर्वोक्तसकलदोषानतिवृत्तेः ।

एतेन चैत्रप्रमा चैत्रगतप्रमाप्रागभावातिरिक्तानादेर्निवर्तिका प्रमात्वान्मैत्रप्रमावदिति तत्त्वप्रदीपिकोक्तमनुमानं निरस्तम् । सुखादिप्रमायां परोक्षवृत्तौ च बाधात् । किञ्च साध्ये चैत्रगतत्वं प्रमातत्प्रागभावयोरन्यतरस्य विशेषणं तदतिरिक्तानादेर्वा । नाद्यः । वृत्तेस्तत्प्रतिबिम्बितचैतन्यस्य वा प्रमायाश्चैत्रात्मगतत्वाभावात् । प्रागभावस्य प्रतियोगिसामानाधिकरण्यात् । न द्वितीयः । दृष्टान्ते साध्यवैकल्यात् ।

यत्तु चैत्रोऽन्तःकरणावच्छिन्नचैतन्यरूपः प्रमाता । तदाश्रिता च प्रमा तद्वृत्त्यवच्छिन्नचैतन्यरूपपक्षः । साध्ये चैत्रस्थत्वं च प्रागभावविशेषणम् । एवञ्च परं प्रत्यनुमानप्रयोगेण तन्मते प्रमाया आत्माश्रयत्वादस्मन्मतेऽपि वृत्त्यभिव्यक्तिरूपायास्तस्याः प्रतिबिम्बतया बिम्बभूतात्माश्रयत्वात् । प्रमावत्तत्प्रतियोगिकप्रागभावस्यापि तदाश्रितत्वसम्भवात् । सुखादिज्ञानस्य साक्षिरूपतयाऽप्रकाशत्वात् । अनुमित्यादिस्थलेऽपि मौढ्यरूपाज्ञाननिवृत्त्यभ्युपगमान्न कश्चिद्दोष इति । तन्न । त्वन्मते बिम्बप्रतिबिम्बयोरत्यन्तभेदेन आत्मनः प्रमाश्रयत्वायोगात् । औपाधिकभेदाभ्युपगमेऽपि विवक्षितविवेकेनोपाधिमात्राश्रयत्वापत्तेश्च । किञ्च प्रमावत्प्रमातुरात्मनोऽपि प्रतिबिम्बत्वेन प्रमां प्रति बिम्बत्वायोगेन चैतन्यमात्रस्यैव तद्बिम्बतया प्रमातत्प्रागभावयोः प्रमात्वाश्रयत्वं न युज्यते । प्रमातृचैतन्यस्य शुद्धचैतन्यस्य च वस्तुतो भेदाभावात् । बिम्बाश्रयस्य प्रतिबिम्बाश्रयत्वमयुक्तमिति चेत्तर्हि मैत्रप्रमाप्रागभावस्यापि चैत्रगतत्वेन दृष्टान्ते साध्यवैकल्यात् । तत्रान्यस्य चानादेरभावात् । न च प्रतिबिम्बस्यापि बिम्बाश्रयत्वं नोक्तदोष इति वाच्यम् । अधिकसत्ताकस्यैव त्वया कल्पिताधिष्ठानत्वाभ्युपगमात् । न चाश्रयत्वमधिष्ठानातिरिक्तत्वमिति युक्तम् । त्वन्मते तदतिरिक्तस्य तस्य दुर्निरूपत्वात् । इति दिक् । एवमुक्तेष्वनुमानेषु प्रतिपक्षानुमानाभाससाम्यादयो न्यायामृतोक्ता द्रष्टव्या इत्युपरम्यते ॥

*॥ इति भावरूपाज्ञाने परोक्तानुमानप्रमाणभङ्गः ॥ ५ ॥*

★ ★ ★

# ६. अनिर्वचनीयाज्ञाने श्रुत्यादिप्रमाणभङ्गः

ननूक्तरीत्या अज्ञाने प्रत्यक्षानुमानयोरभावेऽपि 'अनृतेन हि प्रत्यूढः', 'अजामेकां', 'नीहारेण प्रावृताः', 'तम आसीत्, 'मायया ह्यन्यदिवे'त्यादि श्रुतिभिरेव तत्सिद्धिरिति चेत् । न तावदनृतेन हि

इत्यनृतशब्देन तत्सिद्धिः। तस्य दुष्कर्मपरत्वात्। ब्रह्मलोकं प्राप्तस्य दुःखाननुभवेन अनृतशब्दस्य दुष्कर्मपरत्वं न युज्यत इति चेत्। भ्रान्तोऽसि। न हीयं श्रुतिर्मोक्षविषया येनोक्तदोषः स्यात्। किन्तु सुषुप्तिविषया अहरहर्ब्रह्म गच्छन्त्य इति तल्लिङ्गात्। न च सुषुप्तिविषयत्वेऽपि तदानीं कार्यमात्रलयेन तद्धेतुकर्माभिव्यक्त्ययोगात् तत्परत्वं न तस्य युक्तमिति वाच्यम्। त्वयापि सुप्तौ कार्यमात्रलयस्याङ्गीकर्तुमशक्यत्वात्। अन्यथा 'स एव तु कर्मानुस्मृतिशब्दविधिभ्य' इति सूत्रे त्वदीयभाष्यविरोधात्। सुप्त्युत्थितस्य विचित्रकार्यदर्शनेन कर्मणां तदानीमपि अविलयस्य अभ्युपगन्तव्यत्वाच्च। अन्यथा कृतहानादिकं स्यात्। कर्मणां सत्त्वेऽप्यभिव्यक्तिः नास्तीति चेत्। किं ततः। अनृतशब्दस्य कर्मपरत्वे तदनभिव्यक्तेरबाधकत्वात्। घटादिशब्दस्यान्धकाराद्यावृतघटादिपरत्वस्यापि दर्शनात्। अव्यक्तस्वभावस्य कर्मणो दुःखाज्ञानादिकार्यानापादकत्वातिरिक्तानभिव्यक्तेरभावाच्च। क्लृप्तकर्मणामेव ब्रह्मज्ञानरूपकार्यानुत्पादव्याप्यत्वेन प्रतिबन्धकताया आवश्यकतया अभिव्यक्तत्वावश्यम्भावाच्च। न ह्यभिव्यक्तिर्नाम कार्योन्मुख्यादन्यदस्ति।

न च अनृतशब्दस्य दुष्कर्मपरत्वे प्रमाणाभावः। त्वदभिमताज्ञानपरत्वेऽपि तदभावात्। 'अनृतेनैव मोहेनाप्रतिपन्नस्वरूपिणा। न विदन्त्यद्वयं तत्त्वं शम्भोर्यत्परमं पदमि'ति स्मृतिरेव अनृतमज्ञानमित्यत्र प्रमाणमिति चेन्न। तत्स्मृतेरनृतशब्दस्य कर्मपरत्वेऽप्यविरोधात्। मोहशब्दस्य भावरूपाज्ञानपर्यायत्वाभावात् विपरीतज्ञान एव प्रसिद्धेश्च। मोहजनकत्वेनाज्ञानवत् कर्मणोऽपि ग्राह्यत्वात्। कर्मणोऽपि मोहजनकत्वात्। कर्मणां तज्जनकत्वसम्प्रतिपत्तेश्च। अप्रतिपन्नस्वरूपिणेत्यनेन अनृतशब्दार्थे ज्ञानविषयत्वावेदनेन तेन त्वदभिमताज्ञानग्रहणायोगाच्च। प्रतिपन्नस्य रूपिणेति पाठे शङ्काया एवाभावाच्च। न विदन्त्यद्वयं तत्त्वमित्यत्र ज्ञानाभावस्यावेदनाच्च। अतोऽत्राप्यनृतशब्देनैव तद्ग्रहणमिति परिशिष्यते। तच्च न युक्तम्। तस्य कर्मपरत्वेनाप्युपपन्नत्वात्। किञ्च एवं 'पुण्यस्य कर्मणो दूराद्गन्धो वात्येवं', अनृतादात्मानं जुगुप्सेदित्यत्रापुण्यकर्मण्यनृतशब्दप्रयोगात्। 'ऋतं पिबन्तावि'त्यत्र 'ऋतं सत्यं तथा धर्म' इति स्मृतौ च ऋतशब्दस्य पुण्ये प्रयोगात्। अनृतशब्दस्य दुष्कर्मपरत्वमेवोचितम्। ऋतं पिबन्तौ इत्यत्र ऋतशब्देन कर्मफलस्यैव ग्रहणम्। पिबन्ताविति पानकर्मत्वावेदनात् सुकृतस्य लोक इति पुण्यस्य पृथङ्निर्देशाच्चेति चेत्। तत्र तथात्वेऽपि श्रुत्यन्तरानुसारेण अनृतशब्दस्य अनृतवचनप्रयुक्तपापपरत्वे बाधकाभावेन च सर्वथा तस्य पराभिताज्ञानपरत्वासिद्धेश्च इति।

किञ्च अनृतशब्दः परिणामिप्रधानपरो वास्तु। न च 'प्रधानं हि जडं विद्धि क्षयिष्णु त्रिगुणात्मकम्। अचेतनमसच्चैतत्तथा सर्वा शुभास्पदमि'ति वचनानुसारेण प्रधानमप्यज्ञानमेव। अन्यथा तस्य क्षयिष्णुत्वाशुभास्पदत्वादीनि विरुध्येरन्निति वाच्यम्। प्रधाने क्षयिष्णुत्वस्य कार्यकारेणैव निर्वा-

ह्यत्वात् । स्वरूपेण क्षयिष्णुत्वे च 'गौरनाद्यन्तवती', 'एषोऽश्वत्थः सनातनः', 'अश्वत्थं प्राहुरव्ययं', 'न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठा । अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वे'त्यादिश्रुतिस्मृतिषु तस्य स्वरूपेण अनाद्यनन्तत्वप्रतिपादनं तत्प्रयुक्तसंसारप्रवाहविच्छेदप्रतिपादनं च विरुद्ध्येत । अशुभास्पदत्वं प्रधानस्य सम्भवति ।

किञ्च अहमज्ञ इत्यादि प्रतीतिसिद्धज्ञाननिवर्त्यत्वमभिमताज्ञानस्य अस्मदभिमताद्युक्तस्वभावे श्रुत्यैकसमधिगम्यानाद्यनन्तप्रधानशब्दितपरिणामिकारणस्य कथमभेदः । न च तत्र प्रमाणाभावः । 'गौरनाद्यनन्तवती', 'चतुर्विंशतिसङ्ख्यातमव्यक्तं व्यक्तमुच्यते', 'व्यक्ताव्यक्तं भजते विश्वमीशः', 'यदा तमस्तन्न दिवा न रात्रिः', 'तमो वा इदमेकमासमित्यसत्यविक्रिया', 'अव्यक्तादीनि भूतानि व्यक्त-मध्यानि भारत । अव्यक्तनिधनान्येव तत्र का परिदेवना । अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे । रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञकः । आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वत' इत्यादिश्रुतिस्मृतीनां सत्त्वात् । एवमजामन्त्रो न त्वदभिमताज्ञानपरः । 'ज्योति-रुपक्रमात्तु तथा ह्यधीयत एक' इति सूत्रे त्वद्भाष्ये तस्य तेजोऽबन्नपरत्वप्रतिपादनात् । 'चमसवद-विशेषादि'त्यत्र त्वद्भाष्ये अजामन्त्रस्य साङ्ख्याभिमतप्रधानपरत्वस्यैव निराकरणेनेश्वराधिष्ठितप्रधान-परत्वेऽपि अविरोधात् । तथाच भगवद्वचनम् । 'मयाध्यक्षेण प्रकृतिः सूयते सचराचरमि'ति 'जहा-त्येनामि'ति त्यागमात्रस्योक्तेश्च ।

एवं नीहारेण प्रावृत्ता इत्यत्र नीहारशब्दोऽपि जगत्कारणभूतत्रिगुणप्रकृतिपरः । 'त्रिभिर्गुणमयैर्भावै-रेभिः सर्वमिदं जगत् । मोहितं नाभिजानाति मामेभ्यः परमव्ययम् । दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति भगवद्वचनैकार्थ्यात् । न चात्राप्यस्मदभिमता-ज्ञानमेवोच्यत इति युक्तम् । गुणमयीति तद्व्यावृत्तेः । गुणमयत्वे च अज्ञानस्य विवादपर्यवसानात् । शुक्त्याद्यज्ञाने रूप्यादौ त्रिगुणत्वादर्शनाच्च । 'मायामेतां तरन्ति ते' इति तरणमात्रावेदनात् च । तरणं चात्र नाशो न भवति । 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसी'ति श्रुत्यैकार्थ्याच्छ्रुतावपि नाशार्थकत्वे परं पारमित्युक्तिवैयर्थ्यात् । 'तरति ब्रह्महत्यां', 'तरति शोकमात्मवित्' तर्तुमृत्युमविद्यये'-त्यादि श्रुतिषु तरणशब्दो नाशार्थको दृष्ट इति चेन्न । 'एनं सेतुं तीर्त्वान्धः सन्ननन्धो भवति, 'नदीं तरति गोमतीमि'त्यादावर्थान्तरेऽपि तरणशब्दप्रयोगदर्शनात् । जगदुपादाननित्यत्वस्य जगत्प्रवाहाविच्छेदस्य चार्थान्तरपरिग्रहे नियामकस्योक्तत्वाच्च । न च ज्ञानकृततरणस्यान्यस्य दुर्निरूपत्वेन नाशार्थत्वमिति वाच्यम् । 'एनं सेतुं तीर्त्वे'त्यादौ ज्ञानकृततरणस्यान्यस्य त्वयापि वक्तव्यत्वात् । तस्य प्रकृतिरूपत्वेन तरणशब्दार्थस्य सुनिरूपत्वाच्च । न च 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तव' इति भगवद्वचनानुसारेण

नीहारशब्देनाज्ञानमेव ग्राह्यमिति वाच्यम् । तत्रत्य-अज्ञानशब्दस्य त्वदभिमताज्ञानपरत्वासिद्धेः । ज्ञानविरोधिकर्ममात्रपरत्वात् । 'नादत्ते कस्यचित्पापं न चैव सुकृतं विभुरि'ति पूर्ववाक्ये कर्मणां प्रकृतत्वात् । 'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मन' इत्युत्तरवाक्ये ज्ञाननाश्यत्वावेदनाच्च । 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे', 'सर्वा पाप्मनोऽतो निवर्तन्ते', 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन', 'सर्वज्ञानप्लवेनैव वृजिनं सन्तरिष्यसी'त्यादिश्रुतिस्मृतिषु कर्मणां ज्ञाननाश्यत्वावेदनात् ।

किञ्च 'तम आसीत्' इत्यत्र तमःशब्दो न पराभिमतानिर्वचनीयाज्ञानपरः । आसीदिति तस्य सत्यत्वस्यैवोक्तत्वात् । न च तद्व्यावहारिकसत्त्वपरम् । अन्यथा नासदासीन्नोसदासीदिति पारमार्थिकसत्त्वासत्त्वनिषेधविरोध इति वाच्यम् । 'सत्यं ज्ञानं', 'अस्ति ब्रह्मे'त्यादावपि व्यावहारिकसत्त्वपरत्वापातात् । 'न सत्तन्नासदुच्यते' इति पारमार्थिकसत्त्वासत्त्वनिषेधविरोधस्य अत्रापि सत्त्वात् । न च तत्र 'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासन् शिव एव केवलः' इत्यादाविव 'मूर्तं सदिति सम्प्रोक्तममूर्तमसदुच्यत' इत्यादिवचनानुसारेण मूर्तामूर्तनिषेधपरत्वं, तद्वैलक्षण्यपरत्वं वाश्रीयत इति वाच्यम् । नासदासीदित्यत्रापि तुल्यत्वात् । न च तम आसीदिति कालसम्बन्धित्वरूपमसद्वैलक्षण्यरूपं च असत्त्वमावेद्यत इति युक्तम् । सङ्कोचे कारणाभावात् । अन्यथा सत्यज्ञानादिवाक्येऽपि तथात्वापत्तेरिति दिक् ।

एवं मायया ह्यन्यदिवेत्यत्र मायाशब्दो न पराभिताज्ञानपरः । मायाशब्दस्य विचित्रशक्तिपरत्वात् । 'तान्यज्ञस्य मायया सर्वानव यजामह' इत्यादौ तत्रापि । न च विचित्रप्रासादनिर्मातरि विचित्रशक्तिमति मायाविशब्दप्रयोगाभावात् तस्यानिर्वचनीयाज्ञानपरत्वमेव युक्तमिति वाच्यम् । अज्ञानिपुरुषेऽपि तत्प्रयोगाभावात् । 'एकस्त्वमेव भगवानिदमात्मशक्त्या मायाख्यये'ति भागवते शक्तिः मायाख्येति व्याख्यातत्वात्, 'जलं संस्तभ्य माययेे'त्यादौ भारते जले स्तम्भनशक्तौ प्रयोगात् । एतेन 'इन्द्रो मायाभिः पुरुरूप ईयत' इत्यत्र मायाशब्दो व्याख्यातः । 'परास्य शक्तिर्विविधैव श्रूयत' इत्यादि श्रुत्यैकार्थ्यात् । न चैवं 'भूयश्चान्ते विश्वमायानिवृत्तिरि'ति श्रुतौ तन्निवृत्तिप्रतिपादनं विरुध्येतेति वाच्यम् । तच्छ्रुतेः पूर्वोत्तरवाक्यानुसारेण सकलकर्मनिवृत्तिपरत्वस्योक्तत्वात् । विचित्रशक्तियोगेन कर्मस्वपि मायाशब्दप्रयोगोपपत्तेश्च । निवृत्ताश्चोरा इत्यादिवत् निवृत्तिश्रुतेः कार्यवैमुख्यप्रतिपादनपरत्वोपपत्तेश्च ।

एतेन श्रौतप्रयोगविरोधे 'शास्त्रस्था या तन्निमित्तत्वादि'ति न्यायेन अर्थान्तरविषयकमायाशब्दप्रयोगोऽन्यथा नेतव्य इति निरस्तम् । तन्न्यायस्य सम्प्रतिपन्नश्रौतप्रयोगविरोधस्थलविषयत्वात् ।

मायाशब्दस्य च त्वदभिमताज्ञानविषयत्वस्य असम्प्रतिपत्तेः । अर्थान्तरेऽपि श्रौतादिप्रयोगस्योदाहृतत्वाच्च । 'अस्मान्मायी सृजते विश्वमीशस्तस्मिंश्चान्यो मायया सन्निरुद्धः' इत्यत्र तु मायाशब्दः प्रकृतिपरः । 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमि'ति श्रुत्यैव व्याख्यानात् । कथमसतः सज्जायेतेत्यादाविव मायाशब्दार्थो मिथ्याभूतो मायिशब्दार्थश्च परव्यामोहक इति कुसमयप्राप्तभ्रान्तिनिवृत्त्यर्थमेव तच्छ्रुतिप्रतिपत्तेः । मायाशब्दस्याज्ञानार्थकत्वे ब्रह्मणोऽज्ञत्वप्रसङ्गः । न चेष्टापत्तिः । 'निरवद्यं निरञ्जनम्', 'ज्ञाज्ञौ द्वौ अजावीशानौ', 'यः सर्वज्ञः सर्वविदि'त्यादि श्रुतिविरोधात् । न च स्वाश्रयाव्यामोहकत्वव्यामोहकत्वाभ्यां मायाविद्ययोर्भेदान्नोक्तदोष इति वाच्यम् । 'अनादिमायया सुप्तो यदा जीवः प्रबुद्ध्यत' इत्यादौ स्वाश्रयव्यामोहकेऽपि मायाशब्दप्रयोगात् उक्तविभागस्य अज्ञानसिद्ध्यधीनत्वेन अन्योन्याश्रयात् । स्वाश्रयव्यामोहकमायानिवृत्तेरनपेक्षिततया भिन्नाश्रयत्वेन च अनिवर्त्यत्वप्रसङ्गाच्च । उपाधेः प्रतिबिम्बपक्षपातित्वादिकल्पनस्य जीवेश्वरभेदौपाधिकसत्त्वसिद्ध्यधीनत्वेनायोगात् इत्यन्यत्र विस्तरः ।

तस्मात् श्रुत्यादिबलादपि न पराभिमताज्ञानसिद्धिः । एवं पराभिमताज्ञानाभावे अनुपपत्त्यभावान्नानुपपत्तिरपि तत्साधिका । अज्ञानाश्रयादि दूषणं च न्यायामृते प्रपञ्चितम् । तत्रैवानुसन्धेयम् । एवञ्च 'यः स्वाज्ञानाद्विश्वयोनिस्तदीश' इत्याद्यपद्योक्तमयुक्तम् । वेदान्तानां निर्विशेषाखण्डार्थपरत्वं प्रत्यग्ब्रह्मणोरैक्यं च **श्रुत्यर्थसारे** अस्माभिर्निराकृतमिति नेह प्रस्तूयते । जीवभिन्नानन्तकल्याणगुणाकराखिलवेदवेद्यपरब्रह्मज्ञानं च प्रसादद्वारा मोक्षसाधनमिति तदर्थतया विहितश्रवणादावधिकारी प्रवर्तत इति स्थितिरिति ॥

*॥ इति अनिर्वचनीयाज्ञाने श्रुत्यादिप्रमाणभङ्गः ॥ ६ ॥*

★ ★ ★

# ७. श्रवणादीनां ज्ञानरूपत्वविधेयत्वसमर्थनम्

नन्वेतदयुक्तम् । श्रवणादीनां ज्ञानरूपत्वेन विधानायोगात् । पुंव्यापारपरतन्त्रं हि विधेयम् । न च ज्ञानं तथा । तस्य प्रमाणवस्तु परतन्त्रत्वात् । दुर्गन्धादिज्ञानानामपुंतन्त्रत्वदर्शनादिति चेत् । अत्र केचिदाहुः । शक्तितात्पर्यावधारणानुकूलन्यायगोचरचेतोव्यापाररूपमेव श्रवणं तत्र विधेयम् । न हि न्यायमननुसन्धाय कश्चित्तात्पर्यमवधारयति । न च न्यायानुसन्धानमन्वयव्यतिरेकाभ्यां पुंव्यापारतन्त्रं ज्ञानबहिर्भूतं केनचिदपह्नोतुं शक्यते । उक्तं च सुरेश्वराचार्यैः । 'श्रवणादिक्रिया तावत् कर्तव्या हि

प्रयत्नत' इति । न च न्यायानुसन्धानं ज्ञानमेव । तस्य ज्ञानभिन्नत्वे प्रमाणाभावादिति वाच्यम् । पुंव्यापारानुविधायित्वस्यैव तस्य तथात्वे प्रमाणत्वात् । न चैवं तात्पर्यावधारणमुद्दिश्यैव श्रवणादिविधानं लाभदर्शनोद्देशेन इति वाच्यम् । तस्य विधेयश्रवणपरिचायकतया तत्कोटिनिक्षिप्तस्योद्देश्यत्वायोगात् इष्टव्य इति श्रुत्या प्रदर्शनस्यैवौचित्याच्च । न च एवं तात्पर्यावधारणमेव चेतोवृत्त्यन्तरात्मकं विधेयं श्रवणमस्तु इति वाच्यम् । तात्पर्यलिङ्गोपक्रमादिन्यायानुसन्धाने जायमानस्य तस्य ज्ञानबहिर्भावायोगात् । योगे च तस्मात् तात्पर्यसंशयाद्यनिवृत्तिप्रसङ्गात् ।

अयमेव वाक्यार्थो युक्तोऽन्यो वेत्येवंरूपायुक्तत्वशङ्कानिवर्तकं चेतोरूपं मननमपि विधेयमेव । तदुक्तं मतिर्यावदयुक्ततेति । एवं विजातीयप्रत्ययतिरस्कारेण सजातीयप्रत्ययप्रवाही करुणात्मकं निदिध्यासनमपि विधेयम् । न च श्रुधातोर्ज्ञानविशेष एव प्रसिद्धेः श्रोतव्य इत्यादिकं ज्ञानविधायकम् । न तूक्तरीत्या चेतोव्यापारविधायकमिति वाच्यम् । ज्ञानविशेषप्रसिद्धेनापि तेन विधिविषयत्वयोग्यतदन्यस्यैव लक्षणीयत्वात् । 'गोभिः श्रीणीत मत्सरमि'त्यादौ विधावपि लक्षणाया अङ्गीकारात् । न च एवं प्रत्यवेक्षणमाज्यं भवतीत्यादौ ज्ञानविधिर्न स्यादिति वाच्यम् । इष्टत्वात् । एवंविधेर्ज्ञानविधित्वेन प्रतीयमाने सर्वत्र लक्षणया तदनुकूलव्यापारविधानस्यैवाभ्युपगमात् । न चैवं समन्वयाधिकरणभाष्यविरोधः । तत्र वेदान्तमात्रेषु विधिमात्रनिराकरणादिति वाच्यम् । तस्य ज्ञानविधिमात्रनिराकरणाभिप्रायत्वात् । अन्यथा अनियोज्यविषयत्वादिति हेतोरुपन्यासो विरुद्धश्चेत । विषयनियोज्यसम्भवे तु विधिर्भाष्यानुमत इति गम्यते । प्रकृते तु विषयनियोज्यसम्भव इति न कश्चिद्दोष इति ।

अत्र ब्रूमः । ज्ञानं न विधेयमिति कोऽर्थः । तत्किं लिङादिजन्यज्ञानविषयो नेति, किं वा प्रवृत्त्यौपयिकधर्मवत्तथा लिङादिना तन्न बोध्यत इति । नाद्यः । बाधात् । ज्ञानस्य सतस्तात्पर्यावधारणादेः त्वयाप्युद्देश्यतया विधिजन्यज्ञानविषयत्वोपगमात् । स्वर्गादेरपि तथा ज्ञानविषयत्वोपगमाच्च । द्वितीयेऽपि लिङादिना बोध्यमानः प्रवृत्त्यौपयिको धर्मः कीदृश इति विवेचनीयम् । इष्टसाधनत्वं चेत् ज्ञानस्य कथमविधेयत्वं त्वया तात्पर्यावधारणादिरूपज्ञानस्य दर्शनस्य च प्रमेयावगममोक्षरूपेष्टसाधनत्वोपगमात् । कृतिसाध्यत्वे सतीष्टसाधनत्वं स इति चेत् न । ज्ञानेऽपि तत्सत्त्वात् । तत्र परम्परया कृतिसाध्यत्वस्य त्वयाऽप्यङ्गीकारात् । साक्षात्कृतिसाध्यत्वमेव तत्र प्रयोजकमिति चेन्न । 'व्रीहीनवहन्ति', 'ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यात्', 'पायसं ब्राह्मणैः भोजयितव्यमि'ति अवघातकरशिरःसंयोगादिरूपनमस्कारब्राह्मणभोजनादेरविधेयत्वापातात् । न हि दृढतरव्रीहिमुसलसम्बन्धरूपोऽवघातः करशिरःसंयोगादिरूपो नमस्कारो वा साक्षात्कृतिसाध्यः । न वा ब्राह्मणनिष्ठा भुजिक्रिया साक्षाद्यजमानकृतिसाध्या । ननु दृढतरव्रीहिमुसलादिसम्बन्धानुकूला करशिरःसंयोगानुकूला

यजमाननिष्ठब्राह्मणभोजनानुकूला च क्रिया साक्षात्कृतिसाध्येति तत्र विधेयत्वं युक्तमिति चेत् । तथा सति अवघातादीनां सकललोकप्रसिद्धविधेयत्वापलापप्रसङ्गात् । अवघातादिशब्दार्थस्य सर्वस्य साक्षात्कृत्यसाध्यत्वेऽपि साक्षात्तत्साध्यकिञ्चिदर्थघटितमूर्तित्वेन विधेयत्वमुपपत्स्यत इति चेत् । तर्हि साक्षात्कृतिसाध्यमनःप्रणिधानादिघटितत्वेन औपदेशिकवाक्यार्थग्रहणादिरूपश्रवणादिपदार्थस्य विधेयत्वमस्तु । मनःप्रणिधानादेर्न श्रवणादिपदार्थान्तर्गतत्वमिति चेन्न । अवघातादिपदार्थेष्वपि साक्षात्कृतिसाध्यार्थानां नान्तर्गतिरिति वाचा अवचनावकाशप्रसङ्गात् । अवहितमनस्येव शृणोतीति अविगीतव्यवहाराच्च ।

किञ्च कृतिसाध्यत्वस्य प्रवृत्त्यौपयिकत्वं किं विध्यर्थतया किं वा वस्तुतः । नाद्यः । कृत्युत्तरभविष्यत्वरूपस्य तस्यान्वयव्यतिरेकसिद्धत्वेन विध्यर्थत्वायोगात् । अनन्यलभ्यस्यैव शब्दार्थत्वेन स्वीकार्यत्वात् । लोकसिद्धाकारव्यतिरेकाकारेणैव द्रव्यक्रियागुणादिषु विधेयत्वाभ्युपगमात् । यथाहुः । 'द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते । तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मते'ति । न द्वितीयः । अवघातादिष्विव श्रवणादिष्वपि कृतिसाध्यत्वस्योपपादनात् । किञ्च साक्षात्कृतिसाध्यत्वमेव प्रवृत्तिप्रयोजकम् । तच्च ज्ञानेनास्तीति त्वया कथं निर्णीतम् । ननु कृतिसाध्यत्वस्य दुर्गन्धादिज्ञानेष्वदर्शनात् तदनुगतस्य कृत्यसाध्यतावच्छेदकस्य दुर्वचत्वात् । दुर्गन्धज्ञानत्वादीनामननुगमात् । लाघवेन ज्ञानत्वमेव तदवच्छेदकं कल्प्यत इति न ज्ञानं कृतिसाध्यमिति चेन्न । तृणादिक्रियाविशेषे भोजनादिक्रियाविशेषे च विधेयत्वं न दृष्टमिति यागदानहोमादिरूपक्रियाविशेषेऽप्यविधेयत्वप्रसङ्गात् । अभावस्य अनियम्यतया दुर्गन्धादिज्ञानेषु पुरुषकृत्यसाध्यतायां ज्ञानत्वं प्रयोजकमित्यस्य असम्भवदुक्तिकत्वाच्च । कृतिसाध्यत्वप्रयोजकाभावेनैव दुर्गन्धादिज्ञानेषु कृत्यसाध्यत्वोपपत्तेश्च । न च ज्ञानविशेषेषु कृतिसाध्यत्वे सिद्धे, स्यादेतदेवम् । न त्वेतदस्ति । तत्र कृतिसाध्यत्वे प्रमाणाभावादिति वाच्यम् । अन्वयव्यतिरेकाभ्यां ध्रुवारुन्धत्यादिज्ञानस्य कृतिसाध्यत्वानुभवात् । अन्वयव्यतिरेकयोस्तदनुकूलव्यापारविषयत्वकल्पनस्य ज्ञानाविधेयत्वसिद्ध्यधीनत्वेनान्योन्याश्रयात् । घटादावपि कृत्यन्वयव्यतिरेकयोस्तदनुकूलव्यापारविषयत्वस्य वक्तुं शक्यतया घटादीनामपि कृत्यसाध्यतापत्तेश्च । न हि घटादीनामपि तदन्वयव्यतिरेकविषयत्वं न ज्ञानविशेषाणामित्यत्र साधकमस्ति । अनुभवापलापश्च अधिकः ।

ननु ज्ञानविशेषेषु कृतिसाध्यतावच्छेदकमनुगतं न सम्भवतीति तदेव बाधकम् । तथा हि न तावद् ज्ञानत्वं तदवच्छेदकम् । तस्य दुर्गन्धादिज्ञानेऽपि सत्त्वेनातिप्रसङ्गात् । नापि दुर्विज्ञेयार्थविषयकज्ञानत्वम् । दुर्विज्ञेयतावच्छेदकस्यानुगतस्याभावेन तदर्थविषयकज्ञानत्वस्य दुर्ग्रहत्वात् । बहुदुःखा-

पादककृतिसाध्यज्ञानविषयत्वातिरेकेण तत्तदर्थेषु दुर्विज्ञेयत्वस्य वक्तुमशक्यत्वाच्च । नापि सन्दिग्धार्थ-विषयकावधारणत्वम् । त्वदभिमतश्रवणेऽभावात् । तस्य त्वयाऽज्ञानमात्रनिवर्तकत्वाभ्युपगमात् । सन्देहयोग्यत्वविवक्षायां च घटादिज्ञानानामपि कृतिसाध्यतापत्तेः । नापि शास्त्रार्थविषयावधारणत्वम् । एकक्षेत्रगतानेकगकारेष्वभिमतगकारज्ञानस्य कृतिसाध्यत्वोपगमेनाव्याप्तेः । तद्विषयगकारादेरशास्त्रार्थ-त्वादिति चेन्न । घटादीनामपि उक्तरीत्या कृतिसाध्यतावच्छेदकस्यासम्भवेन तदसाध्यतापत्तेः । यदि कार्यतावच्छेदकाननुगमस्यादोषत्वाजन्यगुणत्वसंयोगत्वादीनां द्रव्यजन्यतावच्छेदकत्ववत् घटत्वादी-नामेव तदवच्छेदकत्वं तर्ह्यरुन्धतीदर्शनत्वादीनामेव अननुगतानां तदवच्छेदकत्वमस्तु । किञ्च प्रति-गृहीत्रादिपरतन्त्रस्य दानादेरिव प्रमाणादिपरतन्त्रस्यापि ज्ञानविशेषणस्य पुंतन्त्रत्वमुपपद्यते । एकश्रोत्र-गतानेकगकारेषु अभीष्टगकारज्ञानस्य प्रमाणवस्त्वतिरिक्तबुभुत्साप्रयत्नसापेक्षत्वदर्शनाच्च । बुभुत्सादेः सामग्र्यन्तरप्रतिबन्धकत्वं मनःसमवधानोपक्षीणत्वं वेति वाच्यम् । दोषाणामिव बुभुत्सादेरन्यप्रति-बन्धकत्वेऽपि अन्यहेतुत्वस्यापि सम्भवात् । शब्दान्तरासमवधानेऽपि यत्र शब्दविशेषश्रवणापेक्षया स्वयं प्रयतते तत्र बुभुत्साप्रयत्नयोः कारणत्वस्य क्लृप्तत्वेन शब्दान्तरसमवधानस्थलेऽप्यनभिमतगकारज्ञानं प्रति तयोर्हेतुत्वस्य दुस्त्यजत्वाच्च । न हि तयोः कार्यानुरोधेन क्वचित्प्रतिबन्धकत्वमपि कल्पनीय-मित्येतावता क्लृप्तकारणाभावस्त्यक्तुं शक्यः ।

एतेन मनःसमवधानोपक्षीणत्वमिति निरस्तम् । अभिमतविषयसम्बन्धातिरेकेण मनःसमवधान-स्यायोगेन त्वद्रीत्या तदुपक्षीणत्वस्यायोगात् । तत्रापि तदनुकूलक्रियाया एव कृतिसाध्यत्वात् । अनभिमतविषयसम्बन्धनिवृत्तेः मनःसमवधानशब्दार्थत्वेऽप्युक्तदोषानिस्तारात् ।

किञ्च श्रोतव्य इत्यादौ ज्ञानस्यैव विधेयत्वं कुतो नाङ्गीक्रियते किं बाधकसत्त्वात् साधका-भावाद्वा । नाद्यः । असिद्धेः । बाधकाभावस्य दर्शितत्वात् । न द्वितीयः । श्रोतव्य इत्यादेरेव साधक-त्वात् । 'प्रत्यवेक्षितमाज्यं भवति', 'यदेव विद्यया करोति', 'विष्णोः कर्माणि पश्यत', 'विदुषा कर्म कर्तव्यम्', 'अग्निचित् कपिला सत्री राजा भिक्षुर्महोदधिः । दृष्टिमात्रात् पुनन्त्येते तस्मात् पश्येत नित्यशः । सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहती'त्यादिश्रुतिस्मृतिषु ज्ञानविधिदर्शनाच्च । 'यदेव विद्यया करोति', 'विदुषा कर्म कर्तव्यमि'त्यत्र ज्ञानस्य कर्मानुष्ठानाङ्गत्वावेदनेऽविहितस्याङ्गत्वायोगेन विधानावश्यम्भावात् । एवं यजेतेत्यादिकमपि ज्ञानविधिरेव । यागोऽपि हि देवतोद्देशेन द्रव्यत्यागात्मा बुद्धिविशेषितः । तथा द्वादशाहेऽपि वाक्ये दशमे बुद्धिविशेषरूपस्य मानसङ्ग्रहादेर्विधानं दृश्यते । अनया हि पात्रेण समुद्रं रसया प्राजापत्यं मनोग्रहं गृह्णातीति तथा भक्षे हीति मन्त्रे तृप्तेरनुनिष्पादितया

अननुष्ठेयत्वेन तृप्तिप्रकाशस्य । तत्र विभज्यप्रयोगाभावेऽपि अवेक्षणस्य अनुष्ठेयत्वात् । सुचक्षा अवख्येषमिति तत्प्रकाशकभागस्य प्रेक्षणे विभज्य विनियोग इति तृतीयेऽभिहितम् । तथा दधि-दर्शनादिरूपमङ्गलस्यापि विधेयत्वं सर्वतन्त्रसिद्धमेव । न चोदाहृतस्थले सर्वत्र ज्ञानानुकूलव्यापार एव विधेय इति वाच्यम् । श्रुतहानप्रसङ्गात् । अश्रुतकल्पनापत्तेर्लक्षणादोषप्रसङ्गाच्च । न च बाधकं विना लक्षणाश्रयणं युज्यते । क्वचिद्विधौ लक्षणाश्रयणं त्वगत्यैव । प्रकृते च मुख्यार्थभूतज्ञानस्यैवोक्तरीत्या विधिविषयत्वयोग्यतया लक्षणया अङ्गीकार्यत्वाच्च ।

किञ्च दुर्गन्धादिज्ञानस्येच्छाविषयत्वाभावेऽपि ब्रह्मज्ञानस्य तद्विषयत्ववत् ज्ञानान्तरस्य नियमा-दृष्टासाध्यत्वेऽपि ब्रह्मज्ञानस्य तत्साध्यत्ववत् पर्वतादिज्ञानस्य नयनोन्मीलने सति प्रयत्नान्तरनिरपेक्ष-त्वेऽपि ध्रुवारुन्धत्यादिज्ञाने तत्सापेक्षत्ववच्च सूक्ष्मब्रह्मज्ञानस्येच्छाप्रयत्नसाध्यत्वं भवत्येव । शास्त्रार्थ-ज्ञानस्य नियमेन पुंतन्त्रत्वदर्शनात् । ब्रह्मणश्च शास्त्रार्थत्वात् । प्रशस्ताप्रशस्तज्ञानयोश्च विधिनिषेध-दर्शनात् । इच्छादिना चोत्पत्तिनिरोधयोरनुभवात् । अनेकशाखाजन्यज्ञानरूपग्रहणस्य तदुपक्रमोपसंहा-रैकरूप्याद्यनुसन्धानरूपमननस्य श्रुतमतानेकगुणविशिष्टतया निरन्तरानुस्मरणरूपस्य निदिध्यासनस्य चातिप्रयत्नसाध्यत्वानुभवात् । तेषां च ज्ञानानात्मकत्वे श्रवणं यावदज्ञानमिति अज्ञानविरोधित्वा-वेदकस्मृतेः श्रवणेनाज्ञानं निवृत्तमित्यनुभवस्य चानुपपत्तेः । 'विज्ञाय प्रज्ञां कुर्वीते'त्यादौ प्रज्ञायाः कृतिसाध्यत्वेन विधानात् । विज्ञानानन्तरभाविनः प्रज्ञाशब्दार्थस्य विचारत्वानुपपत्तेः ।

ध्यानस्य च त्वया विधेयत्वेनाङ्गीकृतत्वात् । तस्य च ज्ञानानात्मकत्वे स्वविषये व्यवहाराभाव-प्रसङ्गात् । ध्यानज्ञाने ध्यानविषये व्यवहाराङ्गीकारे गौरवात् ध्यानविषये च कदाचिन्न जानामी-त्यनुभवप्रसङ्गात् । संस्कारस्य ज्ञानजन्यत्वेन ध्याते स्मरणाभावप्रसङ्गात् । तस्याभिध्यानादिति श्रुतौ ध्यानस्य मायाख्याऽविद्यानिवर्तकत्वोक्तेः । त्वया विधेयत्वेनाङ्गीकृतायामुपासनायां च श्रुतौ 'मनो ब्रह्मेत्युपासीत', 'य एवं वेद', 'आत्मेत्येवोपासीत' 'यस्तद्वेदे'त्यादि बहुस्थलेषु ज्ञानार्थविदिधातुप्रयोगे-णोपासनाया ज्ञानात्मकत्वात् । 'खण्डस्मृतिर्धारणा स्यात् अखण्डा ध्यानमुच्यते' इत्यादिस्मृत्या ध्यानज्ञानरूपस्य कृतिसाध्यत्वावेदनात् । ब्रह्मपरवाक्यमध्येऽपि उपासनादिविधिवत् ज्ञानविधेरपि सम्भवाद्वा तथैव वैदिकलिङादेरस्वारस्यायोगाच्च । न च ज्ञानस्याक्रियात्वेनाविधेयत्वम् । तत् हि धात्वर्थरूपत्वं वाऽपूर्वापरीभूतत्वं वाऽस्पन्दात्मकत्वं वा । नाद्यः । ज्ञानस्यापि ज्ञाऽवबोधने इत्यादि धात्वर्थत्वात् । न द्वितीयः । ज्ञानोत्पत्तिविनाशयोरन्वयव्यतिरेकसिद्धत्वात् । न तृतीयः । यागादे-रविधेयत्वापातात् । द्रव्यक्रियागुणादीनामविधेयत्वापत्तेश्चेति ।

किञ्च मानसव्यापाररूपन्यायानुसन्धानं श्रवणमिति वदता तदेव किं तात्पर्यावधारणादिहेतुः । किं वा न्यायविषयं ज्ञानमपि तद्धेतुः । नाद्यः । लिङ्गज्ञानाभावे लैङ्गिकज्ञानायोगेन तात्पर्यावधारणस्यानुदयप्रसङ्गात् । न च तात्पर्यावधारणमपि मानसव्यापाररूपमिति युक्तम् । ततस्तात्पर्यसंशयाद्यनिवृत्तिप्रसङ्गात् । त्वया तात्पर्यावधारणस्य ज्ञानरूपत्वाभ्युपगमाच्च । न च तात्पर्यावधारणमनुमितिरिव न भवतीति युक्तम् । तात्पर्यावधारणस्य प्रत्यक्षादिबहिर्भावे तज्जनकस्य मानसव्यापारस्य प्रमाणान्तरत्वापत्तेः । प्रत्यक्षरूपत्वे च मानसत्वापत्तेः । न चैवम् । 'न प्रमाणं मनोऽस्माकमि'ति त्वदभ्युपगमविरोधात् ।

किञ्च तात्पर्यावधारणस्यानुमितिरूपत्वाभाव उपक्रमादीनां तात्पर्यलिङ्गत्वाभावप्रसङ्गः । न च इष्टापत्तिः । 'उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णय' इति वचनविरोधात् । पूर्वोत्तरमीमांसयोः तात्पर्यलिङ्गत्वेन तदुपादानाभावप्रसङ्गाच्च । न द्वितीयः । तात्पर्यावधारणानुकूलस्य तस्यैव श्रवणशब्दार्थत्वोपपत्तेः । तदनुकूलमानसव्यापारस्य श्रवणशब्दार्थत्वे प्रमाणाभावात् । ज्ञानविशेषे कृतिसाध्यत्वस्यान्वयव्यतिरेकसिद्धत्वेन तस्यैव श्रवणशब्दार्थत्वौचित्याच्च । ज्ञानविशेषे पुंव्यापारानुविधानमपलपतः प्रामाणिकैरुन्मत्तवदुपेक्षणीयत्वापाताच्चेति ।

किञ्च त्वया तात्पर्यावधारणस्य ज्ञानरूपत्वमङ्गीकृत्य न्यायानुसन्धानं चेतोव्यापाररूपं श्रवणमित्यङ्गीकारे शक्तितात्पर्यावधारणं वा श्रवणमिति विवरणादिग्रन्थविरोधः स्यादेव । न च विधेयश्रवणपरिचायकतया तत्कोटिनिक्षिप्तं तात्पर्यावधारणं श्रवणमिति तत्रोक्तमिति न विरोध इति वाच्यम् । तात्पर्यावधारणं विधेयश्रवणपरिचायकमित्यस्यैवासम्भवात् ।

तथा हि— चेतोवृत्तिमात्रस्याश्रवणतया तद्विशेषस्य तात्पर्यावधारणानुकूलस्याश्रवणरूपत्वसिद्ध्यर्थं हि तात्पर्यावधारणस्य तत्परिचायकत्वं त्वयेष्यते । तच्च चेतोवृत्तिगतविशेषग्रहणाग्रहणाभ्यां न युज्यते । अग्रहणे तदनुकूलस्यैव दुर्ग्रहत्वात् । ग्रहणे च तादृशविशेषावच्छिन्नवृत्तेरेव श्रवणरूपत्वेन विधिसम्भवे तात्पर्यावधारणस्य श्रवणपरिचायकत्वस्यावक्तव्यत्वापत्तेः । तात्पर्यावधारणस्यैवोद्देश्यत्वसम्भवेन दर्शनस्यानुद्देश्यत्वप्रसङ्गाच्च । न चैवं श्रुतदर्शनस्यैवोद्देश्यत्वत्यागप्रसङ्गः । द्रष्टव्य इत्यस्यापि दर्शनानुकूलचेतोवृत्तिविशेषलक्षणया दर्शनोद्देशेन विधित्वसम्भवेन तस्य श्रवणविध्युद्देश्यसमर्पकत्वासिद्धेः । मन्तव्य इत्यस्याप्ययुक्तत्वशङ्कानिवर्तकनिर्णयानुकूलचेतोव्यापारलक्षणयोक्तनिर्णयोद्देशेन विधित्वसम्भवाच्च । तथा च तात्पर्यावधारणमेव चेतोवृत्त्यन्तरात्मकं विधेयं श्रवणमिति विवरणग्रन्थाभिप्रायस्य वर्णनीयतया तद्विरोधतादवस्थ्यम् । ननूपक्रमादिरूपप्रमाणे तात्पर्यरूपे विषये च सति जाय-

मानस्य तदवधारणस्य ज्ञानबहिर्भावो न युज्यत इति चेत् । हन्त कस्यायमपराधः । यन्न्यायविरुद्धमेव तद्वचनमापतितमिति ।

किञ्च प्रयोजनं विनैव तात्पर्यावधारणस्य विधेयश्रवणपरिचायकतया तत्कोटिनिक्षिप्तप्रसङ्गेनो-द्देश्यत्वायोगः । मोक्षोद्देशेनैव तादृशश्रवणविधानोपपत्तेः । न च सन्निहितं दर्शनमेवोद्देश्यं न तु मोक्ष इति वाच्यम् । सन्निहितस्य तस्य श्रवणपरिचायकतया तत्कोटिनिक्षिप्तत्वस्यैव युक्तत्वात् । येन हन्तामृतः स्याम् इत्यादि पूर्वोत्तरवाक्यसिद्धमोक्षस्योद्देश्यत्वसम्भवाच्च । न च मोक्षस्य ज्ञानमात्रसाध्यं तया न मोक्षोद्देशेन श्रवणादिविधानमिति वाच्यम् । दर्शनस्यापि शब्दमात्रफलतयाऽनुद्देश्यत्वप्रसङ्गात् । न च दर्शनकरणशब्दस्वरूपनिवर्तकस्य श्रवणस्य दर्शनोद्देशेन विधानं युक्तमिति वाच्यम् । अवहननादेरपि स्वर्गाद्युद्देशेन विधानापत्तेः ।

किञ्च तात्पर्यावधारणस्य श्रवणकोटिनिक्षेपे श्रवणं ज्ञानबहिर्भूतमित्युक्तेर्व्याघातः । एवञ्च दर्शनस्य फलत्वमभ्युपगच्छता तात्पर्यविशिष्टशब्दावधारणं वाच्यमिति ज्ञानस्य विधेयत्वं दुर्वारम् । किञ्च त्वन्मतेऽवाच्ये निर्विशेषे ब्रह्मणि शक्त्यभावेन शक्तितात्पर्यावधारणं श्रवणमित्ययुक्तम् । न च विशिष्टशक्तिद्वारा तत्र तात्पर्यमिति न विरोध इति वाच्यम् । विशिष्टशक्त्योपक्रमादिन्यायेन च जाय-मानस्य तात्पर्यावधारणस्य विशिष्टमात्रविषयत्वौचित्यात् । किञ्च त्वन्मते मननमपि श्रुतस्यार्थ-स्योपपत्तिभिरनुचिन्तनमेव । वाक्यार्थो युक्तोऽन्यो वेत्येवंरूपचेतो वृत्त्यन्तरमित्ययुक्तम् । तात्पर्यविषय-स्मरणरूपस्य प्रत्यभिज्ञानरूपस्य संस्कारफलकाभिज्ञानान्तररूपस्य वा तस्यावश्यकश्रवणादिवृत्त्यैव सिद्धेर्विधानवैयर्थ्यात् । न च श्रुतविषयकायुक्तत्वशङ्कानिवर्तकचेतोवृत्तिरूपस्य मननस्य विधिर्न व्यर्थ इति वाच्यम् । उपक्रमादिन्यायानुसन्धानपूर्वकं श्रुतस्यार्थस्यायुक्तत्वशङ्काविषयत्वस्यैवासम्भवात् । यत्त्वादौ श्रद्धया सिद्धं पुनर्न्यायेन साधितमिति न्यायेन मन्तव्यश्चोपपत्तिभिरिति सर्वोपपत्तीनां मनन एव प्रवेशस्मरणेन च युक्त्यनपेक्षं गुरुनिबन्धनवाक्यार्थग्रहणं श्रवणं पश्चान्न्यायानुसन्धानं मननमिति भेद-सम्भवे युक्तिष्वेव श्रवणमननभेदकल्पनायोगाच्च । न च श्रवणनिश्चितेऽप्यर्थे निश्चितेऽपि तत्प्रामाण्येन अनादिद्वैतवासनाप्राबल्येन फलप्रतिबन्धात् तन्निवृत्त्यर्थं मननस्योपयोग इति वाच्यम् । द्वैतवासनाया आमोक्षं विद्यमानत्वेन श्रवणफलस्यैवानुदयप्रसङ्गात् । द्वैतवासनाया निदिध्यासनेनैव निवृत्तिसम्भवे मननवैयर्थ्याच्चेति ।

ननु समन्वयाध्यायोक्तोपक्रमादिन्यायानां द्वितीयाध्यायोक्तायुक्तत्वशङ्कानिवर्तकन्यायानां च मननान्तर्भावे तदुपयुक्तविचारकर्तव्यताप्रतिपादनपरं जिज्ञासासूत्रं मननविधिमूलमेव स्यान्न श्रवण-

विधिमूलमिति चेन्न । इष्टापत्तेः । उक्तं हि सुधायां जिज्ञासा नाम युक्त्यनुसन्धानात्मकं विचारापरपर्यायं मननमिति । न्यायामृतेऽप्युक्तम् । युक्त्यनुसन्धानरूपो विचारो न श्रवणं किन्तु मननमेवेति मननविधिमूलमेव जिज्ञासासूत्रमिति ।

यत्तु प्रथमाध्याये प्रत्यधिकरणं साक्षात्परम्परया वेदान्तानामेव द्वितीये ब्रह्मणि तात्पर्यावधारणेन तदुपयुक्तन्यायग्रथनात्मकशास्त्रारम्भोपयुक्तविचारकर्तव्यतापरे प्रथमसूत्रे तादृशविचारं विदधतः श्रवणविधेरेव मूलत्वमुपपद्यते । अयुक्तत्वशङ्कानिवर्तकद्वितीयन्यायगोचरस्यार्थात्प्रथमसूत्रे प्रतिज्ञातत्वेन तद्विचारं विदधतो मननविधेस्तन्मूलत्वायोगादिति । तन्न । प्रथमसूत्रस्य ब्रह्मज्ञानोपयोगिविचारमात्रकर्तव्यतापरत्वेन श्रवणविधिमूलमेवेति त्वदुक्तार्थासिद्धेः । त्वदुक्तन्याये विधिद्वयमूलत्वस्यैवापतितत्वात् । न हि प्रथमसूत्रं प्रथमाध्यायमात्रोक्तन्यायानुसन्धानरूपविचारकर्तव्यतापरमित्यत्र विशेषनियामकं पश्यामः ।

ननु त्वयापि प्रथमसूत्रस्य श्रवणविधिमूलत्वं वक्तव्यम् । प्रथमसूत्रे श्रवणादिरूपजिज्ञासा कार्येति सर्ववेदान्तप्रत्ययाधिकरणे श्रवणमनने कर्तव्ये इति प्रथमसूत्रे उक्तमिति टीकाकारोक्तेरिति चेन्न । जिज्ञासा नाम युक्त्यनुसन्धानात्मकं विचारापरपर्यायं मननमिति श्रवणजं ज्ञानं पूर्ववृत्तमिति च सुधायामुक्तत्वेन श्रवणादिरूपेत्यत्र अतद्गुणसंविज्ञानबहुव्रीहिः । श्रवणमनने कर्तव्ये इत्युक्तमिति वाक्ये चैकदेशानुवाद इत्यभ्युपगमात् । न चोदाहृतटीकावाक्यद्वयानुसारेण सुधागतं मननपदं लक्षणया श्रवणमननोभयपरम् । सुधायां श्रवणस्य पूर्वं वृत्तत्वोक्तिरपि द्वितीयन्यायविचारापेक्षयेति व्याख्येयम् । न हि स्वस्यासामर्थ्येन टीकाकारस्याज्ञत्वं कल्पयितुं शक्यमिति वाच्यम् । न्यायं विना सिद्धार्थोक्तिरूपेण गुरूपदेशेनानेकशाखास्थवाक्यार्थग्रहणं श्रवणमिति वदतां टीकाकाराणां तथा तात्पर्यकल्पनायोगात् । न च श्रवणे द्वितीयन्यायाननुप्रवेश एव टीकाकाराभिमतो न तु प्राथमिकन्यायानुप्रवेशोऽपीति युक्तम् । 'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिरि'ति स्मृतिविरोधेन श्रवणे न्यायमात्राननुप्रवेश्य तदभिप्रेतत्वकल्पनात् । यदि च वाक्यार्थनिर्णायकोपक्रमादिन्यायानुसन्धानं श्रवणं, प्रयुक्तत्वनिवर्तकन्यायानुसन्धानं तु मननमिति श्रवणमननभेदः । तर्हि श्रुतिलिङ्गादिन्यायानुसन्धानमपि मननं स्यात् । उपक्रमादिन्यायानुसन्धानमात्रं च श्रवणं स्यात् । यदि न्यायानुसन्धानत्वेनैक्यं तर्हि प्रकृतेऽपि तुल्यम् ।

ननु साङ्गवेदाध्ययनानन्तरमापातप्रतीतौ जातायां सन्देहे सति तद्विधूननार्थं न्यायानुसन्धानस्यैवापेक्षितत्वेन त्वदभिमतश्रवणस्य च प्रयोजनाभावेन अनपेक्षितत्वात्, अनन्यगत्या अन्यावधारणभेदमङ्गीकृत्यैव श्रवणमननभेदो निर्वाह्य इति चेन्न । न्यायं विना गुरुमुखात् वेदार्थं श्रुतवति पुरुषे श्रुतमनेनेति

तत्रापि श्रवणपदप्रयोगेण अस्मदभिमतश्रवणस्य दुर्वारत्वात् । अस्यैव श्रोतव्य इत्यनेन विधिसम्भवे न्यायानुभेदकल्पनायोगात् । उक्तश्रवणविधायकवाक्यान्तरान्वेषणापत्तेश्च । साङ्गाध्ययनेऽपि कर्मकाण्डादिना ब्रह्मकाण्डेऽप्यवान्तरकारणादिवाक्येन पदवर्णस्वरादिना चापाततो ब्रह्मबुद्धेरभावेन तत्तदर्थविषयकसंशयधर्मिज्ञानरूपस्य तच्छ्रवणस्यावश्यकत्वाच्च । न च कर्मकाण्डादीनामपि ब्रह्मपरत्वे मानाभावः । सर्वे वेदा यत्पदमामनन्तीत्यादिश्रुतीनां सत्त्वात् । न च श्रुतिः परम्परया ब्रह्मपर्यवसानपरा । न तु पदार्थविषयापीति युक्तम् । आमनन्तीत्यादिश्रुतिविरोधात् सङ्कोचे कारणाभावाच्चेत्यन्यत्र विस्तरः । तस्माच्छ्रवणादिकं ज्ञानरूपमपि विधेयमेवेति स्थितम् ।

*॥ इति श्रवणादीनां ज्ञानरूपत्वविधेयत्वसमर्थनम् ॥ ७ ॥*

★ ★ ★

# ८. श्रोतव्य इत्यादेर्विधायकत्वे बाधकोद्धारः

ननु श्रोतव्य इत्यादिना श्रवणादिकं विधेयमित्ययुक्तम् । तव्यप्रत्ययस्यार्हार्थतया तरति शोकमात्मविदित्यादिवत् प्राकरणिकात्मश्रावकत्वेनैकवाक्यत्वसम्भवे वाक्यभेदेन विधिपरत्वस्यान्याय्यत्वात् । अन्यथा विष्णुरुपांशु यष्टव्य इत्यादावपि विधिपरत्वमापद्येत । न च विधेयस्यैव [1]प्रकरणित्वेन आत्मनश्च विधेयतया तत्स्तावकत्वेन श्रोतव्य इत्यादेरेकवाक्यत्वं न युज्यत इति वाच्यम् । स्वातन्त्र्येण वाक्यप्रतिपाद्यस्यैव प्रकरणत्वेन विधिप्रत्ययबोध्यत्वस्याप्रयोजकत्वात् । प्रकरणाच्चेत्यादावात्मनोऽपि प्रकरणित्वस्य सूत्रितत्वाच्च । कुम्भ्यधिश्रयणगोदोहनादिसंस्कारप्रायपाठवत् वत्समालभेतेत्यत्र संस्कारकर्मत्ववत् द्रष्टव्य इत्यर्हार्थतव्यप्रायपाठात् तदर्थत्वस्यैव न्याय्यत्वाच्च । न चाध्ययनविधिफलभूतया अक्षरावाप्त्या स्वाध्यायगतसाक्षात्फलवदर्थबोधकतया अपेक्षितत्वेनेह विधायकत्वमेव न्याय्यमिति वाच्यम् । अक्षरावाप्तेः स्वतः पुरुषार्थत्वाभावेऽपि साक्षात्फलसम्बन्धिजपपारायणाद्युपयोगित्वेन निवृत्ताकाङ्क्षतया विचारविध्यनपेक्षणात् । यथाकथञ्चित्फलसम्बन्धित्वस्यैवावश्यकतया साक्षात्फलवदर्थावबोधकत्वस्य अप्रयोजकत्वात् । अन्यथार्थवादादीनां स्तुत्यादिना फलवदर्थपरता न युज्येत । किञ्चाध्ययनविधेरर्थज्ञानपर्यन्तत्वेन श्रवणादिविध्यपेक्षा । न चैवमध्ययनविधेर्ज्ञानकामाधिकारिकत्वे नित्यत्वं भज्येतेति युक्तम् । 'अनधीत्य द्विजो वेदानि'त्यादि स्मृत्या अकरणे प्रत्यवायश्रवणेन नित्यकाम्यत्वाविरोधात् । किञ्चाध्ययनविधेः अक्षरावाप्तिपर्यन्तत्वपक्षेऽपि यथा कर्मकाण्डविचार उत्तरक्रतुविधिप्रयुक्तः तथा 'तरति शोकमात्मविदि'त्यादिना शोकनिवृत्तिहेतुतयाऽवगतेन ज्ञानेन

---

१. प्राकरणिकत्वेन ?

स्वसिद्धये ब्रह्मकाण्डविचारस्याक्षेपोऽस्तु । न च ज्ञानस्य नियमतो वेदान्तविचाराक्षेपकत्वाभावात् विध्यन्तरापेक्षेति युक्तम् । उत्तरक्रतुविधिष्वपि तुल्यत्वात् ।

एतेन कर्माभिधायितव्यप्रत्ययेनाक्षरावास्त्यन्यफलस्याध्ययनविधेरर्थज्ञानार्थत्वाभावेन विचार-विध्यभावे विषनिर्हरणादिमन्त्रस्येव तरतीत्यादेरर्थपरत्वाभावात् विचाराक्षेपकत्वमेव न स्यात् इति निरस्तम् ।

कर्मकाण्डविचारेऽपि तुल्यत्वात् । यदि तत्र सामर्थ्यलब्धार्थपरत्वे बाधकाभावेनार्थपराणा-मुत्तरक्रतुविधीनां कर्मकाण्डविचाराक्षेपकत्वं तर्हि तरतीत्यादावपि तच्चास्तु । न च विधिं विना तरति-शोकमात्मविदित्यादेः प्रत्यक्षविरुद्धार्थज्ञानपरत्वाभावेन तदर्थज्ञानस्यानाक्षेपकतया विचारविधेरावश्य-कत्वमिति वाच्यम् । त्वदभिमतात्मज्ञानस्य शोकनिवृत्तिहेतुत्वे प्रत्यक्षविरोधाभावात् । अन्यथा तद्विरोधेन तद्विधिरपि न प्रवर्तेत । न च काण्डेऽपि स्थाणुरयं भारवाहः किलाभूत् 'अधीत्य वेदं न विजानाति योऽर्थमि'त्यादेः सामान्यतः साक्षाद्विचारविधेः सत्त्वान्नोक्तदोष इति वाच्यम् । तर्हि ब्रह्मकाण्डविचारोऽपि तत एवास्तु ।

एतेन 'वेदानिमं च लोकं अमुं च परित्यज्य आत्मानमन्विच्छेदि'ति स्मृतौ विचारविधिप्रतीतेः श्रोतव्य इत्यत्रापि तदर्थत्वमेव युक्तमिति निरस्तम् ।

उक्तरीत्याक्षेपविचारानुवादेन तत्र स्मृतौ वेदादिपरित्यागस्याङ्गत्वविधानात् । तस्मादध्ययनविधे-रक्षरावाप्तिपर्यन्तत्वपक्षेऽर्थज्ञानपर्यन्तत्वपक्षे च न ब्रह्मकाण्डविचारो विध्यन्तरप्रयुक्त इति श्रोतव्यो मन्तव्य इति विध्यानर्थक्यम् ।

एवं निदिध्यासितव्य इत्यत्रापि न विधिः । आत्मशब्दस्य विष्णुशब्दपर्यायत्वेन वैष्णवं त्रिकपालमिति विहितयागदेवतारूपस्य विष्णोर्यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्यायेदिति विधि-प्राप्तस्यैहानुवादसम्भवात् । किञ्च द्रष्टव्य इत्यादीनां दर्शनादिविधित्वेऽपि न रात्रिसत्रवदधिकारिकल्पनं युज्यते । दर्शनादीनामात्मशब्दवाच्यविष्णुसंस्कारद्वारा देवताकर्मविशेषत्वेनाधिकारकल्पनस्य अन्याय्य-त्वात् । अन्यथा कर्माभिधायितव्यप्रत्ययविरोधात् । न च नियोगभङ्गादविरोधः । सकृत् जुहोतीत्यादि-वदुपयोगाभावस्य, हिरण्यं भार्यमितिवत् क्रतुव्यभिचारस्य चेहाभावेन तदयोगादिति ।

अत्र ब्रूमः । श्रोतव्य इत्यादौ तव्यप्रत्ययस्यार्हार्थत्वं किमित्यभ्युपगम्यते किं तस्य विधायकत्वमेव नास्तीति किं वा विधायकत्वे बाधकमस्तीति । नाद्यः । अनाद्यविगीतव्यवहारेण तस्य विध्यर्थत्वस्यापि सिद्धेः । स्वाध्यायोऽध्येतव्य इत्यादौ तव्यप्रत्ययस्य विध्यर्थत्वाभ्युपगमाच्च । न द्वितीयः । असिद्धेः ।

न च द्रष्टव्य इत्यर्हार्थतव्यप्रत्ययप्रायपाठात् श्रोतव्य इत्यादौ अर्हार्थत्वमेवेति वाच्यम्। द्रष्टव्य इतिवत् श्रोतव्य इत्यादेरप्यर्हार्थत्वे वैयर्थ्यापत्तेः। स्तुतिमात्रस्य निष्प्रयोजनत्वेन विधेयान्तरकल्पनापत्तेश्च। अरुन्धत्यादिदर्शनवत् सूक्ष्मब्रह्मदर्शनस्यापि कृतिसाध्यतया तत्र मोक्षसाधनत्वस्याप्राप्तत्वेन च द्रष्टव्य इत्यत्रापि विध्यर्थत्वस्याभ्युपगन्तव्यत्वाच्च। न च प्राकरणिकात्मस्तावकत्वेनैकवाक्यत्वसम्भवे वाक्यभेदेन विधिपरत्वं न युक्तमिति वाच्यम्। आत्मानुबन्धिनः कस्यचिद्विधेयत्वाभावे स्तुतेर्निष्प्रयोजनत्वात् स्तुतिमात्रस्यापुरुषार्थत्वात्। तस्य स्वातन्त्र्येण पुरुषार्थसाधनत्वे मानाभावात्।

न च कर्मकर्त्रात्मस्तुतिरियमिति वाच्यम्। भिन्नप्रकरणस्थत्वात्। अनभ्युपगमाच्च। यस्य पर्णमयी जुहूरित्यादीनाम् अनारभ्य अधीतानामपि क्रतुसम्बन्धोऽभ्युपगत इति चेन्न। जुह्वादीनामव्यभिचरितक्रतुसम्बन्धसत्त्वेनानारभ्याधीतत्वेऽपि तदन्वयाभ्युपगमात्। मैत्रेयीब्राह्मणप्रतिपाद्यात्मनश्च क्रतुव्यभिचारितया तदन्वयस्यानुचितत्वात्। 'आत्मा वा अरे' इत्यत्रात्मशब्दस्य कर्मकर्तृजीवातिरिक्तपरमात्मपरत्वस्य सर्वसम्प्रतिपन्नत्वाच्च। न च कर्मणां परमात्माराधनरूपत्वेन श्रोतव्य इत्यादिकमाराध्यदेवतास्तावकमिति वाच्यम्। तथासति ब्रह्मकाण्डस्यापि कर्मकाण्डविशेषत्वापत्त्या पृथग्ब्रह्मविचारो न क्रियेत। कर्मणो मोक्षसाधनत्वनिषेधिकानां ज्ञानस्यैव मोक्षसाधनत्वावेदिकानां श्रुतिस्मृतीनाममुख्यार्थश्च त्यज्येत इत्यलम्।

न च श्रोतव्य इत्यादेर्विधानार्थत्वे विधेयार्थस्यैव तात्पर्यविषयतया आत्मासिद्धिप्रसङ्गः। आत्मन्यपि तात्पर्ये वाक्यभेदः प्रसज्येतेति वाच्यम्। श्रोतव्य इत्यादेर्ब्रह्मणि महातात्पर्येऽपि श्रवणादिकर्तव्यतायामवान्तरतात्पर्येणैकवाक्यताभङ्गप्रसङ्गाभावात्। अन्यथा प्रयाजादिवाक्यस्य दर्शपूर्णमासवाक्यैकवाक्यताऽभावप्रसङ्गात्। तस्माच्छ्रोतव्य इत्यादेः विध्यर्थत्वाभ्युपगमे न किञ्चिद्बाधकम्।

ननु अर्थज्ञानपर्यन्ताध्ययनविधिनैव गतार्थत्वात् श्रवणमननविधिवैयर्थ्यम् इत्युक्तमिति चेन्न। अध्ययनविधिना वेदविचारे वेदार्थज्ञानहेतुत्वस्य प्राप्तावपि ब्रह्मज्ञानहेतुताया अप्राप्तत्वेन तदर्थं मननविधेरावश्यकत्वात्। तदर्थतया श्रवणस्यापि विधानात्। अध्ययनविधौ वेदार्थज्ञानत्वस्य उद्देश्यतावच्छेदकत्वात्। मन्तव्य इत्यादौ ब्रह्मज्ञानत्वस्यैव तदवच्छेदकत्वात्। तदुक्तं न्यायामृते। विचारविधिस्त्वपूर्वविधिः। ब्रह्मज्ञाने वेदविचारहेतुताया अत्यन्ताप्राप्तत्वात्। न हि वेदार्थज्ञानाय वेदविचारः कर्तव्य इति वचनव्यक्तिः। ब्रह्मज्ञानस्योद्देश्यत्वात्। नापि ब्रह्मज्ञानाय ब्रह्मविचारः कर्तव्य इति। तथात्वे ब्रह्मणो विधेयविशेषणतया गुणत्वापातात्। किं तु ब्रह्मज्ञानाय वेदविचारः कर्तव्य इत्येव वचनव्यक्तिः। यद्यपि ब्रह्मपरवेदविचार एव ब्रह्मविचारः तथापि न ब्रह्मविचाररूपेण विधानम्। किन्तु

वेदविचाररूपेण । तथाच श्रुतिः 'तस्मादेवं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेत् मुमुक्षुरि'ति । एवञ्च तथा घटादावितरभेदे सिद्धेऽपि पृथिवीत्वोपहिते तदसिद्धेः पृथिवी इतरेभ्यो भिद्यत इत्यत्र न सिद्धसाधनता । यथा वा स्थानप्रकरणाधिकरणोक्तरीत्या राजसूयान्तर्गतेष्टिपशुसोमेषु प्रातिस्विकरूपे चोदकत इतिकर्तव्यताप्राप्तावपि राजसूये तदप्राप्तिः तथा वेदविचारत्वोपहितब्रह्मज्ञानहेतुताया अप्राप्ते-रपूर्वविधिता । न हि कर्मकाण्डादिना ब्रह्मकाण्डेऽपि भावान्तरप्रकरणादिवाक्येन पदवर्णस्वरादिना आपाततोऽपि ब्रह्मधीरस्तीति तत्र अप्राप्तत्वोक्तिः प्रत्यक्षादिप्रमाणान्तराप्राप्तत्वाभिप्राया विध्यन्तरा-प्राप्तत्वाभिप्राया चेति द्रष्टव्यम् । अत एव पूर्वं यत्तु भामत्यामुक्तं श्रवणादिविध्यभावादध्ययनविधिरेव काण्डद्वयविचाराक्षेपक इति तत्स्वाध्यायस्य हि तथात्वेनेत्यत्र सूत्रभाष्यादौ अध्ययनस्य च अर्थ-ज्ञानपर्यन्तत्वादिति टीकायां च तस्य तदाक्षेपकताया उक्तत्वादिष्टमित्यभिधायि ।

नन्वेवं त्वन्मते श्रवणादिवैयर्थ्यमित्याशङ्क्य श्रवणादिविधिस्तु समर्थयिष्यते इत्युक्तम् । न चैव-मप्यज्ञातादौ निदिध्यासनासम्भवेन श्रवणमननयोर्निदिध्यासने लिङ्गादेव प्राप्तत्वात् श्रवणमननविधि-वैयर्थ्यमिति वाच्यम् । नियतविषयकनिदिध्यासनविषयगुणान्यगुणेषु लिङ्गेन तयोराप्तत्वेन तद्विधि-सम्भवात् ।

एतेन त्वन्मते निदिध्यासितव्य इत्यत्रापि न विधिः । आत्मशब्दस्य विष्णुपरत्वेन वैष्णवं त्रिकपालमिति विहितयागरूपस्य विष्णोर्यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्यायेदिति विधिप्राप्त-स्येहानुवादसम्भवादिति निरस्तम् ।

मन्त्रार्थवादादिप्राप्तगुणमात्रविशिष्टध्यानस्य प्राप्तत्वेऽपि वेदान्तोक्ततत्तद्गुणविशिष्टध्यानस्य अप्रा-प्तत्वेन अवैयर्थ्यात् । अन्यथा त्वन्मतेऽप्यात्मशब्दस्य ब्रह्मपर्यायत्वेन 'ब्रह्मणेऽभिजिते चरुमि'ति विहितकर्मदेवतारूपब्रह्मध्यानस्य त्वदुक्तरीत्या प्राप्तत्वेन निदिध्यासनविधिवैयर्थ्यापत्तेरिति यत्किञ्चि-देतत् ।

यत्तु द्रष्टव्य इत्यादीनां दर्शनादिविधित्वेऽपि न रात्रिसत्रवदधिकारिकल्पनं युज्यते । दर्शनादीना-मात्मशब्दवाच्यविष्णुसंस्कारद्वारा तद्देवताकर्मशेषत्वेन अधिकारिकल्पनस्य अन्याय्यत्वादित्यादि । तन्न । आधानस्य संस्कारकर्मत्वेऽपि प्रधानकर्मत्वोपपत्तेः । 'दृष्ट्वैव तं मुच्यते', 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे', 'वेदान्तविज्ञानसुनिश्चितार्थाः', 'मत्वा धीरो न शोचति', 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष' इत्यादिवाक्यान्तरानुसारेण 'द्रष्टव्य' इत्यादीनाम् 'एतावदरे खल्वमृतत्वमि'ति वाक्यशेष-

श्रुतमोक्षफलसम्बन्धेन प्रधानकर्मत्वावश्यंभावात् । तस्माच्छ्रोतव्य इत्यादीनां श्रवणादिविधायकत्वे न काप्यनुपपत्तिरिति ।

*॥ इति श्रोतव्य इत्यादेर्विधायकत्वे बाधकोद्धारः ॥ ८ ॥*

★ ★ ★

# ९. श्रवणादेरद्वितीयात्मविषयत्वे बाधकम्

यत्तु श्रोतव्य इत्यादिना विधीयमानो विचारो न भिन्नात्मविषयः । 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्' इत्याद्युत्तरवाक्यपर्यालोचनया श्रोतव्य इति वाक्यगतस्य आत्मशब्दस्य अद्वैतात्मपरत्वात् । अत एव विचारविधिनिर्णायकसूत्रे ब्रह्मशब्दं प्रायुङ्क्त भगवान् सूत्रकारः 'अथातो ब्रह्मजिज्ञासे'ति ब्रह्मशब्दस्य निरङ्कुशमहत्त्वव्युत्पन्नस्य अद्वैतात्मबोधकत्वात् । अत एव 'अथ कस्मादुच्यते ब्रह्मे'ति 'बृहन्तो ह्यस्मिन्गुणा' इति श्रुतेः अनन्तकल्याणगुणनिधिः प्रत्यग्भिन्नः सौत्रब्रह्मशब्दार्थ इति निरस्तम् । मूलवाक्यस्थाद्वैतपरात्मशब्दविरोधात् । ब्रह्मशब्दस्यानाञ्जस्यापत्तेः । उदाहृतवाक्यस्य श्रुतित्वेनासम्प्रतिपन्नत्वाच्च । अद्वैतात्मविचारश्च साक्षात्तद्विषयो न सम्भवतीति तत्प्रतिपादकवेदान्तविषय एव । अद्वैतात्मनि वेदान्तानामेव मानत्वात् । शक्तितात्पर्यानुकूलचेतोव्यापारात्मकविचारस्य साक्षात्तद्विषयत्वासम्भवाच्चेति । तन्न । अभिन्नात्मनो विचारविषयत्वानुपपत्तेः । निर्विशेषरूपस्य तस्य स्वयंप्रकाशरूपतया अहंधीसिद्धत्वेनासन्दिग्धत्वात् । आनन्दांशस्यापि स्वरूपाभिमतस्य निश्चितत्वेन विचारविषयत्वानुपपत्तेश्च । न च साक्षिरूपब्रह्मापरोक्षज्ञाने सत्यपि स्वातन्त्र्येण ब्रह्मापरोक्षज्ञानस्य अविद्यानिवर्तनशक्तस्य असिद्धेः तदर्थतया विचारोऽपेक्षित इति वाच्यम् । अनादिनिर्दोषस्वप्रकाशसाक्षिसिद्धे सुखदुःखादौ कदाप्यज्ञानादर्शनेन तादृशसाक्षिसिद्धे स्वरूपेऽप्यज्ञानस्यासम्भवेन तन्निवृत्तिफलकज्ञानाय श्रवणाद्युपायानुसरणवैयर्थ्यात् । विषयकृतविशेषशून्यतया आपातप्रतीतितुल्यचरमवृत्तेरप्यज्ञानविरोधित्वासम्भवात् । शुक्तिरूप्याद्यज्ञाननिवृत्तौ शुक्तितत्त्वसाक्षात्कारेण कर्तव्यतायां श्रवणाद्युपायकृतविशेषानुसरणादर्शनाच्च । न चात्र शास्त्रबलात् तदनुसरणमिति वाच्यम् । प्रत्यगभिन्ननिर्विशेषात्मवादे श्रोतव्य इत्यादि शास्त्रवैयर्थ्यमिति वदन्तं प्रति तथोक्त्ययोगात् । अहंप्रत्यये शुद्धं न भातीत्यत्र च दूषणान्यन्यत्रोक्तानि । तत्रैवानुसन्धेयानि । अतो वैयर्थ्यपरिहाराय जीवभिन्नमनन्तकल्याणगुणं परं ब्रह्मैव विचारविषय इत्यकामेनापि अङ्गीकर्तव्यम् ।

न चैवं 'तत्त्वमसि', 'अयमात्मा ब्रह्म', 'केवलो निर्गुणश्चे'त्यादि श्रुतिविरोध इति वाच्यम् । 'द्वा सुपर्णा', 'ज्ञाज्ञौ द्वावजावीशानीशौ', 'यः सर्वज्ञः सर्ववित्', 'सत्यकामः सत्यसङ्कल्पः' इत्यादि-

भेदसगुणश्रुतिविरोधस्यापि सत्त्वात् । न च वस्तुनो द्वैरूप्यायोगे भेदश्रुतीनामौपाधिकभेदपरत्वं, सगुणश्रुतीनामुपासनार्थत्वं प्रतियोगिसमर्पकत्वेन वा निर्गुणवाक्यैकवाक्यत्वं चेति वाच्यम् । वैपरीत्यस्यापि सुवचत्वात् ।

किञ्च भेदे किमौपाधिकत्वं उपाधिजन्यत्वं वा उपाधिज्ञाप्यत्वं वा ज्ञाननिवर्त्यत्वं वा । नाद्यः । जीवेश्वरभेदस्य त्वन्मतेऽप्यनादित्वात् । न द्वितीयः । वामनमुद्राद्युपाधिज्ञाप्यसीमाभेदवत् तस्य स्वाभाविकभेदाविरोधित्वात् । न तृतीयः । मुक्तावपि भेदप्रतीतेः । 'कर्मक्षये याति स तत्त्वतोऽन्यः' 'जहात्येनां भुक्तभोगामजोऽन्यः', 'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते', 'स उत्तमः पुरुषः स तत्र पर्येति', 'जक्षन् क्रीडन् रममाणः', 'स्त्रीभिर्वा यानैर्वा परात्परं पुरुषमुपैति दिव्यम्', 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति', 'एवं मुनेर्विजानत आत्मा भवति गौतमः', 'निरञ्जनः परमं साम्यमुपैति', 'परामृतात्परिमुच्यन्ति सर्वे', 'स एनान् ब्रह्म गमयति', 'एतमानन्दमयमात्मानमुपसङ्क्रम्य', 'इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्', 'यो वेद निहितं गुहायां परमे व्योमन्', 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता', 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च', 'मुक्तोपसृप्यव्यपदेशाच्च', 'उत्तराच्चेदाविर्भूतस्वरूपस्तु', 'भोगमात्रसाम्यलिङ्गाच्च', 'जगद्व्यापारवर्जम्', 'प्रकरणात्' इत्यादि श्रुतिस्मृतिसूत्राणां सत्त्वात् । न चैतत्सर्वं 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवती'ति श्रुत्यनुसारेण सगुणब्रह्मप्राप्तिविषयमिति वाच्यम् । वेद्यब्रह्मणः परत्वेन विशेषिततया केवलब्रह्मशब्देन अपरब्रह्मभूतजीवस्यैव ग्रहणौचित्यात् । तथाच श्रुतिः 'द्वे ब्रह्मणी वेदितव्ये', 'परं चापरं च' इति । स्पर्धमानो विष्णुरेव भूत्वेत्यादाविव 'तादृगेव भवती'त्यादि श्रुत्यन्तरानुसारेण तद्वाक्यस्यापि ब्रह्मसाम्यप्रतिपादनपरत्वेन अविरोधोपपत्तेश्च सगुणब्रह्मप्राप्तिरूपमुक्तेरेव फलाध्याये प्रतिपादनेन सप्तमरसतुल्यपञ्चमाध्यायप्रतिपाद्यत्वदभिमतमुक्तेः प्रामाणिकैरुपेक्षणीयत्वाच्च ।

एतेन 'यत्र त्वस्य', 'सर्वमात्मैवाभूत्', 'तत्र केन कं पश्येत्' इत्यादि मुक्तविषयश्रुत्यन्तरमपि व्याख्यातम् । मुक्तौ ज्ञानमात्रनिषेधायोगात् स्वरूपानन्दब्रह्मानन्दयोरनुभूयमानत्वेनैव पुरुषार्थत्वस्याङ्गीकार्यत्वात् । अन्यथा मोक्षस्यापुरुषार्थत्वापातः । पाषाणवन्मुक्तिरिति मतप्रवेशापत्तेश्च । तथाच श्रुतिः— 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः', 'उभे तीर्त्वाऽशनाया पिपासे शोकातिगो मोदते स्वर्गलोके' इत्यादिका । अतो भेदवाद एव मुक्तिरुपपद्यते, न तु अभेदवादे । इत्यभेदवादे अनिष्टप्रसञ्जनपरेयं श्रुतिरिति व्याख्येयम् ।

यद्वा 'यत्र पश्यति नान्यत् श्रुणोति नान्यद्विजानाति स भूमा प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमि'त्यादि श्रुत्युक्तन्यायेन 'या निशा सर्वभूतानां तस्यां जागर्ति संयमी । यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेरि'ति गीतोक्तन्यायेन च स्वरूपानन्दब्रह्मानन्दातिरिक्त-विषयज्ञाननिषेधपरा । एवं 'विज्ञानघन एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्यसंज्ञा-स्ती'ति श्रुतिर्ज्ञानविशेषनिषेधपरा । अत एव यथाश्रुते मोहमायादयित्र्या मैत्रेय्याः स्वाशयमुद्घाटयति याज्ञवल्क्यः । 'अविनाशी वा अरे अयमात्मानुच्छित्तिधर्मेति मतिमनुविनश्यती'ति न मया मुक्तस्य विनाश उक्तः । मुक्तस्याविनाशित्वात् । नापि संज्ञामात्रनिषेधः । अनुच्छित्तिधर्मत्वात् । न विद्यत उच्छित्तिर्येषां ज्ञानानन्दादिधर्माणां तेऽनुच्छित्तयः अनुच्छित्तयो धर्मा सोऽनुच्छित्तिधर्मेति तच्छ्रुत्यर्थ-विज्ञानात् । अनुच्छित्तिरेव धर्मो यस्येति योजनायां तु अविनाशीत्यनेन पौनरुक्त्यप्रसङ्गात् । धर्मपद-वैयर्थ्यप्रसङ्गाच्च । तस्मादियं श्रुतिरात्मनाशोऽशेषविशेषगुणोच्छेदश्च मोक्ष इति मतद्वयनिराकरणाय प्रवृत्तेति तत्त्वम् । एवञ्च 'पृथगात्मानं प्रवितारं च मत्त्वा' जुष्टस्ततस्तेनामृतत्वमेति । अत्रान्तरं वेदविदो विदित्वा लीना ब्रह्मणि तत्परा योनिमुक्ता' इति भेदज्ञानस्य मोक्षसाधनत्वावेदिकाः श्रुतयोऽप्यनुकूलिता भवन्ति ।

एतेन 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति द्वितीयाद्वै भयं भवति । एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति । अथ योऽन्यां देवतामुपास्ते अन्यासावन्योऽहमस्मीति न स वेद यथा पशुरित्याद्यनेकवाक्येषु भिन्नात्मज्ञानस्य भयहेतुत्वप्रतिपादनादैक्यज्ञानमेव मोक्षसाधनमिति तद्विषयै-क्यमेव पारमार्थिकं भेदस्त्वौपाधिक इत्यकामेनापि स्वीकर्तव्यमिति निरस्तम् ।

सो बिभेत् तस्मादेकाकी बिभेतीत्यैक्यज्ञानस्यापि भयहेतुत्वप्रतिपादनात् ।

ननु तत्र द्वितीयवस्तुसम्भावनयापेक्षिकैकत्वविज्ञानस्य भयहेतुत्वप्रतीतावपि सजातीयविजाती-याभावोपलक्षितमुख्यैकत्वज्ञानस्य भयहेतुत्वाप्रतीतेर्वैषम्यम् । अत एव संरक्षां चक्रे यन्मदन्यन्नास्ति कस्माद्बिभेमीत्युत्तरवाक्ये हिरण्यगर्भस्य द्वितीयवस्तुसम्भावनाभावेन मुख्यैकत्वज्ञानाद्भयाभावदर्शन-मुपपद्यत इति चेन्न । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीत्यत्रापि ब्रह्मगतब्रह्मप्रतियोगिक-भेदज्ञानस्यैव भयहेतुत्वप्रतिपादनात् । 'यदेवेह तदमुत्र यत्तदनु इह मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति, स यश्चायं पुरुषे, यश्चासावादित्ये, स एकः, स य एवं विदि'ति काठकतैत्तिरीयानुसारेण 'नेह नानास्ति किंचन', 'मृत्योः स मृत्युमाप्नोती'ति काठकबृहदारण्यकगतश्रुतेः स्वगतभेदनिषेधपूर्वकं स्वगतभेदज्ञानस्य मृत्युप्राप्तिहेतुत्वप्रतिपादनपरत्वोपपत्तेश्च । न च एतच्छ्रुतेः स्वगतभेदनिषेधपरत्वेऽ-

प्रसक्तप्रतिषेधत्वं शङ्क्यम् । यदेकमव्यक्तमनन्तरूपमित्यादिवाक्यैरापाततस्तत्प्राप्तिसम्भवादित्यन्यत्र विस्तरः ।

एतेन नात्र काचन न भिदास्ति नैवात्र का च न भिदास्ति अत्र भिदामिव मन्यमानः शतधा सहस्रधा भिन्नो मृत्योर्मृत्युमाप्नोतीति तापनीयश्रुतिरपि व्याख्याता। सजातीयविजातीयसकलभेदनिषेध-परत्वे च प्रत्यक्षादिप्रमाणविरोधः। प्रत्यक्षादिविरोधस्य चाकिञ्चित्करत्वे यजमानः प्रस्तरः अयज्ञो वा एष योऽसामा अपशवो वा अन्ये गोऽश्वेभ्यः इत्यादिश्रुतीनामपि यथाश्रुतार्थपरत्वप्रसङ्गात् । तासां प्रस्तरादिप्रशंसार्थत्वे बहूदाहृतानामपि मुमुक्षुज्ञेय ब्रह्मप्रशंसार्थत्वोपपत्तेश्च। द्वितीयाद्वै भयं भवतीत्यत्रापि न द्वितीयमात्रस्य भयहेतुत्वम् । आत्मनोऽप्यन्यापेक्षया द्वितीयत्वात् । लोके स्वभार्या स्वसुहृद्भ्यो भयादर्शनाच्च। किन्तु विरोधिद्वितीयमेव भयहेतुरिति न कश्चिद्दोषः ।

एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयं भवतीत्यत्रापि पूर्ववत् स्वगतभेदज्ञानस्यैव भयहेतुत्व-मावेद्यते। यद्वारमल्पमन्तरं विच्छेदं कुरुते न तु भेदं कुरुत इति भेदस्यानादित्वात्। भेदज्ञानलक्षणा-प्रसङ्गाच्च । विच्छेदश्च पूर्ववाक्योक्ताभयप्राप्तिहेतुभूतप्रतिष्ठाया इति लभ्यते । प्रतिष्ठां विदन्त इति पूर्ववाक्योक्ता प्रतिष्ठा च निरन्तरब्रह्मचिन्तैव नान्या । तस्या एवाभयप्राप्तिहेतुत्वात् । अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरिति वाक्यं तु न जीवेश्वरपारमार्थिक-भेदविरोधि। त्वद्रीत्या नाम ब्रह्मेत्यादिवदुपासनार्थत्वेनाप्युपपत्तेः। 'अथ योऽन्यां देवतामि'ति वास्तव-भेदस्यैवोक्तत्वात् ।

एतेन नान्योऽतोऽस्ति द्रष्टेत्यादि श्रुतिरपि व्याख्याता । प्रमितजीवेश्वरभेदनिषेधायोगात् । समाभ्यधिकद्रष्ट्रन्तरनिषेधपरत्वात् च। 'यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः। तत्र को मोहः कः शोक एकत्वमनुपश्यत' इत्यत्रापि न जीवब्रह्मैक्यज्ञानस्य मोहादिनिवृत्तिहेतुत्वमावेद्यते । 'शुनि चैव श्वपाके च पण्डिताः समदर्शिनः', 'आत्मवत्स पश्यति स पश्यति' इत्यादि न्यायेन 'सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि' इति पूर्ववाक्यानुसारेण च सर्वत्र समबुद्धित्वप्रतिपादनपरत्वात्। अन्यथा अभूदित्यनुपपन्नं स्यात्। 'एवं विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कं करिष्यती'ति स्मृतिरपि न जीवेश्वरभेदबाधिका । तस्या विभेदो भेदविरुद्धोऽभेदस्तज्जनके ज्ञाने । ब्रह्मणोऽभेदमित्युभयत्रापि सावकाशत्वात्। तस्माज्जीवेश्वरभेदः पारमार्थिक इति स्थितम्। न चैवं यथा ह्ययं ज्योतिरात्मा विवस्वानित्यादिश्रुतौ जीवेश्वरभेदस्यौपाधिकत्वोक्तिर्विरुध्येतेति वाच्यम्। अन्तर्यामि-भेदस्यैव तन्त्रौपाधिकत्वस्योक्तत्वात् । तथाच श्रुतिः— एकः सन् बहुधा विचार इति ।

ननु जीवेश्वरभेदस्य प्रत्यक्षादिसिद्धत्वात् कथं शास्त्रविषयत्वम्। अप्राप्ते हि शास्त्रमर्थवत् भवतीत्यभ्युपगमादिति चेत्। नोच्चैर्वक्तव्यम्। त्वयापि स्वप्रकाशतया साक्षिसिद्धस्यात्मन एव शास्त्रप्रतिपाद्यत्वाभ्युपगमात्। ऐक्यस्यापि तादृशात्मस्वरूपानतिरेकात्। ईश्वरस्य शास्त्रैकसमधिगम्यतया तत्प्रतियोगिकभेदस्यापि तथात्वोपपत्तेः। जीवप्रतियोगिकेश्वरानुयोगिकभेदस्य च प्रत्यक्षाप्राप्तेश्चेत्यन्यत्र विस्तरः। भेदाभेदश्रुतिविचारश्च विशिष्यश्रुत्यर्थसारादावस्माभिः प्रपञ्चित इत्यलम्।

एवं जीवभिन्नं परं ब्रह्मैव शास्त्रविषयः। तच्च सविशेषमेव। 'सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्य' इत्यादौ सत्यकामत्वादिविशिष्टस्यैव विचारविषयत्वावेदनात्। 'तमेवं विद्वान्', 'अमृत इह भवती'त्यादिश्रुतौ पूर्वोक्तसहस्रशीर्षत्वादि सकलप्रकारविशिष्टे ब्रह्मज्ञानस्यामृतत्वहेतुत्वश्रवणात्। मोक्षसाधनीभूतज्ञानस्य यथार्थज्ञानत्वावश्यंभावात्। धर्माणां च कल्पितत्वे तदयोगात्। न च प्रकाराणामुपलक्षणत्वमुपाधित्वम्। विशिष्टतयोपादानात्। सम्यग्ज्ञानेन ब्रह्मचर्येण निवृत्त्येत्यादिश्रुतेः। सत्यकामः सत्यसङ्कल्प इतीश्वरेच्छासङ्कल्पयोः सत्यत्वावेदनाच्च। न च तत्र सत्यत्वमप्रतिहतत्वं न त्वबाध्यत्वरूपमिति युक्तम्। ब्रह्मसत्यत्वस्यापि तथात्वापातात्। विशेषहेत्वभावात्। न च निर्गुणश्चेति निषेधो विशेषहेतुः। न सन्न चासन्निति सतो ब्रह्मणोऽपि निषेधात्। किञ्च तुरीयं तत्सर्वदृक् सदेति ब्रह्मणः सदा सर्वविषयकज्ञानवत्त्वावेदनेन ज्ञानादिगुणस्य कल्पितत्वायोगः। कल्पितत्वे ज्ञाननिवर्त्यत्वावश्यम्भावात्। न च 'सदा पश्यन्ति सूरय' इत्यादाविव सदातनत्वमपेक्षितमिति युक्तम्। तत्रेवात्र बाधकाभावात्। सूरिदर्शनेष्वपि सदातनत्वस्यासङ्कुचितस्यैवाभ्युपगमाच्च। किञ्च 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'ति श्रुतौ ब्रह्मणो ज्ञानादिधर्माणां यावद्धर्मिभावित्वरूपस्वाभाविकत्वोक्तिः विरुद्ध्येत।

एतेनाक्षरधियां विरोध इति न्यायेन सगुणवाक्यानामस्थूलवाक्यापेक्षितनिषेध्यसमर्पकत्वेनैकवाक्यत्वोपपत्तौ स्वातन्त्र्येण वा अर्थगत्ययोग इति निरस्तम्।

मानान्तराप्राप्तं सर्वज्ञत्वादि वाक्येन प्राप्य तेनैव निषेधस्यानुचितत्वात्। अन्यथा अग्नीषोमीयवाक्यस्यापि न हि स्यादिति वाक्यापेक्षितनिषेध्यसमर्पकत्वेन एकवाक्यत्वापत्तेः। तथाऽतिरात्रे षोडशिनं गृह्णातीत्यादिवाक्यस्यापि नातिरात्रे षोडशिनं गृह्णातीति आदिवाक्यापेक्षितनिषेध्यसमर्पकत्वेनैकवाक्यत्वापत्तेश्च। न च अहिंसावाक्यस्य रागप्राप्तहिंसामात्रापेक्षित्वेन अग्नीषोमीयादिवाक्यानुपयोगात्। एकप्रकरणस्थत्वाभावेनैकवाक्यत्वाभावाच्चेति वाच्यम्। तथापि ग्रहणाग्रहणवाक्ययोः निषेध्यसमर्पकत्वेन एकवाक्यत्वस्य दुष्परिहरत्वात्। त्वयैव भिन्नप्रकरणस्थकर्मकाण्डादिवाक्यानामपि

'नेह नाने'त्यादिनिषेधवाक्यैकवाक्यत्वे सगुणोपासनासिद्धिप्रसङ्गः। तत्रापि तात्पर्यकल्पनायां विरोधः प्रसज्येत। ग्रहणाग्रहणवद्व्यवस्थितविकल्पो वा प्रसज्येत। न च 'निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः। ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः' इत्यङ्गीकारेण व्यवस्थितविकल्पापादनमिष्टमिति वाच्यम्। वस्तुनो द्वैरूप्यायोगात्। न हि गौः किञ्चित्प्रत्यगौर्भवितुमर्हति। न चैवं ग्रहणाग्रहणवाक्ययोर्वस्तुविरोधोऽस्ति। ग्रहणेऽग्रहणे च फलस्याविशिष्टत्वात्। सगुणोपासनस्य त्वया मोक्षफलत्वानभ्युपगमाच्च। न च सगुणवाक्यं सगुणोपासनापरमिति निर्गुणवाक्यविरोध इति वाच्यम्। गुणेषु तात्पर्याभावे तेषामेवासिद्ध्या सगुणोपासनस्यैव असिद्धिप्रसङ्गात्। न च देवताविग्रहन्यायेन मानान्तरविरोधेन तत्सिद्धिः। देवताग्रहादावप्यवान्तरतात्पर्यस्य कल्पनीयत्वात्। अन्यथा कर्मादावपि महातात्पर्यस्याकल्पनीयत्वापत्तेः। मानान्तरविरोधेन सिद्धानामपि गुणानां निषेधायोगाच्च।

किञ्चैवं निर्विशेषवाक्यानामपि निर्विशेषोपासनपरत्वापत्त्या त्वदभिमतनिर्विशेषब्रह्मासिद्धिप्रसङ्गः। न च निर्विशेषब्रह्मणो नोपासना। किन्तु सविशेषस्यैव। 'तदेव ब्रह्म त्वं विद्धि', 'नेदं यदिदमुपासत' इति श्रुतेरिति वाच्यम्। त्वया श्रवणादिचतुष्टयस्य निर्विशेषात्मविषयत्वोपगमात्। न ह्युपासनं ध्यानादतिरिच्यते। न चारोपितार्थविषयकध्यानविशेष एवोपासनं न तु ध्यानमात्रमिति वाच्यम्। आत्मेत्येवोपासीतेति त्वदभिमतद्वितीयात्मध्यानेऽपि उपासनपदप्रयोगात्। 'तदेव ब्रह्म त्वं विद्धी'ति श्रुतेश्च। नामादि प्रतिमादीनामेव अब्रह्मत्वप्रतिपादनपरत्वेन उपासनमात्रविषयस्य अब्रह्मत्वप्रतिपादनपरत्वासिद्धेः। अन्यथा 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्। ऊर्ध्वरेतं विरूपाक्षं', 'नारायणः परं ब्रह्मे'त्यादि श्रुतौ गुणस्य साकारस्य च परब्रह्मत्वावेदनं विरुध्येत। न च विवक्षितोपाधिकं ध्यानमुपासनम्। अविवक्षितोपाधिकं तु निदिध्यासनम्। 'ऋतं सत्यं परे'त्याद्युदाहृतश्रुतिरस्त्वविवक्षोपाधिकेति वाच्यम्। गुणादीनामविवक्षानिमित्तस्येदानीमेव विचार्यमाणत्वात्। तत्र परब्रह्मगुणाद्यपहारे परब्रह्मप्रद्वेषातिरिक्तस्यान्यस्य निमित्तस्यादर्शनाच्च। न च 'अस्थूलमनणु', 'यत्तदद्रेश्यं', 'नेति नेती'त्यादि श्रुतयो ब्रह्माशेषविशेषनिषेधिका इति वाच्यम्। तासां विशिष्य विहितेतरविषयत्वस्योक्तत्वात्। अन्यथा सामान्यविशेषन्यायमात्रमुच्छिद्येत। उदाहृतश्रुतीनां प्रपञ्चवैलक्षण्यमात्रपरत्वेनाविरोधात्।

एतेन नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनमिति लक्षणमव्यपदेश्यमेकात्मप्रत्ययसारं शिवं शान्तमद्वैतं चतुर्थं मन्यन्त स आत्मा स विज्ञेयः केवलो निर्गुणश्चेत्यादिश्रुतेः ब्रह्मणि धर्मप्राप्तनिषेधात् तन्त्रधर्मप्रतिपादकश्रुतीनां कल्पितधर्मपरत्वमिति निरस्तम्।

धर्माणां कल्पितत्वस्य निरस्तत्वात्। निर्विशेषवाक्यानामेव आरोपितनिर्विशेषत्वप्रतिपादनपरत्वप्रसङ्गात् च। अलक्षणमिति स्वरूपलक्षणस्यापि निषेधेन ब्रह्मणोऽपि निषेधप्रसङ्गाच्च। तस्य

तटस्थलक्षणमात्रविषयतया सङ्कोचे च नान्तःप्रज्ञमिति निषेधान्तरस्यापि लोकसिद्धान्तप्रज्ञादिविषयत्वेन सङ्कोचनीयत्वात् । सर्वेषामपि वेदान्तानां सगुणब्रह्मपरत्वस्योपक्रमादिन्यायैर्निश्चितत्वेन नान्तःप्रज्ञ-मित्यादेरपि सविशेषपरत्वस्यैवोचितत्वात् । न ह्युभयत्र तात्पर्यविशेषे विशेषाः कल्पिताः निर्विशेषत्वं तु वास्तवमिति वैदिकैर्वक्तुं शक्यम् । न चापच्छेदन्यायात्परप्राबल्यम् । 'पौर्वापर्यविधेयश्च पूर्वाप्रामाण्य-मेव च । विधानं नास्ति यत्रासावपच्छेदनयो भवेदि'ति प्रकृते तन्न्यायानवसारादित्यन्यत्र विस्तरः । तस्मात् सामान्यविशेषादिन्याय एवात्र अवतरतीति श्रोतव्य इत्यादिना विधीयमानो विचारो जीव-भिन्नानन्तकल्याणगुणपरमात्मविषय इति स्थितम् ।

एतेनायं विचारो द्वितीयात्मविषयः । आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितमित्या-द्युत्तरवाक्यपर्यालोचनया श्रोतव्य इति वाक्यगतस्यात्मशब्दस्याद्वैतात्मपरत्वादिति निरस्तम् ।

आत्मदर्शनादिना सर्वविदितं भवतीत्युक्तिरात्मनः सर्वपदार्थस्य चाभेदे आत्मवेदनसामग्री सर्व-वेदनसामग्र्योर्नियतत्वे वा युज्यते । अन्यज्ञानेनान्यज्ञानायोगात् । प्रधानभूतात्मनि विदितेऽप्रधानं सर्वमपि विदितप्रायमिति गौणी वा । तत्र प्रथमद्वितीयपक्षयोस्त्वयाऽप्यनङ्गीकृतत्वेन तृतीयपक्ष एव परिशिष्यते । न च सर्वस्य आत्मन्यध्यस्तत्वेन अधिष्ठानतत्त्वज्ञानेन अध्यस्तत्वमपि विदितं भवति । अधिष्ठानसत्त्वातिरेकेण अध्यस्तस्य सत्त्वाभावादिति तद्वाक्यार्थ इति वाच्यम् । अस्याः कल्पनाया निर्मूलत्वात् । अपदार्थत्वादवाक्यार्थत्वाच्च । तथा सतीदं सर्वं विदितं न भवतीति निर्दिश्येत । न तु विदितमिति । न हि शुक्तितत्त्वज्ञानेन रजतं विदितं भवतीत्युच्यते । किन्तु रजतं तत्र नास्ति न विदितमिति ।

एवं ब्रह्म तं परादाभ्योऽन्यत्रात्मनो ब्रह्म वेदेत्याद्युत्तरवाक्येऽप्यात्मनोऽन्यत्र ब्रह्मक्षत्रादिप्रप-ञ्चावस्थानवेदनस्य निन्दितत्वेन सद्वितीयत्वमेवात्मनोऽवसीयते । न च स यथा दुन्दुभेर्हन्यमानस्य न बाह्यान् शब्दान् शक्नुयात् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीत इत्यादि दुन्दुभ्यादिदृष्टान्तसामर्थ्यादात्मनोऽद्वितीयत्वं सिद्ध्यतीति युक्तम् । सर्वस्यापि परमात्मेच्छाधीनत्व एव दुन्दुभ्यादिदृष्टान्तानां सामञ्जस्यात् । न हि दुन्दुभ्यां पश्यन् पुरुषो दुन्दुभ्याघाते मुरजशब्दोऽयमिति गृह्णाति । एवं भगवन्तं जानन्नान्याधीनं जगदिति गृह्णाति । किन्तु भगवदिच्छाधीनमित्येवेति तदर्थ-विज्ञानात् । एवं स यथाऽऽद्रैधाग्नेः (बृ.) इत्याद्युत्तरवाक्येऽपि सर्वस्यापि जगतः परमात्मायत्तत्व-मेवोच्यते । एवं विज्ञातारमनेकेन विजानीयादित्याद्युपसंहारेऽपि ज्ञातत्वमुच्यत इति तद्द्वितीयात्मपरत्वं केन विजानीयादित्यादिकं तु श्रवणाद्यतिरिक्तविषयम् । अन्यथा आत्मा वा अरे द्रष्टव्यः श्रोतव्य इत्याद्युपक्रमोऽपि विरुद्ध्यतेति दिक् ।

किञ्च विचारविधायकसूत्रे ब्रह्मशब्दप्रयोगात् ब्रह्मशब्दस्य च 'बृहति बृंहयति तस्मादुच्यते परं ब्रह्मेति अथ कस्मादुच्यते ब्रह्मेति', 'बृहन्तो ह्यस्मिन्गुणाः', 'बृहत्वाद्बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयत' इत्यादि श्रुतिस्मृतिभ्यो देशतः कालतो गुणतश्चापरिच्छिन्नवस्तुवाचित्वावगमादात्मशब्दोऽपि तदनुगुण एव नेतव्यः। प्रकरणोपपदादिसङ्कोचकाभावेन गुणतो बृहत्वस्यापि ब्रह्मशब्दप्रवृत्तिनिमित्ततया अभ्युपगन्तव्यत्वात्। न च वस्तुतो परिच्छिन्नत्वस्यापि तत्प्रवृत्तिनिमित्तत्वात् ब्रह्मशब्दोऽद्वैतब्रह्मपर इति वाच्यम्। देशकालापरिच्छेदवत् वस्त्वपरिच्छेदस्यापि सकलवस्तुसम्बन्धित्वरूपतया त्वदभिमतार्थसिद्धेः। सकलवस्तुप्रतियोगिकभेदशून्यत्वस्य वस्त्वपरिच्छेदशब्दार्थत्वे च विरोधः। आत्मानात्मनोरभेदस्यानभ्युपगमात्। सकलवस्तुशून्यत्वस्य तदर्थत्वे प्रमाणाभावात्। उदाहृतश्रुतिस्मृत्यविरोधाय वस्त्वपरिच्छेदशब्दार्थस्योक्तस्यैव ग्राह्यत्वाच्च। न च देशापरिच्छेदेनैतदर्थलाभ इति वाच्यम्। कालापरिच्छेदेनैव देशापरिच्छेदस्यापि लाभेन तद्ग्रहणवैयर्थ्यप्रसङ्गात्। देशतः कालतो गुणतश्चेत्यस्मदुक्तप्रकारेणैव त्रिविधपरिच्छेदशून्यत्वस्याङ्गीकर्तव्यत्वाच्च। बृह बृंहयति बृहत्वाद्बृंहणत्वाच्चेति श्रुतिस्मृत्योः सामान्यतः अथ कस्मादुच्यत इति श्रुतौ विशिष्य गुणपूर्णत्वस्य प्रवृत्तिनिमित्ततयोक्तत्वात्। न चाथ कस्मादुच्यत इति वाक्यस्य श्रुतित्वे विप्रतिपत्तिरिति युक्तम्। तव ब्राह्मण्येऽपि कस्यचिद्विप्रतिपत्तिरिति ब्राह्मण्यासिद्धिप्रसङ्गात्, असम्भवादसम्भाष्यत्वापत्तेश्चेति यत्किञ्चिदेतत्।

एतेन अस्याः श्रुतित्वेऽप्यब्रह्मेति छेदकार्यहिरण्यगर्भादि ब्रह्म न भवतीति कस्मादुच्यत इति प्रश्नार्थः। घटादिवत् कृष्णपिङ्गलादि बृहद्गुणयोगान्न मुख्यं ब्रह्मेत्युत्तरार्थ इति निरस्तम्।

उदाहृतश्रुतिस्मृत्यनुसारेण परब्रह्मविषयत्वस्यैव न्याय्यत्वात्। बृहद्गुणशब्दस्य कृष्णपिङ्गलादिमात्रग्रहणे कारणाभावात्। बृहन्तो ह्यस्मिन्गुणा इति निर्देशानुपपत्तेश्चेति। तस्मान्मन्तव्यः। अथातो ब्रह्मजिज्ञासेति श्रुतिसूत्राभ्यां विधीयमानो विचारः प्रत्यग्भिन्नानन्तमङ्गलगुणपरब्रह्मविषय इत्यत्र न कश्चिद्दोष इति।

*॥ श्रवणादेरद्वितीयात्मविषयत्वे बाधकम् ॥ ९ ॥*

★ ★ ★

## १०. जिज्ञासाशब्दस्य विचारवाचकत्वे बाधकोद्धारः

न च अथातो ब्रह्मजिज्ञासेति सूत्रे विचारो विधीयत इत्ययुक्तम्। तत्र विचारोपस्थापकपदाभावात्। न च प्रकृत्या स उपस्थाप्यते। ज्ञानवाचिन्या तया विचारत्वेन विचारोपस्थापने लक्षणा-

प्रसङ्गात् । प्रकृत्यर्थस्येष्यमाणतया फलत्वावश्यंभावेन विचाररूपत्वासिद्धेश्च । न च लक्षणया विचार-स्योपस्थितिः । तस्या एव दोषत्वात् इति चेत् उच्यते— मीमांसाशब्दवज्जिज्ञासाशब्दो विचारे रूढ एव। अवयवार्थाप्रतीतावपि तेन विचारप्रतीतेः । बुभुत्सादिशब्दं विहाय नियमेन विचारे जिज्ञासापदप्रयोग-दर्शनाच्च ।

अत्र कश्चिदाह— उद्भूतावयवशक्त्यावयवार्थप्रतीतिसम्भवेन तत्र बाधकाभावेन च तत्प्रतीति-पूर्वकं तत्सम्बन्धिविचारलक्षणोपपत्तौ निर्बीजं प्रतीत्यपलापेन समुदायशक्तिकल्पनं न युज्यते । अन्यथा गङ्गापदस्यापि मुख्यप्रतीत्यपलापेन तीरविषयकशक्तिचोद्ये किमुत्तरं स्यात् । बुभुत्सादिशब्दं विहाय विचारे जिज्ञासापदप्रयोगनियमश्च अशोकवनिकान्यायादस्त्विति । तन्न । मण्डपशब्दादितो गृहविशे-षादिप्रतीतिवदवयवार्थप्रतीतिं विनैव मीमांसाशब्दादिवज्जिज्ञासाशब्दादविलम्बेन विचारप्रतीतेः सर्वानु-भवसिद्धत्वेनैवंविधप्रतीतिमपलपत उन्मत्तवदुपेक्षणीयत्वात् । अवयवशक्तिसद्भावेऽत्र तस्या अनुद्भूतत्वेन अवयवार्थप्रतीत्यसम्भवेन प्रथमप्रतीत्यपलापदोषगन्धाभावात् । अन्यथा मण्डपप्रवीणकुशलाश्वकर्ण-शब्दादितोऽपि मण्डपानकर्तृप्रकृष्टवीणकुशादानकर्त्रश्वीयकर्णरूपावयवार्थप्रतीतिं विनैव अविलम्बेन गृहविशेषनिपुणवृक्षविशेषप्रतीतिरप्यसिद्धा स्यात् । किन्तु लक्षणया क्लृप्तावयवशक्त्यैव तत्प्रतीतिरिति वा चाटुवचनावकाशप्रसङ्गात् । एवमेव दानभानगोशब्दप्रभृतीनामपि रूढिर्न स्यात् । 'धातोः कर्मणः समानकर्तृकादिच्छायां चे'ति शास्त्रेण जिज्ञासाशब्दस्य प्रकृतिप्रत्ययविभागपुरःसरं व्युत्पादनवत् दाभाभ्यां नुः, (दाभाभ्यां नुः - ४५१५ उणादि) गमेर्डो (गमेर्डोः - ४४२८ उणादि) इत्यादिशास्त्रेण तेषामपि तथा व्युत्पादितत्वेन लक्षणया क्लृप्तावयवशक्त्यैव तत्तदर्थेषु प्रयोगसम्भवात् । न चैवं गङ्गादिशब्दस्य तीरादौ शक्तिरेव स्यान्न लक्षणेत्युक्तमिति वाच्यम् । तत्र मुख्यार्थप्रतीतिपूर्वकमेव तीरप्रतीतेः सर्वानुभवसिद्धतया लक्षणाया एव न्याय्यत्वात् । तदुक्तम्— 'जिज्ञासांशब्दतो हीच्छामज्ञात्वैव विजानते । विचारं लौकिकास्तेन तत्रायं रूढ इष्यते । अन्यथा मण्डपादीनां गृहादौ स्यान्न रूढता । गङ्गाशब्दात्तु तीरादि तद्धीपूर्वं प्रकाशत' इति ।

यच्चोक्तं मण्डपादिशब्दस्य गृहविशेषादौ यदि सम्बन्धादिनियमस्तदा तत्र लक्षणावृत्तिरिष्टैव । तदनियमे तु रूढिरेवेति न प्रतिबन्ध्यवतार इति । तदपि न । सम्बन्धादिनियमेऽपि यौगिकार्थप्रतीतिं विना गृहविशेषादिप्रतीतेः सर्वानुभवसिद्धतया अनुभवापलापेनेष्टापत्तेर्वक्तुमुचितत्वात् । त्वन्मतेऽध्ययनविधेः ज्ञानार्थत्वे खण्डनरीत्या ब्रह्मज्ञानविषयकेच्छाया एवासम्भवेन जिज्ञासाशब्दावयवार्थभूतज्ञानविषयके-च्छायाः तदवयवमुख्यार्थभूतेष्यमाणज्ञानस्य वा विचारेण सह सम्बन्धस्यैवासम्भवेन विचारोपस्थित्यर्थं

जिज्ञासाशब्दे रूढेरेवाङ्गीकार्यत्वाच्च । किं च त्वन्मते ज्ञानसामान्येच्छायाः क्वाप्यभावात् अपरोक्ष-ज्ञानेच्छायां जिज्ञासाशब्दस्य अवयवशक्त्यभावेन समुदायशक्तिकल्प्यत्वाविशेषे विचार एव समुदाय-शक्तिरपरोक्षेच्छायां लक्षणेति किं न स्यात् ।

यदुक्तं इच्छाविषयज्ञाने अपरोक्षत्वस्य इच्छाविषयत्वानुपपत्तिं गम्यत्वेन अपरोक्षज्ञानेच्छायां समुदायशक्तेः अकल्प्यत्वात् न अस्मत्प्रतिबन्दीति । तन्न । तथासति वाचस्पतिरीत्या विचारस्यापि तादृशज्ञानेच्छाविषयत्वानुपपत्तिगम्यत्वेन लक्षणाङ्गीकारायोगात् । यदि विचारकर्तव्यतायाः शाब्द-त्वानिर्वाहाय तत्र लक्षणा तर्ह्यपरोक्षत्वस्यापि शाब्दत्वनिर्वाहा उक्तरीत्या जिज्ञासाशब्दस्य विचार एव समुदायशक्तिः दुर्निवारा स्यात् । किञ्च जिज्ञासाशब्दस्यान्यथासिद्धतया विचारे रूढ्यभावे अपरिमित-शब्दस्य बहुत्ववति रूढिः न स्यात् । तत्प्रयोगस्यापि परिमिताद्यमुख्यार्थनिष्ठानेकत्वगुणयोगेन अन्यथा-सिद्धत्वात् । उक्ता च अपरिमितशब्दस्य रूढिः षष्ठे ।

यदुक्तं बहुत्ववत्येव नियतप्रयोगस्यापरिमितशब्दस्य द्वितयसाधारणादुक्तगुणात् वृत्त्यसम्भवेन बहुत्ववति रूढिरेव न्याय्या । एकत्वादिपरार्धपर्यन्तस्य सर्वस्य परिमितत्वेन तदन्यरूपमुख्यार्थाप्रसिद्ध्या तद्गुणाप्रसिद्धिश्चेति । तन्न । एकत्वद्वित्वादिसङ्ख्यान्यानेकत्वस्यैव गुणत्वेनोक्ततया तादृशगुणयोगेना-परिमितशब्दस्य बहुत्ववति वृत्तौ बाधकाभावात् । एकद्वित्र्यादिरूपं यत्परिमितशब्देन विवक्षितं तदन्य-मुख्यार्थरूपनिरुक्तानेकगुणयोगिनोऽमुख्यार्थस्य सम्भवाच्च ।

अत्रैकत्वादिपरार्धपर्यन्तस्य परिमितत्वेनाविवक्षितत्वादुक्तरीत्या तत्र प्रतीतिनिर्वाहोपपत्तावपरि-मितशब्दसमुदायशक्तिः न कल्प्येत्येवं परत्वात् । अस्मद्गुरूक्तेरिति दिक् ।

एतेन बुभुत्सादिशब्दं विहाय विचारे जिज्ञासापदप्रयोगनियमश्च अशोकवनिकान्यायादस्त्विति निरस्तम् ।

'तद्विजिज्ञासस्व', 'अथातो धर्मजिज्ञासा', 'अथातः क्रत्वर्थत्वपुरुषार्थत्वयोर्जिज्ञासा, जिज्ञासितं सुसम्पन्नमि'त्यादि श्रुतिसूत्रपुराणेषु विचारे नियमेन जिज्ञासाशब्दप्रयोगस्य निमित्तावश्यम्भावेन अशोकवनिकान्यायवैषम्यात् । अन्यथा मान् बध दान् शान्भ्यो दीर्घश्चाभ्यासस्ये'ति सूत्रे (३।१८८ पा. सू. ३-१-६) 'मान पूजने, बध बन्धने, दान खण्डने, शान तेजन' इत्येवमर्थकेभ्यो मान्यादिधातुभ्यो जिज्ञासाचित्तवैरूप्यार्जवनिशानेषु सनिष्यत इति वार्तिके मीमांसाशब्दस्य विचारार्थत्वमभिप्रेत्य अर्थ-कथनार्थं जिज्ञासाशब्दोपादानं न स्यात् । न च मीमांसाशब्दस्यापि विचारवचनत्वे विचारोऽस्ति । स्वार्थिकसनन्तत्वात् । न चैवं जिज्ञासाशब्दस्यानेकार्थत्वप्रसङ्ग इष्टापादनात् ।

यद्वा धातोः कर्मणः समानकर्तृकादिच्छायां चेति ज्ञानेच्छावाचिजिज्ञासाशब्दादन्य एवायं विचारवाची जिज्ञासाशब्दोऽस्तु मण्डपानकर्त्रादिवाचकमण्डपादिशब्दादन्यस्य गृहविशेषादिवाचकस्य मण्डपादिशब्दस्य सम्प्रतिपन्नत्वात् । सादृश्येन प्रत्यभिज्ञानोपपत्तेः । न चैवमक्षादिशब्दानामपि नानात्वप्रसङ्गः । इष्टापादनात् । यद्वा मीमांसाशब्द इव जिज्ञासाशब्देऽपि धातुरेव विचारवाचकः अस्तु । तत्रेवात्र सन्प्रत्ययः स्वार्थिक एवास्तु । न च गुप्तिज्किद्भ्यः सन् 'मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्ये'ति सूत्रे मानयतेरिव जानातेरनुपादानात् ततः स्वार्थिकसन्प्रत्ययप्रापकशास्त्राभावान्न विचारार्थको जानातिरिति वाच्यम् । उदाहृतश्रुतिसूत्रपुराणप्रयोगैः मानयतेर्जिज्ञासायामिति 'मान्बधदान्शान्भ्य' इति सूत्रे जिज्ञासायां गम्यमानाया मानयतेः स्वार्थे सन्प्रत्ययो भवतीति वार्तिककारव्याख्यानेन न जिज्ञासाशब्दस्य धातोर्वा विचारवाचकत्वे निर्णीतगुप्तिज्किद्भ्यः सन्निति सूत्रे सन् गुप्तिज्किद्भ्य इति पाठक्रमस्याश्रिततया इष्टसिद्धेः । एवञ्च सनिति योगविभागः क्रियते । योगविभागसामर्थ्यात् क्वचिदिष्टसिद्धिरिति न्यायेन जानातेः सन्प्रत्ययो भवतीति सनिति सूत्रस्यार्थः । ततो गुप्तिज्किद्भ्यः इति सूत्रम् । तस्यार्थः । गुप्तिज्किद्भ्योऽपि सन्प्रत्ययो भवतीति ।

एतेन कप्रयोगः कल्प्यां रूढिं बाधत इति निरस्तम् ।

उक्तीत्याद्यविगीतानादिवृद्धव्यवहारेण रूढेरपि क्लृप्तत्वादिति । तस्मात् जिज्ञासाशब्दः श्रौतः सौत्रश्च विचारे रूढ एव ग्राह्यः । न तु यौगिकः । यौगिकापेक्षया रूढस्यैव मुख्यत्वात् । अत एव रूढिर्योगमपहरतीति न्याय इति स्थितम् । जिज्ञासाशब्दस्य विचारलक्षकत्वपक्षे च अस्माभिः न्यायमौक्तिकमालिकायां दूषणानि प्रपञ्चितानीति नेह प्रपञ्च्यते ।

*॥ इति जिज्ञासाशब्दस्य विचारवाचकत्वे बाधकोद्धारः ॥ १० ॥*

★ ★ ★

## ११. परमते श्रवणविधेर्ज्ञानकामाधिकारिकत्वे बाधकम्

ननु तथापि श्रवणादिकं विधीयत इत्ययुक्तम् । निरधिकारिकत्वादिति चेत् । अत्र कश्चिदाह— हिरण्यभरणविधौ भ्रातृव्यादौ वर्ण्यमिव द्रष्टव्य इति दर्शनमनूद्य तादर्थ्येन श्रवणविधावप्यात्मदर्शने कायोपबन्धकल्पनया ज्ञानकामाधिकारात् । न च श्रोतव्य इति द्रष्टव्यनिष्ठस्य श्रवणस्य न साध्यान्तरसम्बन्धः । अननुगुणसाध्यद्वयसम्बन्धे वाक्यभेदापातात् । अत एव तेषामर्थनयेऽवघातादीनामर्थकर्मत्वं नास्तीत्युक्तमिति वाच्यम् । श्रवणसंस्कृतात्मनोऽन्यत्रोपयोगाभावेन हिरण्यं भार्यमिति यदेव नियोग-

भङ्गाश्रयणात् । न चैवं श्रवणं प्रत्यात्मनो गुणत्वं स्यादिति वाच्यम् । आत्मा श्रोतव्य इत्यत्रात्मशब्दस्य लक्षणया तद्विषयकवेदान्तपरत्वात् । आत्मदर्शनस्योद्देश्यत्वेन तत्कोटिनिविष्टस्यात्मनः प्रधानत्वोपपत्तेश्चेत्यात्मज्ञानकामाधिकारिकश्रवणविधिरिति । तन्न । आत्मज्ञानकामनाया एवायोगात् ।

तथाहि— न तावदज्ञाते ब्रह्मज्ञाने कामना । तस्याविषयज्ञानसाध्यत्वात् । न च ज्ञाते । विशिष्टज्ञानस्य विशेषणज्ञानपूर्वकत्वेन सिद्धे ज्ञाने तदयोगात् । न च परोक्षज्ञाने सिद्धेऽप्यपरोक्षज्ञाने सा भविष्यतीति वाच्यम् । त्वन्मते अपरोक्षब्रह्मणि परोक्षज्ञानायोगेन अपरोक्षज्ञानस्यैव असिद्धेः । कामनाया अपरोक्षत्वेन तद्विषयज्ञानावच्छेदकस्य ब्रह्मणोऽपि तत्सिद्धेः ।

अत्र कश्चिदाह— प्रथमं वेदान्तवाक्यादापातज्ञाने स्वातन्त्र्येण साक्षिरूपब्रह्मापरोक्षज्ञाने सिद्धेऽप्यनायातस्वतन्त्रब्रह्मापरोक्षप्रमाणज्ञानस्य अविद्यानिवर्तनशक्तस्यासिद्ध्या तत्र कामनासम्भवादिति । तन्न । यद्विषयकमज्ञानं तद्विषयकापरोक्षज्ञानस्यैव लाघवेन अज्ञाननिवर्तकत्वम् । अनायातस्वतन्त्रापरोक्षप्रमाणज्ञानस्य अननुसरणीयत्वात् । अन्यथा दण्डादिज्ञाने सुखादिसाक्षिणि च साक्षिणि च सति दण्डसुखादिविषयकाज्ञानसत्त्वापातः । सोपाधिकभ्रमस्थलेऽपरोक्षज्ञाने सत्यप्यज्ञानं दृश्यत इति चेत् । तथा सति ज्ञानाज्ञानयोर्विरोधवार्ताया दत्तजलाञ्जलित्वापत्तेः । उपाध्यादिप्रतिबन्धकवशाद् ज्ञानस्याज्ञानानिवर्तकत्वमिति चेन्न । ज्ञानोदये अज्ञानमेव न सम्पत्स्यत इति वदन्तं प्रति तन्मूलासम्भावनादेः प्रतिबन्धकत्वस्य वक्तुमनुचितत्वात् । अज्ञानमनुभवसिद्धमिति चेन्न । आपादने तस्यानुभवसिद्धत्वात् ।

किञ्च किमिदमापातत्वं न तावत्परोक्षज्ञानत्वम् । अपरोक्षरसे ब्रह्मणि तस्यायोगात् । नापि सामान्यविषयकत्वम् । ब्रह्मणो निःसामान्यविशेषत्वात् । नापि संशयरूपत्वं शब्दस्यासांशयिकत्वात् । त्वन्मते तादृशज्ञानस्यैककोटिकत्वेन संशयरूपत्वायोगाच्च ।

अत्र कश्चिदाह— 'स्वाकारविरुद्धाकारसमबलज्ञानाविरोधिज्ञानत्वस्यैव संशयशब्दार्थत्वेनैककोटिकस्यापि तस्य तथात्वात् । अन्यस्य संशयत्वस्य दुर्वचत्वात् । यद्वाऽनवधारणात्मकं तदापातज्ञानम् । अग्रे संशयदर्शनेन तदविरोधिनस्तस्यावधारणात्मकत्वायोगात् । संशयनिवृत्त्यनुकूलस्वरूपविशेषवत एवावधारणात्मकत्वात् । प्रकारान्तरेण निश्चयत्वस्य वक्तुमशक्यत्वात् । प्रमाणमपि वेदान्तवाक्यम् । असम्भावनादिदोषवशात् संशयस्य अनवधारणस्य वा हेतुरेवेति न विरोध इति । तन्न । सविषये स्फुरद्विरोधप्रकारद्वयवैशिष्ट्यविषयताश्रयज्ञानस्य संशयत्वेनैककोटिकज्ञानस्य अतथात्वात् । लोकव्यवहारानुसारेणैव लक्षणप्रणयनस्योचितत्वात् । न हि स्थाणुपुरुषादिसन्देह इव त्वदभिमतैककोटिकज्ञाने सन्देह्मीति कस्यचित्प्रतीतिप्रकारौ स्तः । उत्तरत्र संशयो दृश्यत इति चेत् । किमिदं कर्णे

पृष्टं कटिं चालयसि । तावता तस्यैव संशयरूपत्वस्योचितत्वात् । न तु पूर्वोत्तरं निश्चयस्य । तत्र तत्प्रतीतिव्यवहारयोरभावात् । अन्यथा संशयहेतुधर्मिनिश्चयस्य अनभ्यासदशोत्पन्नस्य अयं घट इत्यादि निश्चयस्य च संशयत्वप्रसङ्गात् । न चेष्टापत्तिः । अत्रापि सन्देह्मीति प्रतीतिव्यवहारयोरदर्शनात् ।

किञ्च स्वाकारविरुद्धाकारसमबलज्ञानाविरोधिज्ञानं संशय इति संशयलक्षणं न युज्यते । पटनिश्चयाविरोधिनि घट इत्यादि निश्चयेऽतिव्याप्तेः । तस्यापि स्वाकारो घटत्वादिस्तद्विरुद्धाकारः पटत्वादिस्तद्विषयकं समबलं च यत्पट इत्यादिज्ञानं तदविरोधित्वात् । किञ्च स्थाणुपुरुषादिसंशये स्वाकारस्थाणुत्वादिस्तद्विरुद्धाकारः पुरुषत्वादिः तद्विषयं समबलं च यत्संशयान्तरं स्थाणुत्वपुरुषत्वादि-विरुद्धघटत्वादिविषयकं संशयान्तरं वा तदविरोधित्वं संशयस्येति लक्षणसत्त्वमुपपादनीयम् । एवञ्च घट इत्यादि निश्चये पीतः शङ्ख इत्यादि सोपाधिकभ्रमे चोक्तरीत्या लक्षणगमनादिति व्याप्तिर्दुवारा ।

एतेन स्वविषये स्वाकारविरुद्धद्वयवैशिष्ट्यावगाहिज्ञानाविरोधिज्ञानत्वं संशयत्वमिति निष्कर्षोऽपि निरस्तः ।

लाघवेन व्यवहारानुरोधेन च स्वविषये स्फुरद्विरोधद्वयवैशिष्ट्यावगाहिज्ञानस्यैव संशयत्वात् स्वाकारपदवैयर्थ्याच्च । किञ्च शङ्खः श्वेत इति आनुमानिकविशेषदर्शनेऽतिव्याप्तिः । तस्यापि स्वविषये शङ्खे स्वाकारस्य श्वैत्यस्य विरुद्धं यद्द्वयं पीतरूपं श्वैत्याभावश्च तदुभयवैशिष्ट्यावगाहि यः पीतः शङ्खो नश्येत इति ज्ञानं तदविरोधित्वात् । न चात्र विरोधस्फुरणे श्वैत्यनुमितेः संशयत्वमिष्टमिति वाच्यम् । निष्कम्पप्रवृत्त्यभावप्रसङ्गात् । न च तत्र विरोधस्फुरणाभावादेव न संशयत्वमिति युक्तम् । सोपाधिक-भ्रमे विरोधस्फुरणस्यावश्यकत्वात् । न चैवं त्वदभिमतसंशयलक्षणमपि सोपाधिकभ्रमेति व्याप्तमिति वाच्यम् । स्वविषये स्फुरद्विरोध्यनियतकोटिद्वयावगाहिज्ञानत्वस्य विवक्षितत्वात् । संशये स्थाणुत्व-पुरुषत्वयोरिवोक्तभ्रमे पीतरूपश्वैत्याभावयोरनियतविषयत्वाभावात् ।

न चैवमपि स्वविषये आत्मन्यहं ब्रह्म न वेति स्फुरद्विरोध्यनियतकोटिद्वयावगाहि यज्ज्ञानं संशय-रूपं तदविरोधिज्ञानत्वमेककोटिकज्ञानस्येति लक्षणार्थः । पीतशङ्खादिभ्रमस्तु नियतविरुद्धद्वयावगाहीति तदविरोधिश्वैत्यानुमितौ नातिव्याप्तिरिति वाच्यम् । संशयत्वे तु धर्मिज्ञानादेरभ्यासदशापन्नघटादि-निश्चयस्य च संशयत्वापत्तेरुक्तत्वात् । शेषवैयर्थ्याच्च । स्वविषये स्वाकारविरुद्धेत्यत्र स्वपदद्वयस्य समभिव्याहृतपरत्वे आकारशब्दस्य प्रकारार्थत्वे च त्वदभिमतापातप्रतीतावव्याप्तिः । तस्या अपि चरमवृत्तिवन्निष्प्रकारकत्वाभ्युपगमेन तद्विरुद्धद्वयवैशिष्ट्यावगाहिज्ञानस्यैवाप्रसिद्धेः । आकारशब्दस्य विषयपरत्वे च स्वाकारपदवैयर्थ्यादित्यन्यत्र विस्तरः । तस्मान्न संशयरूपत्वमापातत्वमिति स्थितम् ।

एतेन अनवधारणत्वमापातत्वमिति निरस्तम् ।

उक्तरीत्या त्वदभिमतापाताज्ञानस्यापि संशयभिन्नतया निश्चयत्वरूपावधारणत्वावश्यंभावात् । न च संशयनिवृत्त्यनुकूलस्वरूपविशेषवदेव ज्ञाननिश्चयत्वम् । इदं च न तथेत्यनवधारणमिति वाच्यम् । उक्तसंशयभिन्नज्ञानत्वरूपानुगतनिश्चयत्वे सम्भवत्वम् । अननुगतस्य तस्यायोगात् । यत्र न संशयस्तद्विषयकज्ञानस्योक्तलक्षणाभावेनानिश्चयत्वापाताच्च । न च तत्रापि योग्यतास्तीति युक्तम् । अनुगतावच्छेदकाभावे योग्यताया अनिरूपणात् । तत्सत्त्वे चानुगतस्य तस्यैव निश्चयत्वरूपत्वापातात् । किञ्च असम्भावनद्विकमवधारणे प्रतिबन्धकमात्रमुतानवधारणं प्रत्यपि हेतुः । नाद्यः । शाब्दावधारणव्यावृत्तस्य विषयस्य कारणस्य वाऽभावेन तदनवधारणज्ञानस्याकस्मिकत्वापत्तेः । रजतादिभ्रमस्थलेऽपि दोषाणामधिष्ठानतत्त्वज्ञानप्रतिबन्धमात्रेण अप्रमापरतस्त्वाभावप्रसङ्गाच्च । द्वितीयेऽपि तस्य प्रमात्वं चेद्दोषजन्यं न स्यात् । तथा सति अप्रामाण्यापत्तेः । प्रमायाः स्वतस्त्वभङ्गप्रसङ्गाच्च । अप्रमात्वं चेत् सन्मात्रविषयता न स्यात् । उभयबहिर्भूतत्वे दोषजन्यत्वेन स्यात् । तस्मादनवधारणत्वमपि नापातत्वमिति स्थितम् ।

नन्वस्तु प्रकारान्तरेणापातत्वम् । प्रतिबद्धफलज्ञानस्यैवापातज्ञानत्वात् । प्रथमं वेदान्तजन्यं ज्ञानं अखण्डब्रह्मात्मनिश्चयरूपमप्यसम्भावनाविपरीतभावनाभ्यां फले जनयितव्ये प्रतिबध्यते । तत्प्रतिबन्धकत्वं च भर्च्यादिज्ञानानामन्वयव्यतिरेकसिद्धमिति ब्रह्मज्ञानेऽपि विरुद्ध्यते । अप्रतिबद्धफलमनापातज्ञानमिति तत्कामे विचारविधावधिक्रियते । विचारस्यासम्भावनादिनिवर्तकत्वात् । तदुक्तं सङ्क्षेपशारीरके— पुरुषापराधमलिनाधिषणानिरवद्यचक्षुरुदयापि यथा । न फलाय भर्चुविषया भवति श्रुतिसम्भवापि तु तथात्मनिधीरिति । पुरुषापराधविनिवृत्तिफलः सकलो विचार इति वेदविद इति च । तस्मादापातत्वं न दुर्वचमिति । मैवम् । प्रत्यगभिन्नब्रह्मण्यपरोक्षतो ज्ञाते तद्विरोधिनिश्चयरूपस्यासम्भावनादेरेव स्थित्ययोगादित्युक्तत्वात् । विपर्ययादेरपि ज्ञाननिवर्त्यत्वावश्यम्भावात् । भर्च्यादिज्ञानानामपि पक्षसमत्वात् । तत्रासम्भावनादिदोषसत्त्वे भर्चुरयमिति चाक्षुषज्ञानस्यैवानुदयात् । दोषसत्त्वे शुक्तिरियमिति शुक्तितत्त्वज्ञानादर्शनात् । चक्षुषा भर्चुतत्त्वज्ञानोदये च असम्भावनाद्ययोगात् । न च त्वया विचारात्पूर्ववेदान्तैरद्वितीयात्मज्ञानमेव नाभूदिति वक्तुं शक्यम् । विचारे प्रवृत्त्ययोगात् । तस्य निश्चयरूपत्वाभ्युपगमाच्च । तथाच त्वन्मते विचारात् प्राक्साङ्गमधीतो वेदान्तो यदि नाद्वितीयं ब्रह्म बोधयेत् तदा प्रमाणमेव न भवेत् । यदि बोधयेत् तदा विपर्ययादिरूपो सम्भावनादिर्भवेदित्युभयतः पाशारज्जुः । असम्भावनादिदोषसत्त्वे भर्च्यादिविषयज्ञानानुदयदर्शनादित्युक्तम् ।

किञ्च अधिष्ठानतत्त्वज्ञानोदये ज्ञानप्रागभावनिवृत्ताविव अज्ञाननिवृत्तावसम्भावनादेः न प्रतिबन्धकत्वं युक्तम् । अन्यथाज्ञाने सति तत्प्रागभावो न निवर्तेत । विरोधित्वस्योभयत्र तुल्यत्वात् । न च

ज्ञानप्रागभावनिवृत्तेर्ज्ञानरूपतया ज्ञानफलत्वाभावादिच्छाप्रागभावादिनिवृत्तौ ज्ञानफले प्रतिबन्धकदर्शनाच्च नोक्तदोष इति वाच्यम् । त्वन्मतेऽपि अज्ञाननिवृत्तेः अज्ञाननिवर्तकज्ञानस्य च ब्रह्मरूपतया ज्ञानफलत्वाभावात् । अन्तःकरणवृत्तेर्जडत्वेनाज्ञाननिवर्तकत्वायोगात् । तत्र तस्य तत्स्वरूपरूपत्वेऽपि तत्फलत्वे च ज्ञानप्रागभावनिवृत्तेः ज्ञानरूपत्वेऽपि ज्ञानफलत्वमिति साम्यात् । ज्ञानप्रागभावनिवृत्तिरतिरिक्तेति मतानुसारेण तस्या मया दृष्टान्तत्वेनोपादानाच्च । न च वेदान्तजन्यवृत्तिप्रतिफलितचैतन्यं तदुपलक्षितं वा ज्ञाननिवर्तकम् । अज्ञाननिवृत्तिश्च केवलचैतन्यमिति वाच्यम् । तथापि नित्यसिद्धत्वेन तत्फलत्वायोगात् ।

एतेनेच्छाप्रागभावनिवृत्तौ ज्ञानफले प्रतिबन्धकदर्शनाच्चेति अपास्तम् । फले त्विष्टतावच्छेदकप्रकारकज्ञाने सतीच्छोदयस्य सर्वजनीनत्वात् । उपायेषु स्वरूपसदिच्छाविषयसाधनताज्ञानरूपहेत्वभावेनैव इच्छानुदयेन तत्र प्रतिबन्धकस्य अकल्पनीयत्वात् । न ह्युपायेषु स्वरूपसदिच्छाविषयसाधनताज्ञानत्वभावेनैवेच्छानुदयेन तत्र प्रतिबन्धकस्याकल्पनानन्तरमपि प्रतिबन्धकसद्भावो न क्वापि दृष्टचरः । शब्दादिविषयेषु ज्ञानेष्वपि विरक्तस्य तत्रेच्छानुदयो दृश्यत इति चेत् भ्रान्तोऽसि । न हि स्वरूपेण शब्दादिविषयज्ञानमिच्छाहेतुः । येन ज्ञाने सत्यपि प्रतिबन्धकवशेन इच्छानुदयो दृश्यत इत्युच्येत । किन्तु स्वरूपसदिच्छाविषयसाधनताज्ञानमेव तद्धेतुः । विरक्तस्य च दुःखेष्विव वैषयिकसुखेषु द्वेषसाधनेषु स्वरूपसदिच्छाविषयसाधनताज्ञानस्यैव अभावेन विषयेष्विच्छानुदयोपपत्तेः । सुखस्य सुखत्वेनेच्छाविषयत्वे च वैरिसुखस्यापि तद्विषयत्वापत्तिरिति यत्किञ्चिदेतत् । तथाच ज्ञानतत्प्रागभावनिवृत्त्योरिव तेजस्तमसोरिव च ज्ञानाज्ञानयोरपि च निवर्त्यनिवर्तकभावे प्रतिबन्धकासम्भव इत्यध्ययनकालीनाद्वितीयात्मज्ञानमेवाज्ञाननिवर्तकं स्यात् न तु ज्ञानान्तरम् । येन श्रवणादिविधिः साधिकारः स्यादिति स्थितम् । वेदान्तजन्यं ज्ञानं ह्यखण्डब्रह्मात्मनिश्चयरूपमप्यसम्भावनाविपरीतभावनाभ्यां फले जनयितव्ये प्रतिबध्यत इति वदता ब्रह्मज्ञानकामः श्रवणादिविधावधिकारीति न वक्तुं युक्तम् । विवक्षितविवेकेनासम्भावनादिनिवृत्तिकारित्वौचित्यात् । अन्यथा पुरुषापराधविनिवृत्तिफलः सकलो विचार इति वेदविद इति सङ्क्षेपशारीरग्रन्थविरोधः स्यात् । न च असम्भावनादिनिवृत्तेः सुखप्राप्तिदुःखनिवृत्त्योरन्यतरत्वाभावान्न तत्कामनाया बह्वायाससाध्यविचारप्रवर्तकत्वमिति वाच्यम् । ब्रह्मज्ञानस्यापि तथात्वात् । न च सुखसाक्षात्कारतया काम्यमिति वाच्यम् । तस्य विचारात्प्रागेव सिद्धतया कामनाविषयत्वायोगस्योक्तत्वात् । 'स्वाध्यायोऽध्येतव्यः', 'चित्रया यजेत पशुकाम' इत्यादौ अक्षरावाप्त्यर्थज्ञानपश्वादीनामिव गौणपुरुषार्थतया असम्भावनादिनिवृत्तेरपि कामनाविषयत्वोपपत्तेश्च ।

एतेन सुखरूपात्मज्ञानस्य सुखसाक्षात्कारतया काम्यत्वेऽपि क्षणिकतया तत्कामनाया बह्वा-

याससाध्यविचारे प्रवर्तकत्वायोगमाशङ्क्य तरति शोकमात्मविदित्यर्थवादगतस्य ज्ञानसाध्यमोक्षस्य रात्रिसत्रन्यायेन अधिकारिकोटिकत्वकल्पनान्न दोष इति परोक्तं निरस्तम् ।

चित्रायागादावपि पश्वादिसाध्यसुखादेरपि अधिकारिकोटित्वकल्पनाप्रसङ्गात् । त्वन्मते मोक्षस्यापि नित्यसिद्धात्मस्वरूपतया कामनाविषयत्वायोगेन तस्याधिकारिकोटित्वकल्पनस्यायोगाच्च । मोक्षनिरूपणे चैतदुपपादयिष्यामः । तस्मात्परमतेन ज्ञानकामाधिकारिकं श्रवणमिति स्थितम् ।

*॥ इति परमे श्रवणाविधेर्ज्ञानकामाधिकारिकत्वे बाधकम् ॥ ११ ॥*

★ ★ ★

# १२. स्वमते श्रवणादिविध्यधिकारनिरूपणम्

अस्मन्मते तु श्रवणादिकं ब्रह्मज्ञानकामाधिकारिकम् । परमात्मसाक्षात्कारस्य श्रवणादेः पूर्वमसिद्धत्वात् । एतावांस्तु विशेषः । त्वन्मते श्रवणमङ्गिमनननिदिध्यासने तु फलोपकार्यङ्गे । अस्मन्मते तु निदिध्यासनमङ्गि । श्रवणमनने तु तदङ्गे इति ।

ननु त्वन्मते परमात्मनो जीवात्मभिन्नत्वेन जीवान्तरवद् ओग्यतया दर्शनोद्देशेन निदिध्यासनादिविधिरयुक्त इति चेत् । न । 'आत्मा वा अरे द्रष्टव्यः', 'ततस्तु तं पश्यते निष्कलं ध्यायमान' इत्यादि शास्त्रबलेन भिन्नत्वेऽपि परमात्मनः साक्षात्कारविषयत्वोपगमात् । श्रवणादिकाले तत्साक्षात्काराभावेऽपि ध्यानसामर्थ्येन तदुत्पत्तौ बाधकाभावाच्च । अञ्जनादिसामर्थ्यवशेन व्यवहितनिध्यादिसाक्षात्कारस्य सकललोकसिद्धत्वाच्च ।

ननु परमात्मसाक्षात्कारो न चाक्षुषो मानसो वा । 'न चक्षुषा पश्यति कश्चनैनं', 'यन्मनसा न मनुते', 'अप्राप्य मनसा सहे'त्यादि श्रुतिविरोधात् । मनसो बहिरस्वातन्त्र्याच्च । नापि शाब्दः अनभ्युपगमात् । अयोग्यत्वाच्च । नापि ध्यानजन्यः । ध्यानस्य प्रमाणान्तरत्वापत्तेरिति चेन्न । अपरोक्षप्रमाणज्ञानकरणत्वेन ध्यानस्य प्रत्यक्षप्रमाण एवान्तर्भावात् । न च ज्ञानाकरणकं ज्ञानं प्रत्यक्षमिति प्रत्यक्षलक्षणविरोधः । साक्षात्त्वस्य जातिरूपतयोक्तलक्षणस्य अनादरणीयत्वात् । कदाचिदिन्द्रियं कदाचिदिन्द्रियार्थसन्निकर्षः कदाचिज्ज्ञानमिति नैयायिकैरेव तथावदद्भिः ज्ञानकारणकस्य प्रत्यक्षस्याप्यभ्युपगमाच्च । न च ध्यानस्यापरोक्षकारणत्वे प्रमाणाभावः । 'ततस्तु तं पश्यते निष्कलं ध्यायमानः', 'ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् । ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मने'त्यादिश्रुतिस्मृतीनां सत्त्वात् ।

यद्वा मानस एवायं साक्षात्कारोऽस्तु । न चोदाहृतश्रुतिविरोधः । 'मनसैवानुद्रष्टव्यं', 'दृश्यते त्वग्रया बुद्ध्ये'त्यादि श्रुत्युसारेणोदाहृतश्रुतेरनवहितमनोविषयत्वकल्पनात् । कविकाव्यमूलभूतसंसर्गज्ञानादौ मनसो बहिः स्वातन्त्र्यकल्पनाच्च । न चैवं ध्यानस्याङ्गितया विधानं न स्यादिति वाच्यम् । मनोरूपकरणापेक्षया ध्यानस्य सहकारितयाऽप्राधान्येऽपि श्रवणमननापेक्षया प्राधान्यसम्भवात् । तस्मादस्मन्मते श्रवणादीनां ब्रह्मज्ञानकामाधिकारिकत्वे न किञ्चिदपि बाधकम् ।

यद्वा 'आत्मा वा अरे द्रष्टव्य' इत्यादि विधिष्वश्रूयमाणाधिकारिकेष्वधिकारिणि कल्पनीये एतावदेव खल्वमृतत्वमित्यर्थवादे एतावच्छब्दे परामृष्टानां सर्वेषामप्यविशेषेणामृतत्वसाधनत्वप्रतीते रात्रिसत्रन्यायेनामृतत्वकामोऽधिकारी सर्वेष्वपि कल्प्यते । अत्र श्रवणादीनां त्रयाणाममृतत्वे जनयितव्ये यथायथं दृष्टसन्निहितपरमात्मदर्शनद्वारकत्वसंभवेऽदृष्टद्वारकत्वस्याकल्पनाद्दर्शनद्वारकत्वमेव कल्प्यते । एवं च श्रवणाद्येकैकमात्रसत्त्वेऽपि नामृतत्वप्रसक्तिः । न वाऽकृतश्रवणमनननिदिध्यासनस्य परमात्मसाक्षात्कारः । अमृतत्वं च निखिलकामावाप्तिहेतुसालोक्यादिरूपलोकविशेषस्थब्रह्मप्राप्तिरेव । तथाच दर्शनश्रवणमनननिदिध्यासनानां तुल्यवदधिकारसम्बन्धानां प्राधान्यान्नान्योन्यमङ्गाङ्गिभाव इति । अत्र कश्चिदाह— न तावद् द्रष्टव्य इति परमात्मसाक्षात्कारविधिः । त्वन्मते तस्य भिन्नत्वेन जीवान्तरचैतन्यवदयोग्यतया तत्साक्षात्कारस्यैवासम्भवात् । न च निदिध्यासनविधिसामर्थ्यात् तत्साक्षात्कारः कल्प्यत इति वाच्यम् । साक्षात्कारोद्देशेन तद्विधेरनभ्युपगमात् । अमृतत्वोद्देशेन विहितस्य निदिध्यासनस्य साक्षात्कारद्वारत्वे मानाभावात् । न च पूर्वम् असाक्षात्कृतपरमात्मसाक्षात्कारे अंन्वयव्यतिरेकाभ्यां साधनत्वेन तद्वारत्वं कल्प्यते इति युक्तम् । तथाभूते योग्येऽपि स्वर्गदेवतादौ ततः साक्षात्कारादर्शनेन तयोरभावात् । न च निदिध्यासनविधिसामर्थ्यादेव दर्शनस्य द्वारत्वकल्पनम् । तथासति तत्र साक्षात्कारे विधिवैयर्थ्यप्रसङ्गात् । निदिध्यासनविधिसामर्थ्यादेव दर्शनरूपफलसिद्धेः साक्षात्कारतज्जन्यादृष्टरूपद्वारद्वयकल्पनापेक्षया केवलादृष्टद्वारत्वस्यैव लघुत्वात् । तत्साक्षात्कारस्य मानान्तरासिद्धतया तद्वारत्वकल्पनस्यादृष्टद्वारकल्पनाविशेषाच्चेति ।

अत्रोच्यते । न तावद्भिन्नत्वेन परमात्मा साक्षात्कर्तुमशक्यः । घटादीनां चाक्षुषसाक्षात्कारविषयत्वस्यान्तःकरणतद्धर्माणां साक्षिप्रत्यक्षविषयत्वस्य चाभ्युपगमात् । त्वन्मतेऽपि जीवब्रह्मणोः व्यावहारिकभेदाभ्युपगमेन तत्साक्षात्कारायोगस्य तुल्यत्वात् । वास्तवाभेदस्य चाप्रयोजकत्वात् । नाप्ययोग्यतया तत्साक्षात्कारासम्भवः । 'यदा पश्यः पश्यते रुग्मवर्णं', 'आत्मन्येवात्मानं पश्येत्', 'तमक्रतुं पश्यति वीतशोकः', 'तस्मिन्दृष्टे परावरे', 'आत्मा वा अरे द्रष्टव्यः', 'द्वे ब्रह्मणी वेदितव्ये' इत्यादिश्रुतिबलेन परमात्मनोऽपि दर्शनयोग्यत्वात् । न चैवं श्रवणादिवैयर्थ्यम् । 'ततस्तु तं पश्यते

निष्कलं ध्यायमानः', 'ते ध्यानयोगानुगता अपश्यन्', 'ध्याननिर्मथनाभ्यासात्', 'देवं पश्येन्निगूढवदि'-त्यादि श्रुतिबलेन श्रवणमनननिदिध्यासनानामपि दर्शनहेतुत्वात् । न च तेषां दर्शनोद्देशेन विधाना-नङ्गीकारेण मोक्षोद्देशेनैव विधानाभ्युपगमेन च साक्षात्कारहेतुत्वे मानाभाव इति वाच्यम् । मोक्षोद्देशेन विहितानामेवोदाहृतश्रुतिबलेन साक्षात्कारहेतुत्वस्याप्यभ्युपगमात् । पूर्वपूर्वस्य उत्तरोत्तरद्वारा मोक्षहेतु-त्वाभ्युपगमाच्च । स्वर्गादिध्यानेन स्वर्गादिसाक्षात्कारो भवतीत्यत्र प्रमाणाभावाच्च । न चैवं मननादि-विधानमनर्थकम् । प्राधान्यज्ञापनार्थत्वात् । न च प्रधानस्योपसर्जनत्वं विरुद्धम् । प्रमाणसिद्धत्वेन तस्यादोषत्वात् । मोक्षापेक्षया प्रधानानामन्यापेक्षयोपसर्जनत्वस्याविरुद्धत्वाच्च । न च दृष्टादृष्टद्वारद्वय-कल्पनायां गौरवम् । प्रमाणवतो गौरवस्यान्याय्यत्वात् । तस्मात्परमात्मनो भिन्नत्वेऽपि श्रवणमनन-निदिध्यासनसामर्थ्येन साक्षात्कारस्य युक्ततया मोक्षोद्देशेन दर्शनविधिर्युक्त एव ।

एतेन नापि श्रोतव्य इत्यत्र श्रवणविधिः । त्वन्मते गुरूपदेशपूर्वकं शाब्दज्ञानरूपस्य श्रवणस्या-ध्ययनविधिफलभूतस्य तद्विधिसामर्थ्यादेव सिद्धतया तत्र विधिवैयर्थ्यात् । नापि मन्तव्य इति मनन-विधिः । युक्त्यनुचिन्तनरूपस्य मननस्य कर्मकाण्डविचारविध्याक्षिप्ततया तत्रापि विध्यानर्थक्यात् । नापि निदिध्यासनविधिः । त्वन्मते आत्मशब्दस्य विष्णुपर्यायत्वेनात्मशब्दवाच्यस्य 'वैष्णवं त्रिकपा-लमि'ति विहितयागदेवतारूपविष्णोः यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्यायेत् वेषड्वविष्यन् इति विधिप्राप्तस्येहानुवादसम्भवेन तत्रापि विध्ययोगादिति निरस्तम् ।

अध्ययनविधेरर्थज्ञानपर्यन्तत्वेऽपि श्रवणमननयोर्विधेयत्वस्य प्रागेव प्रतिपादनात् । आत्मशब्दस्य विष्णुपर्यायत्वेऽपि 'ब्रह्मणेऽभिजिते चरुमि'त्यादिविहितकर्मदेवतारूपस्यापरब्रह्मण इव वेदान्तप्रति-पाद्यानन्तकल्याणगुणकस्य विष्णोस्तत्तद्विद्योदितगुणवत्त्वेन यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्याये-दिति विध्यप्राप्ततया निदिध्यासितव्य इत्यत्रापि विधेयत्वस्योक्तत्वाच्च ।

एतेनैव किञ्च द्रष्टव्य इत्यादीनां दर्शनादिविधित्वेऽपि न रात्रिसत्रवदधिकारिकल्पनं युज्यते । दर्शनादीनामात्मशब्दवाच्यविष्णुसंस्कारद्वारा तद्देवताकर्मशेषत्वेन तत्राधिकारिकल्पनस्यान्याय्यत्वात् । अन्यथा कर्माभिधायितव्यप्रत्ययविरोधात् । न च विनियोगभङ्गादविरोध इति वाच्यम् । सकृज्जुहोती-त्यादिवदुपयोगाभावस्य हिरण्यं भार्यमितिवत् क्रतुव्यभिचारस्येहाभावेन तदयोगात् । तस्माद् अन्यशेष-त्वेन नेहाधिकारकल्पनं युक्तमिति निरस्तम् ।

त्वन्मतेऽप्युक्तरीत्या दर्शनस्यापि परब्रह्मरूपदेवतासंस्कारतया कर्मशेषत्वेन मोक्षसाधनत्वाभाव-प्रसङ्गस्योक्तत्वात् । सक्तूनामिव हिरण्यभरणादेरिव च वेदान्तप्रतिपाद्यविष्णुदर्शनादीनामुपयोगाभावस्य क्रतुव्यभिचारस्य च पूर्वमुक्तत्वाच्च ।

यत्तु किञ्चेहाधिकारिकल्पनेऽपि दर्शनादिषु सर्वेष्वपि तत्कल्पनमयुक्तम् । यत्र ह्यश्रूयमाणाधिकारिकेष्वनेकेषु विधिष्वेकत्राधिकारिकल्पने सर्वेषां निर्वाहः तत्राधिकारी कल्प्यते न सर्वत्र । अत एव गुरुमते अध्यापनविधावेवाधिकारिकल्पनं नाध्ययनविधावित्युक्तं कर्मजिज्ञासासूत्रे । एवञ्च त्वया श्रवणादीनां साक्षात्परंपरया वा दर्शनहेतुत्वाभ्युपगमात् । 'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः । आत्मा च सततं ध्येय एते दर्शनहेतव' इति तद्धेतुत्वश्रवणाच्च । दर्शनविधेः साधिकारित्वकल्पने तत एव तद्धेतूनां श्रवणादीनामनुष्ठानसिद्धेः तत्राप्यधिकारी न कल्प्यते गौरवादिति । तन्न । श्रवणादीनां दर्शनहेतुत्ववन्मोक्षसाधनत्वस्यापि श्रवणात् । 'वेदान्तविज्ञानसुनिश्चितार्थाः', 'मत्वा धीरो न शोचति', 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष' इत्यादि श्रुतीनां सत्त्वात् । 'एतावदरे खल्वमृतत्वमि'ति वाक्यशेषश्रवणाच्च ।

एतेन श्रवणादेः पूर्वपूर्वस्योत्तरोत्तरं प्रति जनकस्य साध्यरूपलिङ्गेन शेषत्वनिश्चये किमिति सर्वत्राधिकारी कल्प्यत इति निरस्तम् ।

श्रवणादीनां मोक्षफलकत्वस्य श्रुतिसिद्धत्वात् । पूर्वपूर्वस्य उत्तरोत्तरं प्रति लिङ्गसिद्धशेषत्वं प्रति 'एतावदरे खल्वमृतत्वमि'त्यादि श्रुतीनामबाधकत्वाच्च । न च विरुद्धत्रिकद्वयापत्तिः । प्रमाणसिद्धत्वे तस्य सह्यत्वात् । एकवाक्यगतत्वाभावात् । श्रवणादीनामुत्तरोत्तरोत्तरद्वारा मोक्षहेतुत्वाभ्युपगमाच्च । किञ्च 'एतावदरे खल्वमृतत्वमि'ति शब्दरूपया श्रुत्या लिङ्गाबाधान्न पूर्वपूर्वस्योत्तरोत्तरशेषत्वं युक्तम् । न च श्रुतेरर्थवादत्वेनान्यपरतया लिङ्गबाधकत्वं न युज्यते । अन्यथा 'यत्प्रयाजानूयाजा इज्यन्ते वर्मैव तद्यज्ञाय क्रियते वर्म यजमानाय भ्रातृव्याभिभूत्या' इति श्रुत्या प्रकरणबाधात् प्रयाजानुयाजानामपि प्रकरणात् दर्शपूर्णमासशेषत्वं न स्यादिति वाच्यम् । द्रष्टव्य इत्यादि वाक्योत्पन्नानां दर्शनादीनां विनियोगाकाङ्क्षाया झटिति प्रवृत्तश्रुत्या विशेषेणामृतत्वरूपफले विनियोगाबोधनेन तद्विरोधेन लिङ्गाच्छेषत्वावगतेरयोगेन वैषम्यात् । न चैवं प्रकरणाच्छेषत्वावगतेः प्रागेव प्रयाजादीनामपि फलसम्बन्धबोधाङ्गीकारेण दर्शपूर्णमासशेषत्वत्यागप्रसङ्गः । प्रयाजाद्युत्पत्तिदशायामेव फलब्रह्मकरणपरिगृहीतत्वेन फलाकाङ्क्षारहिततया प्रथमं फलसम्बन्धबोध इत्यस्य असम्भवात् । न चात्राप्युत्पन्नस्य दर्शनस्याङ्गाकाङ्क्षायां लिङ्गेन श्रवणादीनामङ्गत्वलाभ इति वाच्यम् । उत्पत्तिमात्रेण शेषित्वावगत्यभावेन शेषाकाङ्क्षानुदयात् ।

एतेनापि च न तावद्दर्शनादीनां समप्राधान्येनैकाधिकारिसम्बन्धकल्पना, द्रष्टव्य इत्यादि विधीनां प्रत्येकमधिकारमाकाङ्क्षमाणानां तथैव कल्पनस्य न्याय्यत्वात् । राजसूयादिवत् दर्शपूर्णमासनामवत् च प्रकृतानेकपरामर्शेनैकाधिकारिसम्बन्धबोधकस्य पदस्येहाभावाच्च । न चैतावदरे खल्वमृतत्वमित्येतावत्पदमेव सर्वपरामर्शकं तथेति वाच्यम् । विध्याकाङ्क्षानुसारेण पृथगधिकारिसम्बन्ध्यर्थवादगतैताव-

त्पदस्य तद्विरुद्धैकाधिकारसम्बन्धबोधकत्वायोगात् । 'मत्वा धीरो न शोचति', 'ध्यात्वा देवं सर्व-दुःखप्रहाणिः', 'तस्मिन्दृष्टे परावर' इति श्रुत्यन्तरगतार्थवादेषु मननादेः प्रत्येकममृतत्वसम्बन्धप्रतीति-विरोधाच्च । अन्यथा यथैतावान् वै काम इत्यत्रापि तथा बोधकत्वापत्त्या शब्दान्तराधिकरणं भज्येत । नापि प्रत्येकमधिकारिकल्पनम् । तथा सति निदिध्यासनादेः त्वदभ्युपगतस्य साक्षात्कारद्वारत्वस्य असिद्धिप्रसङ्गात् । न हि पृथगधिकारनिबद्धानामन्योन्यद्वारकत्वं युज्यत इति निरस्तम् ।

एतावच्छब्दपरामृष्टानां दर्शनादीनां समप्राधान्येनैकाधिकारिसम्बन्धस्यैव कल्पनात् । न चैता-वच्छब्दस्यार्थवादगतस्य विध्याकाङ्क्षानुसारेण पृथगधिकारिसम्बन्धिनस्तद्विरुद्धैकाधिकारिसम्बन्ध-बोधकत्वायोग इति वाच्यम् । आग्नेयादिषड्यागानामप्येकाधिकारिसम्बन्धाभावप्रसङ्गात् । तत्रापि य एवं विद्वान् पौर्णमासीं यजते य एवं विद्वान् अमावास्यां यजत इत्यस्याप्यर्थवादतया विध्याकाङ्क्षानुसारेण प्रत्येकविधिशेषभूतस्य तद्विरुद्धसमुदायीकरणपरत्वायोगेन दर्शपूर्णमासनामतोऽपि एकाधिकारसम्ब-न्धस्य अलाभात् । यदि च समुदायीकरणेनापि सर्वविध्याकाङ्क्षशान्तेः न विरोधः तदा एकाधिकार-सम्बन्धकल्पनेऽपि सर्वविधीनामधिकाराकाङ्क्षानिवृत्तेः न विरोध इति तुल्यम् । न च श्रुत्यन्तरगतार्थवादे प्रत्येकाधिकारसम्बन्धश्रवणसम्बन्धबोधकत्वस्यासिद्ध्या शब्दान्तराधिकरणभङ्गप्रसङ्गाच्च ।

यत्तु लोकान्तरस्थब्रह्मप्राप्तिरपि कथं अमृतत्वशब्दवाच्या । कृतकत्वेनानित्यत्वानुमानात् । न च 'न स पुनरावर्तत' इति श्रुतिविरोधाद् अनुमानम् अमानमिति वाच्यम् । ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तत इति ब्रह्मलोकसम्पत्तिकाले आवृत्तेः प्रसक्त्यभावेन श्रुतेः तन्निषेधे तात्पर्यायोगात् । आव-र्तिष्यत इति कल्पनं च अुमानविरोधान्नोपपद्यत इति श्रुतेरन्यपरत्वे बाधकत्वायोगादिति । तन्न । ब्रह्मप्राप्तेः कृतकत्वेऽपि स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते 'न च पुरावर्तत' इति श्रुतिबलेन अविनाशित्वस्य सिद्धेः । न च कृतकत्वेन अनित्यत्वानुमानम् । तस्य श्रुतिबाधितत्वात् । अन्यथा स्वर्गादिसुखं दुःखसम्भिन्नं सुखत्वात् वैषयिकसुखवत् इत्याद्यनुमानविरोधेन 'यन्न दुःखेन सम्भिन्नम्' इत्यादिश्रुत्या दुःखासम्भिन्नस्वर्गसुखाद्यसिद्धिप्रसङ्गात् । धर्मिग्राहकमानबाधस्य च प्रकृतेऽपि सत्त्वात् । न च ब्रह्मलोकाभिसम्पत्तिकाले आवृत्तेः प्रसक्त्यभाव इति श्रुतेरन्यपरत्वमिति युक्तम् । ब्रह्मलोकाभिसम्पत्तेरपि ब्रह्मलोकप्राप्तिरूपतया चन्द्रेन्द्रलोकादिप्राप्तेरावृत्तिदर्शनेन तद्वदत्राप्यावृत्तेः प्रसक्तौ तन्निषेधाय श्रुतेः प्रवृत्ततया अनन्यपरत्वात् तत्काले प्रसक्त्यभावेऽपि कालान्तरे तत्प्रसक्तौ तन्निषे-धोपपत्तेश्च । त्वयापि 'अनावृत्तिः शब्दादि'ति चरमाधिकरणे सगुणब्रह्मप्राप्तेरनावृत्तेः प्रतिपादनेन तद्विरोधाच्च । न च कार्यब्रह्मलोकप्राप्तिरेवात्र प्रतिपाद्यत इति युक्तम् । अकृतं कृतात्मा ब्रह्मलोक-मभिसम्भवामीति तत्रैव पूर्ववाक्ये ब्रह्मलोकस्याकार्यत्वावेदनात् । नास्त्यकृतः कृतेनेति श्रुत्यन्तरे

ज्ञानप्राप्याकृतलोकस्य प्रतिपादनाच्च । न च तत्र ब्रह्मैव लोको ब्रह्मलोक इति समानाधिकरण-समासः । न तु ब्रह्मणो लोक इति षष्ठीतत्पुरुषः । अन्यथा निषादस्थपत्यधिकरणविरोधादिति वाच्यम् । तत्रैव प्रजापतेः सत्तां वेश्म प्रपद्य इति व्यतिरेकनिर्देशदर्शनेनात्रापि षष्ठीतत्पुरुषस्यैवा-श्रयणीयत्वात् । न चैवं तत्र प्रजापतिशब्दस्य चतुर्मुखवाचित्वेन ब्रह्मलोकमित्यत्रापि ब्रह्मशब्देन स एव ग्राह्य इति न त्वदभिमतार्थसिद्धिरिति वाच्यम् । 'प्रजापतिर्वा एकोऽग्रे तिष्ठन्', 'प्रजापतिश्चरति गर्भे अन्तरी'त्यादौ परब्रह्मण्यपि प्रजापतिशब्दप्रयोगदर्शनेन अत्र प्रजापतिशब्देन परब्रह्मण एव ग्राह्यत्वात् । ब्रह्मशब्दस्य तत्रैव मुख्यत्वाच्च । न च ब्रह्मलोकमित्यत्र ब्रह्मशब्दः पुल्लिङ्गः इति युक्तम् । त्वयोर्ध्वमायत्त-मृतत्वमेतीत्यर्चिरादिगतिप्राप्ये श्रुतस्य ब्रह्मशब्दस्य नपुंसकलिङ्गत्वावश्यंभावात् । 'स एनान् ब्रह्म गमयती'ति वाक्यान्तरे तथैव श्रवणात् । न च 'स एनान् ब्रह्मलोकान् गमयती'ति श्रुत्यन्तरे बहुवचन-निर्देशदर्शनात् तस्मिन् वसति शाश्वतीः समा इति कालपरिच्छेदश्रवणात् परोऽश्वत्थपुरवेश्मार्णवादि भोग्यवस्तुभेदस्य प्रतिपादनाच्च अर्चिरादिगतिप्राप्यं ब्रह्म कार्यरूपमिति वाच्यम् । 'अदितिः पाशानि'-त्यादाविव बहुवचनस्याविवक्षितार्थतया अविरोधित्वात् । कार्यब्रह्मपरत्वेऽपि बहुवचनास्वारस्यतादव-स्थ्याच्च । 'तस्मिन् वसति शाश्वतीः समा' इति उत्तरकालापरिच्छेदस्यैव प्रतीतेः । भोगवस्तुप्रति-पादनस्य च अविरुद्धत्वाच्चेति परब्रह्मप्राप्तेः अमृतत्वशब्दार्थत्वे न किञ्चिदपि बाधकम् । तथाच उक्त-रीत्या श्रवणादिचतुष्टयमपि मोक्षकामाधिकारिकमिति सिद्धम् ।

*॥ इति स्वमते श्रवणादिविध्यधिकारनिरूपणम् ॥ १२ ॥*



## १३. परमते साधनचतुष्टयस्य श्रवणाङ्गत्वभङ्गः

यत्तु साधनचतुष्टयसम्पन्नो मोक्षसाधनब्रह्मज्ञानकामः श्रवणविध्यधिकारीति । तन्न, त्वन्मते साधनचतुष्टयस्याधिकारिविशेषणत्वायोगात् । तथाहि । नित्यानित्यवस्तुविवेकस्तावदधिकारो न सम्भवति । स चात्मा नित्यः अन्यदनित्य इत्येवंरूपश्चेद् ज्ञातव्यस्यात्मनः प्रागेव ज्ञातत्वेन विचार-वैयर्थ्यम् । नित्यानित्यशब्दौ ध्वंसाप्रतियोगितत्प्रतियोगिपरौ । ततश्च ज्ञानफलं नित्यं कर्मफलं त्वनित्य-मित्येवंरूपश्चेत् सोऽपि न सम्भवति । प्रतिपन्नोपाधावत्यन्ताभावप्रतियोगिनो ध्वंसप्रतियोगित्वायोगात् ।

ननु विचारात्प्राग् आत्मा नित्य इत्येवंरूपविवेकेऽपि प्रत्यगभिन्नाखण्डब्रह्मज्ञानाभावेन विचारा-वैयर्थ्यम् । पारमार्थिकत्वाकारेणात्यन्ताभावप्रतियोगिनोऽपि स्वरूपेण ध्वंसप्रतियोगित्वं युज्यत इति

चेन्न । प्रत्यगभिन्नत्वादीनामपि स्वरूपरूपत्वेन विचारवैयर्थ्यतादवस्थ्यात् । अतिरिक्तत्वे चाखण्डार्थत्वहानेः । स्वरूपेण ध्वंसप्रतियोगिनः पारमार्थिकतया तेनाकारेणात्यन्ताभावप्रतियोगित्वस्यैवायोगात् । निर्धर्मके ब्रह्मण्यपि पारमार्थिकत्वाकारेणात्यन्ताभावप्रतियोगित्वस्य सत्त्वेन प्रपञ्चस्य ब्रह्म व्यावृत्तं मिथ्यात्वमभिलषता स्वरूपेणैव अत्यन्ताभावप्रतियोगित्वस्य वक्तव्यतया नृशृङ्गादिवद् ध्वंसप्रतियोगित्वायोगाच्च ।

किञ्च विवेको नाम भेदस्य तद्व्याप्यस्य वा ज्ञानं वाच्यम् । तस्य भ्रमत्वे ब्रह्मविचारो न नित्यफलः स्यात् । प्रमात्वे भेदः सत्यः स्यात् । यत्त्वात्मानात्मभेदतद्व्याप्यं वा गोचरयतो ज्ञानस्य व्यावहारिकप्रामाण्यान्नोक्तदोष इति । तन्न । त्वन्मते व्यावहारिकशब्दस्य बाध्यविशेषार्थतयोक्तदोषानिस्तारात् । आत्मनीवानात्मांशेऽपि तत्त्वावेदकप्रमात्वावश्यम्भावाच्च । अन्यथा वैरूप्यापातात् । प्रमात्वातत्त्वावेदकत्वयोर्व्याहतत्वाच्च । किञ्चेहामुत्रार्थफलभोगविरागोऽपि न सम्भवति । नित्यसुखस्य विषयैरभिव्यक्तस्य वैषयिकसुखत्वेन तत्र विरागायोगात् । मोक्षे याऽवगतिस्ततस्तत्त्वतो भेदहीने भोगे विरागायोगात् । तात्त्विकाभेदहीनत्वमात्रेण विरागे च तात्त्विकभेदापत्तिः । परस्परस्य परस्य वा भावव्याप्यत्वात् ।

यत्तु विषयाभिव्यक्तसुखस्वरूपतो भेदाभावेऽप्यन्तःकरणवृत्तिविशेषविशिष्टस्य तत्कृताभिव्यक्तिविशिष्टस्य वाऽनित्यत्वेन तत्र विरागसम्भवात् । विषयभेदभिन्ने तद्भोगे मोक्षप्रतीतितस्तात्त्विकभेदाभावेऽपि शुक्तिरजतवद्व्यावहारिकभेदेन भिन्नविरागसम्भवाच्चेति । तन्न । विवक्षितविवेकेनान्तःकरणवृत्तिविशेषस्य तत्कृताभिव्यक्तेर्वा अनित्यत्वेन स्वरूपसुखस्यानित्यत्वासिद्धौ तत्र विरागायोगात् । अन्तःकरणवृत्तेरनित्यत्वेन तद्विशिष्टस्याप्यनित्यत्वेऽन्तःकरणविशिष्टस्य जीवत्वेनानित्यत्वापत्त्या कृतहानादिकं स्यात् । अन्तःकरणोपहितस्य जीवत्वे च तद्वृत्त्युपहितं चैतन्यमेव विषयाभिव्यक्तं सुखमस्तु । जीववत् तस्यापि नित्यत्वात् । अन्तःकरणोपहितस्य जीवत्वं तद्वृत्तिविशिष्टचैतन्यस्य वैषयिकसुखत्वमित्यत्र विशेषनियामकाभावात् । वैषयिकसुखस्य वृत्तिरूपतया अनित्यत्वेन वैराग्यसम्भवाच्च । न चैवमेवास्त्विति युक्तम् । अपसिद्धान्तात् । इति ।

किञ्च शमदमादिसम्पत्तिरित्यत्र आदिपदेन तितिक्षादेरेव ग्रहणं न विवेकादेरित्यत्र विशेषनियामकं न पश्यामः । विवेकादिव्यावृत्तस्य शमाद्युपसङ्ग्राहकस्य तस्य अभावात् । यत्तु वैराग्यप्रयोज्यत्वसमानाधिकरणमुमुक्षाप्रयोजकत्वस्य शान्त इत्यादि श्रुत्युपस्थाप्यत्वस्य वा सङ्ग्राहकस्य सत्त्वादिति । तन्न । विवेकादिकं हेतुतया न मुमुक्षापेक्ष्यते । तेन विनापि निरतिशयं सुखं मे स्याद्दुःखं मे मा भूदिति

सर्वेषां सम्भवादित्यादिना त्वयैव विवेकादेर्मुमुक्षां प्रति हेतुत्वस्य खण्डिततया तथा सङ्ग्राहकस्य वक्तुमनुचितत्वात् । शान्त इत्यादि श्रुत्युपस्थाप्यत्वस्य दर्शनेऽपि सत्त्वात् । न च दर्शनपूर्वकालीन-तयैतच्छ्रुत्युपस्थाप्यत्वस्य विवक्षितत्वान्नोक्तातिप्रसङ्ग इति वाच्यम् । उपरतिशब्दवाच्यवैराग्यस्यापि सङ्ग्रहापत्त्या साधनचतुष्ट्वानुपपत्तेः । यथा चोपरतिशब्दस्य न संन्यासार्थकत्वं तथाऽग्रे वक्ष्यामः । न च तवाप्ययं दोषः समान इति वाच्यम् । मया चतुष्ट्वनियमानङ्गीकारात् ।

एतेन मुमुक्षैवात्राधिकारिविशेषणम् । कामाधिकारे कामनाया एव पुष्कलाधिकारनिमित्तत्वात् । विवेकवैराग्यादिकं तु तद्धेतुतया अपेक्ष्यमाणं नाधिकारिविशेषणम् । न च सर्वेषां श्रुतत्वादधि-कारिविशेषणत्वम् । मुमुक्षानुमानेन सङ्कीर्तनस्यार्थवत्त्वात् । दृष्टद्वारा हेतुत्वसम्भवे अदृष्टकल्पनस्य अन्याय्यत्वात् । अन्यथा सर्वेषां विशेषणानां एकवाक्यस्थत्वासम्भवेन प्रसज्यप्रतिषेधप्रसङ्ग इति निरस्तम् ।

एवं सति मुमुक्षाप्यधिकारिविशेषणं न स्यात् । किन्तु ज्ञानकामनैव तत्स्यात् । ज्ञानकामनाहेतु-तया तस्यान्यथासिद्धेः । मोक्षसङ्कीर्तनेन ज्ञानकामनानुमानस्य प्रसज्यप्रतिषेधप्रसङ्गस्य च तुल्यत्वात् । वस्तुतस्तु विवेकादिकं हेतुत्वेन न मुमुक्षापेक्ष्यते । तेन विनापि सुखं मम स्याद्दुःखं मे मा भूदिति तत्सम्भवात् । श्रुतिमूलत्वेन निषादस्थपतेरपि विद्याकल्पनवदिहाप्यदृष्टकल्पनागौरवस्यादोषत्वात् । किञ्च विवेकादिसङ्कीर्तनस्य श्रुतविवेकाद्यधिकारिविशेषणत्वेन अर्थवत्त्वसम्भवेन अश्रुतकामनानुमानेन अर्थवत्ता युक्ता । अन्यथा यस्मिन् जात एतामिष्टिं निर्वपति पूत इत्याद्यर्थवादगतपुत्रपूतत्वकामनैव पुष्कलाधिकारनिमित्तम् । जन्मकीर्तनं तु तत्कालानुमापकमिति किं न स्यात् । तथा सति जातेष्टि नयो विरुध्येत । तत्र श्रुतहान्यश्रुतकल्पनाप्रसङ्गात्संवलिताधिकारश्चेदिहापि तथास्तु । न चैवं प्रसज्यप्रतिषेध-प्रसङ्गः । अङ्गभूतानामधिकारिविशेषणानां स्वतन्त्राधिकारिविशेषणान्तरसापेक्षतया तदयोगात् । अन्यथा दीक्षितो यजेतेत्यादावपि तत्प्रसङ्गः स्यात् । किञ्चैवं गुणोपसंहारन्यायो दत्तजलाञ्जलिः स्यात् । तत्रापि प्रसज्यप्रतिषेधप्रसङ्गस्य तुल्यत्वात् । किञ्च मुमुक्षापि नाधिकारिविशेषणम् । त्वन्मतेऽविद्यानिवृत्ते-र्ब्रह्मभावस्य च आत्मस्वरूपमात्रत्वेन नित्यसिद्धतया तत्रेच्छायोगात् । पराभिमतमोक्षखण्डनावसरे विस्तरेणैतदुपपादयिष्यामः । किञ्च शान्त्यादिकं श्रवणाङ्गतया कथमधिकारिविशेषणम् । तत्र प्रमाणा-भावात् । न च शान्तोदान्त इत्यादिकमेव तत्र प्रमाणम् । तत्र तस्मादेवंविच्छान्त इति शमादीना-मनन्तरभावित्वस्य पश्यतिधात्वर्थाङ्गत्वस्य च आवेदनात् । न च पश्येदिति विचार एवोच्यते इति युक्तम् । एवंविदिति पूर्वमेवात्मज्ञानस्योक्तत्वात् ।

एतेनेदं वाक्यमुपरतिशब्दवाच्यसंन्यासस्य शान्त्यादिपदोपलक्षितशमादिमत्कर्तृविचारस्य ज्ञाने समुच्चयपरमिति निरस्तम् ।

उक्तरीत्या विचारस्य शमादिमत्कर्तृकस्यैवायोगात् । पश्येदिति दर्शनमुद्दिश्यैव शमादिविधान-सम्भवे शान्त्यादिपदेन शमादिमत्कर्तृकविचारस्यालक्षणीयत्वाच्च । संन्यासस्य श्रवणाङ्गत्वसमुच्चय-पक्षयोरुत्तरत्र निरसिष्यमाणत्वाच्च ।

एतेन भूयस्त्वन्यायेन शान्त्याद्यनेकगुणविशिष्टविचारोऽत्र विधीयत इति निरस्तम् ।

श्रोतव्य इत्यादेरनुवादत्वापत्तेश्च । श्रोतव्य इति विधिप्राप्तविचारानुवादेन शान्त्याद्यनेकगुण-विधाने वाक्यभेदप्रसङ्गाच्च ।

एतेन 'प्रशान्तचित्ता शमान्विताय येनाक्षरं पुरुषं वेद सत्यम् । प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इति वाक्यं शमादीनां विचाराङ्गत्वप्रमाणमिति निरस्तम् । तस्मादेवंविदिति श्रुत्यन्तरानुसारेणात्र शम-शब्दार्थस्य चित्तैकाग्र्यरूपत्वावसायात् । उपदेशे तावन्मात्रस्यैवापेक्षितत्वादिति दिक् ।

वस्तुतस्तु शान्त्यादिकं श्रवणाङ्गमेव । प्रशान्तचित्तायेत्यादि श्रुतेः । शान्तो दान्त इत्यादि श्रुतेश्च । शमानेकत्वकल्पने प्रमाणाभावात् । शमान्वितायेति चित्तैकाग्र्यव्यतिरेकेण शमान्तरस्योक्त-त्वाच्च । तत्र शमशब्दस्येतरोपलक्षणार्थत्वाच्च । न च शमादीनां श्रवणाङ्गत्वे तस्मादेवंविदिति पूर्वं ब्रह्मवेदनोक्तिः विरुद्ध्येतेति वाच्यम् । अग्निहोत्रं जुहोति यवागूं पचतीत्यादाविव शाब्दक्रमस्य अविव-क्षितत्वात् । तत्रेवार्थक्रमस्य विवक्षितत्वाच्च ।

यद्वा शान्त्यादिकविचाराङ्गमेव अस्तु । न चात्र पक्षे विरोधोऽस्ति । एवंविदिति पूर्ववृत्तस्य श्रवणस्याङ्गीकारात् । पश्यतिधातोर्विचारापरनामकालोचनार्थत्वेन शान्त्यादेर्विचाराङ्गत्वसिद्धेः । न च पश्यतेरालोचनार्थत्वे प्रमाणाभावः । पश्यार्थैश्च अनालोचन इति पाणिनिस्मरणात् । न चात्मन्येवेति व्यर्थम् । अन्तःप्रकाशमध्यमाधिकारिसद्भावज्ञापनार्थत्वेन अर्थवत्त्वात् । एतच्छ्रुतिविचारश्च तत्त्व-माणिक्यपेटिकायां विस्तरेण कृतोऽनुसन्धेयः । न चैवमेव अस्मन्मतेऽपि शान्त्यादीनां विचाराङ्गत्व-सिद्धिरिति वाच्यम् । तथापि पूर्वोक्तानेकदूषणानुद्धारादिति ।

*॥ इति परमते साधनचतुष्टयस्य श्रवणाङ्गत्वभङ्गः ॥ १३ ॥*

★ ★ ★

# १४. संन्यासस्य श्रवणाङ्गत्वसमुच्चयपक्षयोर्बाधकम्

यत्तु 'शान्तोदान्त उपरतस्तितिक्षुरि'ति श्रुतावुपरतिशब्देन संन्यासस्य प्रतिपादनात् तस्य शान्त्यादिवच्छ्रवणं प्रत्यङ्गत्वम् । श्रवणेन समुच्चित्य ब्रह्मज्ञानहेतुत्वं वेति । तन्न । उपरतिशब्दस्य संन्यासार्थकत्वे संन्यासस्य श्रवणाङ्गत्वे श्रवणेन समुच्चये च प्रमाणाभावात् । अत्र कश्चिदाह— संन्यासः श्रवणाङ्गमेव, न प्रधानम् । उपरतिशब्दवाच्यस्य तस्य शान्त्यादिवदङ्गत्वेन विधानात् । वाजपेयेन इष्ट्वा बृहस्पतिसवेन यजेतेत्यत्र बृहस्पतिसवस्य वाजपेयाङ्गत्ववत् वेदानिमं लोकममुं च परित्यज्य आत्मानमन्विच्छेत् । संन्यस्य श्रवणं कुर्यादित्यादि स्मृतावपि क्त्वाप्रत्ययेन संन्यासस्य श्रवणाङ्गत्वबोधनाच्च ।

न चेदं वाक्यं दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेत्यादिवत् संन्यासस्य क्रमपरं नाङ्गत्वपरमिति वाच्यम् । ज्ञानप्रतिबन्धकदुरितनिवर्तकस्य साक्षाज्ज्ञानसाधनश्रवणपूर्वभावितया अर्थसिद्धत्वेन तत्परत्वायोगात् । दर्शपूर्णमासाभ्यामिष्ट्वेतिवत् अस्य अनारभ्याधीतत्वाभावाच्च । क्रमपरत्वे लक्षणापाताच्च । तत्र द्रव्यदेवतासम्भवबाधवत् संन्यासस्याङ्गत्वे बाधकाभावाच्च । किञ्च यदि संन्यासो नाङ्गं तर्हि संन्यासिनां श्रवणमनावश्यकमिति नेष्टम् । तदकरणे अनान् मुख्यान्यतीन् सालावृकेभ्यः प्रायच्छत् 'नित्यं कर्म परित्यज्य वेदान्तश्रवणं विना । वर्तमानस्तु संन्यासी यतत्येव न संशय' इति प्रत्यवायश्रवणं विरुध्येत । न च संन्यासस्य प्रधानत्वेऽप्यारम्भादूर्ध्वं संन्यासिनामिदमकरणे प्रत्यवायश्रवणं युक्तम् । संन्यासदिवस एव गुरुमुखात् श्रवणस्य प्रारब्धत्वादिति वाच्यम् । अनङ्गत्वे संन्यासदिवस एव तदारम्भनियमाभावप्रसङ्गात् । न चैवमेव प्रव्राजिनो लोकमिच्छन्त प्रव्रजन्तीति पृथगधिकारश्रवणं विरुध्येतेति वाच्यम् । गुरुमते 'अष्टवर्षं ब्राह्मणमुपनयीते'त्युपनयने श्रूयमाणस्याचार्यकस्य तदङ्गिन्यध्यापने सम्बन्धकल्पनवत् संन्यासस्य श्रवणाङ्गत्वबोधकप्रमाणानुसारेण संन्यासे श्रूयमाणस्याधिकारस्य तदङ्गिविश्रवणे सम्बन्धकल्पनात् । लोकशब्दवाच्यस्य मोक्षस्य संन्याससाध्यत्वे स्वर्गादिवदनित्यत्वापाताच्च । अङ्गत्वेऽप्यर्थसिद्धस्य प्रधानाधिकारमुमुक्षासम्बन्धस्य वर्तमानापदेशिना अनेन अनुवादौचित्याच्च । अत एव लोकशब्दात् तत्प्राप्तिसाधनं साक्षात्कारो लक्ष्यत इत्ययुक्तम् । यथाश्रुते अनुपपत्त्यभावात् । अन्यथा सिद्धप्रमाणावगताङ्गत्वानुपपत्तेश्च ।

न च संन्यासस्य श्रवणाङ्गत्वे यद्यातुरः स्यान्मनसा वा वाचा वा संन्यसेदित्यनुसंन्यासविधिविरोधः स्यादिति वाच्यम् । अभ्यासनयेन यद्यातुरः स्यादित्यधिकारान्तरश्रवणेन च तस्य संन्यासान्तरत्वात् । 'संन्यासाद्ब्रह्मणः स्थानमि'ति स्मृत्यनुसारेण तस्यान्यत्वौचित्यात् । ब्रह्मलोकादपि

विरक्ताधिकारिकस्य परमहंसस्य तत्फलत्वायोगात्। अत एव 'एष पन्था ब्रह्मणानुवित्तस्तेनैति संन्यासी ब्रह्मविदि'त्युत्तरवाक्यं तस्य संन्यासान्तरत्वेऽप्युपपन्नम् । ब्रह्मलोकं गतस्य चतुर्मुखब्रह्मणा सह कैवल्यप्राप्तिसम्भवेन परम्परया तस्य तदुपायत्वसम्भवात्। एष इति सर्वनाम्ना तद्वदितिवत् व्यवहितस्य परमहंसन्यासस्य योग्यतया परामर्शसम्भवाच्च । किञ्च पुनर्विधानवैयर्थ्यप्रसङ्गादपि संन्यासान्तरम् ।

ननु गृहमेधीये विकृतेष्टावाज्यभागौ यजति यज्ञताया इत्याज्यभागाभ्यामुपकारान्तरावच्छेदार्थ-पुनर्विधानवदिहापि वाङ्मनसाभ्यामुपकारावच्छेदार्थं तयोः पुनर्विधानम् । तथाच इतराङ्गव्यावृत्तिः फलमिति चेन्न तावदातुरानातुरसाधारणे प्रकृतसंन्यासस्वरूपमात्र उपकारावच्छेदः सम्भवति। तथा सति उपदिष्टानामङ्गानां सर्वथा वैयर्थ्यप्रसङ्गात् । उपदेशस्योपदेशान्तरबाधकत्वं चानुपपन्नम् । नित्यकर्मणि प्रधानस्यावश्यकर्तव्यतानुसारेण शक्यैरङ्गैरुपकारग्रहे नेतरेषां सर्वदा वैयर्थ्यम् । तेषामपि कस्यचिच्छक्यत्वात्। काम्यकर्मोपकारत्वाच्च। नाप्यातुरकर्तृकप्रयोगविशेषिते प्रकृतसंन्यासे उपकारावच्छेदः। येन सारूप्येण विषयत्वं करणत्वं च तेन रूपेणोपकाराकाङ्क्षा तदन्वयश्चेति अविशेषितसंन्यासस्यैव तथात्वेन विशेषिते तदयोगात्। उपकारान्वयोत्तरकालं प्रयोगक्षेपेण तदन्वयवेलायां तस्य विशेषणत्वायोगाच्च । किञ्चान्यत्रोपकारकत्वेन क्लृप्तस्य पुनर्विधानमुपकारावच्छेदार्थं भवेत् । अन्यथा आमनहोमानामप्युपकारावच्छेदार्थत्वं स्यात् । किञ्च आतुरकर्तृकत्वविशेषितप्रकृतसंन्यासमुद्दिश्य वाङ्मनसयोर्विधानात् तत्रैवोपकारावच्छेद इत्ययुक्तम् । हविरुभयत्ववदातुरकर्तृकत्वस्योद्देश्यविशेषणस्य अविवक्षितत्वात् । प्रकृतसंन्यासमात्रमुद्दिश्यविधाने तु तत्रैवोपकारावच्छेद इत्यन्याङ्गवैयर्थ्यं दुर्वारमित्युक्तम् । ततश्च संन्यासान्तरविधिरेवायमिति युक्तमुत्पश्यामः ।

एतेन ज्ञानार्थं संन्यासस्यातुरवाक्यविधानादेव जन्मान्तरीयोऽप्ययं ज्ञानप्रतिबन्धककल्मषनिवृत्तिद्वारोपकरोतीति प्रत्युक्तम् । संन्यासान्तरस्यैव तत्र विधानात् । इह जन्मन्यपि ज्ञानप्रतिबन्धकदुरितसम्भवेन तन्निवृत्तये तस्यावश्यकत्वाच्च जन्मान्तरविधेयसंन्याससम्भावनया विरक्तानां संन्यासप्रवृत्त्यभावप्रसङ्गात्। त्यजतैव हि तज्ज्ञेयमिति वर्तमानसंन्यासस्यैव ज्ञानहेतुत्वश्रवणविरोधाच्च। तस्मात् संन्यासः श्रवणाङ्गं न तु प्रधानमिति । अत्रोच्यते— संन्यासस्य श्रवणाङ्गत्वं न सम्भवति । ब्राह्मणानामेव संन्यास इति पक्षे तस्यासार्वत्रिकत्वात् । श्रवणस्य च त्रैवर्णिकाधिकारिकत्वात् । न च ब्राह्मणानामेव संन्यास इत्यत्र प्रमाणाभाव इति वाच्यम्। 'एतमेवात्मानं विदित्वा ब्राह्मणाः पुत्रेषणायाश्च वित्तेषणायाश्च लोकेषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ती'ति बृहदारण्यके 'अयज्ञोपवीती कथं ब्राह्मण' इति जाबालोपनिषदि 'आत्मन्यग्निं समारोप्य ब्राह्मणः प्रव्रजेद्गृहादि'ति 'एष वो भिक्षतो धर्मो ब्राह्मणस्य चतुर्विध' इति च मनुस्मृतौ 'प्रथमादाश्रमाच्चापि विरक्तो भवसागरात् । ब्राह्मणो मोक्ष-

मन्विच्छस्त्यक्त्वा सङ्गान् परिव्रजेदि'ति नारदस्मृतौ च ब्राह्मणग्रहणात् । 'चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुतिचोदिताः । क्षत्रियस्य त्रयः प्रोक्ता द्वावेतौ वैश्यशूद्रयोरि'ति योगयाज्ञवल्क्ये, 'चत्वार आश्रमाश्चैते ब्राह्मणस्य प्रकीर्तिताः । गार्हस्थ्यं ब्रह्मचर्यं च वानप्रस्थस्त्रयः श्रमाः । क्षत्रियस्यापि कथिता यथाचारा द्विजस्य हि । ब्रह्मचर्यं च गार्हस्थ्यमाश्रमे द्वितयं विशः । गार्हस्थ्यमुचितं चैकं शूद्रस्य परिकीर्तितमि'ति वामनपुराणे चतुर्णां वर्णानामाश्रमव्यवस्थोक्तेश्च । 'मुखजानामयं धर्मो यद्विष्णोर्लिङ्ग-धारणम् । बाहुजातोरुजातानामयं धर्मो न विद्यत' इति ब्राह्मणादन्यत्र संन्यासस्य निषेधाच्च । 'ब्रह्मचर्यं समाप्य गृही भवेत् गृहात् वनीभूत्वा प्रव्रजेदि'ति जाबालश्रुतिरस्तीति चेत् सत्यम् । तस्या ब्राह्मणाः पुत्रेषणायाश्चेति बृहदारण्यकवाक्यानुसारेण अयज्ञोपवीती ब्राह्मण इत्युत्तरवाक्यानुसारेणोदाहृतस्मृति-पुराणादिवचनानुसारेण च ब्राह्मणरूपविशेषविषयत्वकल्पनात् । 'ऋणत्रयमपाकृत्य निर्ममो निरहङ्कृतिः । ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेत् गृहादि'ति स्मृत्यन्तरमस्तीति चेत् । किं ततः । तस्यो-दाहृतानेकश्रुतिस्मृतिपुराणवचनविरुद्धतया स्वार्थपरत्वाभावात् । निर्ममत्वनिरहङ्कृतित्वप्रशंसापरत्व-सम्भवाच्च ।

एतेन 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती'त्यादाविव 'ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेत् गृहादि'ति स्मृत्यनुगृहीतया जाबालश्रुत्या त्रयाणां वर्णानां संन्यासविधानात् श्रुतिस्मृतिपुराणेषु ब्राह्मणग्रहणं त्रैवर्णिकोपलक्षणार्थम् । उक्तं च सुरेश्वराचार्यैः— 'त्रयाणामेव वर्णानां संन्यासः श्रूयते श्रुतौ । यदोपलक्षणार्थः स्याद्ब्राह्मणग्रहणं तदे'ति निरस्तम् ।

अध्ययनवत् श्रवणादेरपि त्रैवर्णिकाधिकारिकत्वावेदकानेकश्रुतिस्मृत्यनुसारेण 'ब्राह्मणा विवि-दिषन्ती'त्यादौ ब्राह्मणग्रहणस्योपलक्षणार्थत्वौचित्यात् । प्रकृते च विशिष्य त्रैवर्णिकेषु संन्यासा-वेदकश्रुत्यदर्शनात् । 'ब्राह्मणः क्षत्रियो वे'त्यादि स्मृतेः चतुर्णां वर्णानामाश्रमव्यवस्थोपपादकयोग-याज्ञवल्क्यवामनपुराणादिवचनानुगृहीतया बाहुजातोरुजातानाम् अयं धर्मो न विद्यत इति ब्राह्मणा-दन्यत्र तन्निषेधकस्मृत्यनुगृहीतया च जाबालबृहदारण्यकादिश्रुत्या बाधितत्वेन ब्राह्मणग्रहणस्योप-लक्षणार्थत्वस्यानुचितत्वात् । किञ्च संन्यासस्य श्रवणाङ्गत्वे देवानां श्रवणं न स्यात् । अङ्गनिवृत्या-ङ्गिनः श्रवणस्यापि निवृत्तेः । न चेष्टापत्तिः । 'तदुपर्यपि बादरायणः सम्भवादि'त्यादि सूत्रेषु देवादीना-मपि श्रवणाद्यधिकारसमर्थनेन तद्विरोधात् । न च तेषामपि संन्यासोऽस्तीति युक्तम् । तेषां देवतोद्देशेन द्रव्यत्यागरूपयागादिकर्मानधिकारेण तत्परित्यागरूपसंन्यासस्यायोगात् ।

ननु तपश्चरणध्यानमन्त्रजपाद्यधिकारसम्भवेन स्वशरीरव्यतिरिक्तस्वयंप्रभात वेददारादिपरिग्रहस्य त्याज्यस्य च सम्भवेन च तेषामपि संन्यासो न विरुध्यते । 'कुटुम्बपुत्रदारांश्च वेदाङ्गानि च सर्वशः ।

यज्ञं यज्ञोपवीतं च त्यक्त्वाऽसङ्गश्चरेन्मुनिः । वेदानिमं अमुं च लोकं परित्यज्येति श्रतिस्मृतिभ्यां यज्ञादिवद्वेदादेरपि त्याज्यत्वावगमात् ।

उक्तं च विवरणे— किं यदत्र परित्यज्यते स्वशरीरव्यतिरिक्तं सर्वमितीति चेदुच्यते । तथापि तेषां तथाविधत्याज्यकर्मसत्त्वेऽपि तत्त्यागरूपसंन्यासोऽस्तीत्यत्र श्रुत्यादिप्रमाणादर्शनात् । सम्भवमात्रेण कल्पनायां चातिप्रसङ्गात् । न च 'संन्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति' इति श्रुत्या ब्रह्मलोकं गतानां देवभावभाजां संन्यासिनां श्रवणं प्रतिपाद्यत इति वाच्यम् । 'ये निर्जितेन्द्रियग्रामा यतयो यतिनश्च त' इति प्रकाशानुसारेण तत्र यतिशब्दस्य जितेन्द्रिय-परत्वावसायात् । 'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः । स संन्यासी च योगी च न निरग्निर्न चाक्रिय' इत्यादिभगवद्वचनानुसारेण संन्यासशब्दस्यापि कर्मफलत्यागपरत्वावसायाच्च । संन्यास-परत्वेऽपि 'संन्यासाद्ब्रह्मणः स्थानमि'ति स्मृत्यनुसारेण संन्यासयोगाच्छुद्धसत्त्वास्ते यतयो ब्रह्मलोकं सत्यलोकं गत्वा तत्र बहुकालं स्थित्वा द्विपरार्धावसाने परामृतं प्राप्य परिमुच्यन्तीति श्रवणानन्तर-भावितया ब्रह्मलोकप्राप्तिसाधनतया च श्रुतस्य संन्यासस्य देवत्वावस्थातःपूर्वभावितया देवत्वा-वस्थायां संन्यासोऽस्तीत्यत्र तच्छ्रुतेरप्रमाणत्वात् ।

किञ्चैवं संन्यासस्य श्रवणाङ्गत्वे जनकादीनां ज्ञानार्थं श्रवणाभावप्रसङ्गः । न च तेषां जन्मान्तरीय-संन्याससत्त्वेन श्रवणं न विरुध्यत इति वाच्यम् । जन्मान्तरीयसंन्यासस्य त्वयैव दूषितत्वात् । अन्यथा पुत्रवतां सर्वेषामपि जन्मान्तरीयपुत्रकाम्येष्ट्यादिकल्पनाप्रसङ्गात् । न च जनकादीनां श्रवणज्ञापकस्य लिङ्गदर्शनस्य अन्यपरस्य संन्यासे श्रवणाङ्गत्वावेदकविधिविरोधे स्वार्थे प्रामाण्याभावान्नोक्तदोष इति वाच्यम् । आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावर्त्य कुटुम्बी शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्येत्यादि श्रुत्या ब्रह्मचर्यगार्हस्थ्या-देरपि ज्ञानाङ्गत्वविधानेन श्रुतिमूलस्य लिङ्गस्य केवलश्रुत्या स्मृत्या वा बाध्यत्वानुपपत्तेः । अन्यथो-दाहृतश्रुत्यैव परित्यज्येत्यादि श्रुत्यादिकमेव बाधितं स्यात् । किञ्चैवमर्वाचीनानां श्रवणादौ प्रवृत्त्य-भावप्रसङ्गः ।

ननु 'दिने दिने तु वेदान्तश्रवणाद्भक्तिसंयुतात् । गुरुशुश्रूषया लब्धात्कृच्छ्राशीतिफलं लभेदि'ति स्मृतौ वेदान्तश्रवणस्य पापनिवृत्तिफलकत्वेन पापनिवृत्तिकामो वेदान्तश्रवणं कुर्यादिति विधिपरिणा-मात् । स्मार्तविधिविहितश्रवणे पापनिवृत्तिकामस्य गृहस्थादेरधिकाराश्रवणान्न विरोधः । इदं च श्रवणं ज्ञानकामाधिकारश्रवणात् श्रौतादन्यत् । नित्याग्निहोत्रात् काम्याग्निहोत्रवदधिकारिभेदात् । अत एव

स्मार्तविचाराज्ज्ञातमपि ज्ञानं पुराणादिजनितज्ञानवन्मोक्षं न जनयति । श्रौतविरोधादिति । मैवम् । 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तत' इति श्रुतौ त्रयो धर्मस्कन्धा इति उपक्रम्य प्रवृत्तायां 'सर्व एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेती'ति श्रुतौ 'गृहस्थोऽपि विमुच्यत' इति स्मृतौ च गृहस्थादीनामपि श्रवणादिसम्पत्तौ मोक्षप्रतिपादनेन तद्विरोधात् । मोक्षसाधनीभूतदर्शनार्थस्य श्रवणादेः श्रुतत्वेन पापनिवृत्तिफलकत्वस्याप्यङ्गीकार्यतया श्रवणभेदकल्पनायोगाच्च । संन्यासाङ्गकश्रवणस्यैव पापनिवृत्तिः फलम् । गृहस्थादिश्रवणं तु मोक्षहेतुज्ञानार्थमिति वैपरीत्यापत्तेश्च । न च संन्यासस्य मोक्षाश्रमत्वप्रसिद्ध्या न वैपरीत्यमिति वाच्यम् । तत्प्रसिद्धेः अधिकाभिप्रायत्वात् । अन्यथोदाहृतश्रुतिस्मृतिविरोधप्रसरादित्यन्यत्र विस्तरः ।

किञ्चोपरतिशब्देऽस्य संन्यासार्थकत्वे प्रमाणाभावः । तस्य विषयवैराग्यार्थकत्वात् । न हि विषयवैराग्यमेव संन्यासः । तस्य संन्यासाङ्गत्वात् । 'यदहरेव विरजेत् तदहरेव प्रव्रजेदि'ति श्रुतेः 'त्यक्त्वा सङ्गान् परिव्रजेदि'ति स्मृतेश्च । न चोपरत इत्यनेन विरक्ताधिकारिकसंन्यासौ लक्ष्यत इति वाच्यम् । यथाश्रुते बाधकाभावात् । विरक्तस्य सर्वस्यापि संन्यासाश्रमे प्रवेशनीयत्वनियामकप्रमाणाभावात् । 'यदहरेव विरजेत् तदहरेव प्रव्रजेदि'ति श्रुतेश्च संन्यासात्पूर्वं वैराग्यावश्यम्भावपरत्वात् ।

किञ्च संन्यासस्य श्रवणाङ्गत्वे विद्वत्संन्यासो विविदिषा संन्यासश्चेति संन्यासभेदाङ्गीकारो विरुद्धः स्यात् । न च 'संन्यासाद्ब्रह्मणस्थानमि'ति स्मृत्या विद्वत्समासोऽन्य एवेति युक्तम् । संन्यासमात्रस्योदाहृतस्मृत्या सत्यलोकप्राप्तिसाधनतया प्रतिपन्नत्वेन तद्द्वैविध्यस्याकल्पनात् । श्रवणाङ्गतया विहितस्य संन्यासस्य फलान्तरसाधनतया श्रुतसंन्यासात्पार्थक्यं युक्तमिति चेत् तर्हि पूर्वोदाहृतश्रुतिस्मृतिभिर्गृहस्थाश्रमादेरपि द्वैविध्यकल्पनप्रसङ्गात् । ननु तत्र गार्हस्थ्यादेरङ्गत्वप्रतिपादनपरत्वाभावेन दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेत्यादाविव क्रममात्रपरत्वेन च न तद्द्वैविध्यं कल्प्यत इति चेत् । समं प्रकृतेऽपि । संन्यासस्य श्रवणाङ्गत्वे च वेदमधीत्याभिसमावृत्त्येत्यादि श्रुतिविरोधः स्यादित्युक्तम् ।

किञ्च संन्यासस्य श्रवणाङ्गत्वे तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेनेति श्रुतिविरोधः स्यात् । तत्र गृहस्थधर्माणामपि ज्ञानार्थतया विधानात् । न च तत्र ज्ञानप्रतिबन्धकदुरितनिवर्तकीभूतयज्ञादिकर्मणां ज्ञानोद्देशेन विधानेऽप्युत्तरकालं तत्त्यागरूपः संन्यासो न विरुद्ध इति वाच्यम् । कर्मत्यागरूपसंन्यासस्यापि कर्मरूपतया अधिकारिविशेषं प्रति ज्ञानार्थत्वोपपत्तौ यज्ञादीनां च तथात्वोपपत्तौ समुच्चित्यज्ञानार्थत्वायोगात् । समुच्चये प्रमाणाभावात् । प्रत्युतोदाहृतश्रुत्यादिविरोधः स्यादित्युक्तम् ।

नन्वत्र शब्दतः प्रधानभूतां विविदिषामुद्दिश्य संयोगपृथक्त्वन्यायेन यज्ञादिकं विधीयते। विविदिषा व्याख्यानपदेन साध्यावस्था प्रतीयते। सम्भवति च तत्प्रतिबन्धकदुरितनिवृत्तिद्वारोपयोगसम्भवेन यज्ञादेस्तत्र विधानमिति। मैवम्। प्रकृत्यर्थात्प्रत्ययार्थः प्रधानमिति सामान्यन्यायादिच्छाविषये शाब्दे साधनान्वय इति विशेषन्यायस्य बलवत्त्वेनेष्यमाणवेदनसाधनत्वेनैव यज्ञादेर्विधानौचित्यात्। अन्यथा 'स्वर्गकामो यजेते'त्यादौ 'अश्वे जिगमिष्यती'त्यादौ च इच्छाविषयशाब्दस्वर्गगमनादिसाधनतया यागाश्वादेर्विधानं न स्यात्।

ननु तत्रोक्तप्राबल्यं न तथा स्वीक्रियते किन्तु प्रत्ययार्थस्य अयोग्यत्वात्। अन्यथा परस्त्रीकामः प्रायश्चित्तं कुर्यादित्यत्रापि प्रायश्चित्तस्येष्यमाणयोषित्पिण्डसाधनतया अन्वयः प्रसज्यते। इह तु प्रतिबन्धकदुरितनिवृत्तिद्वारा विविदिषाया योग्यत्वात्। शब्दतः प्रधानत्वाच्च तादर्थ्येन यज्ञादिविधाने न कश्चिद्दोष इति चेन्न। विविदिषोद्देशेन कर्मणां विधानायोगात्।

तथाहि विविदिषोद्देशेन कर्मानुष्ठानात्पूर्वं नियमेन विविदिषासत्त्वे तदुद्देशेन तदनुष्ठानायोगात्। असत्त्वे च तन्निबन्धनविविदिषा कामनासम्भवेन तत्प्रयुक्तकर्मानुष्ठानानुपपत्तेः। न हि फलभूतब्रह्मज्ञानेच्छाव्यतिरेकेण तत्साधनविविदिषायामुद्देश्यायां कामना सम्भवति। न च पूर्वविविदिषायां सत्यामपि प्रवृत्तिपर्यन्तायास्तस्या अभावात् तत्र तत्प्रयुक्तकामनासम्भवेन तदुद्देशेन कर्मानुष्ठानमुपपद्यत इति वाच्यम्। तथा सति प्रवृत्तिपर्यन्ताया विविदिषायाः सन्प्रत्ययेन अनुपस्थिताया अशाब्दत्वेन तत्र कर्मणां विधानायोगात्। कर्मणां ज्ञानेऽन्वयसम्भवेन लक्षणयापि तदुपस्थित्ययोगात्। लाघवेन मोक्षसाधनब्रह्मज्ञानं प्रत्यन्तरङ्गतया प्रवृत्तेरेवोद्देश्यतापाताच्च। कामाधिकारे कामनानां अधिकारहेतुत्वेनेच्छायां कामोपबन्धकल्पनागौरवेण कर्मणां तदुद्देशेन विधानायोगाच्च। अत इष्यमाणवेदनोद्देशेनैव कर्मविधानं युक्तम्। ततश्च यावद्विद्योदयं कर्मानुष्ठानापत्तेस्त्यजतैव हि तज्ज्ञेयमित्यादिवचनसिद्धकर्मत्यागरूपसंन्यासस्यापि समुच्चित्याविद्यार्थत्वमयुक्तम्।

यत्तु प्राग्बीजोत्कर्मणं तदनन्तरमकर्षणमिति कर्षणाकर्षणाभ्यां व्रीह्यादिनिष्पत्तिवद् 'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते। योगारूढस्य तस्यैव शमः कारणमुच्यत' इति वचनानुसारेण चेतसः शुद्ध्या विविदिषादिरूपप्रत्यक्प्रावण्योदयपर्यन्तं कर्मानुष्ठानं, ततः संन्यास इति कर्मतत्संन्यासाभ्यां विद्यानिष्पत्तौ न कश्चिद्विरोधः। उक्तं हि नैष्कर्म्यसिद्धौ– 'प्रत्यक्प्रवणतां बुद्धेः कर्माण्यापाद्य शुद्धितः। कृतार्थान्यस्तमायान्ति प्रवृडं ते घना इवे'ति। कर्मणां विद्यार्थत्वपक्षेऽपि विविदिषापर्यन्तमेव कर्मानुष्ठानम्। न चैवं विविदिषार्थत्ववेदनार्थत्वपक्षयोरविशेष इति वाच्यम्। कर्मणां विद्यार्थत्वपक्षे द्वारभूत-

विविदिषासिद्ध्यनन्तरं परतोऽपि फलपर्यन्तानि विशिष्टगुरुलाभनिर्विघ्नश्रवणमननादिसाधनप्रवृत्तिप्रमुखानि सम्पाद्य विद्योत्पादकत्वनियमोऽस्ति । विविदिषार्थत्वपक्षे तु श्रवणादिप्रवृत्तिजननसमर्थोत्कटेच्छामात्रसम्पादनमात्रेण कृतार्थतेति नावश्यं विद्योत्पादकत्वनियम इति ।

तन्न, एवं समुच्चये प्रमाणाभावात् । तत्तद्वर्णाश्रमोचिततत्तत्कर्मणामेव निरपेक्षतया विद्यार्थत्वस्योदाहृतानेकश्रुतिसिद्धत्वाच्चेति । तस्मात् संन्यासो न श्रवणाङ्गम् ।

एतेन संन्यासश्च ज्ञानप्रतिबन्धककल्मषनिवृत्तिद्वारा भवति ज्ञानसाधनम् । स च श्रवणेन समुच्चीयते । 'शान्तोदान्तउपरतस्तितिक्षुरि'त्यादिवाक्येन तयोः समुच्चयविधानात् । न च तस्मिन्वाक्ये श्रवणं न श्रूयत इति शङ्क्यम् । शान्तादिपदैरेव तद्वत् कर्तृकविचारस्योपस्थितत्वादित्यादिकमपि निरस्तम् ।

संन्यासस्य श्रवणेन समुच्चित्यज्ञानं प्रति कारणत्वे शान्त इत्यादेः प्रमाणत्वायोगस्योक्तत्वात् । विस्तरस्तु तत्त्वमाणिक्यपेटिकायां द्रष्टव्यः ।

*इति संन्यासस्य श्रवणाङ्गत्वसमुच्चयपक्षयोर्बाधकम् ॥ १४ ॥*

★ ★ ★

## १५. श्रवणस्याङ्गित्वभङ्गः

ननु तथापि श्रवणादिकं विधीयत इत्ययुक्तम् । तथाहि— न तावदयं नित्याधिकारः । यावज्जीवमग्निहोत्रमित्यादिवत् नियतनिमित्ताश्रवणात् । न च अनृङ्मुखान्यतींत्सालावृकेभ्यः प्रायच्छदित्यधिकरणे प्रत्यवायश्रवणान्नित्याधिकारः कल्प्यत इति वाच्यम् । कल्पनायां प्रवृत्तावुत्कटत्वेन कामाधिकारस्यैव कल्पयितुं युक्तत्वात् । काम्यस्य चारम्भादूर्ध्वं नित्यत्वेन प्रत्यवायश्रवणोपपत्तेः । तत्र प्रकरणे विहितत्वेन तदकरणे प्रत्यवायपरत्वायोगात् । दृक्शब्दस्य विचारवाचकत्वाभावात् । 'त्रिशीर्षाणं त्वाष्टमहनमि'त्यादि प्रायपाठेन ज्ञानप्रशंसापरत्वाच्च ।

एतेन 'स्थाणुरयं भारवाहः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्', 'यदधीतं न विज्ञातं निगदेनैव शब्द्यते । अनग्नाविव शुष्केधो न तु ज्वलति कर्हिचिदि'त्यादिश्रुतिरपि व्याख्याता । नापि नैमित्तिकाधिकारः । वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते इतिवन्निमित्ताश्रवणात् । न च 'दृष्ट्वा स्नायादि'त्यत्र 'दर्शनवत् संन्यस्य श्रवणं कुर्यादि'ति संन्यासो निमित्तं श्रूयत इति वाच्यम् । आतुर-

संन्यासविरोधेन तस्य निमित्तत्वायोगात् । संन्यासस्य विहितत्वेन निमित्तत्वायोगाच्च । संन्यस्येति त्त्वाप्रत्ययस्य वाजपेयेनेष्ट्वेतिवद् अङ्गत्वेन दर्शपूर्णमासाभ्यामिष्ट्वेति वक्तुमपरत्वेन वोपपत्तेः ।

नापि प्रायश्चित्ताधिकारः । ब्रह्मचार्यवकीर्णीतिवत् दोषसंयोगाश्रवणात् । भक्तिसंयुतात् गुरुशुश्रूषणाल्लब्धात् कृच्छ्राशीतिफलश्रवणात् प्रायश्चित्ताधिकारः कल्प्यत इति वाच्यम् । धर्मेण पापमपनुदतीति प्रायश्चित्तफलश्रवणेऽपि तदधिकाराभावात् । कल्पनायां प्रवृत्तौ उत्कटस्य कामाधिकारस्य कल्पयितुं न्याय्यत्वाच्च । नापि कामाधिकारः । स्वर्गकामो यजेतेत्यादिवत् तदश्रवणात् । न च विश्वजिन्न्यायेन स्वर्गकामाधिकारः कल्प्यः । सर्वतो विरक्तं प्रति विधीयमानत्वेन तत्कल्पनायोगात् । नापि रात्रिसत्रन्यायेनापवर्गकामाधिकारः । अपवर्गस्य विचाराद्यसाध्यत्वादिति । मैवम् । येनाहं नामृतः स्यां किं अहं तेन कुर्यां, एतावदरे खल्वमृतत्वमित्युपक्रमोपसंहारश्रुतापवर्गकामाधिकारिकं श्रवणादिचतुष्टयमिति पूर्वमेव प्रतिपादितत्वात् । यद्वाऽपवर्गसाधनीभूतदर्शनकामाधिकारिकं श्रवणमननाङ्गकं निदिध्यासनमेवात्र विधेयम् ।

अत्र कश्चिदाह— श्रवणमेवाङ्गि काम्यमानकरणत्वात् । अविद्यानिवर्तकज्ञानं हि काम्यते । तत्रापि न ज्ञानांशे श्रवणं करणम् । प्रथमं वेदान्तैरद्वितीयात्मज्ञाने सति श्रवणे प्रवृत्तिः । तस्यां च अद्वितीयात्मज्ञानमित्यन्योन्याश्रयात् । श्रवणस्य प्रमाणान्तरतापत्तेश्च । शाब्दप्रमायाः परतस्त्वापाताच्च । किन्तु तद्गताविद्यानिवर्तनशक्तौ हि करणम् । सा हि श्रवणात्प्रागसम्भावनादिप्रतिबन्धवशेनानुत्पन्ननिवृत्तिद्वारा श्रवणेन उत्पाद्यते । अत एव कार्यानुकूलशक्तिविघटत्वं प्रतिबन्धकत्वम् । शक्तिविघटकत्वं च तदनुत्पत्तिजनकत्वं तन्नाशजनकत्वं वेति वेदविदामभ्युपगमः । न च ज्ञानरूपतच्छक्तावपि शब्द एव करणम् । श्रवणं तु प्रतिबन्धकनिवृत्तिद्वारेति कर्तव्यतास्त्विति वाच्यम् । श्रवणस्य ज्ञानकरणत्ववच्छक्तिकरणत्वे बाधकाभावेनान्वयव्यतिरेकाभ्यां तत्र शब्दवत् श्रवणस्यापि करणत्वोपपत्तेः । शब्दान्वयव्यतिरेकयोर्ज्ञानेऽन्यथासिद्धतया तच्छक्तिकरणत्वे मानाभावेन तदितिकर्तव्यतानुपपत्तेश्च । न च श्रवणान्वयव्यतिरेकयोरपि तात्पर्यभ्रमनिवृत्तावन्यथासिद्धत्वेन श्रवणमपि शक्तिकरणं न स्यात् । किन्तु तन्निवृत्तिरेव तत्करणं स्यादिति वाच्यम् । निवृत्तेर्निर्व्यापारत्वेन श्रवणस्यैव तद्द्वारा अन्वयव्यतिरेकाभ्यां करणत्वोपपत्तेः । तर्हि मननादिरपि श्रवणवदेव करणं स्यान्नाङ्गं स्यादिति चेन्न । प्रमित्यभिन्नशक्तिं प्रति मानस्यान्तरङ्गत्वेन तद्विषयतया अन्तरङ्गस्यान्तरङ्गमानविषयतात्पर्यभ्रमनिवृत्तिजनकस्य श्रवणस्यैव करणत्वौचित्यात् । अनेवंविधे तु मनननिदिध्यासने असम्भावनादिनिवृत्तिद्वारा फलोपकार्यङ्गभावं भजेते । न च निदिध्यासनस्य विपरीतसंस्कारनिवर्तकत्वेऽपि तन्निवृत्तिरविद्यानिवर्तनशक्तं ज्ञानं प्रति न हेतुः, रूप्यसंस्कारानिवृत्तावपि शुक्तिसाक्षात्कारादर्शनादिति वाच्यम् । विपरीतसंस्कारनिवृत्तिमात्र-

स्याहेतुत्वेऽपि दिङ्मोहादिस्थले प्रबलविपरीतसंस्कारे सति तत्त्वसाक्षात्कारदर्शनेन तादृशसंस्कार-निवृत्तेः तत्साक्षात्कारहेतुत्वोपपत्तेः । अत एव शक्तिशक्तिमतोरत्यन्ताभेदाभावेन तज्ज्ञानं श्रवणादेः फलमिति शास्त्रीयव्यवहारः सङ्गच्छते ।

केचित्त्ववधृतशक्तितात्पर्यकः शब्दः प्रतिष्ठितज्ञानं प्रति करणम् । न च तात्पर्यमाप्तोक्तत्वा-न्निर्दोषत्वादिवत् स्वरूपसदेव शाब्दप्रमोपयोगि, लाघवात्, न त्ववधारणमिति वाच्यम् । नानार्थे लक्ष-णायां च नियतोपस्थित्यर्थं तात्पर्यावधारणापेक्षाया दृष्टत्वेन तात्पर्यसंशयादिस्थलीयशाब्दबोधेऽपि तदवश्यम्भावात् । तथाच नैयायिकमते संशयविपर्ययोत्तरप्रमायां विशेषदर्शनवत् तात्पर्यसंशय-विषयोत्तरवाक्यार्थज्ञाने तात्पर्यावधारणं कारणमुपपद्यते । न च तात्पर्यावधारणस्य तद्भ्रमनिरासोप-क्षीणतया न करणकोटिनिवेश इति वाच्यम् । आकाङ्क्षादिमत्त्वावधारणस्यापि निराकाङ्क्षत्वज्ञानरूप-प्रतिबन्धकनिरासोपक्षीणतया शाब्दप्रमाहेतुत्वाभावप्रसङ्गात् । तावद् अभावापेक्षया तावदवधारणस्य कारणत्वे लाघवात् । एवञ्च श्रवणं करणकोटिनिवेशादङ्गि । मननिदिध्यासने तु करणकोटावनु-प्रवेशाभावेन फलापेक्षितासम्भावनादिनिवृत्तिद्वारा फलोपकार्यङ्गे इत्याहुः इति ।

अत्रोच्यते— न तावद् ज्ञानगताविद्यानिवर्तनशक्तौ श्रवणं करणम् । त्वया शक्तितात्पर्याव-धारणानुकूलन्यायगोचरचेतोव्यापारस्यैव श्रवणपदार्थत्वाभ्युपगमेन तस्य च शक्तितात्पर्यावधारणेन अन्यथासिद्धतया ज्ञानगताविद्यानिवर्तनशक्तिं प्रति कारणत्वायोगाच्छक्तितात्पर्यावधारणस्यैव तात्पर्य-भ्रमनिवृत्तिद्वारा तत्कारणत्वौचित्याच्च । तात्पर्यावधारणस्य विधेयश्रवणपरिचायकतया तत्कोटि-निक्षिप्तत्वेन अन्यथासिद्धत्वे च अविद्यानिवर्तकज्ञानस्यापि तत्कोटिनिविष्टत्वापत्त्या शक्तिं प्रति कारणत्वाभावप्रसङ्गात् ।

किञ्च ज्ञानगताविद्यानिवर्तनशक्तिं प्रति श्रवणस्य करणत्वे श्रुतहान्यश्रुतकल्पनाप्रसङ्गः । न च श्रुतस्य दर्शनस्य श्रवणात्पूर्वमेव जातत्वेन तत्फलत्वायोगेन नाश्रुतकल्पनमिति वाच्यम् । तथा सति करणकृतस्य विषयकृतस्य वा विशेषस्याभावेनानन्तरमप्यविद्यानिवृत्त्यभावप्रसङ्गात् । विरोधिज्ञानसत्त्वे प्रतिबन्धकानवस्थानस्योक्तत्वाच्च ।

किञ्च 'धर्मे प्रमीयमाणे हि वेदेन करणात्मना । इतिकर्तव्यताभागं मीमांसा पूरयिष्यती'ति वार्तिकोक्तन्यायेन ब्रह्मावगमेऽपि वेदान्ता एव करणम् । श्रवणं त्वितिकर्तव्यतामात्रं स्यात् । एवञ्च 'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिरि'ति स्मृतिरप्यनुकूलिता भवति । अन्यथा धर्मविचा-रोऽपि धर्मप्रमितिगतप्रवृत्तिजननशक्तिं प्रत्येव करणं स्यात्, न तु वेदेन धर्मे प्रमीयमाणे इतिकर्तव्यता स्यात् । अविशेषात् ।

किञ्च तात्पर्यभ्रमनिरासोपक्षीणस्य करणत्वे मननादिकरणं स्यात् । न च मननादेः शक्तिं प्रति प्रत्यासत्तिविशेषशून्यतया वैषम्यस्योक्तत्वाच्च करणत्वमिति वाच्यम् । उक्तरीत्या शब्दस्यैव करणत्वौचित्यात् । शब्दस्येव श्रवणस्यापि करणत्वे मननस्यापि तथात्वप्रसङ्गात् । यत्किञ्चिद्वैषम्यस्याप्रयोजकत्वात् ।

किञ्च शब्देनापरोक्षज्ञाने अप्रतिबद्धापरोक्षज्ञाने वोत्पाद्ये मननादिवत् परोक्षज्ञाने प्रतिबद्धपरोक्षज्ञाने वा श्रवणस्यापेक्षितत्वेन त्रयाणामपि फलोपकार्यङ्गतेति कथं परस्परमङ्गाङ्गिभावः । अन्यथा 'यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत' इति फलत्रयसाधनसौरभं प्रकृत्य 'ह्रीषिति वृष्टिकामाय निधनं कुर्यात् ऊर्गित्यन्नाद्यकामाय ऊ इति स्वर्गकामाये'ति श्रुतानां वृष्ट्यादिफलाय सौभरेतिकर्तव्यताभूतानां निधनगतह्रीषादीनां परस्परमङ्गाङ्गिभावः स्यात् । न च नित्यापरोक्षे ब्रह्मणि सर्वथा अपरोक्षज्ञानजनकस्य शब्दस्य सौभरवदनेकफलत्वाभावात् । श्रवणादीनां ज्ञानगतशक्तिजनकानां ह्रीषादिवत् फलोपकार्यङ्गत्वाभावाच्च वैषम्यमिति वाच्यम् । ब्रह्मणो नित्यापरोक्षत्वस्यैवासिद्धेः । श्रवणादीनां ज्ञानगतशक्तिजनकत्वे प्रमाणाभावाच्च । 'ततस्तु तं पश्यते निष्फलं ध्यायमानः', 'एते दर्शनहेतव' इत्यादिश्रुतिस्मृतिभ्यः श्रवणादीनां दर्शनहेतुत्वस्यैव प्रतीतेश्च ।

किञ्च च मननादेः श्रवणं प्रत्यङ्गत्वे प्रमाणाभावः । न च श्रवणस्य फलकरणत्वेन फलकरणेतिकर्तव्यताकाङ्क्षालक्षणं प्रकरणं प्रयाजादिवदङ्गत्वबोधकमस्तीति वाच्यम् । श्रवणस्य फलकरणत्वाभावस्य उक्तत्वात् । किञ्च 'ततस्तु तं पश्यते निष्कलं ध्यायमान' इति बाह्ये निदिध्यासनस्य फलसम्बन्धात्' फलवत्सन्निधावफलं तदङ्गमितिन्यायेन इतिकर्तव्यताकाङ्क्षालक्षणप्रकरणेन श्रवणादिकं निदिध्यासने सन्निपत्याङ्गमित्येव अङ्गीकर्तव्यम् । न च द्रष्टव्यः श्रोतव्य इति सन्निधानेन श्रवणस्य दर्शनरूपफलसम्बन्धात् । सन्निधावितिन्यायेन श्रवणमेवाङ्गीति युक्तम् । 'श्रुत्वा मत्त्वा तथा ध्यात्वा तदज्ञानविपर्ययौ । संशयं च पराणुद्य लभते ब्रह्मदर्शनमि'ति श्रुत्यनुसारेण द्रष्टव्य इति श्रुतेरर्थस्य वर्णनीयतया श्रुत्यन्तरानुसारेण दर्शनस्य श्रवणमननाङ्गकध्यानमात्रफलत्वौचित्यात् । ध्यानस्य साक्षात्फलसम्बन्धावगमाच्च । न च पश्यत इति वर्तमानफलश्रवणस्य वर्मैव 'तद्यज्ञाय क्रियत' इति प्रयाजफलश्रवणवदर्थवादत्वेन तद्वाक्यं निदिध्यासनस्य फलसम्बन्धबोधकमिति वाच्यम् । 'ध्याननिर्मथनाभ्यासात् देवं पश्यं निगडवदि'ति श्रुत्यन्तरानुसारेण तद्वाक्यस्यापि फलसम्बन्धबोधकत्वोपपत्तेः । अनिश्चितस्य ध्यातुमशक्यत्वेन तदर्थयोः श्रवणमननयोः फलोपकार्यङ्गत्वायोगाच्चेति दिक् ।

एतेन अवधृतशक्तितात्पर्यकशब्दप्रमितज्ञानं प्रतिकरणमिति पक्षोऽपि निरस्तः ।

शब्दस्य परोक्षज्ञानफलकत्वेन अपरोक्षज्ञानकरणत्वायोगात् मनसैवानुद्रष्टव्यमित्यादिसावधारण-श्रुत्यनुसारेण ब्रह्मदर्शनस्य मानसत्वावश्यम्भावेन तत्करणमनसः सहकारितया ध्यानस्यैव तत्कारण-त्वौचित्याच्चेति ॥

*॥ इति श्रवणस्याङ्गित्वभङ्गः ॥ १५ ॥*

★ ★ ★

# १६. परमते श्रवणादेर्नियमविधित्वभङ्गः

यत्तु श्रवणादिकं विषयावगमं प्रत्यन्वयव्यतिरेकसिद्धोपाय इति नियमविधिरेवायम् । न च वेदान्तश्रवणादिकं ब्रह्म साक्षात्कारं प्रति तथा न सिद्धमिति वाच्यम् । गान्धर्वशास्त्रस्य षड्जादि-साक्षात्कारं प्रत्यन्वयव्यतिरेकाभ्यां हेतुत्वक्लृप्त्यैव वेदान्तश्रवणेऽपि तत्सिद्धेरिति । तन्न । (षड्जादि) गान्धर्वशास्त्रस्य षड्जादिसाक्षात्कारहेतुत्वेनाप्राप्तेः । न तावत् तत्र शास्त्रविचारो विचार्यार्थसाक्षात्कारे हेतुः कर्मकाण्डविचारेण तदर्थसाक्षात्कारादर्शनात् । नापि साक्षात्कारयोग्यस्य विचार्यशास्त्रार्थस्य साक्षात्कारे हेतुः । विचार्यशास्त्रार्थे स्वर्गादौ विचारेण तद्दर्शनात् । तथा च परमते श्रवणादिविधि-रपूर्वविधिरेव स्यात् ।

ननु गान्धर्वशास्त्रस्य षड्जादिसाक्षात्कारं प्रति अपरोक्षार्थशास्त्रविचारत्वेन विचार्ययोग्यसाक्षा-त्कारत्वेन विचार्यशास्त्रार्थसाक्षात्कारप्रतिबन्धकासम्भावनादिस्थलीयशास्त्रविचारत्वेन असम्भावनादि-निवृत्तिद्वारकविचार्यार्थसाक्षात्कारत्वेन वा साधनत्वदर्शनेन तन्मूलानुमानेन वेदान्तश्रवणस्यापि आरोहा-वरोहावगमं प्रति साधनतायाः सिद्धत्वेन नियमविधित्वमिति चेन्न । योग्यस्वर्गादिविचारेण तत्साक्षा-त्कारादर्शनेन व्यभिचारे तादवस्थ्यात् । न च स्वर्गादिसाक्षात्कारस्य इन्द्रियार्थसन्निकर्षाभावादजात-त्वेऽपि तच्छास्त्रविचारस्य तद्धेतुत्वस्वरूपयोग्यत्वात् न व्यभिचार इति वाच्यम् । तथापि प्रकृते विरोधिज्ञानसत्त्वे प्रतिबन्धकानवस्थितेरुक्तत्वात् । त्वया विचारस्य साक्षात्कारफलकत्वानभ्युपगमाच्च । विचारे ज्ञानगताविद्यानिवर्तनशक्तिजनकत्वस्य मानान्तराप्राप्ततया पूर्वविधित्वस्य दुर्वारत्वाच्च । ततश्च विद्यासहकारिणो मौनस्य पाण्डित्यवत् विधिरेवाश्रयितव्यः । अपूर्वत्वादिति त्वदीयभाष्यमप्यनुकूलितं भवति । किञ्च नायं नियमविधिः । नियमादृष्टोपयोगाभावात् । न तावन्नियमादृष्टस्यान्तःकरणशुद्धा-वुपयोगः । इतिहासादिना ब्रह्मदर्शने सति विविदिषाद्वारा तदर्थस्य तस्य तत्र अनपेक्षणात् । नापि

ब्रह्मदर्शनापरोक्ष्ये इतिहासादिजन्यापरोक्षाद्विषयस्वभावकृततदधिकस्य तस्याभावात् । नाप्यविद्यानिवृत्तौ । स्वप्रागभावनिवृत्ताविवान्यानपेक्षणात् ।

एतेन न च नियमादृष्टसाध्यस्यासम्भवः । प्रतिबन्धककर्मनिवृत्त्या मोक्षजननसमर्थस्य श्रवणसाध्यज्ञानस्यैव तत्साध्यत्वात् । तदुक्तं भगवता— 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यत' इति । तत्राखिलमिति नियमादृष्टोपयोगः । अन्यथा सर्वमखिलमित्युभयमनर्थकं स्यात् । बहूनामदृष्टानामुपयोगश्च निवर्त्यकर्मवैचित्र्यादविरुद्ध इति निरस्तम् ।

इतिहासादिजनितब्रह्मदर्शनस्यापि प्रतिबन्धककल्मषनिवृत्त्या मोक्षजननसमर्थत्वात् । विषयस्वभावकृतविशेषाभावेनेतिहासादिजनितब्रह्मदर्शनं न मोक्षजननसमर्थं विचारजन्यं तु तत्समर्थमित्युक्तेरयोगात् । विवक्षितविवेकेन कल्मषनिवृत्तिमोक्षयोरेव नियमादृष्टोपयोगस्य पर्यवसानाच्च । स्वप्रागभावनिवृत्ताविव अविद्यानिवृत्तावधिकापेक्षाभावस्य पूर्वमेवोक्तत्वात् । अन्यथा शुक्त्यादिसाक्षात्कारेणापि तदज्ञानानिवृत्तिप्रसङ्गादिति ।

किञ्च शब्दैकसमधिगम्ये ब्रह्मणि मानान्तरस्याप्राप्तत्वेन पाक्षिकसाधनान्तरस्य व्यावर्त्यस्याभावान्नियमविधिरयं न युज्यते । न चाध्ययननियमेन लिखितपाठादेरिव श्रवणनियमेन स्वतन्त्रविचारो व्यावर्त्यः सम्भवति । अध्ययनशब्दस्य गुरुमुखोच्चारणानुच्चारणवच्छ्रवणशब्दस्यापि गुरुमुखनिबन्धशक्तितात्पर्यनिर्णयानुकूलचेतोव्यापारेषु रूढत्वादिति वाच्यम् । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदिति गुर्वभिगमनविधिनैव स्वतन्त्रविचारस्य व्यावृत्तत्वात् ।

नन्वेवमष्टवर्षं ब्राह्मणमुपनयीतेति वाक्यविपरिणामेनाष्टवर्षो ब्राह्मण उपगच्छेदिति उपगमनविधिनैव लिखितपाठादिव्यावृत्तेः अध्ययननियमोऽपि न स्यादिति चेन्न । अध्ययनविध्यभावे तदङ्गत्वेनोपगमविधेरयोगेनोपगमनविधिना अध्ययनविध्यन्यथासिद्धेः सम्भावयितुमशक्यत्वात् । न चैवं श्रवणविध्यभावे तदङ्गगुर्वभिगमनविधेरयोगेनाभिगमनविधिना श्रवणविध्यन्यथासिद्धिरप्यशक्यशङ्केति वाच्यम् । तर्हि तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदिति न श्रवणाङ्गविधिः । किन्तु ज्ञानमुद्दिश्य तत्र स्वातन्त्र्येण गुर्वभिगमनविधिरित्यस्तु । तथाच दृष्टद्वारत्वसम्भवे अदृष्टद्वारत्वकल्पनायोगात् 'प्रोवाच तां तत्त्वतो ब्रह्मविद्यामि'ति वाक्यशेषानुसाराच्च श्रवणमेव द्वारं कल्प्यत इति श्रवणविध्यभावेऽपि तेन विधिना स्वतन्त्रविचारो व्यावर्त्यत इति न श्रवणविधिर्युक्तः । न हि 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यत्र ज्ञानोद्देशेन गुरूपसदनं विधीयते । येनाध्ययनविध्यभावेऽप्युपगमनविधिना लिखितपाठादिकं व्यावर्त्यत इति तौल्यं स्यात् । न च 'सम्माननोत्सञ्जने'ति सूत्रेण ज्ञानेऽपि नयतेरात्मनेपदविधानात् । ज्ञानमुद्दिश्य

तत्र स्वातन्त्र्येण उपगमनं विधीयत इति तेनैव लिखितपाठादिकं व्यावर्त्यत इति न वैषम्यमिति वाच्यम्। आत्मनेपदस्य सम्माननाद्यनेकार्थत्वेन नियमेन ज्ञानस्योद्देश्यत्वालाभेन तावन्मात्रेणाध्ययन-नियमासिद्धौ तत्सिद्ध्यर्थमध्ययनविधेः स्वीकर्तव्यत्वात्।

किञ्च उपगमनविधौ अर्थज्ञानं नोद्देश्यम्। विवरणकारेण अध्ययनविधेरर्थज्ञानाधिकारिकत्वस्य निषिद्धत्वात्। अक्षरावाप्तेरपि स्वमात्राधीनोच्चारणानुकूलस्मृत्यनुभवसाधारणावधारणरूपतया उक्त-न्यायेनैव तस्या अप्युपगमनविध्युद्देश्यत्वायोगात्। न च स्वमात्राधीनोच्चारणानुकूलदृढतरसंस्कार-प्रचयरूपैव अक्षरावाप्तिः न ज्ञानरूपेति वाच्यम्। तथाप्युपगमनविधिना अध्ययनविधिफलालाभेन तदर्थं पृथगेव अध्ययनविधेः स्वीकार्यत्वात्।

एतेन गुरुमेवाभिगच्छेदिति न ज्ञानार्थो विधिः। अयोग्यत्वात्। अदृष्टार्थत्वापत्तेश्च। किन्तु करणव्युत्पत्त्या लक्षणया वा ज्ञानपदोपस्थापिते श्रवणे। तथाच श्रवणाङ्गविधिरेवायमिति स्वतन्त्र-विचारश्रवणविधेरेव व्यावर्त्यो युक्त इति निरस्तम्।

प्रमाणवस्तु परतन्त्रस्यापि ज्ञानस्य विधेयत्वसमर्थनेन तदुद्देशेनापि विधातुं शक्यत्वात्। दृष्टविचारद्वारा ज्ञानसाधनत्वोपगमेन अदृष्टार्थत्वानापत्तेश्च। किञ्च करणव्युत्पत्त्यङ्गीकारे लक्षणाङ्गीकारे च गौरवम्। भावव्युत्पत्तिमङ्गीकृत्य मुख्यार्थाङ्गीकारे लाघवम्। किञ्च 'भृगुर्वै वारुणिः। वरुणं पितर-मुपससार। अधीहि भगवो ब्रह्मे'त्यादिश्रुतिविरोधः। तत्रोपगमने ब्रह्मज्ञानार्थतायाः प्रतिपन्नत्वात्। 'स तपोऽतप्यते'ति श्रवणादिरूपविचारस्य पृथगुक्तेश्च।

अस्तु वा ज्ञानपदस्य करणव्युत्पत्त्या लक्षणया वा श्रवणपरत्वम्। तथापि स्वतन्त्रविचारे न श्रवणविधिव्यावर्त्यः। अपि तु तदङ्गोपगमनविधिव्यावर्त्यः। न च श्रवणविध्यभावे तदङ्गगुर्वभिगमन-विधिरेव न स्यादिति वाच्यम्। भोजनविध्यभावेऽपि तदङ्गप्राङ्मुखत्वादितदङ्गविधेर्दर्शनात्।

एतेन किञ्च यदि विधीयमानं गुर्वभिगमनं ज्ञाने साक्षाद्धेतुः। तर्हि न तद्विधिना स्वतन्त्रो विचारो व्यावर्त्यते। यदि श्रवणद्वारा न तर्हि विधेयम्। प्राप्तत्वात्। अथ नियमविधिस्तर्हि श्रवणद्वारकं साधनान्तरमेव व्यावर्त्यम्। स्वतन्त्रविचारस्तु श्रवणविधिं विना न व्यावर्त्य इति श्रवणे नियमविधि-र्युज्यत इति निरस्तम्।

तृतीयपक्षस्यैवाभ्युपगमात्। न चोक्तदोषः। श्रवणद्वारकसाधनान्तरस्य व्यावर्त्यत्वानङ्गीकारात्। स्वतन्त्रविचारस्यैव तद्व्यावर्त्यत्वाङ्गीकाराच्च। एकस्मिन्साध्येऽन्यद्वारकसाधनान्तरप्राप्तावपि तद्-व्यावर्तनाय नियमविधिसम्भवात्। व्रीहीनवहन्तीत्यादौ वैतुष्यद्वारकतण्डुलीभावे साधनान्तरस्य

व्यावर्त्यत्वं दृश्यत इति चेत् । किं तावता । अन्यथा तत्र प्रकृतापूर्वसाधनवैतुष्यद्वारकत्वस्यापि दर्शनेन तत्र साधनान्तरस्याप्राप्ततया नियमविधित्वाभावप्रसङ्गात् । अपूर्वविधित्वापत्तेश्च ।

यत्तु किञ्च यदि ज्ञानसाधनत्वेन अभिगमनविधिः तर्हि अदृष्टमेव द्वारं कल्पयितुं न्याय्यम् । तदेव हि द्वारं कल्प्यं यच्छ्रुतसाधनत्वं निर्वहति । श्रवणं तु प्राक् ज्ञानसाधनत्वे क्लृप्तं पश्चाद्द्वारतया कल्प्यमानं कुलालपितृवद् अन्यथासिद्धिसम्पादकत्वात् श्रुतसाधनत्वं व्याहन्तीति न तद्द्वारतया कल्पयितुं शक्यते । तथाच स्वतन्त्रविचारस्याभिगमनविध्यव्यावर्तितस्य श्रवणविधिनियमव्यावर्त्यस्य सम्भवात् श्रवण-विधिरुपपद्यत इति । तन्न । 'व्रीहिभिर्यजेत', 'अष्टवर्षं ब्राह्मणमुपनयीत', 'समाप्तिकामो मङ्गलमाचरेदि'-त्यादौ यागाध्ययनसमाप्त्यादिसाध्यं प्रति व्रीह्युपनयनमङ्गलादिष्वदृष्टस्यैव द्वारत्वकल्पनाप्रसङ्गात् । पिष्टपुरोडाशादेरुपनेयासत्तेः विघ्नध्वंसादेश्च दृष्टस्य तद्द्वारत्वानभ्युपगमप्रसङ्गाच्च । तथाच व्रीह्यध्ययन-मङ्गलादीनां यागाध्ययनसमाप्त्यादिसाधनत्वं नाङ्गीकार्यं स्यात् । तदुक्तरीत्या अन्यथासिद्धेः वक्तुं शक्यत्वात् । अस्मन्मते तु विचारादिविधेरपूर्वविधित्वमेवोपपादयिष्यते । नियमविधित्वोपपादनं तु परीत्येति न किञ्चिदनुपपन्नम् । तस्मात् परमते स्वतन्त्रविचारो न श्रवणविधिव्यावर्त्यः । किन्तु गुर्वभिगमनविधिव्यावर्त्य इति श्रोतव्य इति नियमविधिर्न युज्यते ।

एतेन 'श्रोतव्य इत्यनेन श्रुतवेदान्तैरेवात्मा ज्ञातव्य' इत्यत्र श्रुतवेदान्तानां नियम्यमानत्वात् । इतिहासपुराणाद्यनुमितवेदान्तवाक्यं व्यावर्त्यमिति निरस्तम् ।

अनुमितवेदान्तानां पठ्यमानवेदान्ताविरुद्धत्वे तद्व्यावृत्तेः अयोगात् । तद्विरुद्धत्वे च सुतरामनु-मितवेदान्तानां बुद्ध्यावनारोहे च व्याघात इति ।

एतेनैव पुराणवाक्यमेव स्वातन्त्र्येण व्यावर्त्यम् । ततश्च 'श्रोतव्यः श्रुतिवाक्येभ्य' इति स्मृति-रुपपन्नेति निरस्तम् ।

वेदविद्याधिकारिणः स्वातन्त्र्येण ब्रह्मज्ञानसाधनत्वेन इतिहासपुराणयोरप्राप्त्या तयोर्व्यावर्तयितु-मशक्यत्वात् । 'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा' इति भारतमाख्यानं मुनिना कृपया कृतमि'ति इतिहासादेः वेदानधिकारिणं प्रत्येव स्वातन्त्र्येण ब्रह्मज्ञानसाधनत्वोक्तेः । इतिहासादेः स्वरूपेण व्यावृ-त्तेश्च 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेदि'ति स्मृतिविरोधेन कर्तुमशक्यत्वात् ।

एतेन 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक' इत्यापातज्ञानवेलायां भिन्नात्म-ज्ञानस्य मोक्षसाधनत्वप्रतीतेर्भिन्नात्मविचाररूपं साधनान्तरं व्यावर्त्यमिति निरस्तम् ।

वस्तुतः साधनान्तरस्यैव व्यावर्तनीयत्वात् । अन्यथा अपूर्वविधिमात्रोच्छेदप्रसङ्गादिति दिक् । विस्तरस्तु न्यायमौक्तिकमालिकायां श्रवणविधिविलासे च द्रष्टव्यः ॥

*॥ इति परमते श्रवणादेर्नियमविधित्वभङ्गः ॥ १६ ॥*

★ ★ ★

# १७. श्रवणादेरपूर्वविधित्वोपपादनम्

अस्मन्मते तु श्रवणादिविधिः अपूर्वविधिरेव । तत्र मोक्षसाधनत्वस्य मानान्तराप्राप्तत्वात् । मोक्षे श्रवणाद्यतिरिक्तसाधनान्तराभावाच्च । श्रवणादीनां चतुर्णामपि मोक्षसाधनत्वस्य श्रुत्यादिभिरुपपादितत्वात् । तथापि दर्शनोद्देशेन श्रवणमननाङ्कं निदिध्यासनं विधीयत इति पक्षे कथमपूर्वविधित्वमिति चेत् ।

अत्रास्मद्गुरुचरणाः— विचारादिविधिस्त्वपूर्वविधिः । ब्रह्मज्ञाने वेदविचारहेतुताया अत्यन्ताप्राप्तत्वात् । न हि वेदार्थज्ञानाय वेदविचारः कर्तव्य इति वचनव्यक्तिः ब्रह्मज्ञानस्योद्देश्यत्वात् । नापि ब्रह्मज्ञानाय ब्रह्मविचारः कर्तव्य इति । तथात्वे ब्रह्मणो विधेयविशेषणतया गुणत्वापातात् । किन्तु ब्रह्मज्ञानाय वेदविचारः कर्तव्य इत्येव वचनव्यक्तिः ।

यद्यपि ब्रह्मपरवेदविचार एव ब्रह्मविचारः तथापि न ब्रह्मविचाररूपेण विधानम् । किन्तु वेदविचाररूपेण । तथाच श्रुतिः— 'तस्मादेनं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेदि'ति । टीका च— ब्रह्मज्ञानोद्देशेन जिज्ञासाविधानात् कुतो प्राधान्यमिति । एवञ्च यथा घटादावितरभेदे सिद्धेऽपि पृथिवीत्वोपहिते तदसिद्धेः पृथिवी इतरेभ्यो भिद्यत इत्यत्र न सिद्धसाधनम् । यथा वा स्थानप्रकरणाधिकरणोक्तरीत्या राजसूयान्तर्गतेष्टिपशुसोमेषु प्रातिस्विकरूपेण चोदकत इति कर्तव्यताप्राप्तावपि राजसूये तदप्राप्तिः । तथा वेदविचारत्वोपहितब्रह्मज्ञानहेतुताया अप्राप्तेरपूर्वविधिता । न हि कर्मकाण्डादिना ब्रह्मकाण्डेऽप्यवान्तरकारणादिवाक्येन पदवर्णस्वरादिना आपाततोऽपि ब्रह्मधीरस्ति । अत एवानुव्याख्याने 'जिज्ञास्योऽयं विधीयत' इति । भाष्ये च 'आत्मेत्येवोपासीते'त्यादिविधीनामिति निरुपपदविधिप्रयोगः ।

यद्वा निदिध्यासनस्य अव्यक्तस्वभाव ब्रह्मसाक्षात्कारहेतुता नान्यतः प्राप्तेति स तावद् अपूर्वविधिः । तथा अज्ञातादौ निदिध्यासनासम्भवेन श्रवणमननयोः निदिध्यासनलिङ्गादेव प्राप्तावपि

नियमविषयकनिदिध्यासनविषयगुणान्यगुणेषु लिङ्गेन तयोरप्राप्तेः तद्विधिरप्यपूर्वविधिरेव । एवञ्च श्रवणमननयोर्निदिध्यासितव्यगुणांशे दृष्टद्वारा निदिध्यासनाङ्गतेति ध्येयम् ।

यद्वा गुरुप्रसादपूर्वकत्वरहितस्वप्रयत्नमात्रसाध्यवाक्यार्थश्रवणादिप्राप्तिनिमित्तकः श्रोतव्य इत्यादिर्नियमोऽस्तु । 'आचार्यवान् पुरुषो वेदे'त्यादिश्रुतेः । एवं नियमव्यावृत्त्यस्य तूपसदनविध्यप्राप्तत्वेन परमतोक्तदूषणानवकाशः । अथवा दुःशास्त्ररूपोपायान्तरप्राप्तिनिमित्तको नियमोऽस्तु । पाशुपताद्यागमविचारस्य ब्रह्मप्रमाहेतुत्वाभावेऽपि जगत्कारणज्ञानहेतुतया प्राप्तेः । अत एव शास्त्रयोनिसूत्रम्, 'दुरागमास्तदन्ये ये तैर्न ज्ञेयो जनार्दन' इत्यादिस्मृतिः 'सच्छास्त्रमभ्यसेन्नित्यं दुःशास्त्रं तु परित्यजेदि'-त्यनुव्याख्यानं च । सम्भवति च शब्दयुक्तिजन्यज्ञानवाचिभ्यां श्रोतव्यमन्तव्यपदाभ्यां दुरागमरूपशब्दाभासतदनुग्राहकन्यायाभासजन्यज्ञानव्यावर्तनमिति । अत्र नियमविधौ पक्षद्वयोपन्यासश्च प्रौढिवादेन द्रष्टव्यः । अन्यथा न हि कर्मकाण्डादिनेत्यादिपूर्वोक्तं विरुद्ध्येतेति । युक्तं च तथा पदशोऽक्षरशः स्ववेदवाक्येभ्यो ब्रह्मज्ञानस्य गुरूपदेशं विना स्वप्रयत्नमात्रेण निष्पादयितुमशक्यत्वात् । तथा च श्रुतिः— 'कश्छन्दसां योगमावेद धीर' इत्यादिका । तथाच श्रवणादेः मोक्षसाधनत्वपक्षे तदर्थज्ञानार्थत्वपक्षे च अपूर्वविधित्वमिति स्थितम् ॥

*॥ इति श्रवणादेरपूर्वविधित्वोपपादनम् ॥ १७ ॥*

★ ★ ★

# १८. अद्वैतिमते मोक्षानुपपत्तिवादः

यत्तु 'मोक्षो नाम आत्मनः स्वरूपेणावस्थानमि'ति । तन्न । तत्र प्रमाणाभावात् । न च 'ब्रह्मविद् ब्रह्मैव भवति', 'आत्मलाभान्न परं विद्यत' इत्यादिश्रुतिस्मृतय एव तत्र प्रमाणमिति वाच्यम् । आत्मनः सुखरूपत्वेऽपि नित्यसिद्धतया पुरुषार्थत्वायोगात् । न हि सिद्धं कश्चिदिच्छति । ब्रह्मविदित्यादीनामर्थान्तरपरत्वस्योक्तत्वाद्वक्ष्यमाणत्वाच्च ।

एतेन सुखत्वेनैव पुरुषार्थतालाघवात् । न तु जन्यसुखत्वेन अगौरवादिति निरस्तम् ।

किञ्च आत्मनः सुखरूपत्वेऽपि स्वसम्बन्धिसुखस्यैव पुरुषार्थत्वान्न तस्य मोक्षरूपत्वं युक्तम् । न च लाघवात् सुखस्यैव पुरुषार्थता, न तु स्वसम्बन्धिनोऽपि गौरवादि वाच्यम् । वैषयिकसुखेषु स्वसम्बन्धिसुखत्वस्यैव पुरुषार्थतावच्छेदकत्वदर्शनात् । न च वैषयिकसुखमप्यन्तःकरणवृत्तिप्रति-

बिम्बितात्मस्वरूपमिति वाच्यम् । 'अहं सुखी स्यामि'त्यनुभवविरोधात् । वृत्तेरेव सुखरूपत्वानुभवाच्च । न च वृत्तेः सुखरूपचैतन्येनैकलालीभावेन सुखत्वव्यपदेश इति युक्तम् । वैपरीत्यस्यापि सुवचत्वात् । आत्मनः श्रुत्यादितः सुखरूपत्वसिद्धौ च वृत्तेरप्यनन्यथासिद्धानुभवेन तत्सिद्धयवैकल्प्यात् । न च 'अहं सुखी'त्यनुभवस्य कल्पितभेदबिम्बप्रतिबिम्बविषयत्वेन अविरोध इति वाच्यम् । आत्मैक्य-स्याद्याप्यसिद्धेः ।

एतेनास्तु वैषयिकं सुखं स्वसम्बन्धिधर्मः । तथाप्यात्मस्वरूपमेव तत् । उपादानोपादेययो-स्तादात्म्यादिति निरस्तम् । त्वया भेदसहिष्णवभेदरूपस्य तस्यानभ्युपगमात् । भिन्नत्वे सत्यभिन्न-सत्ताकत्वस्यैव तादात्म्यशब्दार्थत्वोपगमाच्च । ननु यत्सामान्ययोरिति न्यायेन पुरुषार्थत्वसामान्ये सुखत्वं तन्त्रम् । अपारमार्थिकपुरुषार्थत्वे स्वसम्बन्धिसुखत्वम् । सम्बन्धस्याध्यासव्यतिरेकेण अनिरूपणात् । पारमार्थिके तस्मिन् स्वरूपसुखत्वमिति स्वसम्बन्धित्वाभावेऽपि स्वरूपसुखस्य पुरुषार्थत्वं न विरुद्धयते इति ।

मैवम् । उक्तप्रकारेण पुरुषार्थद्वैविध्यसिद्धेः । नित्यत्वानित्यत्वाभ्यां तद्वैविध्यपर्यवसानात् । नित्यपुरुषार्थेऽपि स्वसम्बन्धिसुखस्य आवश्यकत्वात् । किञ्च त्वन्मते स्वरूपसुखस्य कथं पुरुषार्थता । मुक्तावसाक्षात्क्रियमाणत्वात् । न च अपरोक्षतया भासमानत्वेन पुरुषार्थता न तु विषयतयापि । गौरवादिति वाच्यम् । विषयत्वाभावे अपरोक्षतया भासमानत्वस्यैवासिद्धेः । अन्यथा परकीयसुखस्यापि पुरुषार्थतापत्तेः । किञ्च स्वरूपसुखस्य पुरुषार्थत्वे 'अहं सुखं स्यामि'ति कामना स्यात् न तु 'अहं सुखी'ति । न च विवेकिनामत्यन्तस्वस्थानाम् 'अहं सुखं स्यामि'ति कामनेष्टैव । भ्रान्तानां तु साध्यत्वेनावगतस्य मोक्षस्य विशेषणत्वभ्रमेण अहं सुखी स्यामिति कामना अस्त्विति वाच्यम् । सर्वेषामपि सुखमेव मे स्यादिति कामनाया एव न्याय्यत्वात् । तत्र मोक्षस्य विशेषणत्वभ्रमकल्पनायां प्रमाणाभावात् । न च 'विमुक्तश्च विमुच्यते', 'ब्रह्मविदाप्नोति परमि'ति श्रुतावौपचारिकविशेषण-त्वेनावगते मोक्षे तथैव कामना मुमुक्षूणां न विरुद्धयत इति वाच्यम् । मोक्षस्य मुख्यविशेषणत्वे बाधकाभावात् । किञ्च स्वरूपसुखस्य प्रागपि सत्त्वेन तदुपायश्रवणाद्यनुसरणवैयर्थ्यम् । ननु परमते सालोक्यादिरूपस्य मोक्षस्य प्रागसत्त्वे तत एव शशविषाणादिवद् असाध्यत्वात् तदुपायज्ञानाद्यनु-सरणवैयर्थ्यम् ।

किञ्च पूर्वमसत् पश्चात् सदित्येवमेव सदसदात्मकमापद्येत । न च कालभेदेन तदुभयरूपत्वम् अविरुद्धम् । सद्रूपस्यात्मनः कदाप्यसत्त्वादर्शनात् । असतः शशविषाणादेश्च सत्त्वादर्शनादिति चेत् । वियदादिसृष्टिप्रलयावभ्युपगच्छता त्वया एवं वक्तुमयुक्तत्वात् । वियदादेरसद्वैलक्षण्याभ्युपगमाच्च । ततश्च

वियदादिवत् पूर्वमसतो मोक्षस्य सालोक्यादिरूपस्य पश्चात्साध्यमानत्वं अविरुद्धम् । एतावांस्तु विशेषः । वियदादिध्वंसप्रतियोगिमोक्षस्तु साध्यत्वेऽपि शास्त्रबलेन तदप्रतियोगीति ।

ननु तथापि परमत इव अस्मन्मते मोक्षस्य न साध्यत्वानुपपत्तिः । सतोऽपि तस्य साध्यत्वसम्भवात् । 'ब्रह्मैव सन् ब्रह्माप्येति', 'विमक्तश्च विमुच्यत' इत्यादिश्रुतेः । कण्ठगतकनकाभरणवदप्राप्तिभ्रमान्तरितप्राप्तप्राप्तेः ज्ञानसाध्यत्वात् । तत्र ब्रह्मप्राप्तिभ्रमान्तरितकनकाभरणस्य प्राप्तस्यापि प्राप्तिरेवाप्तोपदेशतज्जन्यत्वज्ञानाभ्यां साध्या दृश्यत इति चेन्न । तत्राप्तोपदेशाद्यनन्तरं अनाप्तिभ्रममात्रस्य निवृत्त्या प्राप्तप्राप्तेरसिद्धेः । पूर्वमध्यमपीदमाभरणमनाप्तकल्पमासीत् । इदानीं भवदुपदेशेन भ्रमनिवृत्त्या आप्तमेव जातमित्यनुभवस्य च सविशेषणे ही'ति न्यायेन भ्रमनिवृत्तिमात्रविषयत्वकल्पनात् । ब्रह्मैव सन्नित्यादेः जीव एव सन् परं ब्रह्म प्राप्नोतीत्यर्थपरत्वात् । विमुक्तश्च विमुच्यत इत्यादेर्मुक्तियोग्यताप्रतिपादनपरत्वाच्च ।

किञ्च कनकाभरणोपदेशादेस्तत्प्राप्तिज्ञानजन्यसुखमेव फलम् । न तु तत्प्राप्तिः । न च प्राप्तिमुद्दिश्य प्रवर्तमानस्योपदेशादेस्तु ज्ञानजन्यसुखफलकत्वं न युक्तमिति वाच्यम् । सिद्धप्राप्तेरुद्देश्यत्वायोगेन असिद्धज्ञानसुखादीनामेवोद्देश्यत्वात् । एतेन लाघवात् तत्प्राप्तित्वावच्छिन्नं प्रत्येवोपदेशादेर्हेतुत्वम् । न तु तज्जन्यसुखत्वावच्छिन्नं प्रति गौरवादिति निरस्तम् ।

किञ्च कनकाभरणादेर्योग्यत्वेऽपि दोषवशेनाप्राप्तिभ्रमसम्भवात् तत्र तथात्वं युक्तम् । निर्विशेषात्मस्वरूपस्य मोक्षस्य सदा भासमानस्याप्राप्तिभ्रम एवासम्भवीति वैषम्यम् । अन्यथा आत्मस्वरूपस्याभाने जगदान्ध्यं स्यात् । किञ्च कनकाभरणप्रेप्सोः प्रतिबन्धकाभावात् तदुपाये प्रवृत्तिर्युज्यते । इह तु नित्यानित्यविवेकपूर्वकं ब्रह्मसुखप्रेप्सोः कथं प्रवृत्तिः । तत्साध्यत्वज्ञाने भ्रमत्वनिश्चयस्य प्रतिबन्धकस्य सत्त्वात् । न च तस्मिन् सत्यपि विपरीतप्रबलवासनया प्रवृत्तिरुपपद्यते । अन्यथा निषेधविधिना बलवदनिष्टाननुबन्धीष्टसाधनत्वाभावज्ञानेऽपि निषिद्धे कथं विषयरागिणः प्रवर्तेरन्निति वाच्यम् । निषेधविधिना निषिद्धे इष्टसाधनत्वाभावज्ञानेऽपि तज्ज्ञानस्य परोक्षतया प्रबलविषयज्ञानप्रयुक्तरागेण तत्र प्रयुक्तेः युक्तत्वात् । इह तु सुखरूपब्रह्मज्ञानस्य अपरोक्षतया विपरीतवासनाद्ययोगस्योक्तत्वादिति यत्किञ्चिदेतत् । तस्मात् सुखरूपस्यात्मनः । स्वरूपेणावस्थानं कण्ठचामीकरवदुपचारादिति तत्त्वज्ञानसाध्यो मोक्ष इत्यनुपन्नम् । नाप्यविद्यानिवृत्तिरूपः । तस्यात्मा स्वरूपत्वे उक्तदोषानतिवृत्तेः ।

ननु साऽऽत्मनोऽन्या साध्यत्वादभावत्वाच्च आत्मवत् परमार्थसती च । इह चेदवेदीदथ सत्यमस्तीति ज्ञानफलस्य सत्यत्वश्रवणात् । अविद्यानिवृत्तेरेव तत्फलत्वात् । 'तरति शोकमात्म-

विदि'ति श्रुतेः । 'तरत्यविद्यां वितताम्'िति स्मृतेश्च । मोक्षश्रुत्यवगतायाः तस्याः असति बाधके सत्यत्वावश्यम्भावाच्चेति चेन्न । 'एकमेवाद्वितीयं', 'नेह नानास्ति किंचने'त्यादि श्रुत्या निषिद्धायास्तस्याः पारमार्थिकत्वायोगात् । अन्यथा वियदादीनामपि पारमार्थिकत्वं स्यात् । 'ऐतदात्म्यमिदं सर्वम्', 'तत्सत्यम्' इत्यादिश्रुत्या वियदादीनामपि सत्यत्वावेदनात् ।

ननु एवमेवेत्यादिश्रुतेः अध्ययनविध्यापादितफलतात्पर्यायाः फलरूपाविद्यानिवृत्तिनिषेधकत्वं न युज्यते । न हि तत्परा श्रुतिः तन्निषेधिकेति युज्यते । प्रधानफलश्रुत्यनुरोधेनैव तदर्थाया निषेधश्रुतेरेव सङ्कोचनीयत्वादिति चेन्न । फलश्रुतिप्रामाण्यानुसारेणाविद्यानिवृत्तेरात्मवन्नित्यत्वेऽपि सत्यत्वायोगात् । असङ्कुचितनिषेधश्रुत्या निषिद्धायास्तस्याः प्रतिपन्नोपाधौ अत्यन्ताभावप्रतियोगित्वेन मिथ्यात्वस्य दुर्वारत्वात् । नित्यस्य मिथ्यात्वविरोधित्ववत् सत्स्वरूपस्यापि तद्विरोधित्वात् ।

एतेनाधिष्ठाने तादात्म्येन भासमाने तदावरकाज्ञानं विना तत्र न दोषारोपः सम्भवति । तदभावे च कथं सा मिथ्या स्यात् । किञ्च यद्यविद्यानिवृत्तिर्मिथ्या स्यात् तर्ह्यधिष्ठानतत्त्वसाक्षात्कारजन्या न स्यात् । सत्यस्य तद्विषयकाविद्यातत्कार्यमात्रविरोधिनस्तज्जनकत्वायोगात् । किञ्चाविद्यानिवृत्तेरनिर्वचनीयत्वे रजतादेरिव अज्ञानोपादानत्वेन मुक्तिकालेऽप्यज्ञानमनुवर्तेतेति निरस्तम् ।

नियतपक्षैकावलम्बिनः तव सर्वस्यापि सह्यत्वात् । अविद्यालक्षणप्रस्तावे त्वयाऽभावस्याविद्योपादानत्वानभ्युपगमात् । भावकार्यस्यैव अविद्योपादानत्वानभ्युपगमात् ।

एतेन अविद्यानिवृत्तेर्मिथ्यात्वे ज्ञाननिवर्त्यत्वं स्यादिति निरस्तम् ।

तस्या ब्रह्मव्यतिरिक्तत्वेऽपि पारमार्थिकत्ववत् मिथ्यात्वेऽपि मोक्षशास्त्रबलेन ज्ञानानिवर्त्यत्वसम्भवात् । किञ्चैवमविद्यानिवृत्तेः पारमार्थिकत्वेऽद्वैतहानिः । न च भावद्वैतमेवाद्वैतविरोधीति युक्तम् । तथा सति अखण्डार्थत्वहानिप्रसङ्गात् । अविद्यानिवृत्तिमादाय सखण्डार्थत्वस्येष्टत्वे च वियदादिकं सार्वज्ञादिगुणजातं चादाय सखण्डार्थत्वं सह्यं स्यात् । अविद्यानिवृत्तिलक्षणमोक्षस्य सत्यत्ववत् तत्सत्यं विश्वं सत्यन्त इमे सत्याः कामा इत्यादि श्रुत्या तेषामपि सत्यत्वावेदनात् । अविद्यानिवृत्ताविव वियदादिविषयेऽप्येकमेवेत्यादिश्रुतेः सङ्कोचनीयत्वात् ।

एतेन अविद्यानिवृत्तिः प्रत्यगभिन्नब्रह्मविषयिणी चरमान्तःकरणवृत्तिरेव । यावत्कार्योत्पत्तिविरोधिकार्यमेव ध्वंस इत्यङ्गीकारात् । ज्ञानसाध्यत्वश्रुतिरपि करणव्युत्पत्त्या लक्षणया वा श्रवणसाध्यत्वपरा । यदनन्तरं न पुनः कदाप्यनर्थसम्बन्धस्तदेव मुमुक्ष्वपेक्षितम् । अविद्यानिवृत्तिरूपाया वृत्तेरपि तादृशत्वं न विरुद्ध्यते । प्रागभावनिवृत्तिरूपघटध्वंसस्य प्रागभावविरोधित्ववदविद्यानिवृत्त्य-

नन्तरं कदापि तत्सम्बन्धाभावात् । वृत्तिध्वंसस्य नित्यत्वेन अविद्यानिवृत्तेरेव साध्यत्वं प्रवृत्त्यौपयिकमिति तद्ध्वंसस्यासाध्यत्वेऽपि न विरोधः इति निरस्तम् ।

वृत्तेरेवाविद्यानिवृत्तिरूपत्वे सोपाधिकभ्रमाभावप्रसङ्गात् । अधिष्ठानतत्त्वगोचरापरोक्षवृत्तेरविद्यानिवृत्तिरूपायाः सत्त्वात् । अविद्यां विना भ्रमासम्भवात् । न च उपाध्यभावकालीनैव वृत्तिस्तद्रूपा विशेषनियामकाभावात् । 'तरति शोकमात्मविदि'त्यादीनामुपचरितार्थत्वापत्तेश्च । केनाप्यद्यपर्यन्तं ज्ञानस्यैव ज्ञानसाध्यपुरुषार्थत्वानुपपादनाच्चेति । अविद्यानिवृत्तिः पञ्चमप्रकारेति पक्षस्तु प्रमाणाभावाद्विरोधात् सूत्रकृतैव सप्तभङ्गीपक्षस्य निरासाच्च वैदिकैरनादरणीयः ।

एतेन आत्मस्वरूपमेवाविद्यानिवृत्तिः । प्रपञ्चोपशमं शिवमित्यादि श्रुतेः इति निरस्तम् ।

श्रवणाद्यनुसारेण प्रसङ्गस्योक्तत्वात् । प्रपञ्चमुपशयतीति वा प्रपञ्चस्योपशमे यस्मिन्निति वा श्रुत्यर्थस्य विज्ञातव्यत्वात् ।

एतेन मोक्षश्रुत्यद्वैतश्रुत्यनुपपत्तेः भेदप्रमाणाभावाच्च अविद्यानिवृत्तिः आत्मस्वरूपैवेति निरस्तम् ।

अविद्यानिवृत्तेः अतिरिक्तत्वेऽपि ध्वंसाप्रतियोगित्वेन नित्यपुरुषार्थत्वोपपत्तेः । उक्तविधायाः प्रपञ्चोपशममित्यस्याः श्रुतेरेव भेदे प्रमाणत्वात् । प्रपञ्चमुपशमयतीत्यत्र लक्षणादिदोषाप्रसरात् । प्रपञ्चस्योपशम इति योजनायां षष्ठ्यर्थलक्षणादोषप्रसङ्गाच्च ।

एतेन यस्मिंसत्यग्रिमक्षणे यस्य सत्त्वं यदभावे च यदभावः तदेव तस्य योगक्षेमसाधारणं साध्यत्वं प्रवृत्त्यौपयिकम् । न तु असत इत्यसत्त्वघटितम् । गौरवात् । तथाच ज्ञाने सत्यविद्यानिवृत्तेरग्रिमक्षणे सत्त्वात् तदभावे च तन्निवृत्त्यभावरूपाविद्यासत्त्वादात्मरूपाविद्यानिवृत्तिरपि ज्ञानसाध्योपपद्यत इति निरस्तम् ।

तथा सत्याकाशात्यन्ताभावस्यापि दण्डसाध्यत्वापत्तेः । तस्मिन् सत्यग्रिमक्षणे तस्य सत्त्वात् । तदभावे च तदभावरूपाकाशसत्त्वात् ।

ननु यस्मिन् सतीत्यादि निरुक्तरूपमेव न साध्यत्वम् । तथा सति दुःखाभावस्य प्रायश्चित्तासाध्यत्वप्रसङ्गात् । तस्मिन् सति अग्रिमक्षणे दुःखाभावस्य सत्त्वेऽपि प्रायश्चित्तव्यतिरेकेऽनादितत्प्रागभावस्य पूर्वकालेऽपि सत्त्वेन तद्व्यतिरेकाभावात् । किन्तु साध्यत्वाभिमतप्रतियोग्यनुयोगिभावाश्रयनाशकस्वस्वव्याप्येतरसकलसमवधाने यस्मिन् सतीत्यादिरूपम् । एवञ्च नाकाशात्यन्ताभावस्य दण्डसाध्यत्वप्रसङ्गः । साध्यत्वाभिमताकाशात्यन्ताभावाश्रयनाशकसमवधानस्याप्रसिद्ध्या तद्घटित-

दण्डसाध्यत्वायोगात् । साध्यत्वाभिमतेत्यादेरयमर्थः । साध्यत्वाभिमतस्य यः प्रतियोग्यनुयोगिभावः तस्य आश्रयः प्रतियोग्यनुयोग्यन्यतरः तन्नाशकं यत्स्वस्वव्याप्येतरतत्समवधाने सतीति । मैवम् । तथा सति अविद्यानिवृत्तेर्ज्ञानसाध्यत्वाभावप्रसङ्गात् । साध्यत्वाभिमताविद्यानिवृत्तिप्रतियोग्यनुयोगिभावाश्रयाविद्यानाशकस्याप्रसिद्धेः ।

नन्विह नाशकशब्देन नाशकारणतदवच्छेदकप्रतिबन्धकरूपाभावसाधारणम् अव्यवहितपूर्वक्षणवर्ति तत्प्रयोजकमुच्यते । लाघवात् । अन्यथा दण्डेतरसकलघटनाशकसमवधानेऽपि प्रतिबन्धकदशायां दण्डे सत्यग्रिमक्षणे घटोत्पत्त्यभावात् घटोऽपि साध्यो न स्यात् । प्रतिबन्धकाभावस्य अकारणरूपत्वं च अविद्यानाशं प्रति कारणान्तरस्याप्रसिद्धावपि कारणतावच्छेदकस्य तत्प्रतिबन्धकासम्भावनाद्यभावस्य प्रसिद्धेः तत्समवधाने सत्यग्रिमक्षणे यस्य सत्यमित्यादि ज्ञानसाध्यत्वं न विरुद्ध्यत इति । तन्न । तथा सति अविद्यानिवृत्तेः प्रतिबन्धकाभावस्यासाध्यत्वापत्त्या ज्ञानसाध्यत्वाभावप्रसङ्गात् । प्रतिबन्धकाभावस्यान्यथासिद्धत्वेऽपि मुख्यसाध्यत्वसम्भवेन गौणसाध्यत्वस्यानङ्गीकार्यत्वाच्च ।

वस्तुतस्तु दुःखप्रागभावस्य अग्रिमाग्रिमक्षणसम्बन्ध एव प्रायश्चित्तसाध्य इति न तत्र सिद्धस्य साध्यत्वम् । न हि त्वया मुक्तावग्रिमक्षणसम्बन्धोऽभ्युपगम्यत इति दृष्टान्तदार्ष्टान्तिकयोः वैषम्यमिति दिक् ।

एवमद्वैतिमते मोक्षानुपपत्तिः श्रवणविधिविलासे श्रुत्यर्थसारादौ च प्रपञ्चितानुसन्धेया । सालोक्यादिरूपमुक्त्यभ्युपगमे बाधकोद्धारश्च तत्रैवानुसन्धेय इत्युपरम्यत इति सर्वं समञ्जसम् ।

*॥ इति अद्वैतिमते मोक्षानुपपत्तिवादोऽष्टादशः ॥ १८ ॥*

इति श्रीविजयीन्द्रेण सर्वसिद्धान्तदर्शिना ।
प्रणीता वादमालेयं विदांकुर्वन्तु सूरयः ॥

*इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीसुरेन्द्रतीर्थपूज्यपादारविन्दशिष्यस्य*
*सर्वतन्त्रस्वतन्त्रस्य श्रीविजयीन्द्रभिक्षोः कृतिषु*
*वादमालिका समाप्ता ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

॥ श्रीमन्मूलरामो विजयते ॥

सर्वतन्त्रस्वतन्त्रश्रीमद्विजयीन्द्रतीर्थश्रीपादविरचिता

# वाग्वैखरी

॥ श्रीः ॥

सर्वतन्त्रस्वतन्त्रश्रीमद्विजयीन्द्रतीर्थश्रीपादविरचिता

# वाग्वैखरी

## विषयानुक्रमणिका

★ ★ ★

॥ श्रीः ॥

## सर्वतन्त्रस्वतन्त्रश्रीमद्विजयीन्द्रतीर्थश्रीपादविरचिता

# वाग्वैखरी

॥ श्रीवेदव्यासाय नमः ॥

### मङ्गलाचरणम्

कल्याणगुणपूर्णाय वल्लभाय श्रियः सदा ।
श्रीमध्वदेशिकेष्टाय श्रीनृसिंहाय ते नमः ॥ १ ॥

यस्माद्विश्वमिदं भूयो जायते वर्धते यतः ।
लयमेति तमीशानं सेवे श्रीनृहरिं मुदे ॥ २ ॥

ब्रह्मविन्मुखरङ्गस्थां मध्व ते वाङ्नटीं पराम् ।
विचित्रपदविन्यासैर्मोहयन्तीं भजेऽन्वहम् ॥ ३ ॥

मध्वशास्त्रमहाचापमनुद्धार्यमपीतरैः ।
उद्धृत्य कीर्तिं यो लेभे तं जयार्यं सदा भजे ॥ ४ ॥

श्रीमन्मध्वमताब्धीन्दुं दुर्वादिफणिपक्षिपम् ।
ब्रह्मण्याख्यमुनेः शिष्यं व्यासदेशिकमाश्रये ॥ ५ ॥

श्रीसुरेन्द्रगुरोः पादपद्मे रागस्य पीडनात् ।
रक्ते नखदलोपेते सेवे शिष्यालिशोभिते[1] ॥ ६ ॥

ये नित्यं पदवाक्यमानसरणीसंशीलनालङ्कृता-
स्तेषामेव करोति या प्रतिपदं सन्तोषमाकर्णनात् ।

---

१. पा.- सेविते ।

या चानेकविनेयषट्पदततेः सम्फुल्लमल्ली सदा[1]
सैषा वाग्विजयीन्द्रसंयमिमणेर्वाग्वैखरी सेव्यताम् ॥ ७ ॥

## भगवति प्रमाणाक्षेपः

ननु कथं मुदे त्वं तं [2]नृसिंहं सेवसे । लोके प्रेक्षावन्तस्तमेव सेवन्ते यः कल्याणगुणशालितया प्रमाणेन निश्चितः । नहि त्वं तथात्वेन [3]नृसिंहं [4]केनापि प्रमाणेन निश्चिनोषि । लोके लक्षणप्रमाणाभ्यां हि पदार्थानां स्वरूपावधारणं कुर्वन्तो दृश्यन्ते । न हि नृहरौ लक्षणप्रमाणे स्तः । धर्ममात्रशून्ये तस्मिंस्तद्विशेषरूपस्य लक्षणस्य सम्भावयितुमशक्यत्वात् । अलक्षणमचिन्त्यमव्यपदेश्यमैकात्म्यप्रत्ययसारमिति तस्मिन् लक्षणसामान्याभावश्रवणात् । अत एव न तस्य प्रमाणगोचरत्वं युज्यते । किञ्चिद्धर्मपुरस्कारं विना विषयप्रत्यायकत्वस्यादर्शनात् । नृहरेश्च धर्ममात्रशून्यत्वात् । केवलो निर्गुणश्चेति श्रुत्या गुणशब्दितधर्ममात्रनिषेधात् । सर्वेणापि प्रमाणेन सविकल्पकज्ञानस्यैवोत्पत्तेः ।

तथाहि न तावत् प्रत्यक्षेण नृहरिः निश्चेतुं शक्यः । चक्षुषो रूपपरिमाणादिशून्ये गुणकर्मसमवायेभ्योऽन्यस्मिन् प्रवृत्त्ययोगात् । 'न सन्दृशे तिष्ठति रूपमस्य, अस्थूलमनणु, न चक्षुषा गृह्यते नापि वाचा न चक्षुषा पश्यति कश्चनैनम्' इति रूपपरिमाणचक्षुर्ग्राह्यत्वनिषेधश्रवणात् । चक्षुस्त्वचोः कालदेशाभ्यामितरस्मिन् द्रव्ये स्वव्यवस्थापकगुणपुरस्कारेण प्रवृत्तिस्वभावत्वात् । अत एव स्पर्शशून्ये तस्मिंस्त्वचोऽपि न प्रवृत्तिः । किञ्च रूपादिमत्त्वे घटादिवत् तस्य सर्वेषां चक्षुषोपलम्भप्रसङ्गः । योग्यसन्निकर्षसत्त्वात् । न हि सर्वगते तस्मिन् चक्षुषः सन्निकर्षो नैवेति वक्तुं शक्यम् । तत्सर्वगतत्वं च आकाशवत् सर्वगतश्च नित्यः इति श्रवणात् । घ्राणरसनश्रोत्राणां गन्धरसशब्दतद्धर्मवैशिष्ट्यमात्रग्राहकत्वेन द्रव्यग्राहकत्वाभावात् । मनसोऽपि विशेषगुणोपहितात्मग्राहकत्वेन तद्रहिते नृहरौ प्रवृत्त्ययोगात् । अन्यात्ममनसोऽन्यात्मग्रहणे सामर्थ्यादर्शनाच्च । 'यन्मनसा न मनुते' इति श्रुत्यैव तस्य मनोग्राह्यत्वनिषेधाच्च ॥

धर्ममात्रशून्यत्वादेव नानुमानेनापि तन्निश्चयः । लिङ्गस्य तद्विशेषत्वात् । न च सामान्यरहिते[5] तद्विशेषः सम्भवति । 'नैषा तर्केण मतिरापनेया', 'हेतुदृष्टान्तवर्जितम्' इति तस्यानुमानवेद्यत्वनिषेधश्रवणाच्च । नाप्युपमानेन । उपमानस्य नियतविषयत्वात् ॥

अर्थापत्त्याऽपि न तन्निश्चयः । नृहरिणा विना अनुपपद्यमानार्थाभावात् ।

---

१. पा. - समा । २. नृहरिं - पाठः । ३. श्री नृहरिं - पा. । ४. केनचिन्मानेन । ५. विरहे इति पा. ।

नाप्यागमेन तन्निश्चयः । पदानां योगेन रूढ्या योगरूढ्या वा लक्षणया गौण्या वा अर्थप्रत्यायकत्वात्; न (च) हि पदानां नृहरावेतन्मध्ये कश्चन सम्बन्धः सम्भवति । 'कश्छन्दसां योगमावेद धीरः' इति योगस्य स्वरूपेणैव दुर्ज्ञानत्वश्रवणात् । 'अप्राप्य मनसा सह' इति प्राप्तिशब्दितवाच्यवाचकभावरूपसाक्षात्सम्बन्धस्य कण्ठतः श्रुत्यैव तस्मिन् निषिद्धत्वात् । प्रमाणमात्रस्य बाधकं विना साक्षात्सम्बन्धविषयत्वस्वाभाव्यात् । मुख्यार्थसम्बन्धरूपलक्षणादेरपि 'असङ्गो ह्ययं पुरुषः' इति सम्बन्धमात्रनिषेधिकया श्रुत्या निषिद्धत्वात् । परम्परासम्बन्धस्यापि दूरे गत्वा केनचित्साक्षात्सम्बन्धेन विना अयोगाच्च । 'न चक्षुषा गृह्यते नापि वाचा' इति श्रुत्या वाक्शब्दितागममात्रगम्यत्वनिषेधश्रवणाच्च । वाक्यार्थविधयाऽप्यागमगम्यत्वमत एव प्रत्यूढम् । तस्माल्लक्षणाभावाच्च (प्रमाणाभावाच्च) न नृहरेः स्वरूपावधारणं सम्भवति । एवं च सति कथं मुदे त्वं तं सेवसे इति चेत् ।

## भगवति प्रमाणनिरूपणम्

उच्यते । वेदस्य सर्वस्याप्यपौरुषेयत्वेन भ्रमप्रमादविप्रलिप्साकरणापाटवादिदोषपूर्वकत्वाभावेन [1]महाप्रबन्धत्वेऽपि कर्त्रनुस्मरणनियमेन अन्यथा वा महाजनैः प्रामाण्यमास्थितम् । अत एव भगवता जैमिनिना पूर्वतन्त्रे प्रमाणलक्षणे 'अथातो धर्मजिज्ञासे'ति प्रमाणस्वरूपसाधनफलैः धर्मस्य विचारं प्रतिज्ञाय प्रथमपादे साक्षाद्धर्मे प्रमाणभूतायाः चोदनायाः पौरुषेयत्वाद्यप्रामाण्यशङ्काहेतुनिराकरणपूर्वकं तत्र प्रामाण्यमुपपादितम् । द्वितीयपादे अर्थवादमन्त्रयोः विध्यपेक्षितद्रव्यदेवतादिस्तुत्यनुष्ठेयानुस्मृतिसमर्पकतया, तृतीयपादे मन्वाद्याप्तप्रणीतवेदाविरुद्धस्मृत्यादीनां मूलवेदानुमापकतया, चतुर्थपादे 'अग्निहोत्रं जुहोति', 'श्येनेनाभिचरन् यजेत' इत्यादिविधिवाक्यगताग्निहोत्रादिपदानां नाम्ना कर्मभेदः नाम्ना धर्मातिदेशः नाम्ना दूरस्थस्यानुवादः इत्यादिप्रयोजनवत्या कर्मनामतया च तत्र प्रामाण्यमुपपादितम् । एवं च विध्यर्थवादमन्त्रनामधेयात्मकस्य कृत्स्नस्य वेदस्य यत्प्रामाण्यमुपपादितं तदबाधितार्थकत्वरूपमेव वाच्यम् । कथञ्चिद्बाधितार्थकत्वरूपत्वे तस्याप्रामाण्यरूपत्व एव पर्यवसानात् । बाधितार्थकं प्रमाणमित्यस्य 'अब्राह्मणो ब्राह्मण' इतिवद् व्याहतत्वात् । यावद्बाधं प्रमाणमित्याश्रयणे शुक्ताविदं रूप्यमित्यादिप्रतीतीनामपि प्रामाण्यापत्तेः । शुक्तिरूप्यादावपि बाधावतारनियमाभावात् । किञ्च बाधानवतारशायां प्रमाणमिति धीमात्रं स्यात् । न तु प्रामाण्यम् । तस्यार्थसत्त्वघटितमूर्तित्वेन प्रमाणमिति धीमात्रादन्यत्वात् । किञ्चैवं बाधस्यापि यावद्बाधमेव प्रामाण्यापत्तिः । न चैवं, क्वापि अर्थे वास्तवसद्रूपासिद्धिप्रसङ्गात् ।

---

१. महाप्रबन्धत्वेनापि कर्तृस्मरणनियमेन इति पाठः ।

## प्रामाण्यस्वरूपविचारः

किञ्चाप्रामाण्यकारणनिरासस्य प्रामाण्यकारणस्य च ब्रह्मकाण्ड इव कर्मकाण्डेऽप्यविशिष्टत्वेन तुल्यवदेव प्रामाण्यमुपेयम् । न तु वैषम्येण । विनिगमकाभावात् वैपरीत्यापत्तेश्च । बाधकं विना तुल्यवत्प्रामाण्याङ्गीकारस्यैवोचितत्वात् । तत्सत्त्वे चाप्रामाण्याङ्गीकारस्यैवोचितत्वात् । तथापि (च) द्वे प्रामाण्ये इति द्वैविध्यासिद्धेः । अर्थासत्त्वे च कर्मकाण्डस्य बौद्धागमवदप्रामाण्यस्यैवापत्तेः । बाधकसत्त्वे कर्मकाण्डार्थः सस्वरूपः, बौद्धागमार्थस्तु निस्स्वरूप इति व्यवस्थानुपपत्तेः । तथा च 'विमतः कर्मकाण्डः अप्रमाणं भवितुमर्हति बाधितार्थकत्वात् बौद्धागमवदि'ति प्रयोगः । एवं च प्रामाण्याप्रामाण्ययोः सस्वरूपत्वनिःस्वरूपत्वकृतविशेषोऽनुपपन्नः ।

किञ्चैवं भगवतो जैमिनेः तुल्यवद्वेदमात्रे अप्रामाण्यकारणनिरासायासः प्रामाण्यसाधकव्युत्पादनायासश्च निरर्थकः स्यात् । न चैवम् । तत्र तदायासस्य प्रेक्षावत्प्रवृत्त[१]त्वात् । तथा च कृत्स्नस्य वेदस्य अबाधितार्थकत्वेनैव सर्वैरपि वेदप्रामाण्यसाधकव्युत्पादनाय प्रेक्षावत्प्रवर्तितत्वात् । कृत्स्नस्य वेदस्य अबाधितार्थकत्वेनैव प्रामाण्यमास्थितम् । आस्थेयं च तथा, कृत्स्नवेदस्य हिताहितविषयप्रवृत्तिनिवृत्तिपरत्वेन मात्रादिवाक्यवत् प्रेक्षावदुपादेयत्वरूपारम्भणीयत्वं च । तत्प्रामाण्योपपादकतया 'वाचा विरूप नित्यया', 'नित्ययाऽनित्यया स्तौमि', श्रुतिर्वाव नित्या अनित्या वाव स्मृतयो याश्चान्या वाचः' इत्यादीनां स्ववाक्यत्वेऽपि वेदस्याविगानेन तदभिहितत्वं च स्वीकृतम् । तथा 'नित्या वेदाः समस्ताश्च शाश्वता विष्णुबुद्धिगाः', 'वेदविदेव चाहम्', 'स्वयम्भूरेष भगवान् वेदो गीतस्त्वया पुरा । शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः' इत्यादिस्मृतीनां वेदमूलत्वेऽपि तदावेदितमपि वेदस्य नित्यत्वमविगानेन स्वीकृतम् । न ह्येवं सिद्धप्रमाणभावे कृत्स्नवेदे शिरोभाग एव तत्रापि ज्ञेयब्रह्मभाग एव तत्त्वावेदकः, नेतरभाग इति शक्यमभ्युपगन्तुम् । तत्त्वावेदकत्वलक्षणप्रामाण्यप्रयोजकस्य नित्यनिर्दोषत्वादेः कृत्स्नवेदेऽप्यविशेषात् । वैपरीत्यापत्तेश्चेत्युक्तम् । तच्च नित्यनिर्दोषत्वं तत्प्रयुक्तप्रामाण्यं च तत्रानारोपितमेव स्वीकार्यम् । न त्वारोपितम् । तथा सति वेदस्य बौद्धाद्यागमाविशेषप्रसङ्गादित्यपि चोक्तम् । न चोत्पत्तिज्ञप्त्योः ज्ञानमात्रप्रामाण्यस्य औत्सर्गिकं स्वतस्त्वमिति स्वीकुर्वद्भिः बाधकं विना अर्थसत्त्वघटितं तत्प्रामाण्यमेव त्यागार्हम् । न हि निर्दोषवेदजन्यं ज्ञानं ज्ञानं न भवतीत्यस्ति । न वा तत्प्रामाण्यं प्रामाण्यं नेति ।

---

१. प्रवर्तितत्वात् इति पाठः ।

अपि च प्रवृत्तिसंवादविसंवादनिर्वाहाय तज्जनकज्ञानप्रामाण्याप्रामाण्ययोः अनारोपितत्वमवश्य-मभ्युपेयम्। अन्यथा तत्संवादविसंवादयोराकस्मिकत्वापत्तेः। एतेव प्रवृत्तिसंवादविसंवादयोः तज्जनक-ज्ञानप्रामाण्याप्रामाण्ययोः अनारोपितत्वं न तन्त्रम्। किन्तु प्रातिभासिकवैलक्षण्यं वा व्यावहारिकत्वं वा तन्त्रमिति निरस्तम्। आगन्तुकदोषाजन्यत्वेन अप्रातिभासिके घटादौ पारमार्थिकत्वस्येव तादृशदोष-जन्यत्वेन प्रातिभासिके शुक्तिरूप्यादौ प्रातिभासिकवैलक्षण्यस्येव प्रातिभासिकरजतादिविषयकव्याव-हारिकघटादिविषयकज्ञानयोः व्यावहारिकप्रातिभासिकप्रामाण्यारोपसम्भवेन तज्जन्यप्रवृत्तिनिवृत्त्योरपि संवादविसंवादापातात्।

किञ्च ज्ञानप्रामाण्याप्रामाण्ययोरपि तद्विषयाबाधितत्वबाधितत्वे एव तन्त्रे। ते अप्यनारोपिते एव तन्त्रे। अन्यथा शुक्तिरूप्यादावप्यबाधितत्वस्य आरोपसम्भवेन तद्विषयकज्ञानस्यापि प्रामाण्य-प्रसङ्गात्। ब्रह्मचैतन्येऽपि बाधितत्वस्यारोपसम्भवेन श्रवणादिसहकृतवेदान्तजन्यब्रह्मज्ञानेऽपि अप्रामा-ण्यापाताच्च। तथा च ज्ञानप्रामाण्याप्रामाण्ययोः अनारोपितविषयसत्त्वासत्त्वे एव प्रयोजके वाच्ये। न तु व्यावहारिकविषयसत्त्वासत्त्वे। न च व्यावहारिकविषयसत्त्वासत्त्वमनारोपितविशेषितमेव प्रामाण्य-प्रयोजकमिति परेण वक्तुं शक्यम्। व्यावहारिकधर्ममात्रस्याध्यस्तप्रपञ्चान्तर्गतत्वेन परेणानारोपितत्वस्य तद्विशेषणत्वेन अनुपादेयत्वात्।

एतेन अनारोपितविषयसत्त्वादिकं प्रामाण्यादिप्रयोजकमिति न त्वयापि वक्तुं शक्यम्। पदार्थमात्रस्य सर्वं रजतमित्याहार्यारोपविषयत्वेन अनारोपितशब्दार्थस्य आरोपाविषयस्याप्रसिद्धेरिति निरस्तम्॥

## सर्वस्यापि वेदान्तभागस्य तत्त्वावेदकत्वेनैव प्रामाण्यम्

सर्वं रजतमित्यादिज्ञानं प्रति रजतादेरेवारोप्यत्वेन आरोपाविषयशब्देन तद्भिन्नस्यैव शुक्तिशकलादेः प्रसिद्धत्वात्। यद्यपि रजतत्वादेरिव अधिष्ठानभूतशुक्तिकाशकलादेरपि आरोपविषयत्वेन आरोप्यत्व-मविशिष्टम्, तथापि यद्विषयत्वेन तज्ज्ञानस्य भ्रमत्वं दोषजन्यत्वं वा तद्विषय एवारोपशब्दार्थ इति न कोऽपि दोषः। तस्माज्ज्ञेयब्रह्मपरवेदान्तभागवत् कृत्स्नः तदितरोऽपि वेदान्तभागः तत्त्वावेदकत्वेनैव प्रमाणभावं भजत इत्याख्येयम्।

## कर्मकाण्डादीनां निषेध्यसमर्पकत्वेन प्रामाण्यायोगः

एतेन 'न कलञ्जं भक्षयेदि'त्यादौ कलञ्जभक्षणाद्युपस्थापकभागवत् कर्मकाण्डस्य ब्रह्मकाण्डेऽप्युपासाविधिभागस्य सृष्ट्यादिवाक्यप्रतियोग्युपस्थापकतया 'एकमेवाद्वितीयं', 'नेह नानास्ति किञ्चन' इत्यादिनिषेधैकवाक्यत्वसम्भवात् सर्वस्यापि वेदस्य प्रामाण्यं मयाऽप्यङ्गीक्रियत एवेति निरस्तम् ।

न कलञ्जं भक्षयेत् इत्यत्र कलञ्जं भक्षयेत् इत्यस्येव 'एकमेवाद्वितीयमि'त्यादिनिषेधवाक्येऽपि द्वितीयनानाकिञ्चनशब्दादेः निषेध्यसमर्पकत्वेन कर्मकाण्डादीनां तत्समर्पकत्वेन तदेकवाक्यत्वासिद्धेः । न च निषेधवाक्यगतद्वितीयनानाकिञ्चनादिशब्दानां द्वितीयत्वादिना सामान्यरूपेण निषेध्यसमर्पकतया विशेषजिज्ञासासत्त्वात् निषेध्यविशेषाकाङ्क्षायां कर्मकाण्डादीनां विशेषनिषेध्यसमर्पकत्वेन निषेधैकवाक्यता किं न स्यादिति वाच्यम् । द्वितीयादिपदेनैव द्वितीयत्वादिसामान्यरूपेण कर्मकाण्डाद्यर्थस्य उपादानसम्भवेन निषेध्यत्वसिद्ध्या विशेषाकाङ्क्षानुदयात् । कर्मकाण्डाद्यर्थस्य ब्रह्मणि मानान्तराप्राप्तत्वेन निषेधाया द्वितीयादिपदेन अनुवादानुपपत्तेश्च । न हि कलञ्जभक्षणादिकर्तव्यतावत् ज्योतिष्टोमादिकर्तव्यतावगतिः प्राप्ता येन कलञ्जभक्षणाद्युपस्थापकभागवत् कर्मकाण्डादेर्ज्योतिष्टोमादिप्रतिषेध्योपस्थापकत्वेन प्रामाण्यम् । न तु प्रतिषेधवत् स्वातन्त्र्येणेति स्यात् । किञ्च 'न कलञ्जं भक्षयेदि'त्यादिवाक्यस्य न कलञ्जभक्षणनिषेधोऽर्थः सम्भवति । कलञ्जभक्षणे भोजनादाविव प्रत्यक्षप्राप्तस्य तृप्तिरूपेष्टसाधनत्वस्य कृतिसाध्यत्वस्य वा निषेधायोगात् । नरकासाधनत्वबलवदनिष्टाननुबन्धित्वयोः विध्यर्थत्वाभावेन तन्निषेधायोगात् । परमहितैषिमात्रादिविहित इव तथाभूतवेदविहिते नरकसाधनत्वस्य बलवदनिष्टानुबन्धित्वस्य प्रत्यासत्त्यभावात् । तथा च तदर्थोऽनिष्टसाधनत्वरूप एव वाच्यः । एवं च न तद्भागस्य प्रतियोगिसमर्पकत्वेन प्रामाण्ये दृष्टान्तत्वं युज्यते ।

किञ्च कर्मकाण्डादीनां न निषेध्यसमर्पकत्वमङ्गीकर्तुं शक्यम् । ज्योतिष्टोमादिकर्मसु तद्विहितस्य तत्तदिष्टसाधनत्वस्य निषेधानुपलम्भात् । 'एकमेवाद्वितीयमि'त्यादेः । ब्रह्मण्येवेतरसर्वनिषेधकत्वेन ज्योतिष्टोमादिषु कर्मकाण्डादिविहिततत्तदिष्टसाधनत्वादिनिषेधकत्वायोगात् । न हि ब्रह्मेव ज्योतिष्टोमादिकर्माण्यपि इहशब्दार्थः, अद्वितीयमित्यत्रान्यपदार्थो वा येन कर्मकाण्डादिनिषेधः स्यात् ।

किञ्च 'एकमेवाद्वितीयं', 'नेह नाने'त्यादेः कर्मकाण्डाद्यर्थरूपद्वितीयनानाकिञ्चनशब्दार्थनिषेधनमयुक्तम् । प्रत्यक्षादिना पराभिमते निर्विशेषब्रह्मणि तस्याप्रसक्तत्वात् । (प्रत्यक्षादिना पराभिमते निर्विशेषब्रह्मणि तस्य अप्राप्तत्वात् ।) श्रुत्या कथञ्चित् प्राप्तावपि 'नातिरात्रे षोडशिनं गृह्णाति न तौ पशौ करोति वसो मेऽध्वर' इत्यादिवत् सर्वात्मना निषेध्यत्वस्यैव प्रसङ्गात् । न चानुष्ठानयोग्यकर्मस्विव

तदयोग्येष्वर्थेषु विकल्पासम्भवेन ब्रह्मणि तन्निषेधस्य सर्वात्मना तन्निषेधत्वमकामेनापि स्वीकार्यमिति वाच्यम् । षोडशिग्रहणाग्रहणयोः पुरुषभेदेन व्यवस्थितत्ववत् ब्रह्मेतरद्वितीयादिपदार्थानामपि अवच्छेदकभेदेन सम्बन्धभेदेन वा व्यवस्थितत्वसम्भवेन उक्तनिषेधस्य सर्वात्मना तन्निषेधत्वानुपपत्तितादवस्थ्यात् ।

वस्तुतस्तु कर्मकाण्डादीनां निषेधं प्रति निषेध्यसमर्पकत्वेन प्रामाण्यमित्येतत् सर्वात्मना न युज्यते । तथाहि तत्सन्निधौ तन्निषेधानुपलम्भात् । 'एकमेवाद्वितीयमि'त्यादिनिषेधस्य ब्रह्मकाण्डस्थत्वेन तत्प्रतिषेध्यसमर्पकत्वेन कर्मकाण्डादीनां तेनैकवाक्यत्वासम्भवात् । अन्यथा 'न हिंस्यादि'ति निषेधं प्रति 'अग्नीषोमीयं पशुमालभेते'त्यादीनामपि निषेध्यसमर्पकत्वेन एकवाक्यत्वप्रसङ्गात् । न च द्वितीयनानाकिञ्चनशब्दार्थानां निषेध्यत्वेन निषेध्यवाक्योपात्तानां ब्रह्मव्यतिरिक्तानां कर्मकाण्डाद्यर्थव्यतिरिक्तानामसम्भवात् द्वितीयादिशब्दानां सामान्यशब्दत्वेन तैस्तेषामेवोपादानमावश्यकमिति वाच्यम्। द्वितीयादिसामान्यशब्दानां 'यः सर्वज्ञः सर्ववित्', 'परास्य शक्तिर्विविधैव श्रूयते', 'एष नित्यो महिमा ब्राह्मणस्य', 'अस्मान्मायी सृजते विश्वम्' इत्यादिश्रुत्या विशिष्य विहितं यत् सार्वज्ञादिकं तदतिरिक्तविशिष्य निषिद्धधर्मिविशेषपरत्वसम्भवात् । विशिष्टे उपहिते वा ब्रह्मणि प्रत्यक्षाद्यप्राप्तस्य विशिष्य श्रुत्या विहितस्य सामान्यनिषेधविषयत्वायोगात् । अन्यथा 'सत्यं ज्ञानमनन्तमि'त्यादिश्रुत्या विहितस्यापि स्वरूपलक्षणस्य सच्चिदानन्दादेः अलक्षणमित्यादिसामान्यनिषेधविषयत्वप्रसङ्गात् । 'अस्थूलमनण्वि'त्यादिश्रुत्या विशेषनिषेधोऽपि क्रियत इति चेन्न । ब्रह्मणि स्थौल्यादेर्मानान्तराप्राप्तत्वेन अनूद्य निषेधायोगात् । अन्यथा अप्रसक्तप्रतिषेधापत्तेः । 'महान्तं विभुमात्मानं मत्त्वा धीरो न शोचति', 'सूक्ष्मात् सूक्ष्मतरं नित्यं', 'अणोरणीयान् महतो महीयान्' इत्यादिश्रुत्या महत्वादेर्विशिष्य विधानेन निषेधायोगाच्च । न हि मानान्तराप्राप्तस्य अनुवादो निषेधो वा सम्भवति । 'अस्थूलमनणु' इत्यादिनिषेधानां तर्हि का गतिरिति चेत् न । 'नञिवयुक्तमन्यस्मिन् सदृशेऽर्थे प्रतीतिं जनयती'ति न्यायेन अब्राह्मणमानये(दि)त्यादाविव प्रसिद्धस्थूलाद्यन्यतत्सदृशत्वेन तेषां ब्रह्मप्रतिपादकत्वरूपगतिसम्भवात् । तथा च विशिष्टे उपहिते वा ब्रह्मणि 'यस्मिन् द्यौरि'त्यादिश्रुत्या द्युभ्वाद्यायतनत्वस्य सार्वज्ञादेश्च श्रुत्या विधानेन तत्र तन्निषेधासम्भव इति स्थितम् ।

तथा ज्योतिष्टोमादिकर्मसु 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिश्रुत्या तत्स्वर्गसाधनत्वादिविधानवत् तेषु तन्निषेधदर्शनमपि नास्तीति स्थितम् । ब्रह्मण्युदाहृतसामान्यनिषेधस्य विशिष्य विहितेतरनिषेधपरत्वमेव । न तु सामान्यपरत्वमित्यपि स्थितम् । एवञ्च कर्मकाण्डादीनां वेदान्तेऽप्युपासनाविध्यादीनां च ज्ञेयब्रह्मपरवेदान्तभागवत् अबाधितार्थकत्वेनैव प्रामाण्यमङ्गीकार्यम् । अबाधेनैवोपपत्तौ

बाधस्यान्याय्यत्वात् । तत्रापि बहुबाधस्य सुतरामन्याय्यत्वात् । उपक्रमाधिकरणन्यायेन कर्मकाण्डादीनां प्राबल्यसिद्ध्या वेदान्तानां तदविरुद्धार्थपरतयैव नेतुमुचितत्वात् । न चापच्छेदन्यायेन निषेधवाक्यानां परत्वेन प्राबल्यं किं न स्यादिति वाच्यम् । पौर्वापर्यविरोधः पूर्वाप्रामाण्यं च यत्र नियमेन नास्ति तत्रैवापच्छेदन्यायावतारात् । प्रकृते तु ब्रह्मसप्रपञ्चत्वनिष्प्रपञ्चत्वश्रुत्योः सगुणत्वनिर्गुणत्वश्रुत्योश्च नियमेन पौर्वापर्यादिसत्त्वात् । न च विशिष्टे उपहिते वा ब्रह्मणि श्रुत्या विहितस्य श्रुत्याऽविहितस्य श्रुत्या निषेधासम्भवेऽपि लक्षितचिन्मात्रे श्रुत्या निषेधसम्भवेन अविरोध इति वाच्यम् । तथासत्यप्रसक्तप्रतिषेधापत्तिः । निषिद्धस्य सार्वज्ञादेर्मिथ्यात्वापत्तेश्च । चिन्मात्रस्योपाधित्वेनाप्रतिपन्नत्वात् । न च निषेधप्रतियोगिचिन्मात्रेण मिथ्यात्वम् । स्वरूपतः सार्वत्रिकत्रैकालिकनिषेधप्रतियोगित्वस्यैव मिथ्यात्वरूपत्वात् । ज्योतिष्टोमादिगतेष्टसाधनत्वादीनां लक्षितचिन्मात्रे कथञ्चिन्निषिद्धत्वसम्भवेऽपि ज्योतिष्टोमादावपि निषिद्धत्वात् तद्विषयत्वेनापि निषेधव्यापारकल्पने व्यावहारिकज्योतिष्टोमादौ तेषां निषिद्धानां प्रातिभासिकत्वापत्तेश्च । व्यावहारिके अधिष्ठाने निषिद्धस्य प्रातिभासिकत्वनियमात् । एतत्सर्वमग्रे प्रपञ्चयिष्यामः । तस्माद् ब्रह्मकाण्डवत् कर्मकाण्डादीनां स्वातन्त्र्येणैवाबाधितार्थकत्वमादाय प्रामाण्यमेषितव्यम् । न तु निषेध्यसमर्पकतयेति सिद्धम् ।

एतेनैव 'नेह नाने'त्यादिनिषेधं प्रति प्रतिषेध्यसमर्पकतया अङ्गभावं प्राप्तस्य कर्मकाण्डादेः निषेधवन्न प्राबल्यम् । किन्त्वनन्यार्थतया निषेधस्यैव प्राबल्यमिति निरस्तम् । चिन्मात्रस्य शशविषाणायिततया कर्मकाण्डादेस्तत्र प्रतिषेध्यप्रापकत्वसम्भवात् । तत्र तन्निषेधेऽपि विशिष्टे उपहिते वा चैतन्ये निषेधाभावेन कर्मकाण्डाद्यर्थस्य मिथ्यात्वापत्तेः, अप्रसक्तप्रतिषेधापत्तेश्चेत्युक्तम् ।

## ब्रह्मकाण्डवत् कर्मकाण्डादीनामपि तुल्यवत् प्रामाण्यम्

किञ्चैवं व्यावहारिकनिषेध्यवियदादिकं प्रति अधिष्ठानत्वेन वाच्ययोः विशिष्टोपहितचैतन्ययोः पारमार्थिकत्वप्रसङ्गः । व्यावहारिकाधिष्ठानस्य पारमार्थिकत्वनियमात् । विशिष्टोपहितचैतन्ययोः अनिषिद्धत्वेन अमिथ्यात्वप्रसङ्गश्च । तयोरपि किञ्चन नानाशब्दार्थत्वमाश्रित्य इहशब्दार्थभूते विशिष्टे उपहिते वा चैतन्ये नेहनानेत्यादिनैव निषेधाभ्युपगमे च तथाभूतस्याखण्डचैतन्यस्यापि तथाभूतेहशब्दार्थे निषेधप्रसङ्गः । न चेष्टापत्तिः । तथासति त्वदभ्युपगताधिष्ठानपारमार्थिकत्वनियमभङ्गप्रसङ्गात् । प्रतिपन्नोपाधावनिषिद्धस्यैव परेण पारमार्थिकत्वस्वीकारात् । तथाच सेयमुभयतः पाशारज्जुः । तस्मात् सामान्यतः सर्वनिषेधवत् अवभासमानेषु वाक्येषु अस्मदुक्तरीत्यैव विहितेतरनिषेधपरत्वमेव आश्रयितव्यम् । अथवा निषेधस्य सर्वविषयत्वेऽपि सम्बन्धभेदेन वा अवच्छेदकभेदेन वा तन्निषेधपरत्वमुपेयम्, निषेधवद्विधेरपि श्रवणात् । नहि प्रमाणसिद्धस्य स्वरूपेण निषेधः सम्भवति । अत एव संयोगेन

समवायेन वा घटवति कपिसंयोगवति वृक्षादौ च आप्तेन घटो नास्ति कपिसंयोगो नास्तीत्युक्ते सम्बन्ध-भेदमवच्छेदकभेदं वा आदाय तत्प्रामाण्यमुपपादयन्तो दृश्यन्ते । एवञ्च ब्रह्मकाण्डवत् कर्मकाण्डा-दीनामपि तुल्यवत् प्रामाण्यमपरिहार्यमिति किमधिकमाचरितम् ।

ननु ब्रह्मणि [१]वियदादिप्रपञ्चः केन सम्बन्धेन निषिध्यत इति चेत् प्रमाणसिद्धसम्बन्धातिरिक्त-सम्बन्धेनेति ब्रूमः । प्रमाणसिद्ध एव सम्बन्धः क इति चेत् वियदादिद्रव्याणां संयोगः ब्रह्मतद्गुणाना-मपृथक्सिद्धत्वम्, तदितरगुणकर्मादीनां देशकालयोरिव जगदाधारताप्रयोजकस्वरूपसम्बन्धविशेष इति ब्रूमः । किमत्र प्रमाणमिति चेत् 'संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव । न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ।' इत्यादिश्रुतिस्मृतय इति गृहाण। राजा सम्बन्धिनः रक्षति इत्युक्ते सम्बन्धिषु राजकीयत्वलाभवत् ईश्वरः संयुक्तं भरते इत्युक्ते क्षराक्षरयोः स्वसंयुक्तत्वस्यैव लाभात् । एतेन वियदादिप्रपञ्चस्य ब्रह्मण्याध्यासिकसम्बन्ध इति निरस्तम् । श्रुतहानादिप्रसङ्गात् । सूत्रे मणिगणा इव इति स्मृत्युपात्तदृष्टान्तानुसारेणापि वियदादि-प्रपञ्चस्य संयोगसम्बन्धस्यैव लाभाच्च ।

## निषेधशास्त्रस्य विधिशास्त्रेण एकवाक्यतापन्नतया प्रामाण्यम्

किञ्च 'पदे जुहोति गार्हपत्ये पत्नीसंयाजं जुहोति' इत्यादिविशेषशास्त्रानुसारेण 'यदाहवनीये जुहोति' इति सामान्यशास्त्रस्य तद्विषयेतरविषयत्वेन विशेषशास्त्रसमतया प्रामाण्यवत् 'यस्मिन् द्यौः पृथिवी चान्तरिक्षम्, मयि सर्वमिदं प्रोतम्' इति विशेषशास्त्रानुसारेण 'नेह नानास्ति किञ्चन, एकमेवा-द्वितीयमि'त्यादिसामान्यशास्त्रस्य तद्विषयेतरविषयत्वेन विशेषशास्त्रतुल्यतयैव प्रामाण्यस्याभ्युपगमो युक्तः । सामान्यशास्त्रस्य वस्तुतो विशेषशास्त्रविषयेतरविषयत्वेन प्रामाण्याश्रयणे सामान्यशास्त्रत्वस्यैव तन्त्रत्वात् । तस्य विधायकशास्त्र इव निषेधकशास्त्रेऽपि सत्त्वात् । अत एव 'न हिंस्यात् सर्वा भूतानि' इत्यादिशास्त्रस्य निषेधार्थत्वे अनिषेधार्थत्वे च सामान्य(समान - पा.)शास्त्रत्वात्तत्प्राप्तमौत्सर्गिक-मित्युच्यते तान्त्रिकैः । अग्नीषोमीयादिशास्त्रस्य विशेषशास्त्रत्वात् तत्प्राप्तमापवादिकमिति । न च अग्नीषोमीयादिशास्त्रं न हिंस्यादिति निषेधशास्त्रेण निषेध्यसमर्पकतया एकवाक्यतापन्नं सत् प्रमाण-मिति कस्याप्यभ्युपगमोऽस्ति । विशेषाभावेन 'अतिरात्रे षोडशिनं गृह्णाती'ति शास्त्रं 'नातिरात्रे षोडशिनं गृह्णाति' इति निषेधशास्त्रेण 'ब्रह्मणे ब्राह्मणमालभेत' इति शास्त्रमपि 'ब्राह्मणो न हन्तव्य' इति निषेध-शास्त्रेण एकवाक्यतापन्नं सत् प्रमाणमिति स्यात् ।

---

१. वेदादिप्रपञ्चः इति पाठः ।

एतावांस्तु विशेषः। पूर्वोदाहृतशास्त्रयोरेकस्य सामान्यविषयत्वमपरस्य विरोधिविशेषविषयत्वम्। इदानीमुदाहृतयोर्द्वयोरपि विशेषविषयत्वमिति। तस्मादेवंविधेषु शास्त्रेषु विधिरूपयोः विधिनिषेधरूपयोर्वा शास्त्रयोः विषयव्यवस्थयैव तुल्यवत् प्रामाण्यमुपेयम्। अन्यथा बहुविप्लवापत्तेः।

तथाहि। 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिस्वरूपलक्षणपरवाक्यस्यापि निषेध्यसमर्पकत्वेन 'अदृष्टमग्राह्यमव्यवहार्यमलक्षणमि'ति लक्षणनिषेधपरवाक्येन एकवाक्यतापन्नत्वेन प्रामाण्यमिति[१] स्यात्। स्वरूपलक्षणनिषेधस्य स्वरूपनिषेध एव पर्यवसन्नत्वेन ब्रह्मणो नृशृङ्गादिवत् निःस्वरूपत्वापत्तेः। एवं 'सदेव सोम्येदमग्र आसीत्', 'अस्ति ब्रह्मेति चेद्वेद' इत्यादिनिषेध्यसमर्पकतया 'असद्वा इदमग्र आसीत्, 'नासदासीन्नो सदासीत्तदानीं', 'न सन्न चासन् शिव एव केवलः' इति निषेधैकवाक्यतया प्रामाण्यापत्तेः। 'ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति सच्छब्दस्य ब्रह्मपर्यायित्वश्रवणात्। तथा 'आत्मा वा इदमेक एवाग्र आसीत्', 'ब्रह्म वा इदमग्र आसीत्' इत्यादेर्निषेध्यसमर्पकत्वेन 'इदं वाग्रे नैव किञ्चनासीत्' इति निषेधैकवाक्यतया प्रामाण्यापत्तेः। तथा 'यदेकमव्यक्तमनन्तरूपमि'ति ब्रह्मणोऽपरिच्छिन्नत्वावेदकश्रुतेर्निषेध्यसमर्पकत्वेन 'न सन्दृशे तिष्ठति रूपमस्य', 'तमादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतमि'ति निषेधैकवाक्यतया प्रामाण्यापत्तेः।

## ब्रह्मणः अगम्यत्वनिराकरणम्

किञ्च किं बहुनोक्तेन 'एतमेव ब्रह्मेत्याचक्षते, ब्रह्मैव वाचः परमं व्योम यमिन्द्रमाहुर्वरुणं यमाहुः, वचसां वाच्यमुत्तमम्' इत्यादिश्रुतिस्मृतीनां ब्रह्मणो वाच्यत्वावेदकानां 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे'ति निषेधैकवाक्यतया ब्रह्मणः स्वरूपेण शब्दवाच्यत्वनिषेधवत् 'औपनिषदः पुरुषः, औपनिषदं पुरुषं पृच्छामि, सर्वे वेदा यत्पदमामनन्ति, सर्वे वेदा यत्रैकं भवन्ति, वेदैश्च सर्वैरहमेव वेद्यः' इत्यादिश्रुतिस्मृतीनां ब्रह्मणो वेदैकसमधिगम्यत्वपराणां 'नापि वाचा', 'नान्यैर्देवैस्तपसा कर्मणा वा, नाहं वेदैर्न तपसा न दानेन च चेज्यया' इति निषेधैकवाक्यतया ब्रह्मणः स्वरूपेण वेदैकसमधिगम्यत्वनिषेधप्रसङ्गः। तथा 'एषोऽणुरात्मा चेतसा वेदितव्यः, दृश्यते त्वग्र्यया बुध्या, मनसैवानुद्रष्टव्यम्' इत्यादिश्रुतीनां ब्रह्मणो मनोमात्रगम्यत्वावेदकानां 'यन्मनसा न मनुते' इति निषेधैकवाक्यतया स्वरूपेण मनोमात्रगम्यत्वनिषेधप्रसङ्गः। तथा 'द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, 'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः' इत्यादिश्रुतिस्मृतीनां ब्रह्मणः साक्षात्कारश्रवणमननादिविषयत्वावेदकानाम् 'अदृष्टमव्यवहार्यमग्राह्यमचिन्त्यमव्यपदेश्यम्', 'नायमात्मा प्रवचनेन लभ्यो न मेधया न

---

१. प्रामाण्यप्रसङ्गात् - पा.।

बहुना श्रुतेन । नेन्द्रियाणि नानुमानम्' इत्यादिनिषेधैकवाक्यतया स्वरूपेण तस्य 'न चक्षुषा गृह्यते न चक्षुषा पश्यति कश्चनैनमि'ति चक्षुर्ग्राह्यत्ववद्दर्शनश्रवणमननादिविषयत्वनिषेध[१]प्रसङ्गाच्च । न चेष्टापत्तिः, ब्रह्मसाक्षात्कारार्थं वेदान्तानामनारम्भणीयत्वप्रसङ्गात् । मोक्षसाधनब्रह्मसाक्षात्कारार्थं श्रवणाद्यननुसन्धानप्रसङ्गाच्च ।

किञ्चैवं 'नावेदविन्मनुतेदं बृहन्तमि'त्युक्ताप्तघटकश्रुतिविरोधः । ननु 'यन्मनसा न मनुते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा' इति श्रुतेः स्वरूपेण मनोगम्यत्वस्य आगमगम्यत्वस्य वा न निषेधोऽर्थः । किन्त्वनवहितमनोगम्यत्वस्य वेदवेदोपजीवीतरदुरागमगम्यत्वस्य च निषेधः । अत एव 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इति श्रुत्यैवाग्र्यत्वादिना बुद्धिशब्दितमनआदेर्विशेषणम् । तथा च 'नावेदविन्मनुतेदं बृहन्तमि'ति श्रुतौ वेदान्योपायमनुसरद्गम्यत्वनिषेधो युक्तः । 'दुरागमास्तदन्ये ये तैर्न ज्ञेयो जनार्दनः' इति स्मृतौ वेदभारतान्यागमानां दुरागमत्वमुक्त्वा परमात्मनस्तदगम्यत्वोक्तेरिति चेत् हन्तैवं तर्हि 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह, न चक्षुषा गृह्यते नापि वाचा, न चक्षुषा पश्यति कश्चनैनं, नेन्द्रियाणि नानुमानं, नायमात्मा प्रवचनेन लभ्यः, न मेधया न बहुना श्रुतेन, अदृष्टम् अचिन्त्यम्' इत्यादिश्रुतीनामपि 'एकः शब्द सम्यग्ज्ञातः', 'न म्लेच्छितवै' इत्यादिवाक्यपर्यालोचनया च नित्यव्याकरणसंस्कृतशब्दान्यशब्दवाच्यत्वनिषेधोऽर्थः । असंस्कृतदिव्यान्यचक्षुर्ग्राह्यत्वनिषेधोऽर्थः । सदनुमानान्यानुमानगम्यत्वनिषेधोऽर्थः । नियमादृष्टविशेषाप्रयोजकश्रवणगम्यत्वनिषेधोऽर्थः । तादृशश्रवणस्यादितः साक्षात्कारगम्यत्वनिषेधश्चार्थ इत्यस्तु ।

## ब्रह्मणो दिव्यशरीरसमर्थनम्

किञ्च 'सहस्रशीर्षा पुरुषः सहस्राक्षः', 'सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम्', 'विश्वतश्चक्षुरुत विश्वतो मुखः', 'सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् । सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति' इत्यादिश्रुतिस्मृतिपर्यालोचनया 'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्', 'सपर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् । विजरो विमृत्युः, अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः, यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्, न तस्य कार्यं करणं च विद्यते' इत्यादिनिषेधानामप्यतथाभूतविशरणोपचयविशिष्टविग्रहकरचरणाद्यवयवचक्षुरादिकरणनिषेधपरत्वमस्तु । एवं 'विभुं चिदानन्दमरूपमद्भुतम्' न सन्दृशे तिष्ठति रूपमस्य, अस्थूलमनणु' इत्यादिरूपपरिमाणनिषेधश्रुतीनां 'यदेकमव्यक्तमनन्तरूपं, महान्तं विभुमात्मानं, 'अणोरणीयान् महतो महीयान्', 'आदित्यवर्णं तमसः परस्तात्, ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलं, आप्रणखात् सर्व एव सुवर्णः, इन्द्रो मायाभिः पुरुरूप

१. प्रसङ्गश्च इति पाठः ।

ईयते, पश्य मे पार्थ रूपाणि' इत्यादिश्रुतिस्मृतिपर्यालोचनया अतथाभूतपरिमाणनिषेधपरत्वमस्तु । न चाशरीरमकायमिति विग्रहस्य स्वरूपेण निषेधः । सविशेषणे हीति न्यायेन अस्मदादिविग्रहसाधारण-विशरणोपचयरूपतद्धर्ममात्रनिषेधात् । सहस्रशीर्षा पुरुष इत्याद्युदाहृतश्रुत्यैव अस्मदादिविलक्षणविग्रह-तथाविधावयवचक्षुरादिकरणसिद्धेः । शरीरशब्दकायशब्दयोः शीर्यते चीयते उपचीयते इति व्युत्पत्त्या तदर्थत्वलाभात् । अत एव वाक्यशेषे विग्रहमङ्गीकृत्य प्राणादितद्धर्मनिषेधः । 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः, सत्यकामः सत्यसङ्कल्प' इति श्रुत्यन्तरेऽपि शरीरित्व-प्रयुक्तपाप्मजरादिमृत्युशोकपिपासादिधर्मनिषेधपूर्वकं तस्य परमात्मनोऽनितरसाधारणसत्यकामत्वा-द्युक्तिश्च सङ्गच्छते । अत एव 'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं चे'ति श्रुत्या परब्रह्मणः मूर्तामूर्तात्मक-रूपद्वयमुक्त्वा तस्य मूर्तामूर्तात्मकप्रपञ्चतोऽतिवैलक्षण्यमिति, नेत्यर्थकेन नेति नेतीति वाक्यशेषेण वर्णितम् ।

किञ्च 'न तत्समश्चाभ्यधिकश्च दृश्यते न चास्य कश्चिज्जनिता न चाधिपः, न तस्येशे कश्चन तस्य नाम महद्यशः, 'यस्मात्परं नापरमस्ति किञ्चित्', 'तस्माद्धान्यन्नपरः किञ्चनास', 'मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय' इत्यादिश्रुतिस्मृतिपर्यालोचनया विशेषनिषेधस्य विशेषाभ्यनुज्ञापूर्वकत्वन्यायेन 'एकमेवाद्वितीयं, नेह नानास्ति किञ्चन, केवलो निर्गुणश्चे'त्यादि सामान्यनिषेधानां विहितेतरविशिष्य-निषिद्धपरत्वमेव युक्तम् । अन्यथा 'यस्मात्परं न, तस्माद्धान्यन्नपरः, मत्तः परतरं न' इति श्रुतिस्मृतिषु परशब्दितोत्कृष्टत्वविशिष्टान्यत्प्रतिषिध्य 'अपरमस्ति किञ्चित्, किञ्चनास, अन्यत् किञ्चिदस्ति धनञ्जय' इति परमात्मापेक्षया अप्रकृष्टप्रपञ्चसत्त्वविधानं न स्यात् । सर्वात्मना परनिषेधपरत्वे 'यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्' इतिवत् यस्मात् परं न, अपरं न इति श्रुत्याकारः स्यात् । 'केवलो निर्गुणश्चे'ति निषेधस्यापि धर्ममात्रनिषेधपरत्वे पूर्ववाक्ये विशिष्यैकत्वादिधर्मविधानानुपपत्तेः । एकत्वदेवतात्वादि-विहितगुणानां निर्गुणत्वेन समुच्चयाभिधायकचशब्दानुपपत्तेश्च । गुणशब्दस्य धर्ममात्रवाचितया सामान्यशब्दत्वेन 'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' इतिवद्विहितेतरपरत्वेन तन्निषेधसमुच्चय-मादाय व्यवस्थोपपत्तेः । 'यदाहवनीये जुहोती'ति सामान्यशास्त्रस्य पदे जुहोतीति, गार्हपत्ये पत्नीसंयाजं जुहोतीति विशेषशास्त्रानुरोधेन तदतिरिक्तहोमपरत्वेन प्रामाण्यप्रतिपादनवत् निर्गुणश्चेति सामान्यशास्त्रस्य 'यः सर्वज्ञः सर्ववित्', 'परास्य शक्तिर्विविधैव श्रूयते', 'एष नित्यो महिमा ब्राह्मणस्य', 'सत्यधर्माण-मूतये' इत्यादिधर्मविशेषबुद्ध्यनुरोधेन एको देव इत्यादि धर्मविशेषविधायकपूर्ववाक्यानुरोधेन च तदितरविशेषपरत्वेन प्रामाण्यप्रतिपादनपरत्वोपपत्तेश्च । एवं चादुःखमसुखं समं, 'वैषम्यनैर्घृण्ये न' इत्यादिविशेषनिषेधोऽप्यनुकूलितो भवति । वैषयिकसुखस्य सान्तत्वसातिशयत्वसाधनपारतन्त्र्यादिना

हेयत्वं, दुःखस्य स्वरूपेण तत्साधनस्य साधनत्वेनेति विवेकः। एवं 'नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतः-प्रज्ञं न प्रज्ञं नाप्रज्ञं प्रज्ञानघनं, निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' इत्यादिज्ञानक्रियादिसामान्य-निषेधानामपि 'स्वाभाविकी ज्ञानबलक्रिया च, ज्ञानं नित्यं बलं नित्यं क्रिया नित्या परात्मनः, निरनिष्टो निरवद्यः, विचित्रशक्तिः पुरुषः पुराणो, न चान्येषां तादृशाः शक्तयः स्युः' इत्यादिश्रुतिपर्यालोचनया 'परास्य शक्तिर्विविधैव श्रूयते' इत्यादिपूर्ववाक्यपर्यालोचनया च परमात्मज्ञानबलक्रियासु तदीयशक्ता-विव परत्वस्वाभाविकत्वनित्यत्वानिष्टकारित्वावद्यत्वव्यतिरेकलाभात् अतथाभूतास्मदादिसाधारण-ज्ञानबलक्रियादिधर्मनिषेधपरत्वमेवावसीयते। न तु स्वरूपेण तन्निषेधः। न च 'एकमेवाद्वितीयमि'-त्यादीनां 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादिनिषेधेन एकार्थत्वेन 'नान्तरिक्षे न दिवी'त्यादिव-न्नित्यानुवादत्वप्रसङ्गः। न्यायप्राप्तत्वेन तस्य सत्यत्वात्। पूर्वं तात्पर्यनिश्चयदशायां श्रुतितो वा तद्धैक आहुरित्यादिवत् कुसमयतो वा समाभ्यधिकप्राप्तिसत्त्वेन तदनुवादेन निषेधोपपत्तेश्च। न चैवमेक-मेवाद्वितीयमित्यादौ द्वितीयादिपदे लक्षणाप्रसङ्गः, विशेषरूपेण निषेध्योपस्थापकत्वादिति वाच्यम्। 'घटेन जलमाहर' इत्यादाविव व्यक्तिवचनन्यायेन प्रकृतेऽपि वस्तुतः समाभ्यधिकयोरेव निषेध्ययोः सामान्यरूपेणोपस्थितिमादाय निषेधप्रवृत्तिसम्भवेन लक्षणाप्रसङ्गाभावात्।

एतेन 'अशरीरमकायं तदपाणिपादमि'त्यादिनिषेधानां विशेषविषयत्वे लक्षणाप्रसङ्ग इति निर-स्तम्। लक्षणां विनैव उक्तन्यायेन निषेधसम्भवात्।

किञ्च 'तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिः तस्मादर्चिरेव नक्तं ददृशे न धूम' इत्यत्र निषेधे दृशेः दिवा दूरे भूम्ना अग्निदर्शने नक्तं दूरे भूम्ना धूमदर्शने च लक्षणामङ्गीकृत्य तस्य नञन्वयवच्च अपशवो वा अन्ये गो अश्वेभ्यः इति निषेधे पशुशब्दस्य प्रशस्तपशुलक्षकत्वमङ्गीकृत्य तस्य नञन्वयवच्च तदपाणि-पादमित्यादिनिषेधेऽपि पाण्यादिपदानां नियतदेशत्वादिविशिष्टास्मदादिसाधारणपाणिपादादिषु लक्षणा-मङ्गीकृत्य तेषां नञन्वयोपपत्तिः। नार्चिर्न धूम इत्यादौ प्रत्यक्षविरोधस्येव 'तदपाणिपादं', 'सर्वतः पाणिपादं सर्वतोऽक्षिशिरोमुखम्' इत्याद्युदाहृतविशेषशास्त्रविरोधस्य लक्षणाकल्पकत्वोपपत्तेः। न च (हि) प्रत्यक्षविरोध एव लक्षणाकल्पक इति नियमोऽस्ति। शास्त्रदृष्टविरोधादिति पूर्वतन्त्रसूत्रे दृष्ट-विरोधवच्छास्त्रविरोधस्य च लक्षणाबीजत्वेनोपक्षेपात्। एतेन एकमेवाद्वितीयमित्यादिनिषेधानां ब्रह्मणि ब्रह्मव्यतिरिक्तद्वितीयनिषेधमात्रपरत्वेन ब्रह्मव्यतिरिक्तसर्वमिथ्यात्वसिद्धिरिति परास्तम्।

परिच्छिन्नमायाविद्यावच्छेदेन अपरिच्छिन्ने ब्रह्मणि प्रपञ्चसत्त्वेऽपि तदनवच्छेदेन नास्तीत्युक्त-द्वितीयनिषेधोपपत्तेः। मूलावच्छेदेन वृक्षे कपिसंयोगसत्त्वेऽपि शाखावच्छेदेन तदभावदर्शनात्। न च मायाशब्दिताविद्यायाः ब्रह्मवदपरिच्छेदः परेणाङ्गीकृतो युक्तो वा। 'आदित्यवर्णं तमसस्तु पारे,

आदित्यवर्णं तमसः परस्तात्', 'योऽस्माकमविद्यायाः परं पारं तारयसि' इति विरोधात् । न च 'तमसा गूळ्हमग्रे', 'मायिनं तु महेश्वरमि'त्यादिश्रुत्या ब्रह्मणस्तमोगूढत्वादिवर्णनविरोधः । परिच्छिन्नाङ्गुल्या नयनपटलेन च तदधिकपरिमाणवस्त्वाच्छादनवत् परिच्छिन्नेन तमो मायाशब्दिताज्ञानेनाप्यपरिच्छिन्न-ब्रह्माच्छादनसम्भवात् । 'पादोऽस्य विश्वा भूतानि' इति श्रुत्या 'सर्वस्माज्ज्यायान्' इति श्रुत्या च जगतो ब्रह्मैकदेशत्ववर्णनात् तस्य सर्वतो ज्यायस्त्ववर्णनाच्च । न च मायाशब्दिताविद्या ब्रह्मरूपविषय-सम्बन्धिनी सती तदावरिकेत्यत्र मानमस्ति । तथा त्वदभ्युपगमो वा येन विषयसम्बन्ध्यावरकत्वेन आव्रियमाणब्रह्मापेक्षया तस्याधिक्यं स्यात् । अन्यथा तस्यैव ब्रह्मशब्दमुख्यार्थत्वापत्तेः । ब्रह्मणः परिच्छिन्नत्वापत्तेश्च । मायिनमित्यत्र मत्वर्थीयप्रत्ययस्य जीवनिष्ठब्रह्मानाच्छादकाज्ञानविषयत्व-सम्बन्धार्थत्वेन उपपत्तेः । तदुक्तं कल्पतरौ 'जीवस्थाया अविद्यायाः विषयः ब्रह्मशुक्तिवत् । ऊचे वाचस्पतिर्भाष्यश्रुत्योर्दृश्यव(दिति)देव तु' । भगवत्पादैरप्युक्तम्— 'पुङ्गतमेव हि तम' इति । तथा च अविद्याशब्दितमायावच्छेदेन ब्रह्मणि वियदादिद्वितीयप्रपञ्चसत्त्वं दुर्वारम् । न ह्यवच्छेदकभेदेन वस्त्ववस्थितौ निषेधः स्वप्रतियोगिमिथ्यात्वापादको दृष्टचरः । वृक्षे तथाविधप्रतियोगिनि कपिसंयोगे मिथ्यात्वप्रतीतिव्यवहारयोरदर्शनात् ।

## ब्रह्मगुणानां मिथ्यात्वनिराकरणम्

ननु तथापि ब्रह्मगुणानां ज्ञानानन्दादीनामवच्छेदकभेदेन सत्त्वस्य त्वयानभ्युपगमात् तन्निषेधः श्रुत्या क्रियमाणः तन्मिथ्यात्वापादकः कथं न स्यात् इति चेन्न ।

स्यादेव । अवच्छेदकभेदेनेव सम्बन्धभेदेऽप्यलक्षणमित्यादिलक्षणनिषेधवत् ज्ञानानन्दादिगुण-निषेधोपपत्तेः । अवच्छेदकभेदेन वा सम्बन्धभेदेन वा व्यवस्थितनिषेधवत् सम्बन्धभेदेन व्यवस्थित-निषेधस्यापि स्वप्रतियोगिमिथ्यात्वानापादकत्वात् । न हि स्वरूपसम्बन्धेन घटाभाववति भूतले संयोग-सम्बन्धेन तत्र तदभावः तन्मिथ्यात्वापादकः । ज्ञानानन्दादीनां ब्रह्मस्वरूपलक्षणत्वमभ्युपगच्छता परेणापि तन्निषेधगतेरेवमेव वक्तव्यत्वात् । अन्यथा श्रुतिसिद्धज्ञानानन्दादिस्वरूपस्य ब्रह्मणः शून्यव-न्निरस्वरूपत्वप्रसङ्गात् । न चालक्षणमिति निषेधः तटस्थलक्षणनिषेधः न स्वरूपलक्षणनिषेधः इति वाच्यम् । सङ्कोचकाभावेन तस्य लक्षणमात्रनिषेधत्वात् । अन्यथा केवलो निर्गुणश्चेत्यादिनिषेधः दुःखादिहेयगुणनिषेध एव न तु सार्वज्ञादिकल्याणगुणनिषेध इति स्यात् । तथा च अवच्छेदकभेदेन सम्बन्धभेदेन वा व्यवस्थितः निषेधः न स्वप्रतियोगिमिथ्यात्वापादकः । किन्तु यदवच्छेदेन येन सम्बन्धेन स प्रतियोगी प्रतिपन्नः तत्र तदवच्छेदेन तेनैव सम्बन्धेन तस्य स्वरूपेण निषेधः । अत एव

बाधावतारानन्तरं शुक्तिरूप्ये मिथ्यात्वप्रतीतिः व्यवहारो वा सार्वजनीनः । न च निरंशे ब्रह्मणि अवच्छेदकाभावः । अंशशब्देन अवयवोक्तौ तदभावमात्रेण अवच्छेदकाभावासिद्धेः । द्रव्यारम्भक-द्रव्यस्यैव अवच्छेदकत्वमिति नियमाभावात् । बहिर्द्रव्येषु प्रत्यक्षजनकतायां महत्त्वसमानाधि-करणोद्भूतरूपवत्त्वादेरवच्छेदकत्वात् । न्यायनये आत्मनो निरवयवत्वेऽपि तस्मिन् निरवयवस्यापि मनसः स्वसंयोगावच्छेदकत्ववत् निरंशेऽप्यात्मनि निरंशभूताविद्याया अपि वियदादिप्रपञ्चवृत्त्यव-च्छेदकत्वोपपत्तेश्च ।

## ब्रह्मणि स्वाभाविकावच्छेदकाङ्गीकारः अवर्जनीयः
## कर्मकाण्डतुल्यतया ब्रह्मकाण्डप्रामाण्योपसंहारः

किञ्चापरिच्छिन्नब्रह्मणि परिच्छिन्नमायाशब्दिताविद्यासम्बन्धनिर्वाहाय अवयवातिरिक्तस्वाभा-विकप्रदेशविशेषः परेणाङ्गीकार्यः । अन्यथा तादृशाविद्यासम्बन्धस्य अव्यवस्थितदेशत्वापत्तेः । न च ब्रह्मासम्बन्धिन्येव सेति युक्तम् । 'मायिनं तु महेश्वरम्', 'अस्मान्मायी सृजते विश्वमेतत्' इति श्रुत्या तत्र तत्सम्बन्धावेदनात् । 'तमसा गूळ्हमग्रे', 'तमो वा इदमेकमास', 'तत्परेणेरितं विषमत्वं प्रयाति' इत्यादिश्रुतौ ब्रह्मणस्तमोगूळ्हत्वस्य तत्प्रेरकत्वस्य च प्रतीतेश्च । न हि सम्बन्धं विना ब्रह्मण-स्तत्प्रेरकत्वमुपपद्यते । अविद्यायास्तत्प्रेर्यत्वं वा । अबाधितानादिश्रौतविशिष्टव्यवहारनिर्वाहाय परिच्छि-न्नाविद्यासम्बन्धिनिर्वाहायापि अवच्छेदकस्य तथाविधस्य कल्पनावश्यम्भावात् । अत एव यागादीनां श्रुत्यावेदितकार्यकारणभावनिर्वाहाय तच्छ्रुत्या यागत्वादीनां स्वर्गजनकत्वसामानाधिकरण्यप्रतीतिं स्वर्गस्य यागादिजन्यत्वसामानाधिकरण्यप्रतीतिं च प्राथमिकीमुपेत्य यागादिषु कारणतावच्छेदकतया यागत्वाद्यवान्तरजातिं च स्वर्गं प्रति श्रुत्यावेदितकार्यकारणभावनिर्वाहाय तत्तच्छ्रुत्या यागत्वादीनां कारणातावच्छेदकतया अनतिप्रसक्तां यागत्वाद्यवान्तरजातिं स्वर्गेऽपि तज्जन्यतावच्छेदकतयाऽनति-प्रसक्तां स्वर्गत्वावान्तरजातिं च पश्चादाकलयन्ति । तथापि ब्रह्मसप्रपञ्चत्वनिष्प्रपञ्चत्वश्रुतीनां वृक्षे कपिसंयोग-तदभावावेदकाप्तवाक्यवत् तुल्यप्रामाण्यनिर्वाहाय ग्रहणाग्रहणवाक्ययोरिव उक्तरीत्या व्यवस्था आश्रयणीयेति स्थितम् ॥

ननु ग्रहणाग्रहणश्रुत्योरिव सप्रपञ्चत्वनिष्प्रपञ्चत्वश्रुतीनां अनुष्ठेयविषयत्वाभावेन विकल्पमाश्रित्य प्रामाण्यसमर्थनं न सम्भवतीति चेन्न । वृक्षे अननुष्ठेययोरपि कपिसंयोगतदभावयोर्मूलाग्ररूपावच्छेदक-भेदेन तुल्यवत्सद्भावेन व्यवस्थितत्वात् ब्रह्मणि सप्रपञ्चत्वनिष्प्रपञ्चत्वयोरपि तथैव व्यवस्थितत्वोप-पत्तेः । तस्मात् कर्मकाण्डादीनां ब्रह्मकाण्डवदबाधितार्थकत्वेनैव प्रामाण्यमकामेनापि स्वीकार्यमिति ॥

नन्वेवं वेदप्रामाण्यसमर्थनस्य प्रकृते का सङ्गतिरिति । उच्यते । नृहरौ धर्ममात्रशून्ये तद्विशेष-लक्षणाभावात् तत एव प्रमाणप्रवृत्त्यसम्भवाच्च अनिर्धारिते तस्मिन् त्वत्कर्तृकसेवैवानुपपन्नेत्याक्षेप-निरासप्रयोजकत्वेन कृत्स्नवेदप्रामाण्यसमर्थनस्यावश्यकत्वेन अस्त्येव प्रकृते सङ्गतिरिति । ततश्च नृसिंहस्य सामान्यविशेषधर्मसत्त्वात् लक्षणसम्भवेन प्रमाणप्रवृत्तिसम्भवेन च तत्स्वरूपावधारणोपपत्तेः युक्तैव तस्य सेवेति ॥

## वेदस्य नृहरिविषयकप्रमाजनकत्वसमर्थनम्

ननु तथापि न नृसिंहे वेदस्य प्रामाण्यमुपपद्यते । तत्प्रमाणं तदेव भवितुमर्हति यत् तद्विषयक-प्रमाजननस्येष्टे । शब्दसमुदायात्मकवेदस्य न तावत्पदार्थविधया नृसिंहोपस्थापकत्वम् । वैदिकपदानां तत्र शक्तिग्रहासम्भवात् । शक्तिग्रहो हि उपस्थित एवार्थे वाच्यः । न च नृसिंहस्योपस्थितिः वेदादन्येन सम्भवति । 'नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति तस्मादाहुर्वेदा' इति इत्यादिश्रुत्या नृसिंहरूपे परमात्मनि प्रत्यक्षादिगम्यत्वं प्रतिषिध्य वेदैकसमधिगम्यत्ववर्णनात् ॥ हेतुदृष्टान्तवर्जितं, 'नैषा तर्केण मतिरापनेया', नावेदविन्मनुते तं बृहन्तमि'त्यादिना अनुमानाद्यगम्यत्वश्रवणाच्च । न च वेदेनैव तदुप-स्थितिः, स्वगतपदानां सङ्गतिग्रहः इति युक्तम् । शक्यतावच्छेदकरूपेण उपस्थितेरेव शक्तिग्रहाङ्गत्वात् वाक्यार्थविधया उपस्थितेश्च अतथात्वादिति चेन्न ।

'यूपं तक्षति यूपमष्टाश्रीकरोति', 'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च सुखं स्वर्गपदास्पदमि'त्यादिना यूपस्वर्गादिपदानां वाक्यार्थविधया उपस्थितेषु दारुविशेषसुखविशेषादि-ष्विव 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति', 'तद्विजिज्ञासस्व तद्ब्रह्मे'ति, 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं पूर्वं तेन नारायणः स्मृत' इत्यादिना नारायणादिपदानां वाक्यार्थविधया उपस्थिते नृसिंहरूपे परे ब्रह्मणि शक्तिग्रहोपपत्तेः । प्रथमं वाक्यार्थविधया उपस्थित-स्यापि जगज्जन्मादिकारणत्वादेः द्वितीयाद्युपस्थितौ प्रकारत्वसम्भवेन तस्यैव अनतिप्रसक्तस्य ब्रह्मादि-पदशक्यतावच्छेदकत्वोपपत्तेः । अन्यथा यूपस्वर्गादिपदयुक्तवाक्यानामपि तत्तद्वाक्यार्थे प्रामाण्यं न स्यात् । यूपादिपदानां लौकिकत्वेन शक्यतावच्छेदकरूपेण प्रथमं प्रत्यक्षादिना उपस्थित्यसम्भवात् । न हि पदजन्यपदार्थोपस्थितिं विना तत्संसर्गरूपवाक्यार्थावगतिः सम्भवति । तस्मादुक्तन्यायेनैव यूपादिपदानां शक्तिग्रह इति वाच्यम् । एवं नृसिंहे वेदप्रामाण्यसिद्धिरप्रत्यूहेति किमनुपपन्नम् ।

ननु न वैदिकपदानां ब्रह्मणि शक्तिः । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुत्या परे ब्रह्मणि शब्दमात्रशक्तेः स्वरूपेणैव निषेधात् । न हि वाच्यप्राप्तिः शक्तिशब्दितसाक्षात्सम्बन्धादन्या

सम्भवति । न च साधकं वा प्रमाणं बाधकं विना साक्षात्सम्बन्धं नावगाहत इत्यस्ति । न चैवं तवापि ब्रह्मपरवेदान्तानां शक्तिं विना बोधकत्वायोगेन प्रामाण्यं न स्यादिति वाच्यम् । मम शब्दानां ब्रह्मणि शक्त्यभावेऽपि लक्षणया बोधकत्वसम्भवेन प्रामाण्योपपत्तेः ।

किञ्च केवलो निर्गुणश्चेति श्रुत्या निर्धर्मकत्वेन सिद्धे ब्रह्मणि कथं शब्दानां शक्तिर्युज्यते । लोके तत्तदर्थेषु शब्दानां प्रवृत्तौ धर्माणामेव निमित्तत्वावधारणात् इति चेन्न । निरस्तत्वात् ।

किञ्च 'ब्रह्मैव वाचः परमं व्योम', 'तदेव ब्रह्म परमं कवीनामाहुः', 'एतमेव ब्रह्मेत्याचक्षते', 'तत्सत्यमित्याचक्षते', 'एतमेव सन्तम्, स इदं सर्वं मध्यतो दधे यदिदं किञ्च यदिदं मध्यतो दधे यदिदं किञ्च तस्मान्माध्यमा इत्याचक्षते एतमेव सन्तम् । प्राणो वै गृत्सोऽपानो मदः स यत्प्राणो गृत्सोऽपानो मदः, तस्माद्गृत्समद इत्याचक्षते एतमेव सन्तम्; तस्येदं विश्वं मित्रमासीत् यदिदं किञ्च तद्यदस्येदं विश्वं मित्रमासीत् यदिदं किञ्च तस्माद्विश्वामित्रस्तस्माद्विश्वामित्र इत्याचक्षते । सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाभिवदन् यदास्ते । धाता पुरस्ताद्यमुदाजहार', 'यो देवानां नामधा एक एव । यमिन्द्रमाहुर्वरुणं यमाहुः । नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती, वचसां वाच्यमुत्तमम्' इत्यादिश्रुतिस्मृतिषु ब्रह्मादिसर्ववैदिकशब्दानां परमात्मनि न्यायप्रसिद्धिवर्णनात्, यौगिकार्थवर्णनपुरस्सरं आर्यप्रसिद्धिसत्त्ववर्णनात्, तत्र तत्रावधारणेन तेषां तत्र परममुख्यवृत्तिलाभाच्च योगरूढी दुर्वारे । न चैवं 'कश्छन्दसां योगमावेद धीरः' इति श्रुत्या परे ब्रह्मणि शब्दानां योगवृत्तिनिरासो न स्यादिति वाच्यम् । तथा वैदिकशब्दानां योगवृत्तेर्वेदविशेषोपजीविप्रमाणं विना दुर्ज्ञानत्ववर्णनेन स्वरूपेण निरासाकरणात् । अन्यथा श्रुतिषूदाहृतासु अन्यासु च यौगिकार्थवर्णनं न स्यात् । न चैवं 'अप्राप्य मनसा सहे'ति ब्रह्मणि शक्तिनिषेधो न स्यादिति वाच्यम् । उदाहृतानेकश्रुतिस्मृतिविरोधेन 'अप्राप्य मनसा सहे'त्यस्य वाचां साकल्येन ब्रह्मप्रतिपादननिषेधपरत्वौचित्यात् । अन्यथा 'न चक्षुषा गृह्यते नापि वाचा' इति श्रुत्या वाग्गम्यत्वस्यैव निषेधेन लक्षणयापि तद्गम्यत्वं न स्यात् । यदि च 'नावेदविन्मनुते दं बृहन्तं', 'वेदा ह्येवैनं वेदयन्ति तस्मादाहुर्वेदा' इति, 'सर्वे वेदा यत्पदमामनन्ति', 'सर्वे वेदा यत्रैकं भवन्ति', 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादि श्रुतिस्मृत्यविरोधाय 'न चक्षुषा गृह्यते नापि वाचा' इत्यादिश्रुतेरसंस्कृतवेदवेदोपजीव्यन्यदुरागमगम्यत्वनिषेधपरत्वम्, तर्हि तथैव श्रुतिस्मृत्यविरोधाय 'अप्राप्य मनसा सह' इत्यादेरपि तथावधानरहितमनःसहितदुरागमगम्यत्वनिषेधपरत्वमस्तु । 'न हि सर्वमालिङ्ग्य निवृत्तमुद्दिश्य पर्वतमनालिङ्ग्य निवर्तते' इत्याप्तोक्तिः सर्वथा तदालिङ्गनाभावपरा, किन्तु साकल्येन तदालिङ्गनाभावपरैव । न चैवं सङ्कोचे मानाभावः । उदाहृतानेकश्रुत्यादीनां सत्त्वात् । न चोदाहृतश्रुत्यादीनां

लक्षणया ब्रह्ममात्रपरत्वेन न तैर्ब्रह्मणो वाच्यत्वसिद्धिरिति शक्यम् । अन्योन्याश्रयात् । 'यतो वाच' इत्यादेरिव लक्षणया सखण्डब्रह्मस्वरूपमात्रपरत्वेन ततोऽप्यवाच्यत्वसिद्ध्यापत्तेश्च ।

एतेन निर्धर्मके ब्रह्मणि प्रवृत्तिनिमित्ताभावात् तत्र शक्त्या शब्दप्रवृत्तिरसम्भाविनीति निरस्तम् । निर्धर्मकत्वावेदकश्रुतेर्धर्मविधायकानेकश्रुत्यविरोधाय वैषम्यनैर्घृण्यादिहेयधर्मनिषेधपरत्वस्योक्तत्वात् । अन्यथा 'अथ कस्मादुच्यते ब्रह्मेति', 'बृहन्तो ह्यस्मिन् गुणाः', 'अथ कस्मादुच्यते परं ब्रह्म तस्मादुच्यते परं ब्रह्मे'ति श्रुतिभ्यां गुणपूर्तिं प्रवृत्तिनिमित्तीकृत्य ब्रह्मशब्दवाच्यत्ववर्णनं न स्यात् । न चैवं 'अप्राप्य मनसा सहे'ति श्रुतेः साकल्येन प्रतिपादकनिषेधपरत्वमाश्रित्य प्राप्तिशब्दितसाक्षात्सम्बन्धरूपशब्द-शक्तिनिषेधपरत्वत्यागे किं कारणमिति वाच्यम् । शक्तिसद्भावावेदकश्रुतिस्मृतिविरोधं कारणं गृहाण । अन्यथा 'असङ्गो ह्ययं पुरुष' इति सङ्गमात्रनिषेधावेदकश्रुत्यविरोधाय ब्रह्मणि वैदिकशब्दानां लक्षणापि न स्यात् । न च सङ्गनिषेधकश्रुतेः साक्षात्सम्बन्धविषयत्वमेवौत्सर्गिकं, लक्षणा तु मुख्यार्थसम्बन्ध-रूपत्वेन परंपरासम्बन्धरूपा । न च बाधकं विना तद्विषयत्वाश्रयणं युक्तमिति वाच्यम् । दूरे गत्वा साक्षात्सम्बन्धं विना लक्षणायाः परंपरासम्बन्धरूपत्वस्यैवायोगात् ।

किञ्च त्वद्रीत्यापि ब्रह्मणि शब्दशक्तेस्तत्प्रवृत्तिनिमित्तधर्माणां च निषेधबलेन ब्रह्मवत् पारमार्थिक-त्वेन नेति सिद्ध्यति । न तु नृशृङ्गादिवन्निस्स्वरूपत्वम् । एवञ्च परमते कथं ब्रह्मणः शब्दावाच्यत्वमिति न जानीमः । तस्मान्नृसिंहरूपे परे ब्रह्मणि सद्ब्रह्मनारायणादिवैदिकपदानां रूढौ योगरूढौ च साधक-सत्त्वात् बाधकाभावात् बहुशब्दप्रवृत्तिनिमित्तभूतधर्मसत्त्वात् उक्तरीत्या शक्तिग्रहसत्त्वात् आकाङ्क्षा-योग्यतादिसामग्रीसत्त्वेन शाब्दबोधसामग्रीवैकल्याभावात् नित्यनिर्दोषत्वेन अप्रामाण्यप्रयोजकदोष-शून्यत्वाच्च वेदस्य प्रामाण्यं निष्प्रत्यूहमिति सिद्धम् ।

## ब्रह्मणि वेदानां लक्षणाङ्गीकारानुपपत्तिः

एतेन यत्तु कैश्चिदुक्तं न ज्ञेयब्रह्मणि पदानां शक्तिरभ्युपगम्या[१] । श्रुत्या स्वरूपेणैव तस्यास्तत्र निषेधात् । किन्तु लक्षणैवाभ्युपेया । न चासङ्गो ह्ययं पुरुषः इति ज्ञेयब्रह्मणि सङ्गमात्रनिषेधात् तद्विशेष-भूतलक्षणाभ्युपगमानुपपत्तिरिति वाच्यम् । प्रमाणमात्रस्य बाधकं विना साक्षात्सम्बन्धविषयत्वेन विधिनिषेधयोरपि साक्षात्सम्बन्धविषयत्वेन साक्षात्सम्बन्धविषयत्वौचित्यात् । लक्षणायाश्च शक्य-सम्बन्धरूपत्वेन परंपरासम्बन्धत्वात् । न च पदार्थनिष्ठवाक्यगतसत्यज्ञानादिपदानां वाक्यार्थनिष्ठ-वाक्यगततत्त्वमस्यादिपदानां च ज्ञेयब्रह्मणि लक्षणाभ्युपगमो युक्तः । तद्बीजाभावात् । अन्वयानुप-

---

१. शक्तिरभ्युपगम्यते इति पाठः ।

पत्तिर्हि लक्षणाबीजम् । न हि सत्यत्वादिधर्माणां ब्रह्मण्यन्वये काचिदनुपपत्तिरस्ति । न वा सत्यादि-पदार्थस्य ब्रह्मपदार्थभेदेन अनन्वय इति वाच्यम् । अन्वयानुपपत्तेरिव तात्पर्यानुपपत्तेरपि तद्बीजत्वात् । तत्त्वमस्यादिवाक्ये च तत्त्वंपदार्थयोः विशिष्टयोरुपहितयोः वा अभेदान्वयानुपपत्तेः तद्बीजभूतायाः सत्त्वाच्च । न चैवमननुगमः । तात्पर्यविषयानुपपत्तेरुभयत्राप्यनुगतत्वात् । अन्यथा यष्टीः प्रवेशय इत्यादौ बहुक्षीराद्यर्थवादवाक्ये वायुक्षेपिष्ठाद्यर्थवादे च मुख्यार्थानुपपत्त्यभावेन प्राशस्त्ये लक्षणा न स्यादिति ।

तदप्यपास्तम् । पदानां शक्तेः शक्यतावच्छेदकधर्माणां निषिद्धत्वापराधेन परीत्या मिथ्यात्वेऽपि नृशृङ्गादिवत् निरस्स्वरूपत्वाभावात् । निषेधस्य विहितेतरविषयत्वेन तन्मिथ्यात्वानापादकत्वात् । शक्तिशक्यतावच्छेदकधर्मनिषिद्धत्वापराधेन सत्त्वावेदकश्रुत्यादिबहुवाक्यविरोधेन तन्निषेधकाल्प-वाक्यस्यैव उक्तरीत्या अन्यथा वा अन्यार्थस्वीकारपरत्वौचित्यात् । बहुविप्लवाश्रयणस्य अन्याय्य-त्वात् । तथा च पारमर्षसूत्रं विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वम् इति ॥

एतेन ब्रह्मणि शक्तेः स्वरूपेणैव निषेधात् शक्यतावच्छेदकधर्माणामपि ब्रह्मणि धर्ममात्रनिषेधक-श्रुत्या स्वरूपेणैव निषेधाच्च सिद्धप्रमाणभावानां वेदान्तानां बोधकत्वं विना प्रामाण्यासम्भवेन पदजन्य-पदार्थोपस्थितिं विना तद्वाक्यार्थबोधासम्भवात्, तदसम्भवे च तत्करणत्वरूपप्रामाण्यायोगात्, प्रेक्षा-वदुपादेयत्वरूपारम्भणीयत्वाभावप्रसङ्गात् । तन्निर्वाहाय ज्ञेयब्रह्मपरवेदान्तगतानां गत्यन्तरासम्भवेन लक्षणावृत्तिरवश्याश्रयणीयेति निरस्तम् ।

उक्तरीत्या शक्तिसम्भवेन वेदान्तगतपदानां प्रामाण्योपयोगिबोधकत्वसम्भवात् । सिद्धप्रमाणभावेषु वाक्येषु तत्रैव वाक्ये लक्षणा स्वीकर्तुमुचिता यत्र वाच्यार्थान्वयानुपपत्तिरस्ति । अत एव गङ्गायां घोष इत्यादौ लक्षणामुररीकुर्वते । न च सत्यज्ञानादिवाक्ये तादृशानुपपत्तिरस्ति । ब्रह्मणि सत्यत्वादिधर्म-संसर्गान्वये वा सत्यादिपदार्थभेदान्वये वा बाधकाभावात् । ब्रह्मणि सत्यत्वादिधर्मसंसर्गव्यतिरेकस्य प्रत्यक्षागोचरत्वात्, तदभेदान्वयाभावस्यापि तथात्वात् ॥ सत्यत्वादिविधायकश्रुतिविरोधेन निर्धर्म-कत्वरूपसाध्याप्रसिद्ध्या च अनुमानस्यापि तत्र धर्मविरहसाधकत्वायोगात् । अनुमानस्य धर्मविशेषत्वेन स्वविरहसाधकत्वानुपपत्तेश्च । अपक्षधर्मस्य लिङ्गस्य पक्षे साध्यसाधकत्वायोगेन तदर्थपक्षीभूतब्रह्म-निष्ठत्वावश्यम्भावात् । निर्धर्मकत्वश्रुतेः विहितेतरवैषम्यनैर्घृण्यादिहेयधर्मविषयत्वेन अबाधकत्वाच्च । नृशृङ्गादेरपि स्वरूपेण त्रिकालसर्वदेशीयनिषेधप्रतियोगित्वरूपधर्मवत्त्वेन तत्र साध्यप्रसिद्धिरित्युक्तेरेव असम्भवाच्च । ज्ञेयत्वाभिधेयत्वरूपधर्माणां धर्मिग्राहकमानेन केवलान्वयितया सिद्धानामत्रापि सत्त्वा-

१. ब्रह्मपदार्थेन भेदान्वयः इति पाठः ।

वश्यंभावाच्च । प्रागभावप्रतियोगित्वप्रध्वंसप्रतियोगित्वादेरिव ज्ञेयत्वादीनां धर्मिरूपसत्त्वनिरपेक्षत्वोपपत्तेश्च । प्रागभावप्रतियोगिनोऽन्यदा सत्त्वेऽपि तत्प्रतियोगित्वरूपसत्त्वकाले स्वरूपेणासत्त्वस्य सर्वानुभावसिद्धत्वाच्च । स्वरूपेण सार्वत्रिकत्रैकालिकनिषेधप्रतियोगिनः नृशृङ्गादेः शृङ्गादिपदानभिधेयत्वेन गवि नृशृङ्गं नास्तीत्यादिव्यवहारे गोशृङ्गादिव्यावृत्त्यर्थं नृशशपदाद्यनुपादानप्रसङ्गात् । अन्ततो दूरे गत्वा निर्धर्मकत्वस्यापि धर्मत्वेन तस्यापि श्रुत्या निषेधे श्रुतेर्व्याहतभाषित्वेन अप्रामाण्यापत्तेः, धर्मस्वरूपसत्त्वापत्तेश्च । यद्यपि अभावाभावस्य सत्त्वनियमः नृशृङ्गाद्यर्थ एव व्यभिचारीति परस्य वचनावकाश इति । तथापि वस्तुतो न व्यभिचारः । घटवति भूतले घटाभावो नास्तीतिवत् नृशृङ्गात्यन्ताभावाभावस्य अप्रमितेः । धर्मिग्राहकमानेन स्वरूपेण नृशृङ्गाद्यत्यन्ताभावस्य सार्वत्रिकत्वेनैव सिद्धेः ।

अयमत्र निर्गलितोऽर्थः । यस्याभावस्य प्रतियोगी स्वरूपेण प्रमितः तत्रैव तत्प्रतियोगिकाभावाभाव एव तादृशप्रतियोगिरूपत्वात् सन्निति । अत एव पटादिप्रतियोगिकाभावाभावः तत्प्रध्वंसाभावश्च प्रतियोगिरूप एवेति वैशेषिकादीनामनभ्युपगमः; तादृशघटात्यन्ताभावाभावोऽपि प्रतियोगिस्वरूप एवेति च ।

## तत्त्वमसिवाक्ये लक्षणाविचारः

नन्वेवमपि तत्त्वमस्यादिवाक्यार्थनिष्ठवेदान्तेषु तत् त्वमादिपदानां चिन्मात्रे लक्षणास्वीकारो दुर्वारः । तत्-त्वमादिपदार्थानां विशिष्टानामुपहितानां वा चैतन्यानां परस्परमभेदस्य भेदग्राहिप्रत्यक्षादिप्रमाणविरुद्धत्वेन मुख्यार्थाभेदरूपान्वयानुपपत्तिसत्त्वादिति चेन्न । अपौरुषेयत्वेनासम्भावितदोषतया निश्चितप्रमाणभावेन त्वद्रीत्या तत्त्वावेदकेन तत्त्वमस्यादिवाक्येन विशिष्टानामुपहितानां वा चैतन्यानामन्योन्याभेदे बोध्यमाने सम्भावितदोषतया निश्चितप्रमाणभावे अतत्त्वावेदकप्रत्यक्षादेरपरिपन्थित्वेन लक्षणाकल्पकत्वानुपपत्तेः ।

किञ्च 'तत्त्वमसि', 'अयमात्मा ब्रह्म', 'सूक्ष्मात् सूक्ष्मतरं नित्यं', 'तत्त्वमेव तत्' इत्यादौ तत्-त्वमादिपदानां लक्षणास्वीकार एवायुक्तः । तेषां सर्वनामत्वेन सर्वाभिधानसमर्थत्वात् । न हि चिन्मात्रं सर्वान्तर्गतं नेत्यस्ति । अतः 'सर्वादीनि सर्वनामानी'ति भगवता पाणिनिना तत्तच्छब्दसामर्थ्यावधारणे समर्थेन अभियुक्ततमेन सर्वादिगणपठितानां 'सर्वनामानी'ति महती अन्वर्थकसंज्ञा कृता ।

एतेन मुख्यार्थानुपपत्तिः न लक्षणाबीजम् । यष्टीः प्रवेशयेत्यादौ बहुक्षीरेत्यादिलौकिकार्थवादे वायुक्षेपिष्ठेत्यादिवैदिकार्थवादे च तदभावात् । किन्तु तात्पर्यानुपपत्तिरेव तत्र बीजम् । सार्वत्रिकत्वात् । क्वचिदन्वयानुपपत्तिः क्वचित्तात्पर्यानुपपत्तिरित्यभ्युपगमे अननुगमात् गौरवाच्च इति निरस्तम् ।

मुख्यार्थान्वयानुपपत्तेरेव सर्वत्र लक्षणाबीजत्वात् । यष्टीः प्रवेशयेत्यादावपि भोजनादिकर्तृत्वेन प्रवृत्तानां प्रवेशान्वयानुपपत्तेः सत्त्वात् बहुक्षीरेत्यादिवाक्ये वायुक्षेपिष्ठत्वादिवाक्ये च मुख्यार्थसंसर्गातिरिक्तप्राशस्त्यलक्षकत्वाङ्गीकारात् । न हि गुणवत्त्वेन दोषित्वेन वा सङ्कीर्तितत्वातिरिक्तं प्राशस्त्यमप्राशस्त्यं वा किञ्चिदस्ति ।

किञ्च अपौरुषेये वेदे तत्प्रतीतीच्छया उच्चरितत्वरूपतात्पर्यासम्भवः । सम्भवे वा तादृशतात्पर्यस्य तच्छब्दार्थभूतवाक्यार्थप्रतीतिं विनाऽनुदयात्, अननुसंहितोपाधेरुपहितप्रत्यययायोगात् । तत्प्रतीतिश्च न प्रत्यभिज्ञानादिना । वाक्यार्थस्यापूर्वत्वात् । श्रुत्यैव तत्प्रतीत्युपगमे अन्योन्याश्रयात् । तात्पर्यानुपपत्तिप्रतिसन्धानं विना लक्षणाकल्पनस्यैवाभावेन ततः पूर्वं वाक्यस्य विवक्षितार्थप्रत्यायने असामर्थ्यात् । अत एव तत्प्रतीतिप्रयोजनकत्वरूपतात्पर्यानुपपत्तिस्तद्बीजमिति निरस्तम् । प्राप्तपदार्थमात्रेण तात्पर्यायोगाच्च ।

नन्वेवं वाक्यार्थघटितशरीरस्य तात्पर्यस्य निश्चयाय उपक्रमादिलिङ्गानुसरणमेव न स्यादिति चेन्न । यत्र वाक्यादेव नानावाक्यार्थोपस्थितिः तत्र अयमेव वाक्यार्थो नान्य इत्यवधारणोपयुक्ततात्पर्यनिर्णयाय उपक्रमादिलिङ्गानुसरणात् । प्रकृते च लक्षणाकल्पनातः पूर्वं विवक्षितपदार्थोपस्थितेरेवाभावेन विवक्षितवाक्यार्थाप्रतीत्या तद्गर्भितमूर्तितात्पर्योपस्थित्यभावेन तदनुपपत्तिरूपलक्षणाकल्पकस्यैवानवतारात् ।

किञ्च सर्वशब्दावाच्यं ब्रह्मेति वादे लक्षणापि न स्यात् । सर्वशब्दावाच्यस्य लक्षणायोगात् । तथाहि किमस्य लक्ष्यमिति प्रश्ने अवाच्ये लक्षकमेव पदान्तरं प्रयोक्तव्यम् । तत्रापि किमस्य लक्ष्यमिति पश्नापर्यवसानात्[१] स्यादनवस्था ।

ननु सर्वशब्दवाच्यं ब्रह्मेति मतेऽपि एष दोषः समः वाचकपदप्रयोगेऽपि किमस्य वाच्यमिति प्रश्नापर्यवसानेन अनवस्थापातात् ।

तथाहि वाचकपदस्यापि गृहीतसम्बन्धस्यैव बोधकत्वात् सम्बन्धग्रहस्य सम्बन्धिग्रहाधीनत्वात् सम्बन्धिनश्च ब्रह्मणो वेदैकसमधिगम्यत्वात् शब्दान्तरेणैव तद्ग्रहः । तत्राप्येवं तत्राप्येवमिति । इति चेन्न ।

---

१. प्रश्नापर्यवसानादनवस्था इति पाठः ।

वैदिकपदानां वाक्यतुल्यतया सङ्गतिग्रहानपेक्षत्वात् । यथोक्तं श्रोत्रियश्छन्दोऽधीते वाक्यार्थे पदप्रयोग इति । न चैवं परेणाभ्युपगन्तुं शक्यम् । तथा सति ब्रह्मणोऽवयवशक्तिविषयत्वापत्तेः । अखण्डार्थत्वापत्तेश्च ।

किञ्च निर्गुणावाच्यादिपदानां सगुणं ब्रह्म न वाच्यमिति शुद्धस्यैव तद्वाच्यत्वसिद्धिः ।

नन्ववाच्यादिशब्दाः समासरूपाः । लक्ष्यादिशब्दास्तु यौगिकाः उभयेषामपि वाक्यतुल्यत्वात् न वाचकतेति चेन्न । अन्विताभिधानपक्षे तेषामपि वाचकत्वात् । अभिहितान्वयपक्षे वाक्य एवाभिहितान्वयस्वीकारेण प्रकृतिप्रत्यययोरन्विताभिधायित्वात् समासे पदार्थसंसर्गस्य यौगिके प्रकृतिप्रत्ययार्थसंसर्गस्य वाऽनभिधेयत्वेऽपि पदार्थस्य प्रत्ययार्थस्य च वाच्यत्वेन तदर्थस्य ब्रह्मणो वाच्यत्वापरिहाराच्च ।

यदि च ब्रह्म न पदार्थः किन्तु पदार्थसंसर्गरूपं तर्हि सखण्डं स्यात् । यदि त्ववाच्यमित्यादौ पदद्वयादिकं न स्वार्थसंसर्गादिपरं किन्तु ब्रह्ममात्रलक्षकं तर्हि न तेनावाच्यत्वादिसिद्धिः ।

किञ्च अवाच्यपदेन ब्रह्मोच्यते चेद्वाच्यत्वसिद्धिः । नापि तेनापि लक्ष्यते । अवाच्यरूपमुख्यार्थस्यान्यस्याभावात् । भावे वा ब्रह्म नावाच्यम् । किन्तु तीरवदवाच्यरूपमुख्यार्थसम्बन्धिमात्रमिति स्यात् । मुख्यार्थहीनस्यापि ब्रह्मलक्षकत्वे घटशब्दोऽपि घटलक्षकः स्यात् । एवं निर्विशेषं स्वप्रकाशं परमार्थसदित्यादिशब्दैः ब्रह्म उच्यत इति वाच्यत्वसिद्धिः । नापि तैरपि लक्ष्यते । निर्विशेषस्वप्रकाशादिरूपमुख्यार्थस्यान्यस्याभावात् । एवं लक्ष्यशब्देन ब्रह्मोच्यते चेत् वाच्यत्वसिद्धिः । लक्ष्यते चेल्लक्ष्यत्वहानिः । गङ्गाशब्दलक्ष्यस्यागङ्गात्ववल्लक्ष्यपदलक्ष्यस्यालक्ष्यत्वात् ।

किञ्चैवं त्वदभिमतब्रह्मणः शक्यलक्ष्यपदार्थबहिर्भावः स्यात् । अपिच ब्रह्मणः सत्यज्ञानादिपदलक्ष्यत्वे नदीपदलक्ष्यस्य तीरस्य अनदीत्ववत् अस्य असत्यत्वानानन्दत्वसान्तत्वादिकं स्यादिति शून्यवादापत्तिः । मुक्तिश्चापुमर्था स्यात् । आनन्दानुभवाभावात् ।

ननु नदीपदेन नदीत्ववाचिना तदाश्रयव्यक्तेर्न लक्षणा, किन्तु तदाश्रयव्यक्तिसम्बन्धिनः तीरस्येति तस्यानदीत्वं युक्तम् । इह तु सन् घट इत्यादाविव सत्तादिजातिवाचिभिः सत्यादिशब्दैः तदाश्रयव्यक्तेरेव लक्षणा । एवञ्च सत्त्वसम्बन्धस्याशाब्दत्वेऽपि तीरस्य नद्येव ब्रह्मणोऽपि घटस्येव सत्तया सम्बन्धः सिद्ध्यति । मुख्यार्थसम्बन्धे लक्षणायोगात् । जातिव्यक्त्योश्च तादात्म्यसम्बन्धात् । उक्तं हि ''सत्त्वादीनां हि जातीनां व्यक्तितादात्म्यदर्शनात् । लक्ष्यव्यक्तिरपि ब्रह्म सत्त्वादि न जहाति नः'' इति चेत् । न । 'व्यक्तिः शब्दार्थ' इति मते सद्व्यक्तितोऽन्यस्यैव लक्षणीयत्वेन ब्रह्मणः सत्त्वासिद्धेः ।

ननु गङ्गाशब्दे जहल्लक्षणा, सत्यानन्दादिशब्देषु तु जात्यंशत्यागे[1] व्यक्त्यंशात्यागात् जहदजहल्लक्षणेति असत्त्वानानन्दत्वापत्तिर्नेति चेन्न सत्त्वानन्दत्वादिजातेरसत्त्वात्, तद्व्यक्त्योः सदानन्दव्यक्तित्वासिद्धेः। तत्सत्त्वस्य चौपनिषदे ब्रह्मणि शब्दादन्येनासिद्धेः। सत्त्वानन्दत्वादिधर्मसम्बन्धस्य ब्रह्मणि श्रुत्या अबोधनात्। तत्सम्बन्धस्य श्रुत्या अवबोधने च अखण्डार्थत्वक्षतेः।

किञ्च अनारोपितस्य धर्मिसमसत्ताकस्यैव सत्त्वानन्दत्वादेः धर्मस्य स्वाश्रयसद्रूपत्वानन्दरूपत्वाद्यापादकत्वं वाच्यम्। अन्यथा अतथाभूतस्यापि सत्त्वस्य वह्नित्वादेश्च घटादौ गुञ्जापुञ्जादौ चाविशिष्टतया तस्यापि पारमार्थिकसद्रूपत्ववह्न्यादिरूपत्वापत्तेः। जातिः शब्दार्थ इति मतेऽपि सन् घट इत्यादावपि शब्दे सत्त्वावैशिष्ट्याप्रतीतेः। लक्षणाहेतुत्वेन प्रतीतेश्च। इहापि सत्त्वेन तत् विशिष्टार्थम्, इदं त्वखण्डार्थमिति विभागायोगेन विभागार्थं 'सन् घट' इत्यादितः विशेषेण सत्यादिपदानां लक्षकत्वार्थञ्च गङ्गायां घोष इत्यादाविव जात्याश्रयव्यक्तिसम्बन्धत्वेनैव ब्रह्मणो लक्षणीयत्वेन सद्रूपत्वासिद्धेः। 'जातिविशिष्टा व्यक्तिः शब्दार्थ' इति पक्षेऽपि विशिष्टस्यापदार्थान्तरत्वे विशिष्टशक्तेनैव सत्यादिपदेन विशेष्यभूतब्रह्मोपस्थितिसम्भवेन तदर्थं लक्षणास्वीकारवैयर्थ्यम्।

पदार्थान्तरत्वे च लक्ष्यब्रह्मणोऽसद्रूपत्वापत्तितादवस्थ्यम्। विशेष्यमात्रोपस्थित्यर्थं लक्षणेति चेन्न शब्दवृत्तेः सप्रकारकज्ञानजनकत्वस्वाभाव्यात्।

किञ्च वृत्तिविषयस्योपस्थितिं विना इदंपदमात्रार्थे शक्तमिति वा इदंपदमस्यार्थस्य लक्षकमिति तदवधारणासम्भवात् तदर्थं लक्षणीयार्थोपस्थितेरावश्यकत्वात् निर्विशेषाखण्डब्रह्मचैतन्यरूपार्थस्य च शब्दैकसमधिगम्यत्वेन तस्य शब्दान्यमानेन उपस्थित्ययोगात् तेनैव तस्योपस्थितिरुपेया। एवञ्च अन्योन्याश्रयः।

एतेन अत्र 'अयं पुरुषः स्वयञ्ज्योतिरि'ति श्रुतेः आत्मनः स्वप्रकाशत्वेन नित्यसिद्धतया न तस्य लक्षणावृत्तिविषयत्वावधारणार्थं शब्देन तदन्येन वा उपस्थितिरपेक्षणीयैवेति निरस्तम्। अत्रायमिति श्रुत्या विशिष्टोपहितचैतन्य एव स्वप्रकाशकत्वावेदनेन त्वदभिमताप्रामाणिकाखण्डचैतन्यस्योक्तरीत्या अनुपस्थितत्वेन तत्र तया स्वप्रकाशत्वाप्रत्यायनात्। तादृशस्वतःसिद्धे निर्विकल्पकत्वेन इदंपदमस्य लक्षकमिति लक्षणाग्रहप्रसङ्ग[2]त्वायोगात्। श्रुतितन्मीमांसयोरनारम्भणीयत्वप्रसङ्गाच्च। मोक्षसाधनतत्साक्षात्काराश्रयश्रवणाद्युपायाननुसरणप्रसङ्गाच्च। न हि प्रमाणं किमपि स्वविषये प्रवर्तमानं तत्राबाधितधर्मपुरस्कारं विना प्रवर्तमानं दृष्टचरम्, अभ्युपगमार्हं वा, स्वभावव्याकोपापत्तेः। न च प्रत्यक्षमेव तथाविधमस्ति। अन्यथा निर्विकल्पकं ततो न स्यादिति वाच्यम्। निर्विकल्पकं विना अनुपपत्त्यभावेन

---

१. त्यागेऽपि।  २. प्रसञ्जकत्वायोगात् इति भाव्यमति भाति।

प्रत्यक्षस्यापि सप्रकारकज्ञानैकफलकत्वोपगमात् । जन्यविशिष्टज्ञानत्वस्य स्मृतावेव व्यभिचारेण जन्यविशेषणज्ञानस्य जन्यविशिष्टज्ञानं प्रति कारणत्वे प्रमाणत्वायोगात् । योगे वा पूर्वपूर्वानुभवजनितसंस्कारापादितस्मृत्यैव तत्तद्विशिष्टज्ञानस्यैव उपपन्नत्वेन तदर्थं निर्विकल्पकानपेक्षणात् । पूर्वानुपस्थितस्यापि अभावत्वप्रतियोगित्वादेः प्रकारत्वदर्शनेन तन्निर्वाहस्य तन्त्रे अन्यत्रापि विशिष्टज्ञाने क्लृप्तादृष्टविशेषेणैवोपपत्तेश्चेत्यलं प्रसक्तानुप्रसक्त्या ।

न च 'अविद्यास्तमयो मोक्षः सा संसार उदाहृत' इति मदभ्युपगताविद्यानिवृत्तिरूपमोक्षफलकापरोक्षवृत्तिरवश्यमभ्युपेया, तदुपायत्वेन श्रवणादिकं च अतो न तद्वैयर्थ्यमिति वाच्यम् । त्वन्नये अज्ञानस्य ज्ञानमात्रनिवर्त्यत्वेन तन्निवृत्त्यर्थं तादृशवृत्तेरनपेक्षणात् । ज्ञानस्वरूपत्वेन त्वदभ्युपगतब्रह्मणोऽनाद्यनन्तत्वेन उपायनिरपेक्षत्वात् । न च केवलस्य चैतन्यस्य अज्ञानसाधनत्वेन अन्वयव्यतिरेकाभ्यां वृत्त्यवच्छिन्नचैतन्यस्य तदुपारूढचैतन्यस्य वा अज्ञानविरोधित्वोपगमात् तादृशवृत्त्यर्थं श्रवणादिकमनुसरणीयमिति वाच्यम् । अज्ञानसाधनत्वेन अन्वयव्यतिरेकाभ्यां सिद्धस्वरूपचैतन्यस्य तन्निवृत्तौ स्वरूपायोग्यत्वेन [१]तन्निवृत्तौ अवच्छेदकतया वृत्तेरनभ्युपेयत्वात् ।

किञ्च अज्ञानसमानविषयमेव ज्ञानं तद्विरोधि इत्यवश्यमुपेयम् । घटज्ञानेन पटाज्ञाननिवृत्तेः । न हि स्वरूपचैतन्यस्य अज्ञानसमानविषयत्वं त्वन्नयेऽस्ति । विरोधेन तदनङ्गीकारात् । निर्विशेषाखण्डचैतन्यं हि त्वन्नये अज्ञानविषयः । न हि तत् स्वविषयो भवितुमर्हति । किञ्च न काचन वृत्तिश्चैतन्ये अज्ञाननिवर्तकतावच्छेदकतया उपेया । अतिप्रसङ्गस्योक्तत्वात् । किन्त्वज्ञानसमानविषयकवृत्तिः । तथा च अज्ञानसमानविषयकापरोक्षवृत्त्यवच्छिन्नचैतन्यत्वं वा तादृशवृत्त्युपारूढचैतन्यत्वं वा तन्निवर्तकतावच्छेदकमित्यापन्नम् । तत्र प्रथमोपस्थितत्वेन आवश्यकत्वाल्लाघवाच्च तादृशवृत्तित्वमेव निवर्तकतावच्छेदकमस्तु न तूक्तम्, गौरवात् । चरमोपस्थितत्वेन अनावश्यकत्वाच्च । एवं च वृत्तेरेवाज्ञानविरोधिता । धर्मादिकं जानामीत्यनुभवेन च ज्ञानरूपत्वाङ्गीकारो युक्तः । न तु त्वया चिन्मात्रत्वेन व्यवह्रियमाणस्य अतथात्वात् । किञ्च वह्न्यादीनामपि समसत्ताकवह्नित्वविशिष्टस्पर्शादिधर्मत्वेनैव वह्न्यादिरूपत्वं दाहाद्यर्थक्रियाकारित्वं च दृष्टमिति त्वदभिमतब्रह्मचैतन्यस्यापि तथाविधज्ञानत्वानन्दत्वनित्यानित्यादिमत्त्वेनैव सद्रूपत्वज्ञानरूपत्वादिकम्, तथाविधार्थक्रियाकारित्वं च स्वीकारार्हम् । न हि त्वदभिमतब्रह्मचैतन्यं तथेति न ततोऽज्ञाननिवृत्तिरूपार्थक्रिया स्यात् । तदुक्तम्— 'न ह्यारोपितो वह्निर्दहति पचति वेति ।'

---

१. तन्निवर्तकतावच्छेदकतया इति पाठः ।

एतेनैव जीवनसाधनत्वेन सिद्धस्य पावनालान्नस्यैव तैलपेषणसहकारेण मृतिहेतुत्वात्[१] तादृशवृत्तिं विना चैतन्यस्यैव अज्ञानसाधकत्वेन सिद्धस्य तादृशवृत्तिसहकारेण तन्निवृत्तिहेतुत्वमुपपत्स्यते इति प्रत्यूढम् । चैतन्यस्याज्ञानसाधकत्वेन अज्ञानसमानविषयत्वराहित्येन वा अज्ञाननिवृत्तिं प्रति स्वरूपायोग्यत्वस्य उक्तत्वात् । स्वतन्त्रान्वयव्यतिरेकस्य अज्ञानसमानविषयत्वस्य च वृत्तावेव दर्शनेन तस्या एव तद्विरोधित्वाभ्युपगमौचित्याच्च । न [२]त्वन्यथासिद्धान्वयव्यतिरेकिणः चैतन्यस्य तद्विरोधित्वम् । साधकत्वं वा दृढत्वदण्डदार्ढ्ययोरिव उद्भूतरूपवत्तेजसस्तेजोगतोद्भूतत्वस्येव विनिगमनाविरहेण चैतन्यवद्वृत्तेरपि तन्निवर्तकत्वापत्तेश्च । न चेष्टापत्तिः । तत्त्वज्ञानस्यैव अज्ञानविरोधित्वस्वीकारात् । न हि वृत्तिर्ज्ञानमिति त्वदभ्युपगमः ।

वस्तुतस्तु वृत्तिरेव अज्ञानविरोधिनीति स्वीकारो युक्तः, अज्ञानसमानविषयत्वात् स्वतन्त्रान्वयव्यतिरेकानुविधानाच्च इत्युक्तम् । युक्तं च तत्तथा । तादृशवृत्तित्वस्य प्रथमोपस्थितत्वात् लघुत्वाच्चेति । तस्मान्मानान्तरकृतोपस्थितिरेव लक्षणावृत्तिग्रहणोपयोगिनी । स्वतःसिद्धे तद्ग्रहोपयोगित्वे श्रुतितन्मीमांसयोः श्रवणाद्यनुसरणस्य च वैयर्थ्यमिति स्थितम् ।

एतेन अनावृतचैतन्यमेवाज्ञानविरोधि, श्रवणादिजन्यापरोक्षवृत्तिश्च अज्ञानगतावरणशक्तिव्यावृत्तौ उपयुज्यते इति परास्तम् । उक्तदोषानतिवृत्तेः । स्वप्रकाशत्वेन नित्यसिद्धब्रह्मचैतन्ये आवरणायोगाच्च । अन्यथा जगदान्ध्यप्रसङ्गात् । ज्ञानांशस्यापि स्वप्रकाशत्वेन नित्यसिद्धब्रह्मचैतन्याभिन्नत्वेन आवरणासम्भवात् । सच्चिदानन्दात्मस्वरूपस्य ब्रह्मणः अखण्डैकरसत्वेन निरंशत्वान्निर्भेदत्वाच्च । यथावदधिष्ठाने स्फुरति सति तत्र तदारोपायोगात् । चैतन्यान्यस्य सर्वस्य जडत्वेन आरोपयितृत्वायोगाच्च । अत एवानात्ममात्रमात्मन्यारोपितमित्यपास्तम् । यथावत् स्फुरत्यधिष्ठाने तत्र भासमानस्य अनारोपितत्वनियमाच्च । न हि शुक्तितत्वसाक्षात्कारदशायां तत्र भासमानं शुक्तित्वादिकमारोपितम् । तस्मादखण्डब्रह्मचैतन्यस्य स्वप्रकाशत्वेन नित्यसिद्धत्वं न लक्षणावृत्तिग्रहोपयोगि । मानान्तरकृतोपस्थितेश्च प्रकारत्वनियमेन तत्प्रकारीभूतधर्मपुरस्कारैणैव शक्तिग्रहवल्लक्षणाग्रहो वाच्यः । तद्धर्मपुरस्कारेण गृहीता च लक्षणा तेनैव रूपेण लक्ष्यार्थस्मृतिहेतुरिति निर्विकल्पकरूपलक्ष्यार्थोपस्थित्यर्थं परस्य लक्षणाङ्गीकारः सर्वथाऽनुपपन्न इति स्थितिः ॥

किञ्च शब्दवृत्तिर्हि शब्दार्थयोः सम्बन्धरूपा । सम्बन्धग्रहश्च सम्बन्धितावच्छेदकरूपेण सम्बन्धिद्वयोपस्थितिसाध्य एव दृष्टः । तत्र च पदमेकं सम्बन्धि, पदार्थश्च अपरसम्बन्धी, तयोः पदं यथातथा

१. हेतुत्ववत् इति पाठः । २. न ह्यन्यथासिद्ध इति पाठः ।

ज्ञातं सम्बन्धितावच्छेदकप्रकारिकामेव स्वसम्बन्धिविषयिणीं स्मृतिं जनयति । हस्तिपकादौ तथा दर्शनात् । येन रूपेण सम्बन्धी अर्थः पदेन स्मारितः स तेनैव रूपेण शाब्दबोधे अन्वयप्रतियोगितया भासते इति कथं लक्षणावृत्तिविषयत्वेऽपि ब्रह्मणः निष्प्रकारकबोधविषयत्वमिति इति न जानीमः । तथाच परस्य लक्षणाङ्गीकारः शक्तौ प्रद्वेषमात्रनिबन्धनः, निर्विकल्पकोपस्थित्यर्थः लक्षणाङ्गीकार इति तु मनोरथमात्रम् ।

किञ्च नित्यो घटः नीलमुत्पलमित्यादिशब्दस्थले लक्षणां विनैव यथा तत्तत्पदोपस्थितत्तद्धर्मोपलक्षिततत्तद्धर्म्यभेदान्वयः यथा वा घटे रूपमित्यादौ प्रत्यक्षेण शब्देन वा घटत्वोपलक्षिते वा रूपेऽन्वयः तथा लक्षणां विनैव सत्यज्ञानादिपदार्थनिष्ठवाक्ये च सत्यज्ञानादिपदैः तत् त्वमादिपदैश्च सत्यत्वादिधर्मोपलक्षितब्रह्मचैतन्यजीवचैतन्यरूपधर्मभेदान्वयश्चास्तु । किं तदर्थधर्ममात्रत्वलक्षणास्वीकारेण कृत्यमस्ति । न चैवं गौरश्व इत्यादौ अगोत्वाद्युपलक्षितधर्म्यभेदः किं न स्यात् । भेदग्राहिप्रत्यक्षे प्रत्यक्षविरोधात् तत्र तयोर्भेदान्वय इति चेन्न । तत्त्वमस्यादावपि तत एव नाभेदान्वय इति तुल्यम् । तत्रेव अत्रापि लक्षणाभावप्रसङ्गात् । तत्त्वमस्यादिवाक्यस्य सिद्धप्रमाणभावस्य प्रामाण्यनिर्वाहाय लक्षणाकल्पनमावश्यकम्, तस्य तु न तथा अप्रमाणत्वादिति चेन्न । लक्षणान्तरं विनैव उक्तरीत्या प्रामाण्यनिर्वाहात् । न चैवं सिद्धप्रमाणभावे 'यजमानः प्रस्तर' इत्यादौ 'सोमेन यजेत' इत्यादौ च प्रामाण्यनिर्वाहार्थं लक्षणाकल्पनं न स्यात् । त्वदुक्तरीत्यैव तत्त्वमस्यादिवाक्य इव अभेदान्वयसम्भवादिति वाच्यम् । सम्भावितदोषतया प्रत्यक्षं प्रमाणमितिवदतस्तवैतद्दोषप्रसरात् । प्रत्यक्षस्याप्रामाण्ये तद्विरोधस्याप्रामाण्यानापादकत्वेन गौरश्व इत्यादेरपि तत्त्वमस्यादिवाक्यवत् तत्त्वावेदकत्वेन प्रामाण्यापाताच्च तत्त्वमस्यादिवाक्य इव अत्रापि धर्मिस्वरूपमात्रे लक्षणास्वीकारापत्तेश्च ।

एतेन नित्यो घटः द्रव्यं घटः नीलमुत्पलमित्यादावपि पदार्थतावच्छेदकं विनाकृततदाश्रयभूतपदार्थमात्रभेदान्वये तद्गतानित्यादिपदानामपि तत्र लक्षणा स्वीकार्यैव । अन्यथा नित्यत्वघटत्वादि विशिष्टान्वयापत्त्या तदप्रामाण्यप्रसङ्गात् । अनित्यत्वद्रव्यत्वघटत्वादिधर्माणामभेदान्वयस्य भेदग्राहिप्रत्यक्षबाधितत्वादित्यपास्तम् । तत्र अनित्यत्वघटत्वादिपदार्थतावच्छेदकधर्माणामुपसर्जनतया तत्तत्पदार्थान्वितत्वेन आकाङ्क्षाविरहादेव इतरानन्वयात् विशिष्टाभेदान्वयोऽप्रसक्तः । स्वातन्त्र्येण पदार्थोपस्थितेरेव अन्वयबोधौपयिकाकाङ्क्षाहेतुत्वेन तदभावादेव तत्तत्पदार्थोपसर्जनीभूतानित्यत्वादिधर्माणामाकाङ्क्षाविरहात् पदार्थानां च प्रधानतया तादृशोपस्थितिसत्त्वेन आकाङ्क्षासम्भवेन परस्पराभेदान्वयस्य लक्षणां विनैवोपपत्तेः । अत एव नित्यो घट इत्यादौ नित्यत्वान्वयप्रयोजकाकाङ्क्षाहेतुत्वेन स्वातन्त्र्ये-

णोपस्थित्यर्थं घटपदस्य घटत्वे लक्षणामुररीकुर्वते । तथा 'पुरोडाशकपालेन तुषानुपवपति' इत्यत्रापि कपालशब्दस्य तदधिष्ठाने लक्षणा ।

अपि च तत्त्वमसीत्यादौ तत्त्वंपदमुख्यार्थयोः विशिष्टयोरुपहितयोर्वा जीवेश्वरचैतन्ययोरभेदान्वयस्य प्रत्यक्षादिना बाधितत्वेऽपि न विशिष्टयोरनुपहितयोर्वा तदर्थभूतजीवेश्वरचैतन्ययोरभेदान्वयाय लक्षणास्वीकारो युक्तः । लोके यत्र यत्र स्वीकृतप्रमाणभावे वाक्ये तत्प्रामाण्यनिर्वाहाय तत्पदस्य तत्पदार्थसदृशप्रत्यक्षादिप्रमाणबाधितमर्थं परित्यज्य सा वृत्तिः स्वीकारार्हा । लोके 'सिंहस्त्वमसि देवदत्ते'त्यादिवाक्ये प्रामाण्यनिर्वाहाय सिंहशब्दस्य सिंहसदृशेऽभियुक्तैर्गौणी वृत्तिरेव स्वीकृतेति वेदेऽपि तत्त्वमसीत्यादिवाक्येऽपि तत्समानाकारे प्रमाणबाधितमर्थं परित्यज्य प्रामाण्यनिर्वाहाय तत्पदस्य तत्पदार्थसदृश एवार्थे गौणी वृत्तिरेवोपेया तथा दर्शनात् । कल्पनायाः दर्शनानुसारित्वात् । न तु लक्षणा अतथात्वात् । पदद्वयलक्षणापेक्षया तत्पदे प्रथमोपस्थिते एकस्मिन्नेव गौण्याः वृत्तेः स्वीकारे लाघवाच्च । न च गौणीवृत्तिरपि लक्षणावृत्त्यन्तर्गतेति तामङ्गीकृत्य तन्न्यक्कारः कथं न व्याहत इति वाच्यम् । गौण्या लक्षणातो भेदस्य अन्यत्र व्यवस्थापनात् । तस्याः लक्षणान्तर्गतत्वेऽपि उक्तगौरवतादवस्थ्यात् । परेण पदद्वयेऽपि लक्षणास्वीकारात् । न च विनिगमनाविरहादेव पदद्वये लक्षणा समायातीति व्याच्यम् । प्रथमोपस्थितेरेव विनिगमकत्वात् । न च वाक्यान्तरे त्वंपदस्य प्रथमं श्रुतत्वात् तथापि पदद्वयलक्षणा दुर्वारेति वाच्यम् । भावानवबोधात् । सर्वस्मिन् वाक्ये एकस्मिन्नेव प्रथमोपस्थितत्वरूपविनिगमकमादाय लक्षणा स्वीकार्या । न तु द्वितीयादिपदेऽपि । बहुगौरवात् । प्रथमोपस्थितैकपदलक्षणाश्रयणेनैव त्वदभिमताखण्डब्रह्मज्ञानसिद्धेः द्वितीयादिपदलक्षणानर्थक्याच्च । तादृशं पदं क्वचित् तत् पदम्, क्वचित् त्वंपदम्, क्वचिच्च अन्यदेवेति अन्यदेतदिति द्वितीयादिशब्दानामध्ययनविध्यापादितपुरुषार्थपर्यवसायित्वस्य हुंफडादिशब्दानामिव दृष्टार्थत्वेन वा सगुणवाक्यानामिवोपासनार्थत्वेन उपपत्तेश्च ।

एतेन अर्थवादगतानां पदानां अध्ययनविध्यापादितपुरुषार्थपर्यवसायित्वनिर्वाहाय दृष्टार्थत्वे सम्भवति अदृष्टार्थत्वाश्रयणायोगात् विध्यपेक्षितप्राशस्त्यसमर्पणद्वारेणैव पुरुषार्थपर्यवसायित्वं वाच्यम् । प्राशस्त्यं च न तन्मुख्यार्थ इति तस्य लक्षणयैव तदर्थत्वं वाच्यम् । तथाच प्राशस्त्यसमर्पणार्थं यथा तद्गतानां सर्वेषामपि लक्षणाश्रयणं बलादापतितम् । यथैव ज्ञेयब्रह्मपरवेदान्तगतानां सर्वेषां पदानां विनैव न्यायेन अविद्यानिवृत्तिलक्षणमोक्षप्रयोजनकनिर्विशेषब्रह्मज्ञानार्थं लक्षणाश्रयणमापतितमिति निरस्तम् ।

अर्थवादेऽपि प्रथमोपस्थितत्वरूपनियामकसत्त्वेन तादृशस्यैव पदस्य प्राशस्त्ये लक्षणाभ्युपगमात् । तदितरपदानां प्राशस्त्यलक्षणाकल्पनोपयोगिगुणोपस्थापकत्वेन पुरुषार्थपर्यवसायित्वनिर्वाहाच्च,

दृष्टान्तस्यैव असम्प्रतिपत्तेः । अन्यथा 'किञ्चिदेव पदं स्तौति' इत्यादिवार्तिकविरोधात् । न चैवं 'वायुर्वै क्षेपिष्ठा देवते'त्यादौ वायुपदस्यैव प्राशस्त्यलक्षकत्वापत्त्या वायुदेवता प्रशस्ता इति वाक्यार्थलाभो न स्यादिति वाच्यम् । लक्षणया प्राशस्त्यस्येव शक्त्या वायुपदेनैव वायोरुपस्थितिसम्भवात् । न चैवं युगपद्वृत्तिद्वयविरोधः । गङ्गायां मीनघोषावित्यत्रेव एवंविधवाक्येऽपि तात्पर्यसत्त्वेन युगपद्वृत्तिद्वयाश्रयणोपपत्तेः । तात्पर्यरहितस्थल एव युगपद्वृत्तिद्वयाश्रयणस्य दोषत्वात् । न च गङ्गायां मीनघोषावित्यत्रापि गङ्गापदेन अजहत्स्वार्थलक्षणया गङ्गातीरयोरुभयोरपि उपस्थितिसम्भवात् न तदर्थं विरुद्धवृत्तिद्वयाश्रयणमिति वाच्यम् । तथा सति शक्यलक्ष्यार्थोभयसाधारणधर्मप्रकारकप्रतीत्यापत्त्या गङ्गायां मीनस्तीरे च घोष इति वाक्यार्थासिद्धिप्रसङ्गात् । अत एव 'काकेभ्यो दधि रक्ष्यतामि'ति वाक्यात् दध्युपघातकेभ्यो दधि रक्ष्यतामित्येव तदुपघातकत्वरूपसामान्यधर्मप्रकारिकैव वाक्यार्थप्रतीतिः न तु काकत्वादितद्धर्मप्रकारिका ।

यद्यपि 'लम्बकर्णमानये'त्यादौ अजहत्स्वार्थलक्षणास्थलेऽपि लम्बकर्णत्वादिधर्मप्रकारिका प्रतीतिरस्ति । तथापि तस्य वृत्तिविशेषत्वात् तत्र भिन्नैव व्युत्पत्तिः । यथा घटादिपदवत्पदत्वाविशेषेऽपि नानार्थत्वाभावेऽपि सर्वनामसु भिन्नैव व्युत्पत्तिस्तद्वत् । न हि 'काकेभ्यो दधि रक्ष्यतामि'त्यादौ काकादिपदस्य समासवृत्तिनिष्ठत्वमस्ति । तव तत्रेव अत्रापि तद्गुणसंविज्ञानबहुव्रीहिः समासवृत्तिः येन 'काकेभ्यो दधि रक्ष्यतामि'त्यादौ वाच्यलक्ष्यार्थोभयसाधारणधर्मप्रकारकप्रतीतिर्न स्यात् । तथा च समासे भिन्नैव व्युत्पत्तिः । वाक्ये तु तद्विलक्षणैव व्युत्पत्तिरिति दिक् ॥

किञ्च परमते ज्ञेयब्रह्मपरवेदान्तगतानां सर्वेषामपि पदानां लक्षणेति बहुगौरवम् । न चानेकपदानां प्रत्येकमनेकलक्षणाङ्गीकारस्य बहु गौरवदोषग्रस्तत्वेऽपि तावत्पदसमुदायात्मकवाक्ये एकस्या एव लक्षणाया आश्रयणात् नोक्तगौरवदोष इति वाच्यम् । उक्तरीत्या एकस्यैव पदस्य लक्षकत्वाश्रयणे लाघवात् । तावन्मात्रेण विवक्षितफलसिद्धेश्च ।

किञ्च शक्यसम्बन्धो हि लक्षणा न तु पदार्थान्तरम् । क्लृप्तहान्यापत्तेः । न हि वाक्यस्य पदवच्छक्तिः येन तत्सम्बन्धे लक्षणेति स्यात् । किञ्च शक्तिरूपमुख्यवृत्तित्वेन क्लृप्त एव पदे वृत्त्यन्तरकल्पनं न्याय्यम् । न अतथाभूतवाक्ये तत्कल्पनम् । अपि च ब्रह्मपरवेदान्तवाक्यानामनेकवेदान्तगतानामनन्तत्वात् तत्र तत्र नानालक्षणाश्रयणे उक्तगौरवतादवस्थ्यम् । तावद्वाक्यगता एकैव लक्षणेत्याश्रयणे च एतावद्वाक्यमस्यार्थस्य लक्षकमिति लक्षणावृत्तिग्रहाकारो वाच्यः । न हि तथाविधलक्षणाग्रहश्च तावद्वाक्यग्रहं विना भवितुमर्हतीति तदसम्भवप्रयुक्तासम्भवग्रासात् तथाविधलक्षणाभ्युपगम एव दुष्करः ।

न हि नित्यसार्वज्ञं विना तावद्वाक्यगोचरसमूहालम्बनरूपानुभवो वा तन्मूलकतथाविधस्मृतिर्वा भवितुमर्हति । किञ्च कस्यचित्पुरुषविशेषस्य तथाऽनुभवस्मृत्योः सम्भवेऽपि अर्वाचीनानामस्मदादीनां तथाविधस्तदनुभवस्तन्मूलिका तथाविधस्मृतिर्वा न सम्भवतीति तावद्वाक्यनिरूपितलक्षणाग्रहस्य असम्भवतादवस्थ्यम् ।

एतेन 'अर्धमन्तर्वेदि अर्धं बहिर्वेदि' इत्यादिवाक्येऽपि मीमांसकानां लक्षणाभ्युपगमः प्रत्यूढः । 'अर्धमन्तर्गृहमर्धं बहिर्गृहमि'ति वैदिकवाक्येऽपि तेन अन्तरालप्रदेशस्याक्षेपसम्भवेन तल्लाभाय लक्षणाया अनाश्रयणीयत्वात् । अनन्यलभ्यस्यैव शब्दार्थस्य स्वीकारौचित्यात् । अस्य चान्यलभ्यत्वात् ।

किञ्च लक्षकं पदमननुभावकमिति पक्षे ज्ञेयब्रह्मनिष्ठवाक्यगतपदानां सर्वेषामपि अखण्डचिन्मात्रलक्षकत्वात् तेषां तदनुभावकत्वं न स्यात् । लाघवेन शक्तपदत्वस्यैवानुभावकत्वे तन्त्रत्वात् । वृत्तिमत्पदत्वस्य गौरवेण अतथात्वात् । वृत्तित्वस्य शक्तिलक्षणान्यतरातिरिक्तस्य दुर्वचत्वात् । शक्तिलक्षणान्यतरापेक्षया शक्तिमत्त्वस्य लघुशरीरत्वादिति ।

एतेन पदार्थानामिव पदार्थसंसर्गरूपाणामपि वाक्यार्थानां प्रमाणप्रतिपन्नशाब्दत्वनिर्वाहाय वृत्तिविषयत्वमुपेयम् । तत्र पदार्थानामिव वाक्यार्थानां मुख्यवृत्तिविषयत्वाभावात् परिशेषादमुख्यवृत्तिविषयत्वमेवापतितम् । अमुख्यवृत्तिश्च न लक्षणातो भिद्यत इति सर्वपदानां सर्ववाक्यानां वा सर्वमतेऽपि लक्षणा दुर्वारेति किमधिकमाचरितमिति निरस्तम् ।

अन्विताभिधानवादिनोरुभयोर्मते पदानां योग्येतरान्वितस्वार्थेषु शक्तत्वेन सामान्यान्वयस्य शक्तिविषयत्वेनैव शाब्दत्वोपपत्तेः । विशेषान्वयस्यापि आकाङ्क्षायोग्यतादिसहकारिसामर्थ्यादेव शाब्दत्वस्य उपपन्नत्वात् । संसर्गप्रतियोग्युपस्थापकसामग्रीमहिम्नैव तत्संसर्गस्य संसर्गविधया भानोपपत्तेः । अनन्यलभ्य एवार्थे वृत्तिविषयत्वकल्पनौचित्यात् । विशेषान्वयस्योक्तरीत्या अन्यलभ्यत्वात् संसर्गविधया भासमानेऽर्थे तद्भानार्थं संसर्गिभासकसामग्र्यतिरिक्तसामग्र्याः अकल्प्यत्वात् । अत एवायं घटः पर्वतो वह्निमान् इत्यादिविशिष्टप्रत्यक्षानुमित्योः संसर्गभानार्थं विशेषणविशेष्योभयभासकसामग्र्यतिरिक्तां सामग्रीं नाद्रियन्ते ।

अपिच पदार्थसंसर्गरूपस्य वाक्यार्थस्य अपूर्वत्वात् वाक्यप्रवृत्तेः प्रागनुपस्थितेः कथं तस्मिन् पदानां वाक्यानां वा लक्षणावृत्तिग्रह इति न जानीमः । अपि च वाक्यार्थस्य पदार्थसंसर्गरूपस्य वृत्तिविषयत्वे संसर्गविधया भानं न स्यात् । पदार्थवत् पदार्थतावच्छेदकप्रकारकमेव ज्ञानं न स्यात् । न हि पदवृत्तिविषयत्वातिरिक्तं पदार्थत्वं नाम अधिकमस्ति । तस्मात् यत्किञ्चिदेतत् ।

अपि च निर्विशेषे लक्षणा नाभ्युपेया। विशिष्टशक्तेनैव कृतार्थत्वेन तदभ्युपगमस्य निष्फलत्वात्। विशिष्टं पदार्थान्तरमिति पक्षे विशिष्टशक्तेन सत्यादिपदेनैव धर्मतद्वैशिष्ट्ययोरिव धर्मिणोऽखण्डचैतन्यस्याप्युपस्थितिसम्भवात्। तत्प्रतीतौ धर्मतद्वैशिष्ट्यरूपाधिकविषयत्वमस्तीत्येतावता धर्मिविषयत्वानपायात्। अत एव 'अधिकं प्रविष्टं न तु तद्धानिः' इति न्यायः। न हि विशिष्टप्रतीतिरधिकविषयत्वापराधेन धर्मिज्ञानविरोधिनीत्यस्ति। न च धर्मतद्वैशिष्ट्ययोर्बाधितत्वेन तद्विषयकविशिष्टप्रतीतेः भ्रमत्वेन अज्ञानाविरोधितत्तन्निवृत्त्यर्थम् अबाधितविषयत्वेन तत्तन्निवृत्तिरेवापेक्षणीया। तादृशप्रतीतिश्च धर्मिणि धर्मसंसर्गासङ्गिन्येव भवितुमर्हतीति तदर्थं लक्षणाश्रयणम्। तथाच श्रुतिः 'सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्' इति, इति वाच्यम्। धर्मविशिष्टब्रह्मप्रतीतेः तद्धर्मवैशिष्ट्यविषयकत्वावच्छेदेन बाधितविषयतया भ्रमत्वेऽपि धर्मिविषयत्वावच्छेदेन अबाधितविषयतया सम्यग्ज्ञानत्वानपायात्। अन्यथा वह्निगुञ्जापुञ्जयोः वह्निरिति प्रतीतेः वह्निविषयत्वावच्छेदेनापि भ्रमत्वापत्त्या तदज्ञानाविरोधित्वप्रसङ्गात्।

अपि चैवं परमते विशिष्टज्ञानमात्रस्य भ्रमत्वेन अयं घटः स्तम्भोऽयम् इत्याद्यपरोक्षज्ञानेनापि घटस्तम्भाद्यज्ञाननिवृत्तिर्न स्यात्। न चेष्टापत्तिः। अनेन ज्ञानेन ममैतदज्ञानं निवृत्तमित्यनुभवविरोधात्।

ननु विशिष्टप्रतीतिमात्रं न भ्रमः, किन्तु यस्य धर्मस्य यद्धर्मिसमसत्ता न तत्र धर्मिणि तद्वैशिष्ट्यावगाहिप्रतीतेरेव। तथाच वह्निगुञ्जापुञ्जयोः इमौ वह्नी इति प्रतीतेः गुञ्जापुञ्जांशे धर्मिसमसत्ताकधर्मविषयत्वाभावेन भ्रमत्वेऽपि वह्न्यंशे धर्मिसमसत्ताकविषयत्वेन सम्यग्ज्ञानत्वमप्रत्यूहम् इति तया तदज्ञाननिवृत्त्यङ्गीकारे न कोऽपि विरोधः। ब्रह्मणि तु विशिष्टप्रतीतेः तत्समसत्ताकधर्मस्यैवाभावेन तत्र अतथाभूतधर्मवैशिष्ट्यावगाहितया भ्रमत्वं दुर्वारम्। एवञ्च तादृशप्रतीत्या संसारापादकतदज्ञाननिवृत्तिर्न भवितुमर्हतीति तन्निवृत्तिक्षमं तत्र धर्ममात्रवैशिष्ट्यावगाहिसम्यग्ज्ञानं लक्षणोपासनयैव सम्पादनीयम्, प्रकारान्तराभावादिति चेन्न।

धर्मस्य धर्मिसमसत्त्वं नाम यदि यावद्धर्म्यनुवर्तमानत्वं तदा यत्र धर्मिणि घटादौ पाकादिसामग्र्या रक्तरूपोत्पत्तिः श्यामरूपनिवृत्तिश्च तत्र श्यामतादशायां श्यामोऽयं घट इति प्रतीतेः तथाविधधर्मवैशिष्ट्यानवगाहितया भ्रमत्वापत्त्या ततस्तदज्ञाननिवृत्त्यभावप्रसङ्गात्। यदि च धर्मस्य धर्मिसमसत्त्वं धर्मिण्यनारोपितत्वरूपं तदा अप्रातिभासिकप्रपञ्चगोचरप्रतीतिमात्रस्यापि प्रमात्वापत्त्या तद्विषयस्य प्रपञ्चमात्रस्यामिथ्यात्वापत्तेः। सार्वत्रिकत्रैकालिकनिषेधप्रतियोगित्वस्यैव मिथ्यात्वरूपत्वात्। परमते नेह नानेत्यादिना वियदादिप्रपञ्चस्य ब्रह्मरूपदेशे अत्यन्ताभावस्य सिद्धावपि स्वोपादानदेशेऽसिद्ध-

त्वात् । परमते सर्वस्याप्यारोपितत्वेन अनारोपितत्वस्याप्रसिद्धेः । ब्रह्मण्येवानारोपितत्वं सिद्धमिति तु न युक्तम् । आत्मानात्मनोः परैरितरेतराध्यासाङ्गीकारात् । न चात्मनोऽनात्मनि संसर्गितया आरोपेऽपि स्वरूपेणानारोपितत्वमप्रत्यूहमिति वाच्यम् । मानाभावात् । अनात्मनोऽप्यात्मनि संसर्गितयैवारोपः न तु स्वरूपेणेति सुवचत्वात् ।

ननु 'सत्यं ज्ञानमनन्तमि'ति श्रुत्या ब्रह्मणः सत्यत्वावेदनात् न तस्य स्वरूपेण आरोपः इति चेत् 'ऐतदात्म्यमिदं सर्वम्', 'तत्सत्यम्' इत्यादिश्रुत्या अनात्मनोऽपि सत्यत्वावेदनात्, न स्वरूपेणारोपः इति समम् । न च ऐतदात्म्यमिति श्रुतिः अनात्मनः व्यावहारिकसत्यत्वमेवावेदयति न पारमार्थिकं सत्यत्वमिति सुवचंत्वात् ।

किञ्च सत्यंज्ञानमित्यादिश्रुत्या ब्रह्मणि सत्यत्वादिवैशिष्ट्यबोधने अखण्डार्थत्वं न स्यात् । तदबोधने च कुतस्तस्य सत्यत्वसिद्धिरिति सेयमुभयतः पाशारज्जुः । तस्मात् न धर्मिणि आरोपितत्वं धर्मस्य धर्मिसमसत्त्वम् । अत एव यत्र धर्मिणि यद्धर्मवैशिष्ट्यं न बाधितं तत्त्वमेव तद्धर्मस्य तद्धर्मसमसत्त्वमिति निरस्तम् । वियदादिप्रपञ्चस्य स्वदेशकालयोः स्वोपादाने च बाधाभावेन अमिथ्यात्वप्रसङ्गात् इत्युक्तत्वात् ।

अपि च सत्यज्ञानानन्दादिपदानां न त्वदभिमतचिन्मात्रे लक्षणाभ्युपगमो युक्तः । लक्षणा हि मुख्यार्थसम्बन्धरूपैव वाच्या । लोके क्लृप्तत्वात् । न च सत्यादिपदानां मुख्यार्थोऽन्यः सम्भवति । सम्भवे च तल्लक्ष्यस्य अर्थस्य अमिथ्यात्वजडत्वसान्तत्वादिप्रसङ्गात् इत्युक्तम् । तथाच तल्लक्ष्यत्वेन त्वदभिमतचैतन्यमेव तन्मुख्यार्थ इति वाच्यम् । एवं सति कथं तस्य तल्लक्ष्यत्वमिति न जानीमः । किञ्च निर्विशेषे लक्षणाभ्युपगमः सर्वथा दुःशकः । त्वदुक्तरीत्या ब्रह्मणि जीवजडप्रपञ्चगतसर्वविशेषाणां तात्पर्यवत्या श्रुत्यैव प्राप्तेः । तथाहि 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्यदतोऽस्ति श्रोतृ', 'नेह नानास्ति किञ्चन' इत्यादिश्रुत्या न भेदादिविशिष्टचेतनाचेतनात्मकप्रपञ्चस्य स्वरूपेण निषेधो वाच्यः । तथा सति जडप्रपञ्चस्येव चेतनप्रपञ्चस्यापि स्वरूपेण निषेधप्रसङ्गात् । न च चेतनप्रपञ्चः स्वरूपेण निषेधार्हः । तत्त्वमस्यादिमहावाक्ये जीवेशचैतन्ययोरभेदावेदनात् । किन्त्यन्योन्याभावापरनामकभेदमात्रनिषेधो वाच्यः, सर्वनिषेधप्रतियोगितावच्छेदकधर्मरूपत्वात् । तथा च निर्विशेषचैतन्ये लक्षणेति परकीयं वचनं रिक्तमेवापन्नम् । निर्विशेषचैतन्यस्यैवाप्रसिद्धत्वात् । एवं ब्रह्मणि सकलप्रपञ्चधर्मा अपि ब्रह्मवत् पारमार्थिका आपन्नाः । नेहनानास्ति किञ्चनेत्यादिश्रुत्यापि किञ्चनशब्दार्थभूतचेतनाचेतनप्रपञ्चस्य नानाशब्दितभेदविशिष्टस्य चेतनप्रपञ्चस्येव जडप्रपञ्चस्यापि स्वरूपेण निषेधायोगात् । ब्रह्मणि चेतनप्रपञ्चस्य तत्त्वमस्यादिवाक्येनेव जडप्रपञ्चस्यापि स्वरूपेण निषेधा-

योगात् । ब्रह्मणि चेतनप्रपञ्चस्य तत्त्वमस्यादिवाक्येनेव जडप्रपञ्चस्यापि 'स एवेदं सर्वम्', 'आत्मैवेदं सर्वम्', 'ब्रह्मैवेदं सर्वमि'त्यादिसावधारणवाक्येन अत्यन्ताभेदावेदनात् । एकेनैव वाक्येन जडप्रपञ्चस्य भेदविशिष्टस्य स्वरूपेणैव निषेधः । चेतनप्रपञ्चांशे तु भेदमात्रस्य स्वरूपेण निषेधो न तु तद्विशिष्टस्य तस्येत्यभ्युपगमायोगात् । प्रत्युत 'स एवेदं सर्वमि'त्यादिना सावधारणवाक्येन सर्वशब्दार्थभूतचेतनाचेतनप्रपञ्चमात्रस्य ब्रह्मणा अत्यन्तभिन्नत्वावेदनाविशेषेण चेतनप्रपञ्चांशस्येव जडप्रपञ्चांशस्यापि तेन अत्यन्ताभिन्नत्वमावेद्यत इत्युभयांशेऽपि भेदमात्रमेव स्वरूपेण निषेध्यत इत्युपेयम् । वैरूप्येण निषेधाश्रयणे विशेषहेत्वभावादिति । न च प्रपञ्चस्य जडत्वादेव न चैतन्यात्यन्ताभेदः सम्भवतीति वैरूप्येण निषेधाश्रयणं युक्तमिति वाच्यम् । अस्य अनुमानमात्रत्वेन नित्यनिर्दोषत्वमहातात्पर्यवत्त्वाभ्यां प्रबलश्रुत्यपरिपन्थित्वात् । प्रत्युत तयैव उक्तानुमानस्य दुर्बलस्य बाधौचित्यात् ।

यत्तु निर्विशेषस्यैवोपक्रमात् उपसंहाराच्च सर्वमिदं छान्दोग्यवाक्यं निर्विशेषपरमिति स्थिते तत्त्वमसि तत्त्वमसि इति नवकृत्वोऽभ्यस्तमपि वाक्यं निर्विशेषतत्त्वंपदार्थविदनपरमित्येव वाच्यम् । अन्यथा विरोधात् । तथा च तत्त्वंपदयोस्तादृशार्थलक्षणकत्वं बलादेवापतितमिति । तन्न । 'सदेव सौम्येदमि'त्युपक्रमे अग्रआसीच्छब्दाभ्यां कालविशेषस्य सौम्यशब्देन सम्बोध्यस्य चेतनविशेषस्य अवधारणेन अग्रशब्दसमभिव्याहृतेन व्याकरिष्यमाणप्रपञ्चप्रागभावस्य च प्रतीत्या तस्योपक्रमस्य सद्वितीयोपक्रमत्वात् । न च सत्यपदमेव प्रथमश्रुतत्वात् उपक्रमः तस्य अवधारणसम्बन्धे अद्वितीयोपक्रमत्वमेव पर्यवस्यतीति वाच्यम् । तथापि सद्वितीयोपक्रमत्वाक्षतेः । सत्पदेन प्रथमान्तेन सदर्थस्य लिङ्गपरिमाणवचनादिविशिष्टस्यैव प्रतीतेः । न च प्रथमाविभक्त्यपेक्षया सदिति प्रातिपदिकस्यैव उपक्रमत्वात् तस्यावधारणेन सम्बन्धे निर्विशेषोपक्रमत्वमप्रत्यूहमिति वाच्यम् । तथापि सदिति प्रातिपदिकस्य सत्त्वविशिष्टवाचितया सद्वितीयोपक्रमतानपायात् । 'स्वार्थो द्रव्यं तथा लिङ्गं सङ्ख्या कर्मादयोऽपि च । नामार्थपञ्चकं प्राहुराद्यं त्रिकमथापरे' इत्यभियुक्तवचनात् । लिङ्गादेरपि प्रातिपदिकार्थत्वेन प्रातिपदिकस्यापि सद्वितीयोपक्रमत्वस्य दुष्परिहरत्वाच्च । 'ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति स्मृतेः सदितिशब्दस्य ब्रह्मपर्यायत्वेन ब्रह्मशब्दस्य च 'अथ कस्मादुच्यते परं ब्रह्मे'ति यस्मादुच्चार्यमाण एव 'बृंहति बृंहयति तस्मादुच्यते परब्रह्मे'ति । 'बृहत्त्वाद् बृंहणत्वाच्च तद्ब्रह्मे'-त्यभिधीयते । 'वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि', 'तस्मिन्नेव ब्रह्मशब्दः मुख्यवृत्तो महामुने', 'यस्मिन् प्रयुज्यमाने तु गुणयोगः सुपुष्कलः । तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः' इत्यादिश्रुतिस्मृतिभ्यो बृहत्वबृंहयितृत्वगुणपूर्त्यादिविशिष्टार्थत्वावेदनात् । सच्छब्दस्यापि तत्समानार्थतया सविशेषोपक्रमत्वस्य दुर्वारत्वाच्च ।

एतेन सदिति निर्विशेषोपक्रम एव। न च प्रथमया लिङ्गाद्युपस्थितिः। प्रातिपदिकार्थसत्तामात्रेऽपि प्रथमानुशासनात्। 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमे'ति पाणिनिस्मरणात्। 'सन्मात्रादिष्वर्थेषु प्रथमा स्यादि'त्यभियुक्ततद्व्याख्यानाच्चेति निरस्तम्।

प्रातिपदिकार्थस्यैव सविशेषत्वोपपादनात्। सदिति प्रातिपदिकमपि लक्षणया निर्विशेषपरमिति तु न युक्तम्। तस्य तत्परत्वे मानाभावात्। अन्यथा तस्य निर्विशेषोपक्रमत्वे सिद्धे लक्षणाकल्पनम्। कल्पितायां च तस्यां लक्षणया निर्विशेषप्रतीतेः तदुपक्रमत्वसिद्धिरित्यन्योन्याश्रयात्। मुख्यार्थबाधकाभावाच्च। उपक्रमस्यासञ्जातविरोधितया मुख्यार्थपरत्वस्यैवोचितत्वात्।

अपि च तत्त्वमस्यादिवाक्यस्याभेदपरत्वे सिद्धे एव तन्निर्वाहाय लक्षणानुसरणीया। तदेव त्वसिद्धम्। बाधकाभावविशिष्टस्यैव उपक्रमोपसंहाराभ्यासादेः तात्पर्यलिङ्गत्वस्य वक्तव्यत्वात्। ब्रह्मणश्चेतनप्रपञ्चजडप्रपञ्चाभ्यामत्यन्तभिन्नत्वस्य 'अन्यदेव तद्विदितादथो अविदितादधि, 'अविद्यायामन्तरे वर्तमानाः नान्यच्छ्रेयो वेदयन्ते प्रमूढाः। अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद', 'उत्तमः पुरुषस्त्वन्यः' इत्यादि श्रुतिस्मृतिसिद्धत्वेन तस्य बाधकाभावस्यासिद्धेः। न च तत्त्वमस्यादिवाक्यमेव भेदश्रुतिबाधकं किं न स्यात्। नित्यनिर्दोषत्वस्याविशिष्टत्वादिति वाच्यम्। भेदश्रुतीनां सावधारणत्वेन निरवकाशत्वेन च प्रबलत्वात्। न च 'तत् त्वमेव, त्वमेव तत्' इत्याद्यभेदश्रुतेरपि सावधारणत्वेन समबलत्वेन अविशेष इति वाच्यम्। तथापि भेदश्रुतेः निरवकाशत्वेन अधिकबलत्वानपायात्। न चाभेदश्रुतिरपि निरवकाशेति त्वया शक्यमभ्युपगन्तुम्। 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत', 'विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति', 'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति', 'सर्वं समाप्नोषि ततोऽसि सर्वः', 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते' इत्यादिश्रुतिस्मृतिभिरभेदश्रुतीनां तज्जत्वतल्लयत्वतदनत्वतदुपजीव्यत्वैकस्थानस्थितत्वसर्वव्याप्तत्वसर्वनियामकत्वार्थकतया प्रवृत्तस्य उक्तत्वेन सावकाशत्वात्। सामानाधिकरण्येन निर्दोषमात्रस्य दधित्रपुसं प्रत्यक्षो ज्वरः 'नड्वलोदकं' पादरोगः इत्यादौ जन्यजनकभावसम्बन्धमादाय लोक इव वेदेऽपि 'ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः' इत्यादौ जन्यजनकभावमादायैव दृष्टत्वात् तत्सिद्ध्यादिकमादायापि सामानाधिकरण्यनिर्देशदर्शनाच्च। तत्तन्मतिविषयायामविप्रतिपन्नैकार्थत्वमादायापि तत्तन्मतिमतामपि बहुलं लोके इदानीं तत्तद्राष्ट्राधिपतयो राजान ऐक्यमापन्ना इत्यविगीतव्यवहारदर्शनाच्च। 'तत्त्वमसि', 'अयमात्मा ब्रह्म', 'तत्त्वमेव त्वमेव तत्', 'स एवेदं सर्वम्' इत्यादिवैदिकसामानाधिकरण्यनिर्देशस्यापि ब्रह्मजन्यत्वादिकमादायोपपत्त्या सावकाशत्वस्य स्फुटप्रतिभासत्वाच्च। 'न हि यतो वा इमानि भूतानि जायन्ते', 'तोयेन जीवान् व्यससर्ज भूम्यामि'त्यादौ ब्रह्म-

तदुत्पत्त्यादिकं नोच्यत इत्यस्ति । न हि श्रुत्यैव स्वहृदयवर्णने तत्र केनापि वैदिकेन विवदितुं शक्यम्, अर्थान्तराश्रयणं वा कर्तुम् । अन्तरङ्गतया वेदेऽपि वैदिकार्थस्यैव ग्राह्यत्वात् ।

अपि च 'यजमानः प्रस्तरः', 'आपो वा इदं सर्वम्', 'सोमेन यजेत' इत्यादौ क्लृप्तदोषरहित-प्रत्यक्षविरोधात् मुख्यार्थभेदार्थत्वं त्यक्त्वा तदविरुद्धामुख्यार्थार्थान्तरत्वाश्रयणवत् तत्त्वमस्यादावपि नाहमीश्वरः नाहं सर्वज्ञः नाहं चिन्मात्रम् इत्यादिभेदग्राहिनित्यनिर्दोषसाक्षिप्रत्यक्षविरुद्धाभेदार्थत्वं त्यक्त्वा तदविरुद्धामुख्यार्थान्तरत्वाश्रयणौचित्याच्च । न चैवं भेदस्य प्रत्यक्षसिद्धत्वेन भेदश्रुतीनामनुवादितया न तत्र तात्पर्यमिति युक्तम् । तर्हि तद्विरोधादेव अभेदश्रुतीनामपि न तत्र तात्पर्यम्, मानान्तरप्राप्तिवत् तद्विरोधस्यापि तात्पर्यविरोधित्वात्, ब्रह्मप्रतियोगिकजीवानुयोगिकभेदस्य प्रत्यक्षसिद्धत्वेऽपि जीवप्रति-योगिकेश्वरानुयोगिकभेदस्य तदसिद्धत्वेन भेदश्रुतीनामननुवादित्वोपपत्तेश्च । तादृशभेदस्यैव उदाहृत-श्रुतिप्रतिपाद्यत्वात् ।

न च यो यत्प्रतियोगिकभेदवान् सोऽपि तन्निष्ठभेदप्रतियोगी इति व्याप्तिबलात् जीवप्रतियोगिके-श्वरानुयोगिकभेदोऽपि सिद्ध्यतीति, तथापि भेदश्रुतीनामनुवादित्वतादवस्थ्यमिति वाच्यम् । एवं तवापि तत्त्वमस्यादिश्रुतीनामनुवादित्वप्रसङ्गात् । अहमस्मि इत्यादिप्रत्यक्षेण अहमर्थभूतजीवस्य सदर्थभूत-ब्रह्माभिन्नत्वस्य, सदर्थभूतब्रह्मणोऽहमर्थभूतजीवाभिन्नत्वस्य च विषयीकरणात् । प्रत्यक्षसिद्धस्याभेदस्य सिषाधयिषानन्तरभाविनानुमानेनापि विषयीकरणात् । सदर्थस्य च 'अस्ति भाति प्रियं रूपं नाम चेत्यर्थपञ्चकम् । आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयमि'ति त्वयैव ब्रह्मरूपत्वस्वीकारात् । तत्तदह-ङ्कारोपहितस्य चैतन्यस्यानेकत्वात् अहमस्मीति कस्यचिज्जीवस्य सदर्थभूतब्रह्माभिन्नत्वस्य प्रत्यक्षेण सिद्धावपि, सर्वजीवेषु तेन तदसिद्धेः नाभेदश्रुतेरनुवादित्वं यदि तदा जीवविशेषस्य नाहमीश्वर इत्यादि प्रत्यक्षेण ईश्वरप्रतियोगिकभेदे सिद्धेऽपि सर्वजीवेषु तदसिद्ध्या उक्तव्याप्तिबलेनापि जीवविशेषप्रति-योगिकेश्वरानुयोगिकभेदविशेषस्य सिद्धावपि सकलजीवप्रतियोगिकेश्वरानुयोगिकभेदस्य तेनासिद्ध्या उदाहृतभेदश्रुतेः नानुवादित्वमिति समम् ।

किञ्च युगपद्वृत्ततुल्यार्थकवाक्यद्वयवत् उदाहृतप्रत्यक्षेण समानार्थत्वेऽपि अनादिभेदश्रुतेः तदधीन-प्रवृत्तिकत्वाभावेन अननुवादित्वमेवोचितम् । विस्तृतं चैतदन्यत्र ।

अपि च भेदश्रुतेः अनुवादित्वेऽपि न भेदे तात्पर्यक्षतिः । तावता तत्र अपूर्वत्वलिङ्गं मा भवतु । फलादेस्तल्लिङ्गत्वं को वारयेत् । 'अस्ति च पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति । जुष्टं यदा पश्यत्यन्यमीशमि'त्यादिजीवेशभेदज्ञानस्य फलश्रवणम् ।

अपि च उदाहृतभेदश्रुतेः प्रत्यक्षसिद्धभेदानुवादित्वं त्वया तदैव वक्तुं शक्यते यत्र त्वया 'नान्योऽतोऽस्ति द्रष्टे'त्यादिना भेदनिषेधः क्रियते इत्यङ्गीक्रियते, तत्रैव प्रत्यक्षेण यदि भेदप्राप्तिरङ्गीक्रियते न त्वन्यथा। न हि विशिष्टयोरुपहितयोर्वा चैतन्ययोः प्रत्यक्षेण भेदप्राप्तिः अविशिष्टयोरनुपहितयोर्वा तयोः 'नान्योऽतोऽस्ति द्रष्टे'त्यादिना भेदनिषेधः क्रियते इति शक्यमभ्युपगन्तुम्। अप्रसक्तप्रतिषेधापत्तेः। विशिष्टोपहितपरस्परचैतन्यभेदस्यानिषिद्धत्वेन निर्विशेषचैतन्यपारमार्थिकत्वापत्तेश्चेत्युक्तमधस्तात्। तस्मादप्रसक्तप्रतिषेधत्वपरिहाराय संसारापादकाविशिष्टानुपहितचैतन्यभेदाज्ञानापादितभेदभ्रमनिरासाय च पुरोवादानुवादतन्निषेधानां प्रत्यक्षश्रुतिरूपाणां समानविषयत्वमवश्यमभ्युपेयम्। एवं च निर्दोषपरीक्षिततादृशचैतन्यपरस्परभेदगोचरसाक्षिप्रत्यक्षविरोधोऽद्वैतश्रुतीनां दुष्परिहर इति किमधिकमाचरितम्। तत्र श्रुतिगततत्त्वम्पदयोर्निर्विशेषचैतन्याभेदसिद्ध्यर्थं तत्र लक्षणा कल्पनीयेति न जानीमः।

अपि च अस्तु तादृशचैतन्ययोरेव तत्त्वम्पदयोर्लक्षणा। तावता का तवेष्टसिद्धिः। लक्षणया तत्त्वंपदजन्यत्वदभिमततदर्थावगतेः नैय्यायिकाभिमतघटत्वादिगोचरनिर्विकल्पकवत् प्रत्यक्षायोग्यत्वेन तस्यास्तादृशचैतन्याभेदविषयत्वे मानसप्रत्यक्षस्य साक्षिणो वा साक्षित्वायोगात्। तत्प्रतिबद्धलिङ्गाभावेन तेनापि तस्याः तदभेदविषयत्वासिद्धेश्च। न्यायनये जागरादिसविकल्पकरूपकार्येण तत्कारणतया घटघटत्वादिगोचरतया निर्विकल्पकसिद्धिवत् अद्वैतवादे तादृशनिर्विकल्पककार्यस्य अविद्यानिवृत्त्यतिरिक्तस्य अभावेन तेन तादृशचैतन्याभेदविषयतया तन्निर्विकल्पकसिद्धिरित्युक्तेरसम्भवात्। अविद्यानिवृत्तेश्च त्वदभिमततादृशनिर्विकल्पकसाध्यत्वे मानाभावात्। प्रत्युत संसारदशायां तत्तदर्थगोचराज्ञाननिवृत्तेः तत्तदर्थगोचरसविकल्पकसाध्यत्वस्यैव दर्शनेन तत्त्यागेनान्यथाकल्पने दृष्टहानादिप्रसङ्गाच्चेति।

किञ्च तदेव ज्ञानं तान्त्रिकैर्निर्विकल्पकमित्युच्यते यद्धर्मधर्मिसंसर्गानवगाहि, तादृशं च निर्विकल्पकं धर्मधर्मिणोरभेदे भेदे वा उदासीनमेवेति लक्षणया तत्त्वंपदाभ्यामुत्पन्नमपि शोधिततत्त्वंपदार्थस्वरूपमात्रावगाहिज्ञानं तदभेदे तद्भेदे वा उदासीनमेव स्वीकर्तुमुचितम्। न हि तज्ज्ञानस्य स्वरूपमात्रावगाहिनः तदभेदविषयत्वेन अनुव्यवसायलक्षणोऽनुभवोऽस्ति। अनुमानेन शब्देन वा जायमानं तज्ज्ञानविषयकज्ञानमपि तज्ज्ञानस्य स्वरूपमात्रविषयकत्व एव मानं भवितुमर्हति। न तु तदविषयीभूततादृशतत्त्वंपदार्थभेदविषयत्वेऽपि, सामर्थ्याभावात्। ज्ञानविषयाज्ञानस्यानुव्यवसायादेः व्यवसायोपनीतमात्रग्राहित्वस्वाभाव्यदर्शनात्। व्यवसायानुपनीतमपि तदेव अनुव्यवसायविषय इति दृष्टं यत्प्रकारत्वानुयोगित्वादि। न हि तादृशतत्त्वंपदार्थभेदः प्रकारत्वादिकं भवति।

अपि च उक्तरीत्या तत्त्वमस्याद्यभेदश्रुतीनामुदाहृतश्रुतिप्रदर्शितविषयालम्बनतया सावकाशानामपि स्वकपोलकल्पिततत्त्वमादिपदार्थभूताखण्डचैतन्याभेदपरत्वं निर्वाह्यमिति कृत्वा यदि तदर्थभूतचैतन्यस्वरूपमात्रे लक्षणाभ्युपगमः तर्हि स एवेदं सर्वमित्यादिचेतनाचेतनात्मकप्रपञ्चमात्राभेदबोधकश्रुतीनामपि उदाहृतश्रुत्युक्तब्रह्मोपजीव्यत्वादिविषयतया सावकाशानामपि विरुद्धांशत्यागेन लक्षणया प्रपञ्चस्वरूपमात्रविषयकनिर्विकल्पोपस्थितिमङ्गीकृत्य तस्याखण्डब्रह्मचैतन्याभेदोऽपि किं नाभ्युपेयः । न हि तत्रेवात्र स्वकपोलकल्पना दण्डवारिता । न चाभेदे सामानाधिकरण्यं यत्र तत्रैव भेदग्राहिप्रत्यक्षाद्यविरोधाय तादृशी कल्पना युक्ता । न हि 'स एवेदं सर्वमि'त्यादिवाक्ये अभेदे सामानाधिकरण्यम्, किन्तु बाधायामेव तत् । तथाच न तादृशी कल्पनाऽत्रोचितेति वाच्यम् । विशेषनियामकाभावेन तत्त्वमस्यादिवाक्ये स एवेदं सर्वमित्यादिवाक्ये चाभेद एव सामानाधिकरण्यस्योपगन्तव्यत्वात् । अन्यथा वैपरीत्यापत्तेः । विरुद्धांशत्यागस्योभयत्रापि तुल्यत्वेन स्वरूपमात्राभेदबोधने बाधकाभावाच्च । चेतनप्रपञ्चस्येव जडप्रपञ्चस्यापि विशिष्टविशेषणोपहितविशेषणस्यैव अनिषिद्धत्वेन मिथ्यात्वेऽपि स्वरूपमात्रस्य अनिषिद्धत्वे अखण्डचैतन्यवदमिथ्यात्वोपपत्तेः । सत्यत्वावेदकश्रुतिविरहस्य ब्रह्मव्यतिरिक्तजडप्रपञ्च इव तदतिरिक्तचेतनप्रपञ्चेऽप्यविशेषात् । अहमस्तीति प्रतीति[1]द्रव्येऽस्तीत्यादिसत्त्वग्राहिप्रत्यक्षस्य जडप्रपञ्चेऽप्यविशेषात् । आगमापायित्वादेरपि विशिष्टवेषेण जडप्रपञ्च इव चेतनप्रपञ्चेऽप्यविशेषात् विशिष्टवेषेण उपहितवेषेण वा चेतनप्रपञ्चस्य फलपर्यन्तावस्थायित्वाभ्युपगमसम्भवेन कृतहानादिदोषप्रसङ्गाच्च । मिथ्यार्थप्रतियोगिकत्वेऽपि प्रपञ्चात्यन्ताभावस्य स्वरूपत्ववत् मिथ्याभूताचेतनप्रपञ्चप्रतियोगित्वेऽपि अभेदस्य ब्रह्मस्वरूपत्वोपपत्त्या तदावेदकश्रुतीनां च तत्त्वावेदकत्वोपपत्तेश्च ।

अपि च वाक्यार्थनिष्ठेषु पदार्थनिष्ठेषु वा तत्त्वमस्यादिवाक्येषु सत्यज्ञानादिवाक्येषु च तत्त्वमादिपदानां सत्यज्ञानादिपदानां वा कस्मिन् लक्षणेति पृष्टे न परेण निर्विशेषचैतन्ये लक्षणेति वक्तव्यम् । तत्र निर्विशेषशब्देन किं भावरूपधर्ममात्रं विवक्षितम्, किंवा भावाभावसाधारणं धर्ममात्रम् ? यद्वा स्वबोध्याभावव्यतिरिक्तधर्ममात्रम् ? निःशब्दार्थभूतात्यन्ताभावोऽपि किं ब्रह्मातिरिक्तः पारमार्थिकः । उत अपारमार्थिकः किं वा ब्रह्मस्वरूप एवेति ॥

तत्र आद्ये न तावदाद्यः ब्रह्मणोऽपहतपाप्मत्वादृश्यत्वाद्यभावरूपधर्मानादाय सविशेषत्वापातात् । अद्वैतहानेश्च । अपहतपाप्मत्वादृश्यत्वादीनां च धर्मत्वस्य 'अन्तरस्तद्धर्मोपदेशात्', 'अदृश्यत्वादिगुणको धर्मोक्तेः' इत्यादिसूत्रे भाष्ये च त्वयैवाभ्युपगमात् । अत एव न द्वितीयः । श्रुतिबोध्यस्य अपारमार्थिक-

१. प्रतीति - इति पूरितम्, विद्वद्भिः संशोधनीयम् ।

त्वायोगाच्च । अन्यथा त्वदभिमतचैतन्यस्यापि अपारमार्थिकत्वं स्यात् । न तृतीयः शून्यवादापत्तेः । द्वितीयपक्षेऽपि न तावदाद्यः । व्याहतेः । स्वविहितनिषेधस्य स्वेनैव निषेधात् । अद्वैतहानेश्च । न द्वितीयः । व्याहतेः । तात्पर्यतः श्रुतिबोध्यस्याप्यपारमार्थिकत्वायोगात् । अपारमार्थिकात्यन्ताभावे प्रतियोगिनः अप्रातिभासिकस्य पारमार्थिकत्वावश्यम्भावाच्च । न तृतीयः शून्यवादप्रसङ्गात् । तृतीयेऽपि न तावदाद्यः सङ्कोचकप्रमाणाभावात् । न च व्याहतभाषित्वापत्तिरेव तथा सङ्कोचे मानमिति युक्तम् । तथा सति मानान्तराप्राप्तस्य तात्पर्यतः श्रुतिविहितस्य सार्वज्ञादेरपि निषेधायोगेन निषेधस्य श्रुतिविहितेतरविहितविषयत्वेन सङ्कोचापत्तेः । स्वबोध्याभावव्यतिरिक्तभावाभावोभयप्रतियोगिकात्यन्ताभावस्य पारमार्थिकत्वे अद्वैतहानेश्च । व्याहतेरेव न द्वितीयोऽपि न तृतीयोऽपि । शून्यवादाविशेषापत्तेः ॥

किञ्च विशेषाभावोऽपि किं विशेषणमुपाधिर्वा । नाद्यः तस्य ब्रह्मातिरिक्तत्वे पारमार्थिकत्वे च अद्वैतहानेः । तद्वैशिष्ट्यावेदकं वेदान्तानामखण्डार्थत्वापत्तेश्च । अपारमार्थिकत्वे च तादृशाभावप्रतियोगिनः अप्रातिभासिकस्य पारमार्थिकत्वापत्तेः । तद्बोधकवेदान्तानामतत्वावेदकत्वापत्तेश्च । ब्रह्मस्वरूपत्वे[१] च <u>(क)</u> शून्यवादाविशेषापत्तितादवस्थ्यात् । विशेषानुपपत्तेश्च । न हि तन्मात्रं तद्विशेषणं भवितुमर्हति । सर्वदा विशेषस्वरूपसहिष्णोः ब्रह्मस्वरूपमात्रस्य तदभावरूपत्वानुपपत्तेः । परिभाषामात्रत्वापत्तेश्च । अत एव तदुपलक्षणत्वपक्षोऽपि प्रत्यूढः । उपलक्षणस्य ज्ञानार्थत्वेन नित्यसिद्धे त्वदभिमतचैतन्ये तस्य उपलक्षणत्वोक्त्ययोगाच्चेति दिक् ॥

नापि तृतीयः । उक्तविकल्पदोषग्रासात् । 'यावत्कार्यमवस्थायिभेदहेतोरुपाधिता' इति त्वदभ्युपगमात् मोक्षदशायां कार्यमात्राभावेन तदत्यन्ताभावस्य असत्त्वापत्त्या तदा ब्रह्मणः निर्विशेषत्वभङ्गप्रसङ्गाच्च ।

ननु यावत्कार्यमवस्थायिनो भेदहेतोरुपाधितेति मयाऽनङ्गीकारात् कार्याभावदशायामपि तस्य सत्त्वोपगमेन ब्रह्मणो न निर्विशेषत्वभङ्ग इति चेन्न । तर्हि तस्य यावद्ब्रह्मस्वरूपमनुवर्तमानत्वेन ब्रह्मवज्ज्ञाननिवर्त्यत्वाभावेन अमिथ्यात्वप्रसङ्गात् । न चेष्टापत्तिः । अद्वैतश्रुतिविरोधात् ।

ननु अविद्यानिवृत्तेः श्रुतिप्रतिपन्ननित्यपुरुषार्थत्वनिर्वाहाय ज्ञानानिवर्त्यत्वेऽपि प्रतिपन्नोपाधौ निषिद्धत्वेन मिथ्यात्वानपायः इति चेत् । तर्हि 'गौरनाद्यन्तवती सा, एषोऽश्वत्थः सनातनः आकाशवत्सर्वगतश्च नित्यः, स यथा अनन्तोऽयमाकाशः एवमनन्त आत्मा वेदितव्यः नित्या सततविक्रिया'

१. अत्र ब्रह्मस्वरूपकत्वे च इति पाठे क इत्यधिकमिति भाति ।

इत्यादिप्रकृत्याकाशाद्यनन्तत्वावेदकश्रुतिस्मृतिप्रामाण्यनिर्वाहाय प्रकृत्याकाशादीनां त्वया ज्ञाननिवर्त्यत्वं नोच्येत अविद्यानिवृत्तिवद्विशेषाभाववच्च प्रतिपन्नोपाधौ निषिद्धत्वमात्रेण मिथ्यात्वसम्भवेन अद्वैतश्रुत्यविरोधोपपत्तेः । सत्यभूतद्वितीयाभ्युपगम एव तद्विरोधात् । प्रकृत्याकाशाद्यनन्तत्वावेदकश्रुत्यादीनां आभूतसंप्लवावस्थायित्वपरतया त्वदीयव्याख्यानायोगाच्च ।

किञ्चैवं सादिसान्तवियदादिघटादियोग्यायोग्यप्रपञ्चस्य प्रतिपन्नोपाधौ निषिद्धत्वमात्रेण मिथ्यात्वसम्भवात् ज्ञानान्निवृत्तिर्नोच्यते ।

ननु 'तस्याभिध्यानात् योजनात् तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः', 'तदा विद्वान् नामरूपाद्विमुक्तः' इत्यादिश्रुत्यैव प्रकृत्यादिप्रपञ्चस्य ज्ञानान्निवृत्तिरुच्यते इति चेत् । तर्ह्यज्ञाननिवृत्तेः निर्विशेषत्वस्य च ज्ञानान्निवृत्तिः स्यात् । श्रुत्या अविशेषेण ब्रह्मव्यतिरिक्तस्य ज्ञानान्निवृत्त्यावेदनात् निर्विशेषत्वविधानादविद्यानिवृत्तेः श्रुतिप्रतिपन्ननित्यपुरुषार्थत्वानुसाराच्च । सर्वनिवृत्त्यावेदकश्रुतेः तद्व्यतिरिक्तविषयत्वेन सङ्कोच आश्रीयत इति चेत् तर्हि विश्वमायाया विद्वन्नामरूपयोश्च ज्ञानान्निवृत्तिरित्यस्तु । न तु वियदादिप्रपञ्चस्य न वा तन्नाम्नः । तस्मात् ब्रह्मणो निर्विशेषत्वस्यैव दुर्निरूपत्वात् निर्विशेषे लक्षणा इति पराभ्युपगमो निर्मूलः ।

यत्तु 'तदा विद्वान् नामरूपाद्विमुक्तः, भूयश्चान्ते विश्वमायानिवृत्तिः' इति श्रुत्या सङ्कोचाभावात् 'नामरूपे व्याकरवाणि नामरूपे व्याकरोत्' इत्यत्रेव नामरूपात्मकप्रपञ्चयोः विश्वस्य सर्वस्य मायायाश्च ज्ञानात् निवृत्तिरुच्यत इति स्यादेव तद्विरोधः । न हि नामरूपे व्याकरवाणि इत्यादौ यत्किञ्चिन्नामरूपव्याकरणमर्थ इति ।

तन्न 'सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वे'ति वाक्यान्तरानुसारात् जगत्सृष्टिप्रकरणाच्च नामरूपे व्याकरवाणीत्यादौ सकलनामरूपव्याकरणमर्थोऽस्तु । तथा विद्वान् इत्यत्र तु विद्वच्छब्दसमभिव्याहाररूपसङ्कोचकसत्त्वात् तदीयनामरूपाभ्यामेव विमुक्तिरर्थः । न हि 'द्वादशेऽहनि पिता नाम कुर्यात्' इत्यत्र सकलनामकरणमर्थो भवति ।

किञ्च 'नामरूपाद्विमुक्त' इत्युक्ते शृङ्खलातोऽयं विमुक्त इत्यत्रेव विदुषो नामरूपाभ्यां सम्बन्धाभाव एव प्रतीयते न तु ज्ञानात् तयोर्निवृत्तिः । एवं 'भूयश्चान्ते विश्वमायानिवृत्तिरि'त्यत्रापि विश्वा = सर्वा माया तस्या एव ज्ञानान्निवृत्तिः प्रतीयते, न तु सर्वस्य प्रपञ्चस्य । न च विश्वं च माया च विश्वमाये तयोर्निवृत्तिरिति द्वन्द्वगर्भषष्ठीतत्पुरुषाश्रयणे असङ्कोचेन ज्ञानान्निवृत्तिप्रतीतिरस्तीति वाच्यम् । ज्ञाना-

त्सर्वनिवृत्तेस्तच्छ्रुत्यर्थत्वे विश्वनिवृत्तिरित्येव तच्छ्रुत्याकारः स्यात्। मायाशब्दं विनापि मायानिवृत्तेरपि तावतैव लाभसम्भवात्। न हि माया सर्वशब्दपर्यायविश्वशब्दार्थो न भवतीत्यस्ति ॥

किञ्च विश्वमायाशब्दे द्वन्द्वाश्रयणात् कर्मधारयाश्रयणे लाघवम्। कर्मधारयात् द्वन्द्वस्य जघन्यत्वात्। साहित्यलक्षणानाश्रयणात्। कर्मधारये लक्षणानाश्रयणात्। न च मायाया एकव्यक्तित्वात् कर्मधारये विश्वपदोपादानमनर्थकमिति वाच्यम्। 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यनया श्रुत्या मायानेकत्ववर्णनात्।

ननु 'अजस्य मायया, अनादिमायया सुप्तः, मायां तु प्रकृतिं विद्यात्, माया चाविद्या च स्वयमेव भवती'त्यादौ बहुस्थले मायाशब्दस्य एकवचनान्तत्वेन निर्देशात्, श्रुतैकत्वत्यागे कारणाभावात्, तदविरोधाय मायाभिरित्यत्र मायानेकत्वमविवक्षितमिति चेन्न।

'पुरुरूप ईयते' इत्यत्र श्रुतपुरुरूपोपयोगितया बहुत्वस्य विवक्षणीयत्वात्। उदाहृतबहुवाक्येषु मायाशब्दे श्रुतैकवचनस्य जात्येकवचनत्वेनाप्युपपत्त्या विरोधाभावात्।

ननु मायाभिरित्यत्रैव जात्यर्थत्वमस्तु। 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्'[१] इति पाणिनिस्मरणादिति चेत् तथापि मायाशब्दार्थबहुत्वानपायात्। जातेरनेकव्यक्तिकत्वनियमात्। अन्यथा जातित्वभङ्गप्रसङ्गादिति।

वस्तुतस्तु 'भूयश्चान्ते विश्वमायानिवृत्तिरि'तिश्रुतेः ज्ञानात् विश्वमायानिवृत्तिर्नार्थः। किन्तु 'जहात्येनां भुक्तभोगामजोऽन्यः' इति श्रुतिपर्यालोचनया 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि', 'तरति शोकमात्मवित्', 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति श्रुतिस्मृतिपर्यालोचनया च तत्त्यागो वा तत्तरणं वा अर्थः।

किञ्च भूयश्चेति चशब्दसमभिव्याहारात् अन्ते जगदवसानकाले मायानिवृत्तेः पौनःपुन्यं प्रतीयते इत्यर्थवादः। तच्च तदैव शोभते यदि निवृत्तस्य निवृत्तिः प्रमाणसिद्धा स्यात्। न चैवम्। तथा गौरनाद्यन्तवती सेत्यादितदनन्तत्वाद्यावेदकश्रुत्यनुसारात् तस्यान्ते जगदवसानकाले 'ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे' इत्यादिश्रुत्यनुसारात् विमुक्तिकाले वा भूयश्च भूयो भूयो निवृत्तिः कार्यवैमुख्यरूपैव पर्यवस्यति। एवञ्च 'धाता यथापूर्वमकल्पयदि'ति प्रतिकल्पं सजातीयकार्यजातसृष्टिप्रतिपादकश्रुतिरप्यनुकूलिता भवतीति न किञ्चिदनुपपन्नम्।

---

१. अष्टाध्यायी अ १. पा २. सू. ५८

केचित्तु– 'भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ तदा विद्वान् पुण्यापापे विधूय' इत्यादिश्रुत्यनुसारेण विश्वमायानिवृत्तिरित्यत्र विश्वमायाशब्देन मिथ्याज्ञानसंशयपुण्यपापकर्माण्येव गृह्यन्ते इत्याहुः । तदपि न । तथा 'विद्वान् नामरूपाद्विमुक्तः' इति श्रुतिरेव सकलनामरूपात्मकप्रपञ्चस्य ज्ञानान्निवृत्तौ मानमिति । तत्र कतिपयनाम्नां ज्ञानान्निवृत्त्यनङ्गीकारे स्यादेव तद्विरोधः । तथाहि नानाजीववादे जीवानामानन्त्यात् तेषां मुक्तिकाले विद्वत्त्वमावश्यकम् । अनन्तजीवानामपि क्रममुक्तौ युगपन्मुक्तौ वा तत्तन्नामरूपाभ्यां ज्ञानाद्विमुक्तिर्जायमाना सकलनामरूप-प्रपञ्चनिवृत्तिरूपैव पर्यवस्यतीति । तदप्यत एवापास्तम् ।

शृङ्खलातो विमुक्त इत्यत्रेव अत्रापि विमुक्तिशब्दस्य तद्विश्लेषमात्रार्थत्वौचित्यात् ॥

किञ्च नामरूपाभ्यां विमुक्तिः विदुषस्ताभ्यां विश्लेषरूपैव वाच्या । क्रममुक्तिपक्षे श्रवणाद्युपाय-मनुसरतां मध्ये 'तद्यो यो देवानां प्रथमं प्रत्यबुध्यत स एव तदभवत् तथा ऋषीणां तथा मनुष्याणां' इत्यादि श्रुत्यनुसारात्, प्रथमं यो विद्वानभवत् (स नामरूपाद्विमुक्तोऽभवदिति) नामरूपसंसारिणामप्यने-केषामुपलम्भात् । न हि विमुक्तशब्दार्थस्य निवृत्तिरूपत्वे तद्वत्तया तेषामुपलम्भः सम्भवी । न च ते नामरूपे ज्ञानिनामरूपाभ्यामन्ये एव । प्रत्यभिज्ञानं तु तानेव शालीन् भुञ्जते[1] इतिवत् तज्जातीय-विषयम् । ज्ञानिनामरूपे तु ज्ञानात् निवृत्ते एवेति वाच्यम् । एवमपि विवादपर्यवसानात् । ज्ञानिना-मरूपमात्रस्य ज्ञानान्निवृत्तावपि तदतिरिक्तवालुकादिजडप्रपञ्चनामरूपयोः अनिवृत्तेः । न हि जडप्रपञ्चस्य विद्वत्त्वं कदापि सम्भवति । अत एव युगपत् सर्वमुक्तिरिति पक्षेऽपि न तवेष्टसिद्धिरिति किमनुपपन्नम् ।

किञ्च 'यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय' इति दृष्टान्तबलादपि नामरूपविमुक्तिशब्दार्थो नामरूपाभ्यां विश्लेष एव वाच्यः । एकसत्त्वे द्वयमिह नास्तीतिवत् नामभूते ब्रह्मण्यपदार्थे द्वितीयाभाववैशिष्ट्यं मानान्तरप्राप्तम् । तस्मादपूर्वतालक्षणलिङ्गसत्त्वात् द्वितीयाभाव-वैशिष्ट्ये तात्पर्यसत्त्वं सर्वथा दुर्वारम् । अन्यपदार्थवत् द्वितीयाभावस्य स्वातन्त्र्येण मानेऽपि द्वितीय-वस्तुमिथ्यात्वसिद्धिप्रसङ्ग एव दोषः । द्वितीयाभावस्य प्रतिपन्नोपाधिभूतसप्तपदार्थत्वाबोधनात् । प्रतिपन्नोपाधिस्थत्रैकालिकनिषेधप्रतियोगित्वस्यैव परेण मिथ्यात्वरूपत्वोपगमात् ।

किञ्च अद्वितीयपदे विरुद्धार्थस्य नञः समानाधिकरणतत्पुरुष एव स्वीकर्तुमुचितः । न तु बहु-व्रीहिः । बहुव्रीहेः समानाधिकरणतत्पुरुषापेक्षया जघन्यत्वात् । एवञ्च अद्वितीयं द्वितीयविरोधीत्यर्थः । द्वितीयविरोधित्वं च द्वितीयसंहर्तृत्वेन । लोके संहर्तरि[2] प्रतीतिव्यवहारदर्शनात् । जगत्संहर्तृत्वं च ब्रह्मणः

---

१. भुञ्महे इति पाठः साधुरिति भाति ।  २. अद्वितीय इति योज्यम् ।

'यत् प्रयन्त्यभिसंविशन्ति', 'प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते' इत्यादिश्रुतिसिद्धमिति न भूतब्रह्मस्वरूपरूपोऽङ्गीकार्यः। किमतो यद्येवमिति चेत् उच्यते। सोऽत्यन्ताभावः पारमार्थिकश्चेदद्वैतहानिरेव। न चेदद्वैतश्रुतेः अतत्त्वावेदकत्वप्रसङ्गः। द्वितीयशब्दार्थस्य वियदादेः अमिथ्यात्वप्रसङ्गश्च। 'नेह नानास्ति किञ्चने'ति श्रुत्यनुसारात् अद्वितीयपदे न विद्यते द्वितीये यस्मिन् तत् तथोक्तमित्येव विग्रहः स्वीकार्यः। तथाच सत्यपदार्थभूतेऽन्यपदार्थे द्वितीयाभाववैशिष्ट्यमेव तेन तात्पर्यतो बोधनीयम्। अन्यथा द्वितीयमिथ्यात्वासिद्धिप्रसङ्गात्। तथा तेन तद्बोधने अखण्डार्थत्वक्षतेः। अखण्डार्थत्वसिद्ध्यर्थं ततस्तथाविधबोधानभ्युपगमे च द्वितीयमिथ्यात्वासिद्धितादवस्थ्यमिति सेयमुभयतः पाशा रज्जुः॥

ननु सदर्थे अन्यपदार्थे द्वितीयाभाववैशिष्ट्यं शब्दमहिम्ना प्रतीयमानमपि न तत्तात्पर्यगोचर इति न तदखण्डार्थत्वविघातीति चेत् न। लिङ्गसत्त्वे तात्पर्यसत्त्वावश्यम्भावात्। न हि सच्छब्दार्थम्॥[१]

किञ्च ब्रह्मणो जगदुपादानत्वमङ्गीकुर्वता परेण उपादानदेशे ब्रह्मणि जगतः प्रागभाव एव तया अङ्गीकर्तुमुचितः। न त्वत्यन्ताभावः॥ समयविशेषसंसर्गात्यन्ताभावातिरिक्तः प्रागभाव एव मया नोपेयत इति चेत् जगन्मिथ्यात्वासिद्धितादवस्थ्यात्। न ह्यानीतापसारितघटस्थले तत्र विद्यमानो घटात्यन्ताभावः तन्मिथ्यात्वप्रतीतिव्यवहारनियामको भवति। इदमग्रे द्वितीयरहितमित्युक्ते कालराहित्याभाव एव प्रतीयते। द्वितीयराहित्याभावस्तु द्वितीयसत्त्व एव पर्यवस्यति। कादाचित्काभावाभावस्य प्रतियोगिस्वरूपत्वनियमात्।

किञ्च द्वितीयपदे समासमभ्युपगच्छता नञर्थे अत्यन्ताभावे आधेयत्वेनाभिमतसच्छब्दार्थभूतादन्यपदार्थादन्य एव स्वीकर्तुमुचितः। बहुव्रीहेरन्यपदार्थप्रधानत्वात्। न हि यतः कुतश्चित् तस्यान्यत्वं वक्तुं शक्यम्। किन्तु बहुव्रीहिरूपवृत्तिगतपदार्थादन्यत्वमेव। तथैव व्युत्पत्तेः। एवञ्च न द्वितीयात्यन्ताभावः सच्छब्दार्थः स्वीकार्यः। दूरे गत्वा तत्स्वीकारात् वरं प्रथमकक्ष्यायामेव तत्स्वीकारोऽस्तु, इति शङ्कापिशाची च परास्ता। सति सम्भवे त्यागायोगात्। दृष्टेनैवोपपत्तौ अदृष्टादिना तन्निर्वाहस्य अवक्तव्यत्वात्। दृष्टकारणतानिर्वाहकानुगतकल्पनाविलोपापत्तेश्चेत्यन्यत्र विस्तरः। तस्मान्न जगन्मिथ्यात्वेऽनुमानम्।

## श्रुतेः जगन्मिथ्यात्वे मानत्वनिराकरणम्

नापि श्रुतिः जगन्मिथ्यात्वे मानम्। ब्रह्मव्यतिरिक्तं सर्वं मिथ्येति श्रुतेः अनाकलनात्। एकमेवाद्वितीयमिति श्रुत्या सच्छब्दार्थस्य ब्रह्मणः सृष्टेः प्राक्काले द्वितीयशब्दितवियदादिप्रपञ्चरहितत्वमात्रा-

---

१. अत्र किञ्चित् पूरणीयमिति भाति।

वेदनात् । तत्काले तद्राहित्यस्य प्रागभावरूपत्वेन अत्यन्ताभावरूपत्वासिद्धेः । सिद्धौ वा अत्यन्ताभावप्रतियोगित्वमात्रस्य मिथ्यात्वानापादकत्वात् । प्रतियोगिस्वरूपसहिष्णवत्यन्ताभावस्य स्वप्रतियोगिमिथ्यात्वानापादकत्वस्वाभाव्याच्च । न हि कुलालव्यापारात् (पूर्वम्) अयं घटो मृदेवासीदित्युक्ते अयं घटो मिथ्येति प्रतिभा । किन्तु तस्य तदा मृद्रूपेणैवावस्थितिसिद्धिः । द्वितीयत्वाक्रान्तस्यापि द्वितीयनिषेधस्य अनिषेधात् तस्यापि निषेधे अद्वितीयमिति निषेधस्य व्याहतभाषित्वापत्तेः । निषेधातिरिक्तस्य द्वितीयस्य निषिद्धनिषेधप्रतियोगित्वे ब्रह्मवत्पारमार्थिकत्वापत्तेः । निषेधस्यैव अनिषेध्यनिषेधप्रतियोगित्वेन मिथ्यात्वापत्तेश्च । द्वितीयत्वाक्रान्तत्वेन निषेधनिषेधस्यापि स्वातिरिक्तनिषेधविषयत्वे तस्याप्येवं तस्याप्येवमिति निषेधानङ्गीकारात् । भीतेन परेण प्राथमिक(प्रायिक)द्वितीयनिषेधस्य सप्तपदार्थभूतान्यपदार्थमात्रस्वरूपत्वाङ्गीकारे च द्वितीयपदे बहुव्रीहिसमासाभावापत्तेः । समासवृत्तिगतपदार्थादन्यस्यैव प्राधान्येन प्रतिपाद्यत्व एव 'अनेकमन्यपदार्थे' इति बहुव्रीह्यनुशासनात् ॥

किञ्चान्यपदार्थत्वेन उपगतस्य सत्पदार्थस्यैव द्वितीयनिषेधरूपत्वे तस्यैकस्यैव प्राधान्यमुपसर्जनत्वं च स्यात् । न चैवम् । निर्विशेषत्वभङ्गप्रसङ्गात् । एकस्यैव स्वापेक्षया प्रधानत्वोपसर्जनत्वाश्रयणे विरोधश्च स्यात् । तत्र विविदितव्यम् (विवेक्तव्यम्) । प्रपञ्चमुपशमयति नाशयतीति प्रपञ्चोपशमस्तच्छ्रुत्यर्थः । उपशमशब्दस्य ध्वंसापरनामकनाशपरत्वं 'प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये' इत्यादावेव सुप्रसिद्धम् । न च अद्वितीयपदे बहुव्रीह्यनाश्रयणेऽपि द्वितीयस्याभावोऽद्वितीयम् इत्यर्थोऽस्तु इति वाच्यम् । तथा सति सत् एकमेव द्वितीयाभावश्च इति वाक्यार्थाश्रयणेन वाक्यभेदप्रसङ्गात् । न हि नार्षेयं वृणीते भिन्नमद्वितीयमिति पर्युदासाश्रयणेन एकवाक्यत्वसम्भवे तद्भेदाश्रयणं युक्तम् । तथाच 'सदेव सोम्येदमग्र आसीदि'ति सावधारणोपक्रमपर्यालोचनया अद्वितीयमिति तदनन्तरवाक्यपर्यालोचनया च सत्यपदार्थभूतब्रह्मणो द्वितीयाभाववैशिष्ट्यं द्वितीयप्रागभावप्रध्वंसाभाववैशिष्ट्यरूपमेवेति नैतद्वाक्यबलात् द्वितीयमिथ्यात्वसिद्धिरिति स्थितम् ।

केचित्तु अद्वितीयपदे बहुव्रीहिरेव वास्तु तथापि न द्वितीयमात्रमिथ्यात्वमित्यविवादम् ।

न च विशेषनियामकं विना एष नियम उपपद्यते । तन्नियामकं चान्विष्यमाणमत्रेदानीमिदं कार्यं नास्ति पूर्वमपि नासीत् उत्तरत्र न भविष्यति इत्यबाधितप्रतीतिविषयीभूताभावाधिकरणत्वमेव भवितुमर्हति । स च भावात्यन्ताभावादन्य एवाभावो भवितुमर्हति । अन्यत्र कारणे तदभावादेव कार्यस्य तदाश्रितत्वेन अनुत्पत्तिः, तन्नाशादनाश इत्येव स्वीकार्यम् । न चैवं प्रतीतिसिद्धस्य अभावविषयस्यैव तथाविधकार्यनिर्वाहकत्वसम्भवे, तन्निर्वाहोऽदृष्टाधीनो वा स्वभावप्रयुक्तो वा आकस्मिको वेति शक्य-

मभ्युपगन्तुम् । दृष्टनिर्वाहकाभाव एव तथाश्रयणौचित्यात् । न च कार्यात्यन्ताभावेन निमित्तकारण-साधारणेन तथाविधकार्यनिर्वाह उपपद्यते । तथा सति कार्यस्य निमित्तकारणाश्रयत्वेनापि उत्पाद-प्रसङ्गात् । तन्नाशादपि नाशापत्तेश्च ।

एतेन मृत्तन्त्वादीनामेव तादृशकार्याभावविशेषाश्रयत्वमेव कुत इति पृष्टेन तन्नियामकतया अदृष्टादिकमेव मदुक्तं लक्षणया अनुभवसिद्धम् । तच्च विषयवैलक्षण्यकृतमेव वाच्यम् । विधिप्रतीति-द्वयस्यापि तुल्यविषयत्वं स्यात् । तत उभयत्रापि सामग्रीभेदाभावेन प्रतीतिद्वयस्यापि उभयत्र एकाकारैव मृत्पिण्डेऽपि ततोऽन्यत्रैव घटो नास्ति नासीदित्यत्यन्ताभावः किन्तु तदतिरिक्त एव । स च न घटध्वंसः तदा घटानुत्पत्तेः ध्वंसस्य प्रतियोगिजन्यत्वात् । नापि तदन्योन्याभावः । कादाचित्कत्वानुभवात् । इदमत्र नेति प्रतीतेश्च । न चायमनुभवो भ्रमः । बाधकाभावात् । तथाच पारिशेष्यात् सा प्रतीतिरनादिं सान्तमेव घटाभावं गोचरयतीति अकामेनापि स्वीकार्यम् । एवंविधाभाव एव प्रागभाव इत्युच्यते । एवंविधलक्षणाबाधितप्रतीतिसिद्धस्यापि घटाभावस्य अत्यन्ताभावत्वोक्तिः परिभाषैव पर्यवस्यति ।

अपिच घटादिकार्यं जायमानं मृत्पिण्डादीनां स्वकारणत्वाविशेषेऽपि मृत्तन्त्वाद्याश्रितमेव जायते । न तु यावत्स्वकारणाश्रितवृत्तिनियामकसम्बन्धादन्यस्यैवारोप्ये सम्बन्धस्यावश्यकत्वात् । अन्यथा स्वाधिकरणे तस्य प्रतियोगिसहिष्णुत्वमेव न स्यात् ।

किञ्च स्वकालदेशयोरेकावच्छेदेन प्रतिपत्तिविषयीभूतसम्बन्धेन प्रपञ्चस्वरूपासहिष्णुब्रह्म-स्वरूपस्य तदत्यन्ताभावत्वोक्तिः परकीया 'यूस्त्र्याख्यौ नदी'तिवत् परिभाषामात्रं स्यात् । तत्र च सिद्धसाधनमविशेषः ।

अपि च जगज्जनकत्वेन प्रमाणसिद्धस्य ब्रह्मणः जगदभावत्वं तत्प्रागभावरूपत्वमेव भवितुमर्हति, न अत्यन्ताभावत्वरूपम्, प्रतियोगिजनकाभावस्य प्रागभावत्वनियमात् । न च प्रागभावे मानाभावः । प्रतियोगिजनकत्वेन प्रमितेऽर्थे अभावत्वग्राहकप्रमाणप्रवृत्तौ तादृशस्यैव प्रागभावत्वेन तन्मानस्यैव तन्मानत्वात् ।

किञ्च घटः क्वचिन्नास्ति नासीत् न भविष्यति इति घटाभावप्रतीतिरनुभूयते । क्वचित्तु मृत्पिण्डे अत्र घटो नासीत् इदानीं घटो नास्ति, उत्तरत्र घटो भविष्यति इति तदभावप्रतीतिरनुभूयते इत्यविवादम् । प्रतीतिद्वयस्य घटाभावविषयत्वाविशेषेऽपि असद्वैलक्षण्यस्यैव स्वीकारात् । शून्यवादाविशेषत्वप्रस-ङ्गाच्च । नापि सद्विविक्तत्वम्, सतोऽपि सदन्तरविविक्तत्वेन अर्थान्तरत्वात् सत्ताजातिमद्विविक्तत्वसाधने

बाधात् अभावाद्यंशे सिद्धसाधनाच्च । ब्रह्मविविक्तत्वसाधनेऽपि सिद्धसाधनमेव । देशकालसम्बन्धित्वरूपसत्त्वाभावसाधने च बाधतादवस्थ्यम् । अत एव स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं मिथ्यात्वमिति प्रत्यूढम् । उक्तदोषानिस्तारात् । अत्यन्ताभावत्वस्य पारमार्थिकत्वे अद्वैतहानेः । तस्य मिथ्यात्वमेव वाच्यम् । एवं हि मिथ्याभूतात्यन्ताभावप्रतियोगित्वरूपमेव जगन्मिथ्यात्वमुक्तं स्यात् । तत्र च सिद्धसाधनमेव दोषः । न च मिथ्यात्वशरीरप्रविष्टोऽत्यन्ताभावः ब्रह्मस्वरूप एवेति नाद्वैतहानिरिति वाच्यम् । तथा सति जगन्मिथ्यात्वमेव न स्यात् । स्वकाले स्वदेशे एकावच्छेदेन प्रतियोगिस्वरूपसहिष्णोः अत्यन्ताभावस्य सम्बन्धभेदेन प्रतियोगिस्वरूपसहिष्णवत्यन्ताभावमिथ्यात्वानापादकत्वात् । न च सम्बन्धभेदो नास्तीति वक्तुं शक्यम् । प्रतियोगिस्वरूपसहिष्णुत्वेन तत्र प्रपञ्चवेषेणैव मिथ्यात्वं न त्वविशिष्टानुपहितवेषेणेति स्यात् । अत एव नायं घटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी पटत्वात् अंशित्वात् पटान्तरवदित्यनुमानेन पटादिमिथ्यात्वसिद्धिः । अस्यैव पटस्य प्रतिपत्तिविषयीभूतसंयोगातिरिक्तसम्बन्धेन एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाभ्युपगमेन सिद्धसाधनात् । प्रतिपत्तिविषयीभूतसम्बन्धेनैव तत्र तत्प्रतीतिसाधने प्रत्यक्षे क्लृप्तदोषरहितपरीक्षितप्रत्यक्षादिविरोधात् । अन्यथा वह्नावपि पदार्थत्वेन प्रतिपत्तिविषयीभूतसम्बन्धेन प्रसङ्गात् । न च तत्रापि पारमार्थिकतदभावसाधने इष्टापत्तिरिति वाच्यम् । प्राङ्मिथ्यात्वसिद्धेः तत्सत्ताभेदस्यैव असिद्धेः । अन्यथा अन्योन्याश्रयात् । सर्वत्रैव सम्भवेन अनुमाने बाधस्यादोषत्वापत्तेश्च । अत एवायं पटः एतत्पटभिन्नः पटत्वात् पटान्तरवत् इत्याद्यनुमानेन तन्मिथ्यात्वसिद्धिरित्यपास्तम् ।

किञ्च मिथ्यात्वं न निरस्वरूपम् । अनभ्युपगमात् साध्याप्रसिद्धेश्च । शुक्तिरूप्यादिकं मिथ्येत्यङ्गीकुर्वता परेण तन्निरस्वरूपत्वस्यानभ्युपगमात् अपरोक्षप्रतीत्यन्यथानुपपत्त्या तत्प्रपञ्चविषयकप्रत्यक्षस्य अयोग्यप्रपञ्चविषयकश्रुतिस्मृत्यादिजन्यज्ञानस्य च भ्रमत्वासिद्धेः । बाधादर्शनाच्च । भ्रमानन्तरभाविग्राह्याभावावगाहिप्रमाणजन्यज्ञानस्यैव बाधत्वात् अभावज्ञानमात्रस्याबाधत्वात् । काले भेदेनैकस्मिन्नेव देशे प्राक्स्थितस्य घटादेरपि स्मरणानन्तरमभावप्रतीतौ सत्यामपि तस्य बाधितत्वेन अव्यवहारात् । चिद्भिन्नत्वतद्विषयत्वयोरपि शुक्तिरूप्यादौ मिथ्यात्वसहचरितत्वेन दृष्टत्वेऽपि नित्यद्रव्येतरत्वसहचरितत्वेन दृष्टस्य निरवयवत्वस्य तदव्याप्यत्ववत् मिथ्यात्वं प्रत्यव्याप्यत्वात् । अन्यथा गुणकर्मादिसाधारणस्य निरवयवत्वस्यापि नित्यत्वव्याप्यत्वापत्त्या तेषामपि नित्यत्वसिद्धिप्रसङ्गात् । अत एव परिच्छिन्नत्वादिकमपि मिथ्यात्वसाधकमिति प्रत्यूढम् ।

किञ्च ज्ञाततया अज्ञाततया वा चितोऽपि चिद्विषयत्वात् तथैव व्यभिचारः। यत्किञ्चिद्भिन्नत्वस्य चिदन्तरेऽपि सत्त्वात् तेन व्यभिचार एव। न च विशिष्टवेषेण तस्यापि मिथ्यात्वेन न व्यभिचार इति वाच्यम्। तथासति जगतोऽपि विशिष्टत्वस्य सत्त्वात् अत्यन्ताभेदावेदिका श्रुतिरप्यनुकूलिता भवति।

ननु सत्पदार्थस्य ब्रह्मव्यतिरिक्तस्याप्रामाणिकत्वात् तस्यैव पारमार्थिकं सत्त्वमभ्युपेयम्। एवञ्च सति योग्यायोग्यघटादिवियदादिप्रपञ्चस्य उदाहृतश्रुतिप्रत्यक्षाभ्यां ब्रह्मात्यन्ताभाव एवावेद्यत इति वाच्यम्। न हि त्वया तथा वक्तुं शक्यते। ब्रह्मवज्जगतोऽपि अनाद्यनन्तत्वादिप्रसङ्गात्। न चैवम्। प्रत्यक्षादिप्रमाणेन तस्योत्पादविनाशादिग्रहात्। तथाच प्रपञ्चस्य सदाद्यनन्ताभेदस्त्वयापि नाभ्युपगन्तुं शक्य इति चेन्न। सदत्यन्ताभेदो हि सत्यत्वाश्रयात्यन्ताभेद एव नान्यः। एवञ्च ब्रह्मवत् प्रपञ्चस्यापि सत्यत्वाश्रयत्वेन प्रत्यक्षादिना तदाश्रयात्यन्ताभेदबोधने कानुपपत्तिः। ब्रह्मणि सत्यज्ञानादिवाक्येनेव प्रपञ्चेऽपि 'ऐतदात्म्यमिदं सर्वम्', 'तत्सत्यमि'त्यादिश्रुत्या सत्यत्ववैशिष्ट्यबोधनात्। तस्मान्न मिथ्यात्वे प्रत्यक्षं मानम्।

## अथ प्रपञ्चमिथ्यात्वेऽनुमानप्रमाणनिराकरणम्

नाप्यनुमानं तत्र मानम्। प्रपञ्चे तत्प्रतिबद्धलिङ्गस्य बाधितत्वारोपितत्वादेरदर्शनात्। प्रपञ्च-मिथ्यात्वसिद्धेः पूर्वं यो (प्रपञ्चो) ब्रह्मेत्यादि तादात्म्यविषयप्रतीतिजननात् ब्रह्मणोऽपि सद्भिन्नत्वज्ञान-भिन्नत्वादिना मिथ्यात्वजडत्वादिप्रसङ्गः। यदि च सदभेद एव प्रतीयते न तदात्मकं तदा प्रकृतेऽपि तुल्यम्। सन्न घट इत्यादिप्रतीत्या न सद्भिन्नत्वरूपमिथ्यात्वसिद्धिः।

एतेन सद्भिन्नत्वज्ञानस्येव सदभिन्नत्वज्ञानस्यापि प्रतीतावच्छेदकवैशिष्ट्यावगाहिज्ञानसाध्य-त्वादिज्ञानात् प्राक् तथाविधज्ञानसामग्रीविरहात् घटादौ सदभिन्नत्वगोचरप्रत्यक्षप्रतीतिरपि दुर्लभेति निरस्तम्। सदभेदस्य संसर्गविधयैव भानाभ्युपगमात्। भेदोऽपि तथा भासते इति वक्तुं शक्यम्। तथा सति सन्नेव घटः इति परीक्षासहकृततदत्यन्ताभेदगोचरद्वितीयादिप्रतीत्यनुदयप्रसङ्गात्। न हि सद्भिन्ने एव तदभिन्नत्वगोचरद्वितीयादिप्रतीतिरनुभवसिद्धा। येन प्राथमिकप्रतीतौ सदभेद एव सद्भेदोऽपि संसर्गविधया भासत इत्युच्यते। एवं 'सदेव सोम्येदमग्र आसीदि'ति प्रपञ्चदर्शनात् कालदेशयोः सामानाधिकरण्यं न स्यात्। वृक्षे कपिसंयोगतदभावौ च न स्याताम्। न हि कालदेशौ जगदाधारौ न भवत इत्यस्ति। तयोः तथात्वस्य धर्मिग्राहकमानसिद्धत्वात्। एवं सम्बन्धभेदेन प्रतियोगिमति देशे सम्बन्धान्तरेण तदभावश्च न स्यात्। न च शाखावच्छिन्नवृक्षात् मूलावच्छिन्नवृक्षस्य भेदात्

प्रतियोगितदभावयोरैकाधिकरण्यमेवासिद्धमिति वाच्यम् । य एव शाखावच्छिन्नः स एव भूतलावच्छिन्न इत्यबाधितप्रतिज्ञानात् ।

किञ्च सन् घट इत्यादिप्रतीतौ प्रतीयमानसत्तादात्म्यं तदभेदरूपमेव[1] तदभेदश्च सदर्थप्रतियोगिकान्योन्याभावात्यन्ताभावरूप एव तत्र पर्यवस्यति । स च सत्त्वसंसर्ग एवेति कथं सत्तादात्म्ये सदर्थप्रतियोगिकभेदप्रवेश इति न जानीमः ।

किञ्च सन् घट इति प्रतीत्यनन्तरं परीक्षासहकारेण प्रत्यक्षतः सन्नेवायं घट इति प्रतीत्यन्तरं जायमानं सर्वानुभवसिद्धम् । न हि तत्र भासमानावधारणव्यवच्छेद्यः तद्भेदादन्योऽस्ति । किञ्च यदि सन् घटः इत्यादिप्रतीत्या तादात्म्यस्य विषयीकरणात् सद्भिन्नत्वरूपमिथ्यात्वसिद्धिः तदा सत्यज्ञानदिवाक्येनापि सत्यं ब्रह्म ज्ञानमित्याकारकसदर्थगोचरप्रतीतिरस्ति । न हि तया विना सत्प्रतियोगिकभेदः सुग्रहः । भेदप्रत्यक्षस्य प्रतियोगितावच्छेदकप्राथमिकप्रतियोगिज्ञानसाध्यत्वात् । द्वितीयादिप्रतीतेरपि प्राथमिकप्रतियोगिसमानाकारत्वेन त्वदभिमतसत्तादात्म्यविषयत्वस्य नियामकाभावेन असिद्धेः । सन् घटः इत्यादिप्रत्यक्षप्रतीतेः घटादौ त्वदभिमतसत्तादात्म्यविषयत्वेऽपि सद्भेदवत्सदभेदस्यापि सिद्ध्या सत्यत्वापाताच्च । न च भेदविरोधान्नाभेदसिद्धिरिति वाच्यम् । वैपरीत्यापातात् । घटः सन् पटः सन् इत्यादि भेदाभेदोभयविषयकप्रत्यक्षस्यानुभवसिद्धत्वेन तत्र भेदाभेदयोर्विरोधासिद्धेः । धर्मिग्राहकप्रत्यक्षेण घटादेः सद्भिन्नाभिन्नत्वेनैव सिद्धेः । न हि धर्मिग्राहकमानसिद्धेऽर्थे विरोधः शङ्कापथं गन्तुमर्हति । पदार्थानां विरोधाविरोधयोः प्रमाणेनैव व्यवस्थापनीयत्वात् । न हि क्वचिद् भेदाभेदयोः सहचाराभावो दृष्ट इत्येतावता प्रकृते प्रमाणसिद्धः सहचारस्त्यागार्हः । अन्यथा भावाभावयोः क्वचित्सामानाधिकरण्याभावतत्सत्यत्वबुद्धेरेव दर्शनात् ।

ननु सत् अन्नमित्यादिप्रत्यक्षप्रतीतिरेव अन्नादिमिथ्यात्वं मानम् । तया अन्ने सत्तादात्म्यविषयीकरणात् । सत्तादात्म्यं हि तस्य सद्भिन्नत्वे सति सदभिन्नत्वरूपमेव[1] वक्तव्यम् । एवञ्च अन्नादेर्मिथ्यात्वं वज्रलेपायितम् । न हि सद्भिन्नत्वातिरिक्तं मिथ्यात्वं नामास्ति । न च तया प्रतीत्या सदभेदस्यापि विषयीकरणात् तस्य सत्यत्वमपि स्यादिति वाच्यम् । एकस्यैव सत्ताभेदाभेदयोर्विरुद्धत्वेन सदभेदस्य सद्व्यतिरेकेणासत्त्वरूपतयैव पर्यवसन्नत्वेन तस्य सद्भिन्नत्वरूपमिथ्यात्वाविरोधात् । व्यतिरेकेण असत्त्वस्य सदभिन्नत्वेन उपपादयितुमशक्यतया सद्भिन्नादिरूपविशेष्यविरहेणैव उपपादनीयत्वादिति चेन्न ।

---

१. सदभिन्नत्वरूपमेव इति भाष्यम् ।

सदिदमन्नमिति प्रत्यक्षेण सदभेदस्यैव विषयीकरणेन सद्भेदाभेदरूपतत्तादात्म्यस्यापि विषयत्वे प्रमाणाभावात्। उक्तसत्तादात्म्यस्य सामग्रीविरहेण प्राथमिकप्रतीतिविषयत्वायोगाच्च। न हि प्राथमिक-प्रत्यक्षप्रतीतेः पूर्वं सत्त्वविश्लेषप्रयुक्तरूपविशेषः वक्तुं शक्यः। नामविश्लेषोऽपि तत्तन्नाम्ना व्यवहारा-नुपहितात्मरूप एव। अत एव कृष्णाभीमरथ्यादिसप्तनदीनां सङ्गमानन्तरं समुद्रप्रवेशदेशे तत्तन्नामरूप-वत्तया तासामबाधितप्रतीतिव्यवहारविषयत्वमिदानीमप्यनुभूयते। अत एव ब्रह्मेतरस्य सर्वस्य ज्ञान-निवर्त्यत्वात् मिथ्यात्वमिति पराङ्गीकारः प्रत्यूढः। उक्तरीत्या ब्रह्मेतरस्य ज्ञानान्निवर्त्यत्वासिद्धेः। ततश्च निर्विशेषचैतन्यस्यैव नृशृङ्गायितत्वात् वेदान्तगतपदानां तत्र लक्षणेति पराभ्युपगमः निर्मूल एवेति स्थितम्।

ननु ब्रह्मेतरस्य सर्वस्य मिथ्यात्वात् ब्रह्मधर्माणामपि तथात्वेन मिथ्यात्वावश्यम्भावात् ब्रह्मणो मिथ्याभूतधर्मत्वेऽपि न वास्तवनिर्विशेषत्वक्षतिः अतो न निर्विशेषस्य नृशृङ्गायितत्वमिति चेन्न। ब्रह्मेतरसर्वमिथ्यात्वे मानाभावात्। तथाहि न तावत्तन्मिथ्यात्वे प्रत्यक्षं प्रमाणम्। योग्ये अभ्यासदशा-पन्नवह्नया(बन्धना)दौ प्रत्यक्षेण मिथ्यात्वबुद्धे कदाप्यदर्शनात्। प्रत्युत तेन सदन्नमिथ्यादिशब्दात् तथा प्रतीतावपि निर्विशेषत्वश्रुतिविरोधात् अद्वितीयशब्दस्य तत्र न तात्पर्यमिति चेन्न। वैपरीत्यापत्त्या तस्या एव अन्यार्थत्वस्य आश्रयणीयत्वात्। केवलो निर्गुणश्चेत्यादिनिर्विशेषत्वावेदकश्रुतावपि निःशब्दार्थस्य गुणशब्दितविशेषनिषेधस्याप्यन्यपदार्थभूतब्रह्मस्वरूपरूपत्वे उक्तदोषानिस्तारात्। अपूर्वतालक्षण-तात्पर्यसत्त्वावश्यम्भावेन तत्त्वावेदकप्रमाणावेदितत्वाविशेषेणान्यपदार्थभूतसत्पदार्थवत् तत्प्रधानत्वो-पसर्जनत्वरूपधर्मयोरपि पारमार्थिकत्वापत्तेश्च। न च वाच्यं प्रधानत्वादिधर्मस्यापि द्वितीयनिषेधवत् ब्रह्मस्वरूपत्वोपगमात् न ब्रह्मणो निर्विशेषत्वभङ्गप्रसङ्गः। न चात्र मानाभावः। पारमार्थिकद्वितीय-निषेधस्यैव तत्र मानत्वादिति। तथा सति द्वितीयनिषेधवत् सत्पदार्थस्य तदाश्रयत्ववत्तयोः प्रधान-त्वोपसर्जनत्ववच्च पारमार्थिकद्वितीयनिषेध.... तत्र मानत्वा .... बलादेव द्वितीयस्य वियदादिजड-प्रपञ्चस्याप्यन्यपदार्थभूतसत्पदार्थे स्वरूपत्वाश्रयणप्रसङ्गात्। एवञ्च 'स एवेदं सर्वम्', 'आत्मैवेदं सर्वम्', 'ब्रह्मैवेदं सर्वमि'त्यादिः सर्वस्य प्रपञ्चस्य ब्रह्मस्वरूपरूपतावेदिका श्रुतिरप्यनुकूलिता भवति। न च उत्पत्त्यादिमत्त्वेन श्रुत्यादिसिद्धस्य वियदादिप्रपञ्चस्य अनाद्यनन्तत्वेन सच्चिदानन्दरूपतया श्रुतिसिद्धेन ब्रह्मणा नात्यन्ताभेदप्रतीतिरस्तीति वाच्यम्। धर्मिग्राहकश्रुतिरूपप्रमाणसिद्धत्वेन तदनाद्यनन्तत्वादिवत् तत्सादित्वसान्तत्वादेरपि स्वीकार्यत्वात्। न चैवं विरोधपदार्थ एवोच्छिन्नः स्यादिति वाच्यम्। तथा धर्मिग्राहकमानरहितस्थल एव तद्विरोधोपपत्तेः। तस्मादद्वितीयपदे नञर्थो नात्यन्ताभावो वाच्यः। अग्रपदवैयर्थ्यात्।

नापि ध्वंसाभावस्तदर्थः । सृष्टेः पूर्वमिदंशब्दितस्य वियदादेरनुत्पन्नत्वात् । 'तदैक्षत तत्तेजोऽसृजते'त्यादिना उत्तरत्र सृष्टिप्रतिपादनात् । तदृध्वंसस्य तदुत्तरभावित्वनियमात् । तथाच तदर्थत्वेन प्रागभावो वा अन्योन्याभावो वा स्वीकार्यः । एवं च सति क्वचिन्नित्यमित्यनेन कथं द्वितीयमिथ्यात्वसिद्धिरिति न जानीमः । बहुव्रीह्याश्रयणेऽपि द्वितीयस्य अन्यपदार्थभूतसत्पदार्थनिष्ठप्रागभावप्रतियोगित्वस्यैव लाभात् ।

वस्तुतस्तु न बहुव्रीह्याश्रयणमुचितम् । बहुव्रीहेर्जघन्यवृत्तित्वात् । किन्तु तत्पुरुषाश्रयणमेव युक्तम् । न द्वितीयमद्वितीयमिति तत्पुरुषविशेषकर्मधारयाश्रयणे लाघवात् । न च न द्वितीयमद्वितीयमिति कर्मधारयाश्रयणेऽपि संसर्गाभावमात्रे शक्तस्य नञः अन्योन्याभाववति लक्षणाश्रयणात्, बहुव्रीहिसमासाश्रयण इव अत्रापि गौरवदोषस्तुल्य इति वाच्यम् । नञा ततो लाघवेन संसर्गाभावान्योन्याभावसाधारणाभावमात्रे शक्तत्वेन संसर्गाभावमात्रशक्तत्वानभ्युपगमात् भावपदप्रवृत्तिनिमित्तभूतभावत्ववत् नञ्पदप्रवृत्तिनिमित्तभूताभावत्वस्यापि अखण्डोपाधित्वेन संसर्गाभावत्वरूपसखण्डधर्मापेक्षया लघुशरीरत्वात् । न च प्रागभावत्वादिवत् भावत्ववच्च संसर्गाभावत्वमखण्डोपाधिरिति, न अभावत्वस्य लघुशरीरत्वमिति वाच्यम् । तथापि सामान्यरूपकृतविशेषसत्त्वेन अभावत्वस्यैव नञ्पदप्रवृत्तिनिमित्ततायाः आश्रयणीयत्वात् । न चैवमपि अन्यत्वप्रकारकप्रतीत्यर्थं कर्मधारयेऽपि लक्षणाश्रयणमावश्यकमिति वाच्यम् । तथापि वृत्तिपदार्थलक्षणातोऽन्यपदार्थलक्षणायाः जघन्यत्वात् ।

## 'एकमेवाद्वितीयमि'ति श्रुत्यर्थः

नन्वेवमपि ब्रह्मेतरसर्वपदार्थमिथ्यात्वसिद्धिरविकला । एकमेव सदिति वाक्यार्थाश्रयणादिति चेत् भ्रान्तोऽसि । न ह्यत्र एकोद्देशेन सदिति विधीयते येनेदंशब्दिततेजःप्रभृतिप्रपञ्चस्य मिथ्यात्वं स्यात् । किन्तु 'अग्रे इदं सदेवासीत् तच्चैकमेवे'ति सदर्थभूतब्रह्मोद्देशेन एकत्वमेव विधीयते । 'ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति सच्छब्दपर्यायत्वस्मरणेन सच्छब्दार्थभूतब्रह्मण एव उद्देशत्वौचित्यात् । 'ब्रह्म वा इदमग्र आसीत्', 'आत्मा वा इदमग्र आसीत्' इति कारणवाक्ये ब्रह्मपदानुसारादत्र सच्छब्दस्य ब्रह्मपरत्वस्यैव न्याय्यत्वात् । तथाच एतच्छ्रुतेरयमर्थो भवति । हे सौम्य इदं प्रत्यक्षादिप्रमाणसिद्धं नानाविधं तेजोऽबन्नात्मकं कार्यजातं अग्रे सृष्टेः पूर्वं असदेव आसीत् ब्रह्मैव आसीदित्युक्ते तत्काले ब्रह्ममात्रसत्त्वं प्रतीयते न तु तादृशकार्यजातासत्त्वम् । यथा 'अयं घटः उत्पत्तेः पूर्वमसदेवासीदि'त्युक्ते सन्मात्रसत्त्वं प्रतीयते न तु तत्कार्यपटादिसत्त्वमपि तद्वत् । तदा विद्यमानं सत् कीदृशमित्यत आह एकमेवेति । सृष्टिकर्मण्यसहायमेवेत्यर्थः । एकशब्दस्य तदर्थत्वं 'एकाग्नयः एकहलानि'

इत्यादौ सुप्रसिद्धम् । अत एवाद्वितीयं स्वसमानजातीयद्वितीयरहितम् । द्वितीयशब्दस्य प्रकृतसमान-द्वितीये व्युत्पत्तिश्च 'अस्य गोः द्वितीयेन भाव्यमि'त्युक्ते 'सदृशगौरेवोपादीयते नाश्वो न गर्दभ' इति महाभाष्यात् । 'अस्य गोर्द्वितीयोऽन्वेष्टव्यः इत्युक्ते गौरेव द्वितीयोऽन्विष्यते । नाश्वः पुरुषो वे'ति सङ्कर-भाष्याच्चावसीतय इति ।

अपरे तु अद्वितीयपदे बहुव्रीहिरेवास्तु न चैवं सत्पदार्थभूतान्यपदार्थभूते द्वितीयत्वावच्छिन्न-निषेधात् वियदादिद्वितीयशब्दार्थस्य प्रपञ्चस्य मिथ्यात्वं किन्न स्यादिति वाच्यम् । सत्पदार्थभूत-ब्रह्मापेक्षया द्वितीयत्वस्य वियदादिप्रपञ्च इव जीवात्मशब्दितचेतनप्रपञ्चेऽप्यसत्त्वेन तस्यापि निषेधा-पत्त्या मिथ्यात्वप्रसङ्गात् ।

किञ्च सत्पदार्थभूतब्रह्मणोऽपि मिथ्यात्वप्रसङ्गः । न विद्यते द्वितीयं यस्मिन्निति सत्पदार्थभूता-न्यपदार्थे स्वान्यद्वितीयत्वरूपावच्छेदकसत्त्वेन स्वस्यापि तदवच्छिन्ननिषेधप्रतियोगित्वात् । तस्मात् परतीत्या न द्वितीयनिषेधोऽस्याः श्रुतेरर्थः । किन्तु 'आत्मा वा इदमेक एवाग्र आसीत्', 'नान्यत्किञ्चन मिषत्', 'आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास', 'यस्मात्परं नापरमस्ति किञ्चित्', 'मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय' इत्यादिश्रुतिस्मृत्यनुरोधात् । अत्र द्वितीयशब्देन मिषत्वरूप-विशेषणविशिष्टद्वितीयं वा परशब्दितोत्कृष्टत्वविशिष्टद्वितीयं वा पूर्णत्वविशिष्टद्वितीयं वा विवक्षित्वा नञा तादृशविशिष्टनिषेध एव बोध्यते इति स्वीकार्यम् । विशिष्टनिषेधस्य 'सविशेषणे ही'ति न्यायेन स्वर्गी ध्वस्तः इत्यनेनेव द्वितीयपदेन बोध्यमानो निषेधः उक्तविशेषणनिषेध एव पर्यवस्यति ।

किञ्च अस्तु वा द्वितीयपदेन द्वितीयस्य स्वरूपेण निषेधः, तथापि न ब्रह्मेतरद्वितीयत्वावच्छिन्नस्य तेन निषेधः सिद्ध्यति । 'इदमग्रे सदेवासीदि'ति पूर्ववाक्यपर्यालोचनया 'तदैक्षत तत्तेजोऽसृजत', 'नामरूपे व्याकरोत्' इत्याद्युत्तरवाक्यपर्यालोचनया च कार्यप्रपञ्चस्यैव निषेधलाभात् । अनाद्यविद्यादेः तत्सामग्रीप्रविष्टकालादृष्टादेश्च तेन निषेद्धुमशक्यत्वात् । न च तापनीये माया च तमोरूपेत्युपक्रम्य 'नित्यनिवृत्ता विमूढैरात्मैव दृष्टास्य सत्त्वमसत्त्वं च दर्शयती'त्यविद्याया नित्यनिवृत्तत्वेनेति काला-विद्यादृष्टादेः ब्रह्मेतरस्य सर्वस्य निषेधश्रवणाच्च सर्वमिथ्यात्वं सिद्ध्यतीति वाच्यम् । निवृत्तध्वंस-प्रतियोगिविकारवति यावत् नित्यं सततं विकारो नित्यनिवृत्तेत्यर्थविज्ञानात् । 'नित्या सततविक्रिये'ति स्मृत्यनुसारेण तथैव अर्थस्य वर्णनीयत्वात् ।

यद्यपि नित्यं निवृत्ता नित्यनिवृत्तेति समासाङ्गीकारे लाघवम्, तथापि स्मृत्यनुसारेण बहुव्रीह्या-श्रयणस्यैव उचितत्वात् । अन्यथा 'गौरनाद्यन्तवती'ति तदनाद्यन्तत्वावेदकश्रुतिविरोधात् । नेह नाने-त्यादिश्रुतेः मिथ्यात्वपरत्वस्य निरसिष्यमाणत्वाच्चेति ।

न च वाच्यं श्रुतद्वितीयत्वावच्छिन्ननिषेध एवायमस्तु । न चैवं जीवब्रह्मणोरप्युक्तरीत्या निषेध-विषयत्वसम्भवेन मिथ्यात्वप्रसङ्गः । उपक्रमे सदेवेति सावधारणेन सत्पदेन ब्रह्मणः सत्पदस्यैवा-वेदनात् । सत्यज्ञानादिवाक्येनापि तदावेदनात् तद्व्यतिरिक्तस्यैव द्वितीयस्य निषेधविषयत्वम् । अन्यथा तद्विरोधादिति । तथापि जीवात्मनो निषेधविषयत्वापरिहारात् । न च तस्यापि तत्त्वमस्यादिवाक्येन परमार्थसिद्धब्रह्माभिन्नत्वावेदनात् तद्व्यतिरिक्तद्वितीयस्यैव निषेधविषयत्वमिति साम्प्रतम् । तथा सति 'स एवेदं सर्वम्', 'आत्मैवेदं सर्वं', 'ब्रह्मैवेदं सर्वमि'त्यादिश्रुत्या चेतनाचेतनात्मकसर्वप्रपञ्चस्यापि परमार्थसद् ब्रह्माभिन्नत्वावेदनात् । सङ्कोचकप्रमाणसद्भावात् अद्वितीयमिति निषेधस्य तद्व्यतिरिक्त-प्रामाणिकद्वितीयप्रपञ्चविषयत्वमस्तु इति वाचाटकवचनावकाशप्रसङ्गात् । प्रत्युत महदादिसर्वप्रपञ्चस्य 'ऐतदात्म्यमिदं सर्वं', 'तत्सत्यमि'ति श्रुत्यैव पारमार्थिकसत्यत्वावेदनात् अद्वितीयमिति निषेधस्य ब्रह्म-व्यतिरिक्तविषयत्ववत् तद्व्यतिरिक्तरीत्यैव अद्वितीयमिति निषेधस्य विषयो वर्णनीय इत्याहुः ।

तस्मान्नैतच्छ्रुतिबलात् ब्रह्मेतरसर्वमिथ्यात्वसिद्धिरिति । एतेन सलिल एको द्रष्टाऽद्वितीयो भवति इति बृहदारण्यकश्रुतिरपि व्याख्याता ।

*इति 'एकमेवाद्वितीयमि'ति श्रुत्यर्थः ॥*

## 'नेहनानास्ति किञ्चने'ति श्रुत्यर्थविचारः

नापि नेहनानास्ति किञ्चन इति श्रुतिस्तत्र मानम् । तस्मात् 'यत्किञ्चित्प्राचीनमग्निषोमीयात् तेन उपांशु चरन्ति' इत्यत्र उपांशुत्वविधेः यत्किञ्चिच्छब्दसमभिव्याहारबलेन तत्तत्प्रातिस्विकरूपेण उपस्थिताग्नीषोमीयप्रागभावावर्तिदीक्षणीयादिपदार्थमात्रविषयत्वप्रतीतावपि 'यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयात्' इत्यादिनिरवकाशधर्मान्तरविध्यबाधाय तदतिरिक्तविषयत्वकल्पनवत् नेह नानास्ति किञ्चनेत्यत्रापि निषेधस्य नानाशब्दसमभिव्याहारबलेन तत्तत्प्रातिस्विकरूपेण उपस्थित-द्युपृथिव्यादिपदार्थमात्रविषयत्वाप्रतीतावपि ब्रह्मणि 'यस्मिन् द्यौः पृथिवी चान्तरिक्षम्' इत्यादिनिरव-काशद्युपृथिव्यादिपदार्थसत्त्वविध्यबाधाय तदतिरिक्तविषयत्वकल्पनस्यैवोचितत्वात् । अन्यथा ब्रह्मणि जीवप्रपञ्चयोरप्येतन्निषेधविषयत्वप्रसङ्गः । तयोरपि नैकत्वेन नानाशब्दार्थत्वात् । किञ्चन शब्दार्थत्वाच्च। न चैवमपि तयोर्मिथ्यात्वप्रसङ्गः । प्रतिपन्नोपाध्यभावात् । तत्स्थनिषेधप्रतियोगित्वस्यैव मिथ्यात्वरूप-त्वात् । निषेधप्रतियोगित्वमात्रस्य अतथात्वादिति वाच्यम् । 'य आत्मनि तिष्ठन् स्वे महिम्नि प्रतिष्ठितः', 'यस्मिन् सर्वाणि भूतानि' इत्यादिश्रुतौ ब्रह्मण एव तदुपाधित्वेन प्रतिपत्तेः । न च अस्मिन् घटे किञ्चन नास्ति इत्युक्ते अस्य घटस्य स्वनिष्ठनिषेधप्रतियोग्युपाधित्वं न प्रतीयत इत्यस्ति । न च नेह नानास्ति

किञ्चन इति प्रपञ्चनिषेधः जडप्रपञ्चांशे भेदविशिष्टतन्निषेधरूपः चेतनप्रपञ्चांशे तु भेदमात्रनिषेधरूप इति शक्यमभ्युपगन्तुं येन चेतनप्रपञ्चस्यानिषिद्धत्वेन न मिथ्यात्वप्रसङ्ग इति स्यात्। न च विशेषनियामकं विना वैरूप्येणार्थाश्रयणं युक्तम्। वैपरीत्यापत्तेश्च। जीवब्रह्मैक्यावेदकश्रुतिवत् स एवेदं सर्वमिति जडब्रह्मैक्यावेदकश्रुतेरपि सत्त्वेन वैपरीत्यानाश्रयणे तस्यानियामकत्वात्। अभेदे सामानाधिकरण्यमेव तथार्थाश्रयणे नियामकमिति हि तदैवाश्रयितुं शक्यम्, यदि तत्त्वमस्यादिवाक्य एव अभेदे सामानाधिकरण्यम्। स एवेदं सर्वमित्यादिवाक्ये तु बाधायां सामानाधिकरण्यमित्यत्र विशेषहेतुः स्यात्। न हि तमुपलभामहे। अन्यथा वैपरीत्यापत्तेः। जडचेतनयोर्विरुद्धस्वभावत्वेन तेजस्तिमिरयोरिव स्वरूपेणैक्यासम्भवस्य अनुमानत्वेन दुर्बलस्य तात्पर्यतस्तदैक्यप्रतिपादकश्रुत्यपरिपन्थित्वात्। जीवब्रह्मणोरप्यनादितः किञ्चिज्ज्ञत्वसर्वज्ञत्वादिविरुद्धधर्माक्रान्तत्वेन तेजस्तिमिरयोरिव विरुद्धस्वभावत्वात्। तयोर्विरुद्धांशत्यागेन श्रुत्या ऐक्यबोधनवत् ब्रह्मजडप्रपञ्चयोरपि वस्तुत्वादिना भेदयोग्यत्वसत्त्वाच्च।

ननु 'नेह नाने'ति श्रुत्या जडप्रपञ्चस्यैव भेदविशिष्टस्य स्वरूपेण निषेधः क्रियते। चेतनप्रपञ्चस्य तु भेदविशिष्टस्य न तथा निषेधः क्रियते। किन्तु भेदमात्रस्यैव निषेधः क्रियते। न च विशेषहेतुं विना एकस्यैव वाक्यस्य वैरूप्येणार्थाश्रयणं न युज्यत इत्युक्तमिति वाच्यम्। ब्रह्मजडयोः 'स एवेदं सर्वं', 'अन्यदेव तद्विदितात्' इत्यादिसावधारणश्रुत्या अत्यन्ताभेदात्यन्तभेदविधानवत् जीवब्रह्मणोः श्रुत्या तथात्वाविधानात्। प्रत्युत 'तत्त्वमसि', 'नान्योऽतोऽस्ति द्रष्टे'ति ऐक्यभेदनिषेधयोरेव विधानात्। अस्यैव तथा वैरूप्येण अर्थाश्रयणे विशेषहेतुत्वात्। न ह्यात्मानात्मनोरत्यन्तभेदाभेदौ सम्भवतः। तथा च अत्यन्तभेदात्यन्ताभेदविधायिश्रुत्योरन्यतरस्याः 'लाङ्गलमेवास्य जीवनमि'त्यादिवत् उपचरितार्थत्वमावश्यकम्। तत्र वियदादिजडप्रपञ्चात्यन्ताभेदश्रुतेरेव उपचरितार्थत्वाश्रयणमुचितम्। एवञ्च 'नेह नाने'तिनिषेधोऽपि तस्यैवेति स्वीकर्तुमुचितम्। आगमापायिशुक्तिरूप्यादावेव नेदं रजतम् असदेव रजतमभात् इति बाधमिथ्यात्वयोर्दर्शनात्। कल्पनायाः दृष्टानुसारित्वात्। वियदादिजडप्रपञ्चस्य च आगमापायित्वात् इति चेन्न।

'अन्यदेव तद्विदितादथो अविदितादधि', 'सूक्ष्मतरं नित्यं', 'तत्त्वमेव त्वमेव तत्' इत्यादिसावधारणश्रुत्या जीवब्रह्मणोरप्यत्यन्तभेदाभेदविधानेन तस्य वैरूप्येणार्थाश्रयणे विशेषहेतुत्वायोगात्। अन्यदेव तद्विदितादित्यादिश्रुत्या जडादेव अत्यन्ताभेद आवेद्यत इत्यत्र विशेषप्रमाणाभावात्। जड इव चेतनप्रपञ्चेऽपि विदिताविदितशब्दयोः साधारण्यात्। 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति' इत्यादिश्रुत्या जीवशब्दितचेतनप्रपञ्चस्यापि आगमापायित्वावेदनात्। स्वरूपेण आगमापायित्वस्य च अनाद्यविद्यादावपि अभावेन तस्य नेहनानेति श्रुतिविषयत्वाभावप्रस-

ङ्गात् । 'गौरनाद्यन्तवती', 'सा नित्या सतता विक्रिया' इति श्रुतिस्मृतिभ्यां गोशब्दिताविद्याया अपि स्वरूपेण अनाद्यन्तत्ववर्णनात् । 'भूयश्चान्ते विश्वमायानिवृत्तिरि'ति श्रुतेस्तन्निवृत्तिपरत्वाभावस्योक्तत्वात् । शुक्तिरूप्यादेरपि आगमापायित्वासिद्धेश्च । न हीदं रजतमुत्पन्नं विशेषदर्शनादिना नष्टमिति वा कस्याप्यनुभवोऽस्ति । प्रत्युत तेन शुक्त्यज्ञानं नष्टं रजतभ्रमो नष्टः तदज्ञानात् तत्र रजतभ्रमो जातः इत्येवानुभवोऽस्ति । तत्प्रत्यक्षकादाचित्कत्वस्य तत्सामग्रीकादाचित्कत्वेनैव उपपत्त्या तद्विषयीभूतरजतकादाचित्कत्वे मानत्वायोगात् ।

किञ्च अस्याः श्रुतेः चेतनप्रपञ्चांशे न भेदविशिष्टनिषेधपरत्वं किन्तु भेदमात्रनिषेधपरत्वमित्यङ्गीकारे अन्योन्याभावापरनामकभेदविशिष्टे शक्तस्य नानापदस्य भेदमात्रे लक्षणाप्रसङ्गः । नित्यो घट इत्यत्र घटत्वविशिष्टे शक्तस्य घटपदस्य घटत्व इव ।

अपि च एवम् इहपदार्थे ब्रह्मणि किञ्चन नाना नेति निषेधे किञ्चन शब्दार्थभूतजीवप्रतियोगिकभेदमात्रं निषिद्धं स्यात् । किमतो यद्येवमिति चेत् ब्रह्मणो जीवमात्रगतजीवत्वाज्ञत्वाल्पज्ञत्वाल्पशक्तित्वादिधर्मानादाय सविशेषत्वप्रसङ्गः । ततश्च अनीश्वरत्वादिप्रसङ्ग इति गृहाण । कथं तत्प्रसङ्ग इति चेत् भेदापरनामकजीवत्वावच्छिन्नप्रतियोगिकान्योन्याभावनिषेधस्य तदत्यन्ताभावरूपस्य जीवत्वादिरूपप्रतियोगितावच्छेदकरूपतयैव पर्यवसानात् । किञ्चनशब्दार्थभूतेश्वरसार्वज्ञादेश्च कुतश्चिद्भिन्नस्य वियदादिजडप्रपञ्चवत् प्रतिपन्नोपाधौ इहशब्दार्थे ब्रह्मणि स्वरूपेणैव निषिद्धत्वेन मिथ्यात्वाच्च । तत्त्वावेदकप्रमाणावेदितस्य जीवप्रतियोगिकान्योन्याभावात्यन्ताभावस्य जीवत्वादिरूपप्रतियोगितावच्छेदकरूपतया पर्यवसितस्य अनिषिद्धतया ब्रह्मवत् पारमार्थिकत्वावश्यम्भावात् । ततश्च ब्रह्मनिर्विशेषत्वनिरीश्वरत्वादिभङ्गप्रसङ्गात् । भीतेन परेण जडप्रपञ्चांश इव चेतनप्रपञ्चांशेऽपि नाना किञ्चन नास्तीति उक्त्या भेदविशिष्टस्यैव तस्य निषेध इति स्वीकार्यम् । एवञ्च सति जडप्रपञ्चस्येव चेतनप्रपञ्चस्यापि प्रतिपन्नोपाधौ इहपदार्थे ब्रह्मणि स्वरूपेण निषिद्धत्वेन मिथ्यात्वप्रसङ्गो दुर्वार इति सेयमुभयतः पाशारज्जुरित्युक्तम् ।

एतेन नानाशब्दे द्व्येकयोरित्यादिवत् भावप्रधानो निर्देश इति निरस्तम् ।

ब्रह्मणस्तथासति सकलजीवजडप्रतियोगिकभेदापरनामकान्योन्याभावे निषेधरूपजीवत्वजडत्वतत्समनियतधर्मवत्त्वापत्त्या सविशेषत्वप्रसङ्गात् । किञ्चनशब्दवैयर्थ्याच्च ।

ननु प्रपञ्चवत् न जीवब्रह्मणोरिहशब्दार्थभूते प्रतिपन्नोपाधौ ब्रह्मणि निषिद्धत्वमङ्गीकर्तुं शक्यम् । सत्यं ज्ञानमनन्तमित्यादितत्सत्त्वावेदकश्रुतिविरोधादिति चेन्न । नेह नानास्ति किञ्चनेत्यपवादाय सत्यज्ञानादिवाक्यस्य सत्यत्वादिधर्मारोपार्थत्वेन तस्य नेह नानास्ति किञ्चन इत्याद्यपवादशास्त्राप्रतिकूल-

त्वात् । अन्यथा यस्मिन् द्यौरित्यादिवाक्यस्यापि नेहनानास्ति किञ्चनेत्यपवादाय ब्रह्मणि द्युपृथिव्याद्यध्यारोपार्थत्वं न स्यात् । तस्मान्नेह नानास्ति किञ्चनेति श्रुत्यर्थो न पररीत्या वर्णनीयः ।

## स्वमतरीत्या 'नेह नाने'ति श्रुत्यर्थः

ननु कस्तर्हि श्रुत्यर्थ इति चेत् यः कश्चित् भवतु । तदवर्णनेऽप्यक्षतेः । न हि मम तच्छ्रुत्यर्थाज्ञानं त्वदभिमतजगन्मिथ्यात्वसाधकम् । वस्तुतस्तु मम न तदर्थाज्ञानमिति । तर्हि वर्णनीय इति चेत् उच्यते विनञ्भ्यां नानाञौ न सह (पा.सू. ७-२-२७) इति पाणिनिस्मरणात् 'पृथग्विनान्तरेणर्ते हिरुङ् नाना च वर्जने' इति कोशकारस्मरणाच्च नानाशब्दो विनाशब्दपर्यायः । तथा च 'न तदस्ति विना यत्स्यान्मया भूतं चराचरमि'ति भगवद्वचनरूपोपबृंहणानुसारात् इहेत्येतत् अनेन इत्यर्थकम् । यद्वा यदेवेह तदमुत्र इत्यत्रेव अत्रापि इहशब्दो जगत्परः । मनसैवेदमाप्तव्यं इति पूर्ववाक्यस्थं ब्रह्मपरमिदं पदं विभक्तिविपरिणामेन अनुषज्यते । एवं च अनेन ब्रह्मणा नाना विना किञ्चन नास्ति । तदविनाभूतमेवास्तीत्यर्थः । ततश्च 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इत्यादिश्रुतयोऽप्यनुकूलिता भवन्ति । यद्यपि इहशब्दोऽस्मिन् इत्यर्थ एव व्युत्पादितः तथाऽप्युपबृंहणानुसारात् छन्दसि प्रकृतिप्रत्यययोः प्रकृत्यन्तरप्रत्ययान्तररूपादेशयोः बहुलमुपलम्भात्, तथा तथा अनुशासनसद्भावाच्च अनेनेत्यर्थत्वं नानुपपन्नम् ॥

एतेन अस्याः श्रुतेः प्रपञ्चस्य ब्रह्माविनाभूतार्थत्वेऽपि मिथ्यात्वसिद्धिरविकला । न ह्यविनाभावः तदत्यन्ताभाववन्निष्ठात्यन्ताभावप्रतियोगित्वादतिरिच्यते । प्रतिपन्नोपाधिस्थात्यन्ताभावप्रतियोगित्वस्यैव मिथ्यात्वरूपत्वादित्यपास्तम् ॥

तथाविधात्यन्ताभावप्रतियोगित्वस्य मिथ्यात्वप्रतीतिव्यवहारौ प्रत्यप्रयोजकत्वात् । न हि वह्न्यत्यन्ताभाववन्निष्ठात्यन्ताभावप्रतियोगिधूमे तथा प्रतीतिव्यवहारौ पश्यामः । प्रपञ्चस्येव तथाविधात्यन्ताभावप्रतियोगित्वस्य इहशब्दार्थभूतब्रह्मसाधारण्येन तावन्मात्रस्य परेषां मिथ्यात्वरूपतायाः अनभ्युपेयत्वात् । प्रपञ्चात्यन्ताभाववति इहशब्दार्थभूतब्रह्मात्यन्ताभावत्वस्य आवश्यकत्वात् । अथवा अस्यां श्रुतौ नञः संसर्गाभाववाचित्वेऽपि अत्यन्ताभावपरत्वे प्रमाणाभावात् । अत्यन्ताभावपरत्वे किञ्चनशब्दार्थस्य प्रपञ्चस्य बाधापातात्, अबाधेनैवोपपत्तौ बाधस्य अन्याय्यत्वात् । तस्य प्रागभावपरत्वे प्रध्वंसाभावपरत्वे वा मिथ्यात्वप्रयुक्तबाधाप्रसरात् तत्परत्वाश्रयणं युक्तम् । एवं च ब्रह्मसप्रपञ्चत्वनिष्प्रपञ्चत्ववाक्ययोः द्वयोरपि तुल्यवत् प्रामाण्यं संरक्षितं भवति । तथाच ब्रह्मसप्रपञ्चत्ववाक्यस्यायमर्थो भवति । प्रपञ्चस्य उत्पत्त्यनन्तरं विनाशात् प्राक्ब्रह्म सप्रपञ्चमिति । तन्निष्प्रपञ्चत्वपर-

वाक्यस्याप्ययमर्थो भवति । प्रपञ्चस्य उत्पत्तेः प्राक् प्रागभावसत्त्वात् स्थित्यनन्तरं विनाशसत्त्वात् तदा ब्रह्मणः प्रपञ्चराहित्यमिति । अथवा विनाशब्दः उक्तरीत्या भावप्रधान एव । न चात्र मानाभावः । नात्र काचन भिदास्ति । अत्र 'भिदामिव मन्यमानः शतधा सहस्रधा भिन्नो मृत्योर्मृत्युमाप्नोति', 'न ह्यस्ति द्वैतसिद्धिरात्मैव सिद्धोऽद्वितीयो मायया ह्यन्यदि'त्यादिश्रुत्या स्वप्रतियोगिकस्वानुयोगिकभेदमात्र-निषेधात् । न चैवं किञ्चनपदवैयर्थ्यम् । समाख्याश्रुतौ काचनशब्दस्येव अत्रापि किञ्चनशब्दस्योप-पत्तेः । तत्रैव कथं तस्यावैयर्थ्यमिति चेत् उच्यते । वृक्षस्य एकत्वेऽपि पत्रपुष्पादिभेदेन अन्तर्गणि-कानेकभेदवत् 'द्यावाभूमी जनयन् देव एकः', 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादिश्रुत्यन्तरानुसारात् ब्रह्मणः एकव्यक्तिकत्वेऽपि गुणगुणित्वावयवित्वभिन्नस्थितत्वादिना प्रसक्तान्तर्गणिकभेदानुवादित्वेन सार्थक्यमिति । तस्मान्नेहनानेति श्रुत्यापि न जगन्मिथ्यात्वसिद्धिः ॥

*इति 'नेह नाने'ति श्रुत्यर्थः ॥*

## अथ 'यत्र त्वस्य सर्वमात्मैवाभूत्' इति श्रुत्यर्थनिरूपणम्

ननु उदाहृतश्रुतीनां ब्रह्मेतरसर्वमिथ्यात्वे प्रमाणत्वायोगेऽपि 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' इति श्रुतिस्तत्र मानं भविष्यति । यत्र तु कालविशेषे मुक्तिकाले अस्य निष्पन्नतत्त्वज्ञानस्य बहु भिन्नं सर्वमात्मैवाभूत् निर्विशेषब्रह्ममात्रमवशिष्टं जातम्, तत् तदा असौ ज्ञानी केन साधनेन कं विषयं पश्येत् इति ब्रह्मेतरसर्वनिषेधप्रतीतेः इति चेत् न ।

एतच्छ्रुतेः मुक्तिकाले ब्रह्मेतरसर्वनिषेधपरत्वासिद्धेः । सर्वस्यात्मनात्यन्ताभेदस्यैव प्रतीत्या तन्निषेधस्य सर्वात्मना प्रतीतेः । अपदार्थत्वात् अवाक्यार्थत्वाच्च । न च ब्रह्मेतरस्य जडत्वेन आगमा-पायित्वेन अनाद्यनन्तेन चिन्मात्ररूपात्मना अत्यन्ताभेदासम्भवात्, सर्वमात्मैवाभूदित्युक्तिः बाधायां सामानाधिकरण्यरूपैव पर्यवस्यति इति शक्यते वक्तुम् । अस्य अनुमानत्वेन दुर्बलतया नित्यनिर्दोष-श्रुत्यपरिपन्थित्वात् । ब्रह्मणो जडान्यत्वादिप्रतिपादकश्रुतेश्च संसारकालीनजडान्यत्वादिप्रतिपादन-परत्वेनापि उपपत्त्या एतच्छ्रुत्यपरिपन्थित्वात् । अन्यथा अस्यां श्रुतौ, 'यत्र तु तत्'शब्दानां वैय-र्थ्यात् । एवञ्च 'यो वेदाहं ब्रह्मास्मी'ति, 'स इदं सर्वं भवती'ति ज्ञानिनः ज्ञानफलत्वेन सर्वात्मकत्वोक्ति-रप्यनुकूलिता भवति । न हि सर्वाभावे तस्य तदात्मकत्वं सम्भवति । न चैवं दुःखाद्यात्मकत्वापत्त्या मुक्तेरपुरुषार्थत्वप्रसङ्गेन तच्छ्रुतेरन्यथैवार्थो वर्णनीय इति वाच्यम् । अभिव्यक्तानन्दात्मकत्वेन पुरुषार्थ-त्वोपपत्तेः । न चैवं मुक्तेः संसारादविशेषप्रसङ्गः । अपरिच्छिन्नब्रह्मानन्दाभिव्यक्त्या मुक्तेः संसारा-द्विशेषसम्भवात् । तथापि त्वदभिमतार्थपरत्वे प्रमाणानुपन्यासाच्च ।

किञ्च यत्र त्वस्येति श्रुतिः मुक्तौ न ब्रह्मेतरसर्वनिषेधपरा । 'परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः', 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा', 'मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके', 'सदा पश्यन्ति सूरयः', 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखम्', 'तत् सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः', 'शोकातिगो मोदते स्वर्गलोके' इत्यादिश्रुतिषु मुक्तस्य क्रीडादिव्यापारतदुपकरणसत्त्ववर्णनात् । न चोदाहृताः श्रुतयः जीवन्मुक्तिपराः सगुणमुक्तिपरा वा यत्र त्वस्येति श्रुतिस्तु परममुक्तिपरेति न विरोध इति वाच्यम् । उदाहृतश्रुतीनामपि ज्ञेयब्रह्मप्रकरणाधीतत्वेन ताभिः ज्ञानफलीभूतपरममुक्तेरेव प्रतिपादनीयत्वात् । न च ज्ञेयब्रह्मप्रकरण-पठितानामपि क्रीडादिफलानां दर्शपूर्णमासप्रकरणपठितपूषानुमन्त्रणमन्त्रवत् सगुणमुक्तावुत्कर्ष इति युक्तम् । एवं कल्पनाया मुक्तिद्वैविध्यसिध्यधीनत्वेन अन्योन्याश्रयात् । पराभिमतमुक्तेश्च शशविषाणायितत्वात् । 'सम्पद्याविहाय स्वेन शब्दात्', 'अनावृत्तिः शब्दात् अनावृत्तिः शब्दात्' इति भगवता बादरायणेन सगुणमुक्तेरेव उपसंहृतत्वात् । 'तन्निष्ठस्य मोक्षोपदेशात्', 'मुक्तोपसृप्यव्यपदेशात्' इत्यादिसूत्रेषु तस्या एव उपक्षिप्तत्वाच्च इति दिक् ।

किञ्च अस्याः श्रुतेः ब्रह्मेतरसर्वमिथ्यात्वपरत्वे 'अविनाशी वा अरेऽयमात्मा अनुच्छित्तिधर्मा' इति मुक्तस्य धर्मानुच्छेदोक्तिविरोधः । न च तत्र न विद्यते उच्छित्तिर्येषां ते अनुच्छित्तयः अनुच्छित्तयो धर्माः यस्यासौ अनुच्छित्तिधर्मेति बहुव्रीहिगर्भबहुव्रीह्याश्रयणे गौरवमिति वाच्यम् । अविनाशीत्यनेन पौनरुक्त्यापत्तेः । अनुच्छित्तिरित्येतावतैव विवक्षितार्थलाभसम्भवेन धर्मपदवैयर्थ्याच्च ।

ननु 'अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मे'ति न धर्माणां नित्यत्वमुच्यते, किन्तु उच्छित्तिरपचयः तद्धर्मा न भवतीति आत्मनः उपचयाभाव एवोच्यते । एवञ्च न पौनरुक्त्यावकाशः । अपचयस्य नाशादन्यत्वात् । किन्तु तेन धर्मनित्यत्वोक्तौ अविनाशितधर्मेत्युक्तम् । तदेव कथमित्याशङ्क्य मिथ्यावस्तुसम्बन्धेन द्रष्टृदृश्यभावः, तन्निवृत्तौ नात्मनः काचन क्षतिरित्याह 'यत्र हि द्वैतमिव भवती'त्यादिना । तत्रैवं सति कः प्रसङ्गो धर्मनित्यतायाः । प्रत्युत धर्मधर्मिभावे तद्विशेषविज्ञानस्यैव प्रसङ्गे तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति इति प्रतिज्ञैव व्याहन्येत इति चेत् न उच्छित्तिशब्दस्य नाशः अपचयः इत्यर्थद्वयवाचित्वे प्रमाणाभावात् अन्यायश्च अनेकार्थत्वमिति न्यायविरोधात् । लक्षणया तत्परत्वे तस्या एव दोषत्वात् । धर्मपदवैयर्थ्यतादवस्थ्याच्च । किं धर्मनित्यत्वमनाकाङ्क्षितमित्युक्तं पूर्वत्र । 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ती'ति विज्ञानघनस्य आत्मनः ज्ञानादितद्धर्माणां च मुक्तौ विनाशो याज्ञवल्क्येन उक्तः । कथमेवं सति मुक्तेः

पुरुषार्थत्वमिति मन्यमानया मैत्रेय्या । अत्रैव मा भवानमूमुहत् इत्युक्तम् । तथाहि 'एतावदरे खल्वमृतत्वमि'ति आत्मज्ञानेन अमृतत्वं फलमुक्त्वा 'तद्वा इदं महद्भूतं अनन्तमपारं विज्ञानघन एव एतेभ्यः भूतेभ्यः समुत्थाय तान्येवानुविशति न प्रेत्यसंज्ञास्ति' इति तदिदंशब्दपरामृष्टस्य जीवस्य ब्रह्मत्वप्रतिपादनपूर्वकं कार्यकारणसङ्घातनिवृत्तिमुक्त्वा मुक्तस्य तमनुनाश उक्तः भाति । तत्र पूर्वोक्तामृतत्वविरोधमाशङ्कमाना मैत्रेय्याह अत्रैव मा भवान् अमूमुहत् इति । याज्ञवल्क्यः समाधत्ते 'न वा अरे अहं मोहं ब्रवीमि अविनाशी वा अरे अयमात्माऽनुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवती'ति, मीयन्त इति मात्रा विषयाः तैः पुनरस्य संसर्गो भवति दृश्यासंसर्गेण विशेषविज्ञानाभाव एव उक्तः । न तु विनाश इत्यर्थः । विषयसम्बन्धनाशेऽपि 'विकुर्वद्विषयं धर्मो विकरोति हि धर्मिणम्' इति न्यायेन आत्मनः विकारेण अनाशाभावः इत्याशङ्कानिवृत्तये अनुच्छित्तिधर्मवान् अमूमुहत् इत्युक्ते याज्ञवल्क्येन आत्मनस्तद्धर्माणाञ्च विनाशित्वस्य प्रतिपादनीयतया आकाङ्क्षितत्वात् एतावदरे खल्वमृतत्वमित्युक्तम् । अमृतत्वस्य सैन्धवखिल्यस्य समुद्र इव विज्ञानघन एवेति तदिदंशब्दपरामृष्टस्य विज्ञानघनशब्दपरामृष्टस्य वा जीवस्य ब्रह्मस्वरूपत्वं प्रतिपाद्यत इति चेत् न ब्रह्मविदाप्नोति परमिति श्रुत्यन्तरानुसारेण उदकसैन्धवखिल्यदृष्टान्तबलेन जीवस्य मोक्षे ब्रह्मप्राप्तेरेव आश्रयणीयत्वात् । ब्रह्म वेद ब्रह्मैव भवतीत्यादेरपि ब्रह्मप्राप्त्यर्थत्वात् । न चैवं भवत इत्यात्मनेपदप्रसङ्गः । प्राप्त्यर्थकबहुश्रुत्यनुसारेण व्यत्ययेन परस्मैपदोपपत्तेः । ब्रह्मैव सन् ब्रह्माप्येति इति श्रुत्यन्तरानुसारेण तच्छ्रुतेः ब्रह्मप्राप्तिपरत्वावश्यम्भावाच्च । अन्यथा ब्रह्माप्येतीति वाक्यशेषानुपपत्तेः । मात्रासंसर्गस्त्वस्य भवतीति मुक्तौ विषयासंसर्गप्रतिपादनस्य च अस्मत्प्रतिकूलत्वाभावात् । आत्मनोऽविनाशित्वोक्त्यनन्तरं विकारवत्त्वेन नाशः स्यात् इत्याशङ्काया एवानुदयाच्च । न च आत्मन अनाशित्वमेव नोपपद्यते अपचयवत्वादित्याशङ्कोदयः सम्भवतीति वाच्यम् । आत्मन्यपचयस्य अप्रसक्तेः । न प्रेत्यसंज्ञास्तीति प्रसक्तज्ञानादिधर्मनाशस्य अपरिहार्यत्वेन अनुच्छित्तिधर्मेत्यस्य तत्परिहाररूपत्वस्यैव न्याय्यत्वाच्च । तथाच अनुविनश्यति न प्रेत्यसंज्ञेति प्राकृतविषयसम्बन्धाभावाभिप्रायेन जन्यज्ञानाभावाभिप्रायेण च मयोक्तं तच्च त्वया न बुद्धम् । अतो नाहं मोहं ब्रवीमीति भावः ।

*इति 'नेह नाने'ति श्रुत्यर्थः ॥*

## अथ 'यत्र हीती'ति श्रुत्यर्थः

किञ्च यत्र हि 'द्वैतमिव भवति' इत्यादिश्रुतिः आत्मनः मिथ्यावस्तुसम्बन्धेन द्रष्टृदृश्यभावः तन्निवृत्तौ नात्मनः काचन क्षतिरित्यभिप्रायेण प्रवृत्ता इत्ययुक्तम् ।

निर्विशेषब्रह्ममात्रावशेषो मोक्ष इति पक्षे अनिष्टं प्रसञ्जयितुमेव तच्छ्रुतिप्रवृत्तेः। तथाहि अत्र पूर्वत्र यथा सैन्धवखिल्य इत्यादिना सैन्धवखिल्यस्य समुद्र इव विज्ञानघनस्य जीवस्य ब्रह्मणि स्थितिर्मोक्ष इति स्वमतमुक्तम्। न हि 'उदकराशिरत्र समुद्रः'। किन्तु 'तटाकादिवत् तदाश्रयः खातः वरुणो वा पूर्वत्र स यथा सर्वासामपां समुद्र एकायनमि'त्युक्तेः। न च आप एव अपामयनं, न च ईश्वरस्थानीयाभ्यां खातवरुणाभ्यां सैन्धवखिल्यस्याभेदः। नापि पूर्वमुक्तस्थानीयाभिरद्भिः। उक्तं च 'समुद्रजलस्थानीया मुक्ता बहव एकस्वभावो वरुणवदपां खातवद्वा अनन्तोऽपारो भगवानि'ति। एवं श्रुतिः स्वमतमुक्त्वा 'अविनाशी वा अरेऽयमात्मे'त्यनेन आत्मनाशो मोक्ष इति बौद्धमतमनुच्छित्तिधर्मेत्यनेन विशेषगुणोच्छेदो मोक्ष इति वैशेषिकमतं च निरस्य (अ)द्वितीयचिन्मात्रावशेषो मोक्ष इति मतेऽनिष्टं प्रसञ्जयितुं 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यती'त्यादिना प्रसङ्गागमव्यतिरेकव्याप्तिमुक्त्वा यत्र त्वस्येत्यादिना यत्र येषां मते त्वात्ममात्रावशेषः तत्र तर्हि कः कं पश्येत् न केनापि किञ्चित्। तथाच इष्टस्य रूपादेः ईश्वरस्य स्वस्य च ज्ञानानन्दादेरिव अतिदुःखं मोक्षे स्यात् इत्यनिष्टप्रसङ्गोऽत्राभिमतः। उक्तं हि भारते 'मुक्तस्य (मग्नस्य) हि परेऽज्ञाने किं न दुःखतरं भवेत्' इति। ननु यत्र हि द्वैतमिव भवतीत्यत्र अनिष्टप्रसङ्गागमव्यतिरेकव्याप्तिप्रदर्शकवाक्ये इवशब्दश्रवणवत् तत्समभिव्याहारेण द्वैतस्य मिथ्यात्वं सिद्ध्यतीति चेन्न। तस्य परमते मिथ्यात्वात्, पररीत्या च आपादनीयत्वात्। द्वितीयस्य अल्पत्वाद्वा पुराणे दशरात्रैर्भुक्तमिव न सम्यक् स्वल्पभोजनात् इति, लोके च अल्पज्ञे अयं विद्वानिव इति प्रयोगाच्च। 'उपमार्थे तथाल्पेऽपि इवशब्दः प्रयुज्यते' इति वचनाच्च। अन्यथा वाक्यशेषे 'सर्वं तं परादात् योऽन्यत्रात्मनः सर्वं वेद' इति सर्वाधारत्वोक्तिः, स यथा 'दुन्दुभेर्हन्यमानस्य न बाह्या न शब्दात्' इति स यथार्द्रेन्धनाग्नेरभ्याहतात् पृथक् पृथक् धूमा इति च भिन्नानां समसत्ताकानां दुन्दुभितच्छब्दनिर्धूमादीनां दृष्टान्तानामुक्तिश्च अयुक्ता स्यात्। न हि दुन्दुभ्यादौ तच्छब्दादिरध्यस्तः। किन्तु तदधीनः। न च 'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद' इत्यत्र 'अन्यत्र धर्मादन्यत्राधर्मादि'ति श्रुताविव अन्यत्र शब्दस्या....श्रवणान्न तत्र ब्रह्मणः सर्वाधारत्वमुच्यत इति युक्तम्। 'अन्यदेव तद्विदितादथो अविदितादधि' इत्यादिश्रुत्यविरोधाय 'सर्वं तं परादात्' इत्यादिश्रुतेः सर्वस्य आत्माधारानन्दवत्त्वपरत्वस्यैवाश्रयणीयत्वात्। परमात्मन एव सर्वाधारत्वस्य 'यस्मिन् द्यौः पृथिवी चान्तरिक्षं सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इति श्रुतिसिद्धत्वात् दुन्दुभितच्छब्दादिदृष्टान्तबलेन अत्राधाराधेयभावस्यैव न्याय्यत्वात्। इदं ब्रह्मेदं क्षत्रमित्यादिवाक्यशेषस्यापि 'धान्यमसि धिनुहि' इत्यादिवत् ब्रह्माश्रितत्वेनैव निर्वाह्यत्वादिति यत्किञ्चिदेतत्।

केचित्तु मोक्षे देहेन्द्रियादिहीनस्य केवलस्य आत्मन एव सत्त्वात् जन्यसर्वविषयकज्ञाननिषेधकमेवेदं वाक्यं न तु प्रपञ्चमिथ्यात्वपरं, न वा जीवब्रह्माभेदपरं मोक्षे देहाद्यभावश्च 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इत्यादिश्रुतिसिद्ध इत्याहुः ॥

*इति 'यत्र त्वस्ये'ति श्रुत्यर्थः ॥*

## 'यद्वै तं न पश्यति' इति श्रुत्यर्थः

ननु तथापि जगन्मिथ्यात्वसिद्धिरविकला । 'यद्वै तं न पश्यति पश्यन् वै तं न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वात् । न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येत्' इति श्रुत्या ब्रह्मेतरद्वितीयमात्रनिषेधात् । प्राग् 'अत्रायं पुरुषः स्वयञ्ज्योतिः' इति ज्योतिःशब्देन सुप्तस्य ज्ञानसद्भावोऽभिहितः । 'पुनः एवमेवायमात्मा प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमि'ति ज्ञानाभावश्च । तदुभयं विप्रतिषिद्धमित्याशङ्क्य इदमुच्यते । सुप्तो नान्यं पश्यतीत्युक्तम् । तद्वै तत् तथैव । न च विप्रतिषेधः । यतः पश्यन् वै ज्ञानवानेव । तन्न पश्यतीत्युक्तम् । कुतो ज्ञानवत्त्वम् । न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते । अविनाशित्वात् । कथं पश्यन्नेव न पश्यतीति । यत् स्वस्मादन्यत् विभक्तं पश्येत् । तद् द्वितीयं नास्ति । अतो विषयाभावात् न पश्यतीत्युच्यते । निर्विषयस्य स्वरूपज्ञानस्य स्थितत्वात् पश्यन्नित्यपि । अतो न परस्परविरोधः इति चेत् सत्यम् ।

तथाऽप्यविद्याकालादेर्मिथ्यात्वासिद्धेः । एतावन्तं कालं सुखमहमस्वाप्सम् । न किञ्चिदवेदिषमित्यौत्तरिकपरामर्शसिद्धसौषुप्तिकानुभवविषयतया अज्ञानकालसुप्त्यादेः सत्त्वसिद्धेः । 'सुषुप्तिकाले सकले विलीने तमोऽभिभूतं सुखरूपमे'ति इति श्रुत्या सुप्तिकालतत्कालीनाज्ञानादिसिद्धेश्च । 'स एव तु कर्मानुस्मृतिशब्दविधिभ्यः' इति सूत्रभाष्ये त्वया सुप्तिकाले कर्मादिसत्त्वस्य अभ्युपगमाच्च । न च तथापि अज्ञानकालकर्मादिभिन्नद्वितीयमेव न तु द्वितीयमस्तीत्यत्र निषिध्यते । अज्ञानादिमिथ्यात्वसिद्धिस्तु श्रुत्यन्तराद्भविष्यतीति युक्तम् । यः सुप्तस्तदीयान्तरकामसङ्कल्पादिमात्रविषयत्वेनापि उक्तनिषेधस्योपपन्नतया सर्वसाधारणवियदादिविषयत्वायोगात् ।

ननु पूर्वत्र 'न बाह्यं किञ्चन वेद नान्तरमि'ति अविशेषेण बाह्यान्तरवेदनाभावः श्रूयत इति चेत् किं तावता सुप्तौ बाह्यप्रपञ्चस्य सतोऽपि चक्षुरादीन्द्रियाणामुपरतत्वेन अवेद्यत्वोपपत्त्या निषेधस्य तद्विषयत्वायोगात् । कार्यकारणप्रपञ्चस्यैव श्रुत्यन्तरानुसारेण तादृशनिषेधविषयत्वोपपत्तेश्च । एवं च 'तीर्णो हि तदा शोकान् हृदयस्य भवती'ति पूर्ववाक्यमनुकूलितं भवति । तेन सुप्तिकाले हृदयसम्बन्धिशोकाद्यभावस्यैव प्रतिपादनात् ।

ननु 'पूर्वत्र पिता अपिता भवति माता अमाता लोका अलोकाः देवा अदेवाः' इत्यादिना सुप्तस्य देहप्रयुक्तपितृत्वाद्यभावस्य उक्ततया तदनुसारेण न तु द्वितीयमस्ति इत्यत्रापि देहादेः स्वरूपेण निषेधो दुर्वार इति चेन्न ।

तत्र पितृत्वाद्यभावोक्ते पितृत्वाद्यभिमानाभावमात्रपरत्वात् । पित्रादिस्वरूपाभावपरत्वे च पुत्रादिभिः तदुत्थापनानुपपत्तेः । एकस्यैव देहादेः एकस्मिन् काले पुरुषभेदेनापि सत्त्वासत्त्वयोर्व्याहतत्वात् । सुप्तस्य देहादिर्नास्त्येव दृश्यमानस्तु पुत्राद्यज्ञानकल्पितः इति कल्पनायाश्च अन्यत्र निरस्तत्वात् ।

वस्तुतस्तु 'यद्वै तं न पश्यति' इत्यादिकं न सुप्तजीवविषयम् । 'तीर्णो तदा शोकान् हृदयस्य भवति' इति पूर्ववाक्ये हृदयशब्देन ब्रह्मणः प्रकृतत्वात् । हृदयं ब्रह्मेति तस्यैव निरुक्तम् । हृदयमित्यादिश्रुतौ हृदयशब्देन ब्रह्मोक्तेः ।

ननु तत्र हृदयशब्दस्य ब्रह्मपरत्वेऽपि हृदयस्य भवतीत्यत्र न तत्परत्वम्, हृदयस्य शोकसम्बन्धित्वस्यैव प्रतीतेः । 'भिद्यते हृदयग्रन्थिः' इत्यादिश्रुत्यन्तरानुसारेण तथार्थस्य वर्णनीयत्वात् । हृदयशब्दस्य ब्रह्मपरत्वे वाक्यान्वयायोगात् इति चेन्न । 'प्राज्ञेनात्मना संपरिष्वक्तः' इति पूर्ववाक्यानुसारेण तदा सुप्तिकाले सर्वान् शोकान् तीर्णः जीवः हृदयस्य भवति, ब्रह्मसम्बन्धी भवतीति तच्छ्रुत्यर्थविज्ञानात् । 'तीर्णो हि शोकान्' इति जीवस्यैव शोकसम्बन्धित्वलाभेन हृदयशब्देन ब्रह्मण एव विवक्षणीयत्वात् । न च—

शोकहर्षभयक्रोधलोभमोहस्पृहादयः ।
अहङ्कारस्य दृश्यन्ते जन्ममृत्यू च नात्मनः ॥

इति स्मृत्या शोकादीनामहङ्कारशब्दितहृदयसम्बन्धित्वस्यैव प्रतिपन्नत्वात् । न जीवसम्बन्धित्वमिति युक्तम् । तत्रत्याहङ्कारशब्दस्य अहमिति कारः कृतिः करणं यस्येति व्युत्पत्त्या जीवपरत्वाभ्युपगमात् । आत्मशब्देन च परमात्मन एव ग्रहणात् । 'न चैव कामः सङ्कल्पः' इत्यादिश्रुतिविरोधः । तच्छ्रुत्या कामादीनामन्तःकरणोपादेयत्वसिद्धावपि जीवधर्मत्वस्य अविरुद्धत्वात् ।

ननु 'यद् द्वैतं न पश्यती'त्यादेः हृदयशब्देन प्रकृतब्रह्मविषयत्वे वाक्यार्थासामञ्जस्यम् । तथाहि ब्रह्म यद् द्वैतं वियदादिद्वैतं न पश्यति तद् द्वितीयं नास्तीत्युक्ते विरोधः, त्वयैव ईश्वरस्य सर्वज्ञत्वाभ्युपगमात् । वियदादेः सत्यत्वाभ्युपगमाच्च । ब्रह्म यच्छशविषाणादिद्वैतं न पश्यति तद् द्वितीयं नास्तीत्युक्तौ अप्रसक्तप्रतिषेधत्वमिति । मैवम् । ब्रह्म यत् स्वगुणादिकं स्वस्माद्भिन्नं न पश्यति तत् द्वितीयं नास्ति तद्

द्वितीयत्वेन नास्ति, कुतः पश्यन्नेव सर्वज्ञ एव सन् ईश्वरो न तत् पश्यति न हि द्रष्टुरीश्वरस्य दृष्टेर्विपरिलोपो विनाशो विद्यते नित्यत्वात् । यच्च जीवजगदादिकं स्वस्माद्विभक्तं पश्येत् । तत्ततोऽन्यदिति श्रुत्यर्थस्य विज्ञातव्यत्वात् पश्यतीति दर्शनकर्तुरेव पदिन्यायेन द्वैतमित्यत्र प्रतियोगित्वेन अन्वयात् । यद्वैतमिति यच्छब्दस्य न तु तदिति व्यवहिततच्छब्दान्वयस्तु यत्तदोः साकाङ्क्षत्वात् आकाङ्क्षायाश्च सन्निधानाद् बलीयस्त्वोक्तेः । तदुक्तम्—

यस्य येनार्थसम्बन्धः दूरस्थेनापि तेन सः ।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् ॥ इति ॥

अन्यथा यद्विभक्तं तन्नास्तीत्येतावतैव पूर्णत्वेन शेषवैयर्थ्यम् । न च न तु तद् द्वितीयमस्तीत्यत्र द्वितीयत्वेन नास्तीत्यर्थाश्रयणे स्वारस्यभङ्गः । तवापि प्रतिपन्नस्वरूपस्य निषेधायोगेन पारमार्थिकत्वाकारेण तन्निषेधस्य आवश्यकतया साम्यात् । स्वरूपेण निषेधे शून्यवादाविशेषप्रसङ्गात् । न च विपरिलोपशब्दस्य नाशार्थकत्वेन बाधार्थकत्वमनुपपन्नम् । नित्यत्वादित्यनेन पौनरुक्त्यप्रसङ्गेन तथा अर्थस्य आश्रयणीयत्वात् । न च अविनाशित्वादित्येतत् द्रष्टुरित्यनेन सम्बध्यत इति युक्तम् । हेतुसाध्ययोर्वैयधिकरण्यात् । न चात्र भगवद्रूपादीनां भेदनिषेधे अप्रसक्तप्रतिषेधत्वप्रसङ्गः । पूर्वत्र शुपीति[१] (?) चेत् न । मुमुक्षुज्ञेयशुद्धब्रह्मज्ञानेनैव सर्वविज्ञानप्रतिज्ञानात् । अन्यथा अविद्याया अपि येनाश्रुतमित्यादिप्रतिज्ञावाक्योक्तज्ञेयकोटित्वापातात् । अनादीनविद्यादीन् प्रति उपादानत्वायोगाच्च । उपादानत्वाभिप्रायत्वे मृदा ज्ञातया मृन्मयं ज्ञातं स्यात् इत्येतावतैव पूर्णत्वेन मृत्पिण्डादिवाक्यत्रये प्रत्येकं श्रुतानां एकशब्दपिण्डशब्दसर्वशब्दानां वैयर्थ्याच्च । न हि सर्वमृन्मयादिकमेकमृत्पिण्डादिविकारः । नखनिकृन्तनस्य अन्त्यावयवित्वेन उपादानत्वस्यैवासम्भवाच्च । मृत्त्वे निश्चितेऽपि घटादौ संशयादिदर्शनाच्च । न च घटादेरपि मृद्यध्यस्तत्वात् विवर्ततया तद्दृष्टान्तो युक्तः । मृत्तत्त्वज्ञानेऽपि घटाद्यवृत्तेः व्यवहारदशायां मृदादिवत् कारकव्यापारसाध्यस्य जलाहरणादिसमर्थस्य अवस्थाविशेषरूपस्य घटादेरपि सत्त्वात् । तच्च विवक्षायां तु मृदोऽपि सत्त्वोक्त्ययोगसम्भवाच्च । 'सनातनं सत्यमिति नित्यमेवोच्यते बुधैः' इति निर्वचनाच्च । इह विकृतित्वप्रतियोगिन एव सत्यशब्देन विवक्षणीयत्वाच्च । 'आपं चैव हलन्तानां यथा वाचा निशा दिशा' इति वचनाच्च वाचारम्भणमिति समासः साधुः । तस्मात् सादृश्यात् । एकविज्ञानेन सर्वविज्ञाने मृत्पिण्डमृन्मयादिदृष्टान्ताः । प्रधानज्ञानादप्रधानज्ञाने संस्कृतापभ्रंशदृष्टान्तः । भाषाशब्दज्ञानाद्धि यत्फलं तच्च अधिकं च सार्वत्रिकव्यवहारादिकं संस्कृतज्ञानाद् भवतीति तज्ज्ञो विद्वानित्युच्यते । तदर्थं यथा सौम्येत्यादिकं तनूर्वर्षिष्ठेत्यादिवत् अनुषञ्जनीयम् । कथं

१. अशुद्धमुक्तिमिति चेन्न ।

च विवर्तपक्षे मृत्पिण्डमृन्मयादिदृष्टान्ताः। ब्रह्म अविद्याविशिष्टं सत् उपादानं शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा इति नाडीस्थभगवन्मूर्तीनां यथा तद्वा अस्य एतदाप्तकाममाप्तकाममकाम-मरूपमिति षष्ठ्या रूपरूपिणोश्च भेदस्य प्रसक्तत्वेन तन्निषेधे अप्रसक्तप्रतिषेधाभावात्। न च श्रुत्या प्राप्तस्य श्रुत्या निषेधायोगः। तात्पर्यश्रुतिप्रतिपन्नस्यैव श्रुत्या सर्वात्मना निषेधायोगेऽपि तत्तात्पर्य-विषयस्य निषेधसम्भवात्। न चापूर्वतादेः सत्त्वात् तत्र तात्पर्यमपि दुर्वारम्। तथापि भेदस्य श्रौता-र्थान्यथानुपपत्तिलभ्यत्वेन कण्ठत एव तन्निषेधेन च भेदे तात्पर्याभावस्य तन्निषेध एव तात्पर्यस्याङ्गी-कार्यत्वात्। 'भेदाभेदौ च यः पश्येत् स याति तम एव च' इत्यादिना भेदाभेदयोरपि निषिद्धत्वेन तयोरप्यप्रसराच्च इति। तस्माद् यद् द्वैतं न पश्यति इति श्रुतिः प्रपञ्चमिथ्यात्वे न मानमिति ॥

*'यद् द्वैतं न पश्यति' इति श्रुत्यर्थः ॥*

## वाचारम्भणश्रुत्यर्थविचारः

ननु 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्।' इति श्रुतिरेव ब्रह्मेतरसर्वमिथ्यात्वे मानम्। तत्र हि पूर्वत्र उत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवति अमतं मतं अविज्ञातं विज्ञात-मित्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय कथमेकस्मिन् ज्ञाते सर्वं ज्ञातं स्यात् इत्याकाङ्क्षायां अधि-ष्ठानाध्यस्तत्वरूपेण उपादानोपादेयभावात् अधिष्ठाने ज्ञाते तदध्यस्तं सर्वं तत्त्वतो ज्ञातं भवति। अधिष्ठानमेव ह्यध्यस्तस्य तत्त्वम्। तथाहि अध्यस्तरूप्यादेः तत्त्वं शुक्त्यादिः। अतः अधिष्ठानरूपे ब्रह्मणि ज्ञाते तदध्यस्तं सर्वं ज्ञातं भवति इत्यभिप्रायेण 'यथा सौम्येकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्' इत्यादिदृष्टान्तत्रयमुक्तम्। तस्य वाक्यशेषो वाचारम्भणमित्यादि। तस्यायमर्थः। वाचारम्भणं वागालम्बनं विकारो नामधेयं नामैव केवलम्, न विकारो नाम वस्त्वस्ति परमार्थतः मृत्तिकेत्येव सत्यं वस्तु। अतः कारणव्यतिरेकेण कार्यस्य मिथ्यात्वात् यथा सोम्यैकेन इत्यादिना उक्तमुपपन्नम्। ततश्च एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातमिति चेत्।

अवधारणस्याश्रयणेन नामैव केवलं न विकारो नाम वस्त्वस्ति इत्यर्थाश्रयणायोगात्। न च 'अब्भक्षो वायुभक्षः' इत्यादिवत् अवधारणं कल्प्यत इति वाच्यम्। तत्राब्भक्षत्वादेः सर्वसाधारण्येन अवधारणं विना असाधारणव्यपदेशानुपपत्तिवत् प्रकृते तत्कल्पकाभावात्। जगन्मिथ्यात्वमेव तत्कल्प-कमिति चेन्न तस्यावधारणकल्पनाधीनसिद्धिकत्वेन अन्योन्याश्रयात्।

---

१. अत्र समीचीनपाठः मृग्यः।

एतेन वाचारम्भणं वागालम्बनमात्रं इत्यर्थाश्रयणात् मिथ्यात्वसिद्धिरित्यपास्तम् । अश्रुतमात्रशब्दकल्पने प्रमाणाभावात् । नामधेयमित्यस्य वैयर्थ्यप्रसङ्गाच्च । मृत्तिकेत्येव सत्यमित्येतावतैव विवक्षितार्थलाभेन इतिपदवैयर्थ्याच्च । पदार्थविपर्यासे खल्वत्रेतिशब्दः । स च शब्दप्रकरणे प्रसक्तं शब्दपदार्थकत्वं निवार्य अर्थपदार्थकत्वं व्यवस्थापयति । यथा न वेति विभाषेत्यत्र इतिशब्दः । अर्थप्रकरणे तु शब्दपदार्थकत्वं व्यवस्थापयति । यथा गौरित्ययमाहेति । अर्थशास्त्रं चेदम् । ततो विनैवेतिशब्देन प्रकरणादेव मृत्तिकाशब्दस्य अर्थपदार्थकत्वसिद्धेः किमितिशब्देनेति । न चात्रेतिशब्दः प्रकारवचनः । प्रकारस्यानुपादानात् । वाचा वागिन्द्रियेण आरम्भणमुत्पादनं यस्य साङ्केतिकस्य भाषाशब्दस्य तन्नामधेयं विकारः, कर्मणि घञ् संस्कृतापभ्रंशरूपेण विक्रियमाणत्वात् । मृत्तिकेत्यादिसंस्कृतनामधेयं तु सत्यं नित्यम् । 'नास्य जरयैतज्जीर्यते न वधेनास्य हन्यते एतत्सत्यं ब्रह्मपुरमि'त्येतच्छ्रुतावेव उत्तरत्र सत्यशब्दस्य नित्ये प्रयोगात् । सदाशब्दात् अव्ययात् त्यप् इति त्यबन्तस्य सत्यशब्दस्य नित्ये प्रयोगाच्च । शुक्त्यादितत्त्वज्ञानेन रूप्यादिज्ञानादर्शनाच्च ।

एतेन शुक्तौ ज्ञातायां रूप्यं तत्त्वतो ज्ञातं भवति सा हि तस्य तत्त्वम् । एवं ब्रह्मज्ञानात् सर्वं तत्त्वतो ज्ञातं भवति इति वाचस्पत्युक्तं निरस्तम् ॥

एवं हि ब्रह्मज्ञानेन ब्रह्मैव ज्ञातं भवतीत्यर्थः स्यात् । तच्चायुक्तम् । सर्वसाधारण्यात् । स्वस्य हेतुत्वायोगाच्च । 'येनाश्रुतं श्रुतं भवति। अमतं मतमविज्ञातं विज्ञातमि'ति श्रुतिगताश्रुतादिपदायोगाच्च ।

किञ्च असाधारणं स्वरूपमसाधारणधर्मो वा तत्त्वम् । न तु भ्रमाधिष्ठानम् । तथात्वे हि ब्रह्माद्यनधिष्ठानमानन्दशुक्तित्वादिकं ब्रह्मशुक्त्यादितत्त्वं न स्यात् । न च शुक्तिज्ञानं निवृत्तिस्वरूपस्य स्वरूपं धर्मो वा । न चानेकारोप्यानुगतमधिष्ठानमेकैकारोपितस्य असाधारणम् ।

किचैवं शुक्तौ रूप्यधीः आनन्दादौ ब्रह्मधीरिव प्रमा स्यात् । तत्तत्त्वे तद्धीत्वात् । तस्मात् परमते एकविज्ञानेन सर्वविज्ञानमयुक्तम् । अस्मत्पक्षे तु प्रधानपुरुषज्ञानाह्वानपूजानाशादौ लोके जनपदः सर्वोऽपि ज्ञात आहूतः इत्यादेः, 'शशास पृथिवीं सर्वां सशैलवनकाननाम् । नाशिता पृथिवी सर्वा धार्तराष्ट्रेण दुर्नयैः' इत्यादेश्च व्यवहारस्य दर्शनात् । प्रधानभूतदेवतादिज्ञानफलसिद्धेः तद्युक्तम् । 'ज्ञानादेव सर्वे कामाः सम्पद्यन्ते' इति श्रुतेः । 'तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः' इति स्मृतेश्च ।

यथा मृत्पिण्डविज्ञानात् सादृश्यादेव मृण्मयाः ।
विज्ञायन्ते तथा विष्णोः सादृश्याज्जगदेव च ॥

अनन्याधीनविज्ञानादन्याधीनं तथैव च ।
मृदयोलोहनाम्नां हि ज्ञानात् साङ्केतिकं यथा ॥

इत्यादिस्मृतेश्च । एतेन एकविज्ञानेन सर्वविज्ञानान्यथानुपपत्तिः मिथ्यात्वे मानमिति निरस्तम् ।

*इति वाचारम्भणश्रुत्यर्थः ॥*

## 'इदं सर्वमि'त्यादिश्रुत्यर्थः

ननु तथापि जगन्मिथ्यात्वं दुर्वारम् । 'इदं सर्वं यदयमात्मे'ति श्रुत्यैव तद्बोधनात् जडजडयोरैक्यासम्भवेन ब्रह्मव्यतिरेकेण असत्त्वस्यैव तच्छ्रुतितात्पर्यविषयत्वादिति चेन्न ।

सर्वेषु भूतेषु एतमितिश्रुतेः सर्वं जलं लवणमितिवत् सर्वव्याप्ता वा स हि सर्वस्य कर्ता इति श्रुतेः 'आयुर्वै घृतं' ब्राह्मणोऽस्य मुखमितिवत् तन्निमित्तत्वेन वा 'न ऋते त्वत्क्रियते किञ्चने'ति श्रुतेः यजमानः प्रस्तरः इतिवत् तत्सिद्ध्या वा आदित्यो यूपः इतिवत् सारूप्येण वा सामानाधिकरण्योपपत्तौ सर्वप्रमाणबाधितायाः यः पुरुषः स स्थाणुरितिवत् यत्सर्वत्वेन प्रतीतं तदात्मन्यध्यस्तमिति पदद्वयलक्षणायाः योगात् । उक्तञ्च महाभाष्ये 'अन्तरेणापि निमित्तं निमित्तार्थो गम्यते' । तद्यथा 'आयुर्वै घृतम्', 'दधि त्रपुसं प्रत्यक्षो ज्वरः' इति मन्त्रेणापि अन्तरेणावतिं वत्यर्थो गम्यते । अब्रह्मदत्तं ब्रह्मदत्त इत्याह ब्रह्मदत्तवदिति गम्यत इति । सर्वं खल्विदं ब्रह्म तज्जलानिति । 'विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति', 'पुरुष एवेदं सर्वं पुरुषेणैवेदं सर्वं व्याप्तम्', 'आतृणादाकरीषात्' इत्यादिश्रुतौ, 'असतश्च सतश्चैव सर्वस्य प्रभवाप्ययः । सर्वस्य च सदाज्ञानात् सर्वमेनं प्रचक्षते । पुरुष एवेदं सर्वं भूतं भव्यं भवच्च यत् । इत्युच्यते तदीयत्वात् न तु सर्वस्वरूपतः' इति भारते । 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति गीतायां च अन्यथाव्याख्यातत्वाच्च । अन्यथा इदं सर्वमित्यस्य सर्वं तं परादात् योऽन्यत्रात्मनः सर्वं वेद इति पूर्वेण ब्रह्मैवेदं सर्वमित्यस्य अस्यां पृथिव्यां तेजोमयोऽमृतमयः स यश्चायमद्भुतेषु सर्वभूतेषु, चात्मानमित्यादिना पूर्वेण 'याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः' इत्युत्तरेण च विरोधः स्यात् ।

*'इदं सर्वमि'त्यादिश्रुत्यर्थः ॥*

## अथ 'प्रपञ्चो यदि विद्येत' इति श्रुत्यर्थः

ननु तथापि जगन्मिथ्यात्वं दुर्वारम् । 'प्रपञ्चो यदि विद्येत निवर्तेत न संशयः । मायामात्रमिदं द्वैतमद्वैतं परमार्थतः । विकल्पो विनिवर्तेत कल्पितो यदि केनचित् । उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते' इति श्रुतौ द्वैतस्य मायामात्रत्वस्य अद्वैतस्य पारमार्थिकत्वस्य चोक्तेरिति चेत् ।

उच्यते ।

अत्र आद्यश्लोके भेदस्य भास्करादिमतप्राप्तं सत्योपाधिकृतत्वं निरस्य द्वितीये मायावादप्राप्त-मारोपितत्वं निरस्य अनादिसत्यत्वमेवोच्यते । यथा तद्धैक आहुरिति श्रुतौ बौद्धमतप्राप्तमसत्कारणत्वं निरस्य सत्कारणत्वम् । तथा हि भेदप्रपञ्चो यदि विद्येत उत्पद्येत तर्हि निवर्तेत । न निवर्तते । मोक्षेऽपि भेदश्रुतेः । तस्मादनादिरित्यर्थः । विद सत्तायामिति हि धातुः । उत्पत्तिरपि च सत्तायोग एव । अस्ति च सत्तार्थस्यापि भवतेः, 'तेन भूतिषु कर्तृत्वं प्रतियन्नस्य वस्तुनः', 'प्रयोजकक्रियामाहुः 'भावनाविद' इत्यादौ उत्पत्तौ प्रयोगः । विद्लृलाभे इति वा धातुः । तथाच विद्येत लभ्येत उत्पद्येत इत्यर्थः । उत्पत्तिरपि स्वात्मलाभ एव । अस्तित्वार्थत्वे तु यद्यदस्ति तत्तन्निवर्तते इति व्याप्त्यभावात् । अतः तर्कः आभासः स्यात् । अत एव न ह्यत्रानूयाजा इति श्रौतहेतौ राणके व्याप्तिरुक्ता ।

ननु उपाधिकृतं न चेत् किं तर्हि स्वतन्त्रं नेत्याह मायामात्रं ईश्वरेच्छाधीनम् । मायेतीश्वरेच्छा उच्यते । 'विष्णोरिच्छावशत्वात्तु मायामात्रमिदं स्मृतम्' इत्यादिस्मृतेः । पूर्वत्र स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता इत्यैन्द्रजालिकत्वं मतान्तरत्वेन उक्त्वा 'इच्छामात्रं प्रभोः सृष्टिः' इतीश्वरेच्छाधीन-त्वस्य स्वमतत्वेनोक्तेश्च । 'प्रभवः सर्वभावानां सतामिति विनिश्चयः' इति पूर्वत्र सत्त्वोक्तेश्च । तर्हि अद्वैतः सर्वभावानामिति श्रुतमद्वैतं कथमित्यत आह अद्वैतं परमार्थतः इति । ल्यब्लोपनिमित्ता पञ्चमी । परमं स्वतन्त्रमर्थमपेक्ष्य । स्वतन्त्रं परमार्थाख्यमिति स्मृतेः । परिभाषायाः कार्यार्थत्वेन आण् नद्याः इत्यादाविव असति बाधके कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययः इति न्यायेन पारिभाषिकस्यैव ग्राह्यत्वात् । यववराहाधिकरणन्यायेन शास्त्रे शास्त्रीयार्थस्य ग्राह्यत्वाच्च । किञ्चास्ति स्वतन्त्रेऽर्थेऽपि परमार्थत्वम् । न च तात्त्विकेऽपि क्लृप्तावयवशक्त्यैव काल्पनिका उत्तममात्रत्वेनैव परमार्थशब्दसम्भवे समुदायशक्तिकल्पना युक्ता । अत एव प्रोक्षण्यधिकरणे प्रोक्षणीशब्दस्य जले योग एव न तु रूढिरि-त्युक्तम् । उक्तं च वार्तिके— 'भवेतां यदि वृक्षस्य वाजिकर्णौ कथञ्चन । अदृष्टां समुदायस्य कः शक्तिं जातु कल्पयेत्' इति स्वतन्त्र एव च परमत्वं मुख्यम् । न च मुख्ये सम्भवत्यमुख्यग्रहणं युक्तम् । परमार्थशब्दस्य तात्त्विके योगरूढ्यङ्गीकारेऽपि मानान्तरेण पूर्वोत्तरवाक्यैश्च अविरोधाय योगेन स्वतन्त्रपरत्वमेव युक्तम् । तथाच सर्वभावानां मध्ये अद्वितीय इत्युक्ते स्वातन्त्र्यमेव सिद्ध्यति । न तु सर्वभावासत्त्वम् ।

केचित्तु अनाशी परमार्थः स्यात् इति वचनात् अद्वैतं परमार्थतः इत्यस्य अद्वैतं समाभ्यधिक-रहितं ब्रह्म अविनाशीत्यर्थ इत्याहुः ।

एवं भेदस्यौपाधिकत्वं निरस्य कल्पितत्वं निरस्यति विकल्प इति । तर्कत्वात् न च निवर्तते तस्मान्न कल्पित इति विपर्यये पर्यवसातव्यम् । तत्त्वे अज्ञाते तु द्वैतं न विद्यते इत्यर्थः । श्लोकयो-रतर्करूपत्वे यदिशब्दद्वयं लिङ्प्रत्ययचतुष्टयं च व्यर्थं स्यात् । तदुक्तं 'इत्यत्र यदिशब्दौ च निवर्तेतेति च द्वयम् । कल्पितः कल्पितश्चेति निवर्तेत । न चासौ विनिवर्तते । द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम् ।' इति ।

*इति 'प्रपञ्चो यदि विद्येत' इति श्रुत्यर्थः ॥*

## अथ 'अनन्तमि'ति श्रुत्यर्थः

ननु तथापि मिथ्यात्वं दुर्वारम् । सत्यं ज्ञानमिति श्रुतानन्तशब्देन त्रिविधशून्यत्वपरेण वस्तु-परिच्छेदशून्यत्वस्यावेदनात् भिन्नस्य वस्तुनः सत्यत्वे च तदयोगात् इति चेत् उच्यते ।

अन्तशब्दो हि परिच्छेदे व्युत्पन्नः । न तु परिच्छिन्ने । तथा च अभेदस्य अपरिच्छेदरूपत्वेऽपि यथा देशाद्यपरिच्छेदाभिप्रायेण आकाशोऽनन्त इत्युक्ते देशादेराकाशतुल्यतया सत्त्वे सत्येव तदपरि-च्छेदमात्रं सिद्ध्यति न तु देशादेर्मिथ्यात्वम् । जीवस्वरूपं सत्यम्, विश्वं तु मिथ्येति विभागस्तु अव्याप्यसिद्धः । वस्तुतस्तु भेदो न अपरिच्छेदः । परिच्छिन्नाद्भेदाभावे अपरिच्छिन्नत्वायोगात् । काला-परिच्छिन्न एव परमाण्वादौ देशपरिच्छेदेन परिच्छिन्नत्वबुद्धिवत् उभयापरिच्छिन्ने गगनादौ भेदमात्रेण परिच्छिन्नत्वबुद्धेरभावाच्च । अन्तपदेनैव परिच्छिन्नाद् व्यावृत्तेस्तु अनयैवोक्तत्वाच्च । भिन्न इत्यर्थे परि-च्छिन्न इत्यप्रयोगाच्च । तस्माद् देशकालगुणापरिच्छेद एव अनन्तशब्दार्थः ।

*इति 'अनन्तमि'तिश्रुत्यर्थः ॥*

## अथ 'इन्द्रो मायाभिरि'ति श्रुत्यर्थः

ननु तथापि जगन्मिथ्यात्वं दुर्वारम् । 'इन्द्रो मायाभिः पुरुरूप ईयते' इति श्रुतौ वियदादिभिन्न-प्रपञ्चस्य मायाकृतत्वोक्तेरिति चेन्न ।

अत्र ईश्वरस्य विचित्रशक्तिभिः मत्स्याद्यनेकरूपत्वोक्तेः । तान् यज्ञस्य मायया इत्यादौ माया-शब्दस्य शक्तौ प्रयोगात् । 'विचित्रशक्तिः पुरुषः पुराणः परास्य शक्तिर्विविधैव श्रूयते' इत्यादावीश्वरस्य विचित्रशक्तित्वोक्तेश्च ।

अज्ञानेन ईश्वरस्य वियदादिबहुभावोक्तौ च 'रूपं रूपं प्रतिरूपो बभूव', 'अयं वै हरयोऽयं वै दश च सहस्राणि च बहूनि चानन्तानि चे'ति पूर्वोत्तरवाक्यविरोधः स्यात् । तत्र पूर्वोक्ता जीवाख्य-

प्रतिबिम्बानि प्रतिबिम्बभूतभगवद्रूपाणामेव इहरूपशब्देन प्रत्यभिज्ञानात् । उत्तरत्र हरिशब्दवाच्य-विष्णुरूपाणां दशत्वादिना बहुत्वोक्तेश्च । तदेतद्ब्रह्मापूर्वमनपरमित्यादिना तेषां रूपाणां ब्रह्मत्वोक्तेश्च । चिन्मात्रस्यैव नानारूपप्रपञ्चाधिष्ठानत्वेन परमैश्वर्यवाचीन्द्रशब्दस्वारस्याच्च ।

एतेन मायां तु प्रकृतिं विद्यात् इति श्रुतिरपि व्याख्याता । अत्र मायया सन्निरुद्ध इति पूर्वोक्ता या माया सा प्रकृतिः । त्रिगुणात्मा प्रधानमित्यर्थः । ननु या प्रकृतिर्जगदुपादानं सा माया मिथ्येति पूर्वनिर्दिष्टमायाशब्दार्थस्य बुभुत्सितत्वात् प्राथम्येन मायाया एवोद्देश्यत्वाच्च, प्रकृतिशब्दस्य 'स यद-स्मिंस्तमसि प्रकृतिं लीनं प्रकृतिं पुरुषं कालं चानुपश्यति', 'नैनं पश्यति कश्चन', 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' इत्यादिश्रुतिस्मृतिषु प्रधाने प्रसिद्धत्वाच्च मायाशब्दस्य सत्येऽपि प्रयोगाच्च ।

*इति 'इन्द्रो मायाभिरि'ति श्रुत्यर्थः ।*

## अथ 'यस्मात् परमि'त्यादि श्रुत्यर्थः

ननु तथापि मिथ्यावस्तुसिद्धिरविकला । यस्मात् परं नापरमस्ति किञ्चित् अतोऽन्यदार्तमिति श्रुतिभ्यां तन्मिथ्यात्वावेदनात् इति चेत् उच्यते ।

'यस्मात् परं न, उत्कृष्टं न, न तत्समश्चाभ्यधिकश्च दृश्यते', 'पुरुषान्न परं किञ्चित्', 'वासुदेवात् परं नास्ति' इत्यादिश्रुतिस्मृतिभ्यः अपरं त्वस्ति तच्च किञ्चिदल्पमिति, तच्छ्रुत्यर्थः । नञनुषङ्गस्या-कल्प्यत्वात् । तथा सति तेनेदं पूर्णं पुरुषेण सर्वं ततो यदुत्तरतरमिति वाक्यशेषविरोधः स्यात् । विश्वस्यैवाभावे केन पूर्णं कस्माच्च तदुत्तरत्र स्यात् । 'यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् अणोरणी-यान् महतो महीयानि'त्यादिश्रुत्यन्तरात् वाक्यशेषाविरोधात् उभयत्रापि नञ्श्रवणाच्च उभयनिषेधः ।

अतोऽन्यदार्तमित्यत्रापि आ ईषत् ऋतं सत्यम्, ईषत्सत्यत्वं च मिथ्यात्वमेवेति न युक्तम् । अत्रान्तर्यामिणः प्रकृतत्वात् एतच्छब्दस्य च प्रकृतत्वात् अन्यशब्दस्य च ब्राह्मणादन्यमानय, समान-मितरच्छ्येनेन इत्यादाविव प्रकृतसमानजातीयान्यपरत्वात् ब्रह्मणोऽन्यजीवजातमार्तं दुःखि इति जीवब्रह्मभेदस्यैवोक्तेः । न हि जीवादन्यस्यार्तिः । आर्तिशब्दस्य पीडात्मकदुःखवाचित्वं च आर्तिः पीडाधनुष्कोट्योः इत्यभिधानात्, 'आर्तो जिज्ञासुरर्थार्थी' इति स्मृतौ दुःखिनि आर्तशब्दप्रयोगाच्च । एवं स्मृतिपुराणादिष्वपि जगन्मिथ्यात्वपरतया प्रतीयमानानां वचनानां गतिरुन्नेया ॥

*इति 'यस्मात् परमि'त्यादिश्रुत्यर्थः ॥*

## अथ 'प्राणा वै सत्यमि'त्यादि श्रुत्यर्थः

ननु तथापि 'प्राणा वै सत्यं तेषामेष सत्यः सत्यं ज्ञानमि'ति श्रुतार्थान्यथानुपपत्त्या जगन्मिथ्यात्वं सिद्ध्यतीति चेत् न । राजराजः, देवदेवः, मन्मथमन्मथः, पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम्, इत्यादौ राजत्वदेवत्वादीनामिव प्राणादिसत्यत्वस्य ज्ञानाबाध्यत्वे सत्येव अप्रकृष्टत्वमात्रेण तदुपपत्तेः । सत्यं ज्ञानमित्यत्रापि तस्य ह वा एतस्य 'ब्रह्मणो नाम सत्यमिति, तान्येतानि त्रीण्यक्षराणि सति यमिति, तद्यत् सत् तदमृतम् अथ यत् ति तन्मर्त्यम् अथ यद् यत् तेनोभे यच्छती'ति श्रुत्यन्तरानुसारेण मुक्तामुक्तनियामकत्वरूपस्य सत्यत्वस्योक्तेः । न च रूढ्यर्थे श्रौतयोगत्यागः । 'यदाज्यमीयुः तदाज्यानामाज्यत्वं' इत्यादाविव निरवकाशश्रौतयोगबाधायोगात् । '[१]शास्त्रस्था वे'ति न्यायेन असति बाधके वैदिकार्थस्यैव ग्राह्यत्वाच्च । उक्तं च वार्तिके—

गौणं लाक्षणिकं वापि वाक्यभेदेन वा स्वयम् ।
वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत् ॥ इति ।

## 'विज्ञानमानन्दं ब्रह्मे'त्यादि श्रुत्यर्थनिरूपणपूर्वकं ग्रन्थोपसंहारः

किञ्च 'विज्ञानमानन्दं ब्रह्म' इत्यत्र सैषानन्दस्य इत्यादि श्रुत्युक्तमानुषाद्यानन्दस्य तारतम्यकथनेन मोक्षे तारतम्याभावात् ब्रह्मव्यतिरिक्तं सर्वमपि मोक्षे निवर्तत इत्यत्र तदेव मानमिति प्रत्यूढम् ।

ब्रह्मव्यतिरिक्तस्य ज्ञाननिवर्त्यत्वे प्रमाणाभावात् । तरति शोकमात्मवित् । 'भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इत्यत्र शोकतद्धेतुपुण्यपापादिकर्मादीनामेव ज्ञाननिवर्त्यत्वोक्तेः । 'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय तथा विद्वान्नामरूपाद्विमुक्तः' इत्यत्र नामरूपप्रहाणमात्रस्यैवोक्तेश्च ।

ननु 'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा । अथ यत्रान्यत् पश्यति अन्यच्छृणोति अन्यत् विजानाति तदल्पं तन्मर्त्यमि'ति भूमव्यतिरिक्तस्य अनात्मत्वमर्त्यत्वोक्त्या सर्वस्यापि ब्रह्मव्यतिरिक्तस्य ज्ञाननिवर्त्यत्वमायातीति चेन्न, 'न जायते म्रियते वा विपश्चित् नित्यो नित्यानां', 'स यथानन्तोऽयमाकाश आकाशवत्सर्वगतश्च नित्यः', 'गौरनाद्यन्तवती सा अचेतना परार्था च नित्या सततविक्रिया' इत्यादिश्रुतिस्मृत्यविरोधाय जीवाकाशप्रकृत्याद्यतिरिक्तविषयत्वेन तच्छ्रुतेः सङ्कोचनीयत्वात् । भूयश्चान्ते विश्वमायानिवृत्तिरित्यत्रापि 'निवृत्ताश्चौरा' इत्यादाविव मायायाः

दुःखानापादकत्वमात्रेण निवृत्तत्वोक्त्या तदनुसारेणापि मायातत्कार्ययोः ज्ञाननिवृत्तत्वासिद्धेश्चेति पूर्व-मेवोक्तमिति । तस्मात् श्रीमन्नारायण एव सकलकल्याणगुणशाली सकलवेदान्तवेद्य इति सिद्धम् ।

ये नित्यं पदवाक्यमानसरणीसंशीलनालङ्कृता-
स्तेषामेव करोति या प्रतिपदं सन्तोषमाकर्णनात् ।
या चानेकविनेयषट्पदततेः सम्फुल्लमल्ली सदा
सैषा वाग्विजयीन्द्रसंयमिमणेर्वाग्वैखरी सेव्यताम् ॥

*इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमत्सुरेन्द्रतीर्थपूज्यपादानां शिष्येण विजयीन्द्रभिक्षुणा विरचिता वाग्वैखरी समाप्ता ॥*

॥ श्रीकृष्णार्पणमस्तु ॥

★ ★ ★

॥ श्रीमन्मूलरामो विजयते ॥

श्रीमद्विजयीन्द्रतीर्थश्रीपादविरचितः

# पदार्थसङ्ग्रहः

॥ श्रीवेदव्यासाय नमः ॥

॥ हरिः ॐ ॥

**लक्ष्मीपतिं सम्प्रणम्य सर्वज्ञादिगुरूनपि ।**
**पदार्थानां सङ्ग्रहोऽयं क्रियते [१]शाश्वतोऽञ्जसा ॥ १ ॥**

## पदार्थप्रकरणम्

(तत्र) द्रव्यगुणकर्मसामान्यविशेषविशिष्टांशिशक्तिसादृश्याभावभेदाद् दश पदार्थाः ।

**तत्र द्रव्याणि—** परमात्मालक्ष्मीजीवाव्याकृताकाशप्रकृतिगुणत्रयमहत्तत्त्वाहङ्कारतत्त्वबुद्धिमन-इन्द्रियमात्राभूतब्रह्माण्डाविद्यावरणान्धकारवासनाकालप्रतिबिम्बभेदाद्विंशतिरेव ।

रूपरसगन्धस्पर्शसङ्ख्यापरिमाणसंयोगविभागपरत्वापरत्वद्रवत्वगुरुत्वलघुत्वमृदुत्वकठिण(न)त्व-स्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारालोकशमदमकृपातितिक्षाबलभयलज्जागाम्भीर्यसौन्दर्य-धैर्यस्थैर्यशौर्यौदार्यसौभाग्यप्रभृतयोऽनेके गुणाः ।

विहितनिषिद्धोदासीनभेदेन त्रिविधं कर्म । विहितमपि काम्याकाम्यभेदेन द्विविधम् । तच्च ब्रह्मादि-सर्वजीवानाम् । लक्ष्मीनारायणयोस्तु लीलया मोहनाय वा । निषिद्धं कर्म रुद्रादीनां जीवानाम्[२] । उदासीनं कर्म तु परिस्पन्दः । स च उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनागमनभ्रमणवमनवपनभोजनविदारणा-द्यनेकविधः । यथायोगं जडचेतनयोः धर्मः । पुनः द्विविधः । नित्योऽनित्यश्च । नित्यः ईश्वरादिचेतन-स्वरूपभूतः । तदन्यत्र [३]अनित्यः ।

---

१. शास्त्रतो इत्यपि पाठः २. पा०— चेतनाचेतनयोः ३. पा०— नित्योऽनित्यगतः

नित्यमनित्यं चेति द्विविधं सामान्यम् । प्रतिव्यक्त्यननुगतम् । पुनर्द्विविधम् । जातिरुपाधिश्चेति । जीवत्वादि यावद्वस्तुभावि नित्यम् । ब्राह्मणत्वमनुष्यत्वाद्ययावद्वस्तुभाव्यनित्यम् । सर्वज्ञत्वप्रमेयत्वाद्युपाधिरपि तद्वत् ।

भेदाभावेऽपि भेदव्यवहारनिर्वाहकानन्ता एव विशेषाः सर्वपदार्थनिष्ठाः स्वनिर्वाहकाश्च । ते द्विविधाः । नित्या अनित्याश्च । नित्याः ईश्वरादिनित्यद्रव्यगताः । घटाद्यनित्यद्रव्यगताः अनित्याः । समवायस्तु स्वरूपत एव नास्ति ।

विशेषणसम्बन्धेन विशेष्यस्य यो आकारः तद्विशिष्टम् । तद् द्विविधम् । नित्यमनित्यं च । नित्यं सार्वज्ञादिविशिष्टं परब्रह्मादि । द्वितीयं दण्डादिविशेषणसम्बन्धेन परिणतं दण्ड्यादि, अंशी तु हस्तवितस्त्याद्यतिरिक्तो[१] घटाद्यनुभवसिद्धः ।

शक्तिश्चतुर्विधा । अचिन्त्यशक्तिः सहजशक्तिराधेयशक्तिः पदशक्तिश्चेति । तत्राचिन्त्यशक्तिः परमेश्वरे सम्पूर्णा । अन्यत्र यथायोग्या । कार्यमात्रानुकूला स्वभावरूपा सहजशक्तिः सर्वपदार्थनिष्ठा । नित्यानित्यभेदेन द्विविधा । नित्यगता नित्या । अनित्यगता अनित्या । अन्याहिता शक्तिराधेयशक्तिः । सा च प्रतिष्ठादिना प्रतिमादौ । पदपदार्थयोर्वाच्यवाचकभावसम्बन्धः पदशक्तिः । सा च स्वरध्वनिवर्णपदवाक्यमात्रगता । मुख्या परममुख्या चेति द्विविधा । सर्वशब्दानां परमात्मनि परममुख्यवृत्तिः । अन्यत्र तु मुख्यवृत्तिः ।

सादृश्यं च पदार्थान्तरम् । न तु तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्वम् । यमलादिषु नाना एकनिरूपितमपरवृत्ति । न त्वनुगतम् । तद् द्विविधम् । नित्यमनित्यं च । नित्यगतं नित्यम् । अनित्यगतमनित्यम् ।

अभावश्चतुर्विधः । प्रागभावः प्रध्वंसाभावोऽन्योन्याभावः अत्यन्ताभावश्चेति । कार्योत्पत्तेः प्राक् विद्यमानोऽभावः प्रागभावः । महदादिकार्यस्य(मात्रस्य) । उत्पत्त्यनन्तरमेव विद्यमानोऽभावः प्रध्वंसः । सोऽपि कार्यमात्रस्य । सार्वकालिकोऽभावः अन्योन्याभावः । पदार्थस्वरूप एव । नित्यात्मको नित्यः । अनित्यात्मको अनित्यः । भावाभावसत्प्रतियोगिकश्च । अप्रामाणिकप्रतियोगिकाभावः अत्यन्ताभावः न तु प्रामाणिकप्रतियोगिकः । स च नित्यः । घटाद्यभावस्तु यथायथं प्रागभावादिरूप एव ॥

*॥ इति पदार्थनिरूपणम् ॥*

---

१. पटादिर्गगनादिश्चानुभवसिद्धः ।

# द्रव्यप्रकरणम्

द्रवणप्राप्यत्वं द्रव्यसामान्यलक्षणम्। द्रवणं च गमनम्। उपादानकारणत्वं द्रव्यत्वम्। उपादानत्वं च परिणामः [1]अविभक्तश्चेति द्विविधम्।

तत्र परमात्मा अनन्तगुणपरिपूर्णः सृष्ट्याद्यष्टकर्ता सर्वज्ञः। परममुख्यया वृत्त्या सकलशब्दवाच्यः जडजीवप्रकृतिभ्योऽत्यन्तविलक्षणः ज्ञानानन्दा(द्या)त्मककल्याणविग्रहवान् सर्वस्वतन्त्रः एक एव नानारूपः। [2]सर्वरूपाण्यपि परिपूर्णानि। स्वरूपावयवगुणक्रियादिभिः [3]अत्यन्ताभेदः।

परमात्मभिन्ना तन्मात्राधीना लक्ष्मीः परमात्मवत् नित्यमुक्ता तद्भार्या नानारूपा परमात्मवज्जड-देहरहिता तद्वत्सर्वशब्दवाच्या देशकालाभ्यामेव परमात्मना समं व्याप्ता।

अज्ञानादिदोषयुक्ताः संसारिणो जीवाः असङ्ख्याकाः गणशोऽप्यनन्ताः। ते च त्रिविधाः। मुक्तियोग्याः, (नित्य)संसारिणः, तमोयोग्याश्चेति।

तत्र मुक्तियोग्याः पञ्चविधाः। देवर्षिपितृचक्रवर्तिमनुष्योत्तमभेदात्। ब्रह्मवाय्वादयो देवाः। ऋषयो नारदाद्यः। पितरश्चिराः। रघ्वम्बरीषादयो चक्रवर्तिनः। मनुष्योत्तमास्तु द्विविधाः। चतुर्गुणो-पासका एकगुणोपासकाश्चेति। तृणजीवा एकगुणोपासकाः। तद्व्यतिरिक्ताश्चतुर्गुणोपासकाः।

नित्यं सुखदुःखमिश्राः नित्यसंसारिणः। ते च मध्यममनुष्या एव असङ्ख्याताः सर्वदा स्वर्ग-भूनिरयचारिणः।

तमोयोग्याश्चतुर्विधाः— दैत्यरक्षःपिशाचमनुष्याधमाश्चेति। सर्वेऽपि जीवाः परस्परं परमात्मना च भिन्नाः संसारे मुक्तौ च तारतम्योपेताः जीवाभिमानिनो ब्रह्मादयः सृष्टिप्रलययोर्विकारविनाश-शून्यादिगव्याकृताकाशः(शं) भूताकाशभिन्नः(नम्)।

एकं नित्यं व्याप्तं स्वगतं च प्राच्यादिस्वाभाविकावयवोपेतं च। तदभावे सृष्टेः पूर्वं मूर्तं निबिडं जगत् स्यात्। लक्ष्मीस्तु अस्य अभिमानिनी। साक्षात् परम्परया वा विश्वोपादानं प्रकृतिः। जडरूपा नित्याव्याप्ता च। तदभिमानिनी रमा। सर्व(दा)जीवलिङ्गशरीररूपा। तद्भिन्ना चेत्यनेकविधा।

सत्त्वरजस्तमोनामकानां गुणानां समुदायो गुणत्रयम्। सृष्टिकाले मूलप्रकृतेः सकाशात् परमात्मना त्रेधा भिन्नम्। महदादिजगदुपादानम्। तमोगुणापेक्षया रजोगुणो द्विगुणपरिमाणयुक्तः। रजोगुणापेक्षया

---

१. अभिव्यक्तिश्चेति २. सर्वाण्यपि रूपाणि परिपूर्णानि। ३. अत्यन्ताभिन्नः।

सत्त्वगुणो द्विगुणपरिमाणयुक्तः। सत्त्वरजोभ्यां मिश्रं तमः। तमःसत्त्वाभ्यां मिश्रं रजः। सत्त्वं तु शुद्धमेव। तत्र शुद्धसत्त्वं मुक्तानां लीलाविग्रहाय भवति। रजोगुणेन सृष्टिः। रजोगुणस्थसत्त्वेन स्थितिः। तमोगुणेन विनाशः। सत्त्वाभिमानिनी श्रीः। रजोभिमानिनी भूः। तमोभिमानिनी दुर्गा रमैव।

ब्रह्मादयोऽपि गुणत्रयाभिमानिनः। साक्षाद्गुणत्रयोपादानकं महत्तत्त्वं तमोगुणापेक्षया दशगुणपरिमाणन्यूनम्। ब्रह्मवायुतत्स्त्रियौ च तदभिमानिनः।

महत्तत्त्वोपादानकं अहङ्कारतत्त्वम्। वैकारिकतैजसतामसभेदेन त्रिविधम्। महत्तत्त्वाद् दशांशन्यूनम्। गरुडशेषरुद्रादयस्तदभिमानिनः।

बुद्धिर्द्विविधा। तत्त्वरूपा ज्ञानरूपा चेति। तत्र तत्त्वरूपा द्रव्यम्। महत्तत्त्वजन्या तैजसाहङ्कारेणोपचिता। ज्ञानरूपा बुद्धिर्ज्ञानप्रकरणे वक्ष्यते। ब्रह्माद्युत्तमान्तास्तदभिमानिनः।

मनो द्विविधम्। तत्त्वरूपं तद्भिन्नं चेति। वैकारिकाहङ्कारोपादानकं मनस्तत्त्वम्। पूर्वोक्तदेवताः इन्द्रकामानिरुद्धाश्च तदभिमानिनः। (त)सत्त्वभिन्नं मन इन्द्रियम्। तद्द्विविधम्। नित्यमनित्यं चेति। नित्येन्द्रियं ईशलक्ष्मीब्रह्मादिसर्वजीवानां स्वरूपभूतम्। अनित्येन्द्रियं ब्रह्मादिसर्वजीवानां बाह्यम्। तत्पञ्चविधम्। मनोबुद्धिरहङ्कारचित्तं [1]चेतनमिति।

इन्द्रियाण्यपि द्विविधानि। तत्त्वभूतानि तद्भिन्नानि च इति। पुनर्द्विविधानि। ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि चेति। घ्राणरसनचक्षुःश्रोत्रत्वक्रूपाणि ज्ञानेन्द्रियाणि पञ्च। वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाणि पञ्च। नित्यानित्यभेदेन पुनर्द्विविधानि। तत्र तत्त्वरूपाण्यनित्यानि। ज्ञानकर्मेन्द्रियाणि तैजसाहङ्कारिकोपादानकानि तत्त्वभिन्नानि नित्यानि। ज्ञानकर्मेन्द्रियाणि ईशलक्ष्मीसर्वजीवानां स्वरूपभूतानि तानि साक्षीत्युच्यन्ते। ईशलक्ष्म्योः दशेन्द्रियाण्यपि प्रत्येकं गन्धादिसर्वपदार्थविषयकाणि। मुक्तानाममुक्तानां च ब्रह्मादीनामिन्द्रियाणि तत्तद्योग्यपदार्थविषयकाणि। अनित्यानि तत्त्वभिन्नानि दशेन्द्रियाणि ब्रह्मादिसर्वजीवानाम्। ब्रह्मादयः सूर्यादयश्च तदभिमानिनः। संसारावस्थायामपि साक्षिरूपस्वरूपेन्द्रियस्य आत्मा मनस्तद्धर्माः सुखदुःखादयोऽविद्याकालोऽव्याकृताकाशाश्च साक्षादेव विषयाः। बाह्येन्द्रियद्वारा शब्दादयोऽपि साक्षिविषयाः। ज्ञाततया अज्ञाततया सर्वेऽप्यतीन्द्रियाः साक्षिविषयाः। साक्ष्यनङ्गीकारे कालाकाशाद्यसिद्धिप्रसङ्गात्।

मीयन्त इति मात्राः शब्दस्पर्शरूपरसगन्धाः पञ्च विषयाः। [2]ते द्विविधाः। तत्त्वरूपाः तद्भिन्नाश्चेति। तत्त्वरूपाः तामसाहङ्कारजन्याः। पञ्चतन्मात्रा इत्युच्यन्ते। (ते)तत्त्वभिन्नाः मात्राः गुणाः

---

१. चेतनं चेति (चेतनेति)।  २. ता इति पाठान्तरम्

तत्प्रकरणे निरूप्यन्ते । उमासुपर्णीवारुण्यः बृहस्पत्याद्याश्च तदभिमानिनः । तद्द्वारा तामसाहङ्कारजन्यानि पञ्च(महा)भूतानि । आकाशवायुतेजोऽप्पृथिव्यः । तानि द्विविधानि । [1]तत्त्वभूतानि तद्भिन्नानि चेति । तत्र शब्दाद् आकाशोत्पत्तिः । तदभिमानी विनायकः । अहङ्कारतत्त्वाद्दशगुणन्यूनमाकाशम् । वायुर्द्विविधः । प्राणापानादिरूपस्तद्भिन्नश्चेति । पुनर्द्विविधः नित्योऽनित्यश्चेति । नित्यः प्राणः (प्राणादिः) ईशलक्ष्म्योर्मुक्तानां च स्वरूपभूतः । अनित्यस्तत्त्वभिन्नः संसारिणाम् । तत्त्वरूपो वायुः स्पर्शजन्यः । वाय्वादिदेवास्तदभिमानिनः आकाशाद्दशगुणन्यूनः । तेजो द्विविधम् । तत्त्वरूपं तद्भिन्नं चेति । नित्यानित्यभेदेन पुनर्द्विविधम् । नित्यं तेजः । ईशलक्ष्म्योः मुक्तानां च स्वरूपभूतम् । तत्त्वरूपं तेजोरूपं तन्मात्राजन्यमनित्यं च । वायुतत्त्वाद्दशगुणन्यूनम् । ब्रह्मादयो देवास्तदभिमानिनः । आपो द्विविधाः । तत्त्व[2]रूपाः तद्भिन्नाश्चेति । पुनर्द्विविधाः । नित्या अनित्याश्च । तत्त्व[3]रूपा [4]आपो रसजन्याः, नित्याः[5] ईशलक्ष्मीमुक्तस्वरूपभूताः । ब्रह्मादयो देवाः अभिमानिनः । तेजसो दशगुणन्यूनाः । पृथिवी द्विविधा । तत्त्वातत्त्वभेदात् । पुनर्द्विविधा । (तत्त्वातत्त्वभेदेन) नित्यानित्या चेति । अनित्या तत्त्वरूपा पृथिवी गन्धजन्या । नित्या तत्त्वभिन्ना ईशलक्ष्मीमुक्तस्वरूपभूता । ब्रह्मादयो धरा च तदभिमानिनः । अद्भिः दशांशन्यूना । ब्रह्माण्डात् द्विगुणपरिमाणा । अव्यक्तमारभ्य पृथिवीपर्यन्तानि ब्रह्माण्डाद्बाह्यानि तदावरणानि । तत्त्वभिन्नाकाशादि पञ्चभूतानि ब्रह्माण्डान्तर्गतानि । परमात्मजन्यानि । महदाद्यनङ्गीकारे ब्रह्माण्डोत्पत्तिर्न स्यात् । तत्तद्देवानामंशिनामवस्थानानि न स्युः । तत्तत्तत्त्वपर्यन्तं व्याप्तभगवद्रूपापरोक्षज्ञानं च देवानां न स्यात् । तत्तत्प्रतिपादकप्रमाणविरोधश्च स्यात् ।

एतैस्तत्त्वैर्विष्णुर्वीर्यात्मना परिणम्य ब्रह्माण्डमसृजत् । तच्च पञ्चाशत्कोटिविस्तीर्णकमेव । [6]कपालद्वयरूपम् । उपरितनं कपालं सुवर्णम् । अधस्तनं रजतम् । कूर्मरूपेण हरिणा वायुना च धृतम् । सकलप्राणिना[7]मावासस्थानम् । सन्धिदेशे क्षुरधारोपमसुषिरयुक्तम् । तदभिमानी चतुर्मुखः । ततो भगवान् महदादितत्त्वांशान् स्वोदरे निक्षिप्य ब्रह्माण्डान्तः प्रविवेश ।

ततः [8]उदके शयानस्य भगवतो नाभेः पद्ममभूत् । पद्मे चतुर्मुखोऽजनि । तस्मात्पुनः देवादयः मन आदीनि पृथिव्यन्तानि । ततोऽविद्योत्पन्ना । सा च पाञ्चपर्वणी । पाञ्चपर्वाणी तु मोहोमहामोहस्तामिश्रमन्धतामिश्रं तमश्चेति । [9]पुनर्जीवाच्छादिका परमाच्छादिका बला माया चेति चतुर्विधा ।

---

१. तत्त्वरूपाणि २. क्वचिद्दृश्यते 'भूताः' पाठान्तरम् ३. 'भूताः' पाठान्तरम्
४. पृथिवीतत्त्वपर्यन्तानि (रसजन्याः) पाठान्तरम् ५. तत्त्वभिन्ना आपो अनित्याः ।
६. एकमेव ७. चतुर्दशलोकानां च ८. तदोदके
९. पुनर्जीवाच्छादिका परमाच्छादिका बला (शैवला) माया चेति चतुर्विधा इति भाव्यम् ।

सर्वाप्यविद्या जीवाश्रिता प्रातिस्विकी च । वर्णाः अकारादयः एकपञ्चाशत् । सर्वे लौकिका वैदिकाश्च शब्दाः एकपञ्चाशद्वर्णात्मकाः । प्रत्येकं व्याप्ताः । अनादिनित्याश्च । उच्चारणध्वनिव्यङ्ग्याः । प्रत्येकमानुपूर्वीविशेषविशिष्टतया च पदार्थवाचकाः ।

प्रकाशविनाश्योऽन्धकारः न तु तेजोऽभावः । चक्रादिच्छेद्यत्वात् । ब्रह्मणा पीयमानत्वादावरणत्वात् । स्वातन्त्र्येणोपलभ्यमानत्वाच्च । स्वाप्नपदार्थोपादानानि वासनाः । पूर्वानुभवजन्याः मनोगताः प्रवाहतोऽनादयः संस्कारपदवाच्याश्च ।

आयुर्व्यवस्थापकः कालः । क्षणलवाद्यनेकविधः प्रत्येकं व्याप्तः । प्रकृतोत्पत्तिविनाशवान् । स्वगतः सर्वाधारश्च । कालप्रवाहस्तु नित्यः । सर्वकार्योत्पत्तिहेतुः । प्रतिबिम्बस्तु बिम्बाविनाभूतः तत्सदृशः । स च द्विविधः । नित्योऽनित्यश्च ।

परमात्मव्यतिरिक्तसर्वेऽपि चेतनाः परमात्मप्रतिबिम्बाः नित्याः । नित्यानित्योपाधियुक्ताः स्वापेक्षयोत्तमोत्तमप्रतिबिम्बाश्च । दर्पणादौ मुखादिप्रतिबिम्बाः । अनित्याः दर्पणाद्युपादानकाः । न तु बिम्बात्मकाः । आभिमुख्यादिरूपविरुद्धधर्माधिकरणत्वात् । छायापि प्रतिबिम्बभूतैव न त्वन्या आलोकोपादानभूता(तैव) । क्वचिच्चेतने(पि) छायाशब्दप्रयोगः । प्रतिबिम्बवच्च (प्रतिबिम्बत्वसाम्याद्भवतीति) साम्याद्भवति इति ।

*॥ इति द्रव्यनिरूपणम् ॥*

★ ★ ★

# अथ गुणनिरूपणम्

दोषभिन्नत्वं गुणत्वम् । शुक्लादिव्यवहारहेतुर्गुणो रूपम् । तच्च शुक्लनीलपीतरक्तहरितकपिशचित्रभेदात् सप्तविधम् । पुनर्द्विविधम् । नित्यमनित्यं च । पुनर्द्विविधम् । उद्भूतमनुद्भूतं च । तत्र शुक्लनीलपीतरक्तादि सप्तान्यपि नित्यानि रूपाणि परमात्मनः । तद्वल्लक्ष्म्या अपि रूपाणि । सर्वाण्युद्भूतानि रूपाणि नित्यानि सर्वजीवानाम् । प्रकृतेः शुक्लनीलरक्तानि नित्यानि त्रीणि रूपाणि । तद्वद्गुणत्रयस्यापि महत्तत्त्वस्य हेमवद्रूपम् । अहङ्कारादौ रूपवद्द्रव्यारब्धत्वाद्रूपं सम्भावितम् । भूतेषु तेजोजलपृथिवीषु (आकाशवायुतेजोजलपृथिवी) अनित्यानि रूपाण्युद्भूतानि । आकाशे तु अनुद्भूतं रूपम् । तत्र पृथिव्यां सप्तविधम् । शुक्लं जले । शुक्लभास्वरं तेजसि । नीलमाकाशतमसोः । सर्वाण्यपि रूपाणि वासनाप्रतिबिम्बयोश्च ।

माधुर्यादिव्यवहारहेतुर्गुणो रसः । स च षड्विधः । मधुराम्ललवणकटुकषायतिक्तभेदात् । रूपवन्नित्यानित्यविभागवान् । ईशलक्ष्म्योर्मधुररसः । पृथिव्यां वासनायां च षड्विधरसाः । जले तु मधुर एव ।

सुरभ्यादिव्यवहारहेतुर्गुणो गन्धः । स च द्विविधः । सुरभिरसुरभिश्चेति । [1]पूर्ववन्नित्यादिविभागवान् । ईशलक्ष्मीमुक्तानां सुगन्ध एव । पृथिव्यां वासनायां च द्विविधोऽपि ।

शीतादिव्यवहारहेतुर्गुणः स्पर्शः । स त्रिविधः । शीतोष्णानुष्णाशीतभेदात् । पूर्वोक्तविभागयुक्तः । तत्र हरौ लक्ष्म्यां च त्रिविधोऽपि नित्यश्च । शीतं जले । उष्णस्तेजसि कालकूटविषे अपरोक्षज्ञाने च । अनुष्णाशीतः पृथिवीवाय्वोः ।

एकत्वादिव्यवहारहेतुः सङ्ख्या । एकत्वं द्विविधम् । नित्यमनित्यं च । नित्यगतं नित्यम् । अनित्यगतमनित्यम् । द्वित्वत्रित्वादिकं च सर्वत्रापेक्षाबुद्धिजन्यमनित्यमेव । एकत्वाद्यनन्तपर्यन्ता सर्वपदार्थवृत्तिः ।

अणुत्वादिहेतुर्गुणः परिमाणम् । तत्त्रिविधम् । अणुमहन्मध्यमं चेति । नित्यानित्यभेदेन पुनर्द्विविधम् । नित्यं त्रिविधमपि परिमाणं ईशलक्ष्म्योर्युगपदेव । नित्यमणुपरिमाणं सर्वजीवेषु । अनित्यमणुपरिमाणमनित्यगतम् । नित्यं महत्परिमाणं अव्याकृताकाशप्रकृतिवर्णगतम् । काले क्षणलवादिरूपे अनित्यं महत्परिमाणम् । कार्यद्रव्येषु सर्वत्र मध्यमपरिमाणमनित्यमेव । मुक्तानां महत्त्वादिकं अणिमाद्यष्टैश्वर्यरूपम् ।

संयुक्तव्यवहारहेतुर्गुणः संयोगः । स द्विविधः । नित्योऽनित्यश्च । ईशलक्ष्म्योः ईशजीवयोः वर्णाव्याकृताकाशयोः वर्णानां च परस्परं संयोगो नित्य एव । अनित्यनित्यद्रव्ययोरनित्यानां परस्परसंयोगः अनित्य एव । उभयोस्तत्संयोगः नैकः किन्तु भिन्न एव । अनित्यसंयोगः एकविध एव । अन्यतरकर्मजः । मल्लयोस्तु संयोगः नैकः । किन्तु द्वौ । अतः अन्यतरकर्मजो स्थाणुश्येनसंयोगवत् । संयोगजसंयोगस्तु नास्त्येव । हस्तशरीरयोरभेदेन हस्तपुस्तकसंयोगेन संयोगान्तरोत्पत्तेरयोगात् ।

विभक्तव्यवहारहेतुर्गुणो विभागः । स द्विविधः । नित्योऽनित्यश्च । अनित्यद्रव्यगतः अनित्यः । भगवद्रूपाणां परस्परं मूलरूपेण च विश्लेषशब्दवाच्यो विभागो नित्यः । संश्लेषवत् अचिन्त्यशक्त्या घटनीयः ।

---

१. पूर्ववन्नित्यानित्यविभागवान् । पा०

परापरव्यवहारासाधारणकारणे परत्वापरत्वे । ते प्रत्येकं द्विविधे । कालपरत्वापरत्वे देशपरत्वापरत्वे चेति । पुनर्द्विविधे । नित्येऽनित्ये चेति । नित्ये देशकालपरत्वे उभे अपि ईशलक्ष्मीजीवेषु । नित्य-कालपरत्वं अव्याकृताकाशादिनित्यद्रव्येषु । अनित्यं कालपरत्वं ज्येष्ठे । अनित्यं कालापरत्वं कनिष्ठे । अनित्यं देशपरत्वं दूरस्थे अनित्यद्रव्ये । नित्यं देशापरत्वं ईशलक्ष्म्योः । अनित्यं देशापरत्वं समीपस्थे वस्तुनि ।

द्रवणहेतुर्गुणो द्रवत्वम् । तद् द्विविधं नित्यमनित्यं चेति । पुनर्द्विविधं सांसिद्धिकं नैमित्तिकं चेति । सांसिद्धिकं नित्यद्रवत्वं ईशलक्ष्म्योः । देवेषु जलान्तर्गतेषु । अनित्यं सांसिद्धिकं जले । नैमित्तिकं द्रवत्वं घृतसुवर्णादौ ।

पतनासाधारणकारणं गुरुत्वम् । नित्यमनित्यं चेति द्विविधम् । नित्यं गुरुत्वमीशलक्ष्म्योः । कृष्णे यशोदाप्रत्यक्षसिद्धम् । योगिनां मुक्तानां च गुरुत्वं अणिमाद्यष्टैश्वर्यान्तर्गतम् । अनित्यं गुरुत्वं पाषाणादौ कार्यद्रव्यमात्रे । पञ्चतन्मात्राऽव्याकृताकाशतेज(तम)स्सु न गुरुत्वम् ।

वेगहेतुर्गुणो लघुत्वम् । तद्विविधम् । नित्यमनित्यं च । नित्यं लघुत्वं [1]अव्याकृताकाश-वर्णव्यतिरिक्तमहदादिद्रव्यवृत्ति । अनित्यं लघुत्वं अनित्यद्रव्यवृत्ति वेगहेतुत्वं च । लघुत्वस्य लाघवातिशयेन वेगातिशयदर्शनात् तेजादौ प्रत्यक्षसिद्धम् । गुरुत्वाभावो लघुत्वमिति तु वैपरीत्य-पराहतं प्रतियोग्यनपेक्षणाच्च ।

मार्दवव्यवहारहेतुर्मृदुत्वम् । नित्यानित्यव्यवहारभेदेन द्विविधम् । नित्यं ईशलक्ष्मीमुक्तजीवेषु । अनित्यं मृदुत्वं आकाशकालविद्यान्धकारतेजोवायुव्यतिरिक्तेषु कार्यद्रव्येषु ।

काठिण्यं द्विविधम् । नित्यमनित्यं च । नित्यमीशलक्ष्म्योः । अनित्यमनित्यमूर्तद्रव्ये । न च काठिण्यं निबिडावयवसंयोगो न गुणान्तरमिति वाच्यम् । सम्बन्धिद्वयप्रतीतिं विनापि इदं कठिणमिति प्रतीतेः । अन्यथा गुरुत्वमपि गुणान्तरं न स्यात् । अन्योन्याभावात् अतिरिक्तं पृथक्त्वं नास्त्येव ।

स्नेहो द्विविधः । मनःप्रावण्यं चूर्णादिपिण्डीभावहेतुश्चेति । उभयमपि नित्यानित्यभेदेन द्विविधम् । आद्यं मनःप्रावण्यं चैतन्यमात्रे । अनित्यं मनःप्रावण्यं संसारिषु । नित्यः चूर्णादिपिण्डीभावहेतुरीश-लक्ष्म्योः । अनित्यस्तु जलमात्रवृत्तिः ।

---

१. अव्याकृताकाशवर्णव्यतिरिक्तेशादिद्रव्यवृत्ति इति पा०

शब्दस्तु ध्वनिः । नित्यानित्यभेदेन द्विविधः । नित्यः ईशलक्ष्मीमुक्तप्राप्तान्धन्तमसाम् । अनित्यस्तु मुक्ताव्याकृताकाशाविद्यान्धकारवर्णव्यतिरिक्तेषु सर्वत्र । आकाशमात्रगुण इति न युक्तम् । पूर्वपूर्वगुणानामुत्तरोत्तरेषु भूतेषु अनुवृत्तेर्भागवतादावुक्तेः अनुभवाच्च ।

बुद्धिर्ज्ञानम् । सर्वव्यवहारहेतुर्गुणः । तच्च ज्ञानं द्विविधम् । नित्यमनित्यं च । पुनर्द्विविधम् । यथार्थमयथार्थं च । तत्र यथार्थं नित्यं ईशलक्ष्मीसज्जीवस्वरूपम् । अयथार्थं नित्यं ज्ञानं असज्जीवस्वरूपम् । अनित्ययथार्थज्ञानं ब्रह्मादिसर्वजीवानाम् । अनित्यं अयथार्थं ज्ञानं रुद्रादिसर्वजीवानाम् । ब्रह्मवाय्वोः सरस्वतीभारत्योश्च नायथार्थज्ञानम् । पुनर्द्विविधं ज्ञानम् । अनुभवः स्मृतिश्चेति । ईशलक्ष्मीमुक्तानामनुभव एव । न तु संस्कारजन्या स्मृतिः । स्मृतिर्ब्रह्मादिसर्वजीवानाम् । अनुभवस्त्रिविधः । प्रत्यक्षानुमितिशाब्दभेदात् । ईशलक्ष्म्योः प्रत्यक्षरूपमेव ज्ञानम् । न त्वनुमितिः न वा शाब्दम् । ब्रह्मादीनां तु त्रिविधमपि ज्ञानम् ।

सर्वैरनुकूलतया वेदनीयं सुखम् । तद्विविधं नित्यमनित्यं च । नित्यं ईशलक्ष्मीसज्जीवस्वरूपम् । अनित्यं सुखं ब्रह्मादिसर्वजीवानां संसारावस्थायामेव । 'आनन्दो ब्रह्मेति व्यजानात्', 'इच्छतो विष्णुयजनं ब्रह्मणा साधिता स्मृते'ति बृहद्भाष्यम् । 'विश्वतश्चक्षुरुत विश्वतो मुख' इति श्रुतेः । 'शब्दोऽनुमा तथैवाक्षो ब्रह्मादीनां तदुच्यत' इति भाष्ये । भक्तस्तुतिश्रवणं भगवतोऽनुग्रहोन्मुखम् । तं भूतिरि'ति देवाः उपासाञ्चक्रिरे । इदं तु मुक्तियोग्यपरम् । नित्यसंसारिणां तु दुःखमिश्रं सुखम् । तमोयोग्यानामनित्यं सुखम् । 'अतोऽधमानां जीवानां मिथ्याज्ञानादयोऽखिलाः । स्वाभाविका गुणा ज्ञेया मर्त्यमध्येषु मिश्रिताः' इति गीतातात्पर्ये । इदं नित्यसंसारिपरम् । 'निरामिणो रिपवोऽन्नेषु जागृधुरि'ति श्रुतेः । 'असुराः कलिपर्यन्ताः एवं दुःखोत्तरोत्तराः' इति निर्णये । इदं तु तमोयोग्यपरम् । सज्जनानां तु 'सोऽकामयते'ति श्रुतेः । 'यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसम्भव' इति उक्तं चैतत्सूत्रभाष्ये । सङ्कल्पादेव च । स यदि पितृलोककामो भवति । कामेन मे काम आगात् । कामान्नी कामरूपी मुक्तानां सत्यकामत्वमिति । ईशे क्रोधः सज्जनेषु क्षमात्मकः न दोषः । बृहद्भाष्ये तथोक्तेः ।

संसारावस्थायां तारतम्योपेतं प्रतिकूलतया वेदनीयं दुःखम् । तदपि नित्यानित्यभेदेन द्विविधम् । नित्यं दुःखं तमोयोग्यानां स्वरूपभूतम् । तारतम्योपेतं उभयमपि ज्ञानं बहुतारतम्योपेतम् । नित्यसंसारिणां सुखमिश्रदुःखस्वरूपम् । अनित्यं दुःखं सर्वजीवानाम् ।

कामो इच्छा । सा द्विविधा । नित्यानित्यभेदात् । दुष्टादुष्टभेदेन पुनर्द्विविधा । तत्रादुष्टा नित्येच्छा ईशलक्ष्मीभूता । अदुष्टानित्येच्छा सर्वजीवानाम् । संसारे नित्यदुष्टेच्छा । तमोयोग्यस्वरूपा । अनित्यदुष्टेच्छा रुद्रादिसर्वजीवानाम् । ब्रह्मवायुतत्स्त्रीणां तु नासद्विषयेच्छा ।

क्रोधो द्वेषः । स द्विविधः नित्यानित्यभेदात् । नित्यक्रोधः ईशलक्ष्मीसर्वजीवानां स्वरूपः । अनित्यः सर्वजीवानां संसारे ।

बाह्यः प्रवृत्तिः प्रयत्नः । नित्यानित्यभेदात्सोऽपि द्विविधः । नित्यः प्रयत्नः ईशलक्ष्मीसर्वजीवानां स्वरूपभूतः । अनित्यः संसारिणां बुद्ध्यादि प्रयत्नान्ताश्रितं मनोधर्म एवानित्यम् । तत्स्वामित्वात् तदनुभवितृत्वात् जीवस्य ।

धर्माधर्मौ पुण्यपापे नित्यानित्यभेदेन द्विविधौ । महदल्पभेदात् अनित्यौ द्विविधौ । काम्यकर्मजाकाम्यकर्मजभेदात् । तत्रेशलक्ष्म्योः पुण्यपापसम्बन्ध एव नास्ति । नित्यं पुण्यं ब्रह्मादिसज्जीवस्वरूपम् । ज्ञानोत्तरकालीनसत्कर्मणाभिव्यज्यते । मोक्षे आनन्दातिशयहेतुः । अनित्यं पुण्यं सर्वजीवानां बाह्यम् । अनित्यं पुण्यं काम्यकर्मजमकाम्यकर्मजं च । ज्ञानात्पूर्वभाव्यकाम्यकर्मजम् । पुण्यमपरोक्षज्ञानहेतुः अन्तःकरणशुद्धिद्वारा । काम्यकर्मजं पुण्यं स्वर्गादिकाम्यफलहेतुः । पुनरनित्यं द्विविधम् । इष्टानिष्टभेदात् । अनिष्टपुण्यस्य कस्यचिद्भोगेन नाशः । कस्यचिदपरोक्षज्ञानेन नाशः । इष्टपुण्यस्य ज्ञानेन न नाशः । ज्ञानोत्तरं मोक्षे वा भोगानुकूलम् । पुनः काम्यपुण्यं द्विविधम् । प्रारब्धमप्रारब्धं चेति ।

भोक्तुमारब्धं प्रारब्धम् । सञ्चितं भोक्तव्यं अप्रारब्धम् । महतः प्रारब्धस्य पुण्यस्य भोगेनैव नाशः । ब्रह्मादिसर्वजीवानाम् अल्पस्य प्रारब्धस्य ज्ञानेन विनाशः प्रारब्धपापस्यापि भोगेनैव नाशः रुद्रादिसर्वजीवानाम् । नित्यं पापमीषद्रुद्रादि । सज्जीवेति । (सर्वजीवस्वरूपम् ।) तच्च श्रेष्ठापराधात् । अपरोक्षज्ञानानन्तरं अभिव्यज्यते इति व्यज्यते । मुक्तावधिकानन्दस्य प्राप्तव्यस्य ह्रासकारणं देवानाम् । मनुष्योत्तमानां तु क्लृप्तानन्दस्यैव ह्रासकारणम् ।

नित्यं महत्पापं तमोयोग्यस्वरूपम् । तच्च श्रेष्ठापराधतमःसाधनम् । अनित्यं पापं भगवद्द्वेषपरिपाकहेतुः । द्वेषपरिपाकानन्तरं च कृतं पापं तमसि दुःखातिशयकारणम् । तेषामनित्यपुण्यमैहिकपुरुषार्थहेतुः न तु स्वर्गादिपारलौकिकसुखहेतुः । द्वेषपरिपाकानन्तरं च सञ्चितस्येष्टपुण्यस्य सर्वस्यापि नाशः अनिष्टपुण्यस्य अविनाशः । अनिष्टपापस्य तु तमस्यनुसूतत्वम् । प्रारब्धपुण्यपापयोस्तु भोगेनैव नाशः । एतयोरेव अदृष्टमिति नाम । तच्च कर्ममात्रं प्रति कारणम् ।

संस्कारश्चतुर्विधः । वेगो भावना योग्यता स्थितिस्थापकश्चेति ।

धावनादिक्रियाहेतुर्गुणो वेगः । स द्विविधः । नित्योऽनित्यश्च । नित्यः ईशलक्ष्मीप्रकृतिजीवस्वरूपभूतः । अनित्यो वेगः अव्याकृताकाशवर्णव्यतिरिक्तेषु सर्वद्रव्येषु ।

अनुभवजन्यस्मृतिहेतुसंस्कारो भावना अनित्यैव । ईशलक्ष्मीमुक्तानां स्मरणाभावात् न भावना ।

हठाख्ययोग्यता अनादिरूपा । मोक्षतमसोः तत्साधनानां तारतम्यस्य च व्यवस्थापिका । अन्यथा साङ्कर्यं स्यात् । सा ब्रह्मादिसज्जीवानां स्वरूपभूतैव ।

पूर्वावस्थापादकः स्थितिस्थापकः । नित्योऽनित्यश्चेति द्विविधः । नित्यः ईशलक्ष्म्यादिस्वरूप-भूतः । अनित्यः कटधनुरादिवृत्तिः ।

रूपादिज्ञानहेतुरालोकः । स द्विविधः नित्योऽनित्यश्च । नित्यः ईशलक्ष्मीमुक्तजीवानां स्वरूप-भूतः । अनित्यः तेजोमात्रवृत्तिः । दीपेनैव सहानुगमनागमनरूपानुविधानात् द्विविधात् गुणत्वम् ।

शमो बुद्धेर्भगवन्निष्ठता । नित्यानित्यभेदेन द्विविधः । नित्यः ईशलक्ष्मीब्रह्मादिसज्जीवस्वरूप-भूतः । अनित्यः सकलजीवानां बाह्यः ।

इन्द्रियनिग्रहो दमः । नित्यानित्यभेदेन द्विविधः । शमवत् । कृपा दया । नित्यानित्यभेदेन सापि द्विविधा । नित्या ईशलक्ष्मीसज्जीवस्वरूपभूता । अनित्या सर्वजीवानाम् ।

सुखादिद्वन्द्वसहिष्णुता तितिक्षा । कृपावत् नित्या अनित्या च ।

परापेक्षां विना कार्यानुकूलो गुणो बलम् । तद्विविधं नित्यानित्यभेदात् । नित्यं बलं चेतन-मात्रस्य । अनित्यं संसारिणां बाह्यम् ।

भयं नित्यानित्यभेदेन द्विविधम् । नित्यभयं दैत्यानां स्वरूपभूतम् । अनित्यं भयं ब्रह्मादि-सर्वजीवानां बाह्यम् ।

लज्जापि स्वरूपास्वरूपभेदेन द्विविधा । स्वरूपभूता लज्जा लक्ष्म्यादीनामपि । अनित्या संसा-रिणाम् ।

गाम्भीर्यादीनि सौन्दर्यान्तानि द्विविधानि पूर्ववत् ज्ञेयानि दयादिप्रभृतिशब्देन [1]श्रद्धादयो ग्राह्याः ।

रूपरसगन्धस्पर्शशब्दाः पृथिव्यां पाकजा अपाकजाश्च । अन्यत्रापाकजाः ।

कारणे द्विविधे । उपादानकारणमपादानकारणं चेति । परिणामिकारणमेव उपादानकारणम् । अपादानकारणमेव निमित्तकारणमित्युच्यते । कार्यं सदसदात्मकम् । उत्पत्तेः पूर्वं कारणात्मना

---

१. शमादयो – शब्दादयो – इति पा०

सत्कार्यात्मना असच्च । उत्पत्त्यनन्तरं कार्यात्मना सत् कारणात्मना असच्च । उपादानोपादेययो-र्भेदाभेदौ । यावद्द्रव्यभाविनां गुणक्रियाजातीनां गुण्यादिभिः अत्यन्ताभेद एव । अयावद्द्रव्यभाविनां तु भेदाभेदौ । उपादानगता गुणा एव कार्यगाः ।

ज्ञानोत्पत्तिक्रमस्तु आत्मा मनसा संयुज्यते । मनः इन्द्रियेण । इन्द्रियमर्थेनेति । ततो अन्तः-करणमेव ज्ञानात्मना परिणमते । ज्ञानादिच्छा । इच्छातः प्रवृत्तिः अपरोक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः संयोग एव । गुणादिभिरपि इन्द्रियस्य संयोग एव । ज्ञानविषयस्तु विषयविषयिभावः । अन्तःकरण-स्थितस्य ज्ञानस्य बाह्यघटादिना संयोगाभावात् ।

ज्ञानकारणं द्विविधम् । प्रत्यक्षानुमानशब्दभेदात् । तत्र यथार्थज्ञानकारणानि प्रमाणानि । अयथार्थ-ज्ञानकारणान्यप्रमाणानि । यथार्थज्ञानमपि प्रमाणम् । स्वरूपेन्द्रियं साक्ष्यपि प्रत्यक्षरूपं प्रमाणम् । इन्द्रियार्थसन्निकर्षद्वारा चक्षुरादिषडिन्द्रियाणि ज्ञानजनकानि । संस्कारद्वारा मनः स्मरणसाधनम् । यथार्थस्मृतिरपि प्रमाणम् । दोषसहकारेण इन्द्रियाण्ययथार्थज्ञानजनकानि । व्याप्तिज्ञानं समुचितदेशादौ सिद्धिश्च अनुमानसहकारि । न तु पक्षधर्मताज्ञाननियमः । शक्तिज्ञानं आकाङ्क्षासत्योश्च ज्ञानं शाब्दज्ञान-कारणम् । न तु योग्यताज्ञानमपि । अत्यन्तासत्यप्यर्थे शब्दस्य ज्ञानजनकत्वदर्शनात् । स्वातन्त्र्येण पदार्थस्मरणं न हेतुः । शक्तिज्ञान एवान्तर्भावात् । साहचर्यनियमो व्याप्तिः । पदपदार्थयोर्वाच्यवाचक-भावसम्बन्धः शक्तिः । तद्ग्रहश्च सादृश्यपुरस्कारेण सर्वधूमाग्न्योः सर्वपदार्थयोश्च भवति । न तु सामान्यप्रत्यासत्त्या । प्रत्यक्षादिजन्यं ज्ञानं सविकल्पकमेव । न तु निर्विकल्पकम् । मानाभावात् ।

प्रत्यक्षप्रमाणमष्टविधम् । साक्षिषडिन्द्रिययथार्थज्ञानभेदात् । अनुमानं त्रिविधम् । केवलान्वयि-केवलव्यतिरेक्यन्वयव्यतिरेकिभेदात् । अन्वयसहचारमात्रग्राह्यव्याप्तिकं केवलान्वयि । स्वातन्त्र्येणानु-मितिहेतुः । व्यतिरेकसहचारमात्रग्राह्यान्वयव्याप्तिकं केवलव्यतिरेकि । व्यतिरेकव्याप्तिज्ञानं अन्वय-व्याप्तिज्ञानद्वारानुमितिहेतुः । न तु साक्षाद्व्यधिकरणत्वाद्व्यतिरेकव्याप्तेः । उभयसहचारिग्राह्यव्याप्तिकं अन्वयव्यतिरेकि । अत्राप्यन्वयव्याप्तिज्ञानमेवानुमितिहेतुः । व्याप्तिज्ञानकारणभेदाद्भेदः स्वार्थं परार्थं चेति । पुनः द्विविधं अनुमानम् । स्वार्थं स्वानुमितिहेतुः । परार्थानुमितिहेतुः परार्थम् । यावता विना अनुमितिहेतुर्न तावदवयवा प्रयोक्तव्या । न तु पञ्चावयवनियमः ।

आगमो द्विविधः । पौरुषेयापौरुषेयभेदात् । पौरुषेयः आप्तोक्त एव प्रमाणम् । वक्तुराप्तता च विवक्षितार्थतत्त्वज्ञानं भ्रमप्रमादविप्रलिप्साकरणापाटवादिशून्यत्वं वेदानुसारित्वं च यथा भारतादि ।

अपौरुषेयस्तु सर्वेऽपि वेदाः प्रमाणम् । वैदापौरुषेयत्वं च वेदेनैव सिद्धम् । उपक्रमादिषड्विधतात्पर्य-लिङ्गैः निर्णीतार्थ एव वेदः प्रमापकः अन्यथा भ्रमजनकः ।

वेदार्थस्त्रिविधः । परमात्मा ब्रह्मादिदेवाः तदन्तर्गतभगवद्रूपाणि चेति । परममुख्यया वृत्त्या परमात्मप्रतिपादकः तदन्यप्रतिपादकता च मुख्यवृत्त्या लक्षणया गौण्या च उपचारेण रूढोपचारेण रूढलक्षणया चेति ।

मुख्यवृत्तिरपि त्रिधा । योगो रूढिः योगरूढिश्चेति । प्रयोगबाहुल्यमात्रं रूढिः यथा गोघटादिशब्दानां गोघटादिषु । अवयववृत्तिर्योगः । यथा पाचकादिशब्दानां देवदत्तादौ । तदुभयं योगरूढिः । यथा पङ्क-जादिशब्दानां पद्मादौ । मुख्यान्वयानुपपत्तिपूर्वकं मुख्यसम्बन्धवृत्तिर्लक्षणा यथा गङ्गायां घोष इत्यत्र गङ्गापदस्य तीरे । मुख्यार्थसादृश्यं (सादृश्यवती वृत्तिः) गौणी । यथा अग्निशब्दस्य माणवके उपचार-मात्रम् । यथा चित्रलिखितसिंहादौ सिंहशब्दस्य तत्र प्रयोगबाहुल्यं चेत् रूढोपचारः । यथा तप्तायःपिण्डे दग्धृशब्दस्य रूढलक्षणा । यथा मार्गाश्चलन्तीत्यादौ मार्गादिशब्दानां तत्स्थे । लक्षणापि त्रिविधा । जहदजहल्लक्षितलक्षणाभेदात् । मुख्यार्थपरित्यागो यत्र तत्र जहल्लक्षणा । गङ्गापदस्य तीरे मुख्यार्थ-स्यापरित्यागो यत्र तत्राजहल्लक्षणा छत्रीपदस्य अछत्रीष्वपि लक्ष्यं सम्बन्धीकृत्य तत्सम्बन्धिनी वृत्तिर्लक्षितलक्षणा । एकीभवन्तीत्यादौ च्विप्रत्ययस्य मत्यैक्यद्वारा मतिमत्सु । एता वृत्तयो जगति परमात्मनि महायोगो महारूढिश्चेति । [1]इन्द्रादिशब्दानां परमात्मनि महायोगः । [2](इदं पञ्चमावल्याः) योगार्थस्यैश्वर्यादेः परमात्मनि निरवधिकत्वात् । इन्द्रादिगताल्पैश्वर्यस्यापि परमात्माधीनत्वाच्च । नारायणादिशब्दानां महायोगरूढिः शक्तिश्च योग्येतरान्वितस्वार्थे व्यक्तावेव । न तु जातिविशिष्टे गौरवात् जातिभानं चाविनाभावात् अन्वयबोधश्च क्वचित्पदाध्याहारेण क्वचिदावृत्त्या क्वचित्तात्पर्यात् । विधिना प्रवर्तकं ज्ञानम् । निषेधेन निवर्तकं ज्ञानम् । विध्यर्थश्च बलवदनिष्टाननुबन्धित्वं कृतिसाध्यत्वं इष्टसाधनत्वं च । न तु कार्यं अपूर्वं तस्य कल्प्यत्वात् । तच्चापूर्वं फलसमानाधिकरणम् । न तु कृतिसमानाधिकरणम् ।

श्येनेनाभिचरन्यजेतेत्यादौ विधेरिष्टसाधनत्वेन लक्षणा । तस्य नरकादिबलवदनिष्टानुबन्धित्वात् बलवदनिष्टाननुबन्धित्वं इष्टसाधनताभावश्च निषेधार्थः । अपशब्दानां तु न शक्तिः किन्तु शक्ति-प्रमादाद्वाधुनिकसङ्केताद्वा अर्थबोधः । वैदिकाः शब्दाः साधवः । अपभ्रष्टाश्चासाधवः । व्याकरण-

---

१. इन्द्रादिजगद्वाचिशब्दानां इति पा० ।

२. क्वचित् अधिकपाठः दृश्यते । सम्बन्धस्तु गवेषणीयः ।

व्युत्पाद्यत्वं साधुत्वं तदभावो असाधुत्वं प्रमाणानां प्रामाण्यस्योत्पत्तौ ज्ञप्तौ च स्वतस्त्वम् । ज्ञान-कारणमात्रजन्यत्वं उत्पत्तौ स्वतस्त्वं [1]ज्ञानग्राहित्वं साक्षिग्राहित्वरूपं ज्ञप्तौ स्वतस्त्वम् अन्यथा-नवस्थानात् । स्वतस्त्वे संशयानुपपत्तिर्बाधिकेति चेन्न । स्वतस्त्वस्यौत्सर्गिकत्वात् बाधके सति साक्षी प्रामाण्यं न गृह्णाती[2]त्युपगमात् अप्रामाण्यं च परतो ज्ञायते उत्पद्यते चेति ।

*॥ इति गुणनिरूपणं समाप्तम् ॥*

★ ★ ★

# अथ सृष्टिप्रकरणम्

एवं पदार्थे निरूपिते तत्सृष्ट्यादिकर्तृत्वेन भगवज्ज्ञानं मोक्षसाधनमिति सृष्ट्यादिकं निरूप्यते । परमात्मनः प्रलयान्ते सिसृक्षा भवति । ततः प्रकृतिं प्रविश्य क्षोभयति । ततः गुणत्रयात्मना विभ-जति । ततो महदाद्यण्डपर्यन्तं तत्त्वानि तत्त्वाभिमानिब्रह्मा देवांश्च सृजति । ततश्चेतनाचेतनाद्यंशान् उदरे निक्षिप्य ब्रह्माण्डं प्रविशति । ततो दिव्यवर्षसहस्रान्ते स्वनाभितः पद्मं जनयति । तत्पद्मे आद्यब्रह्मणः प्रथमपरार्धान्ते जायते । तत्पद्मे चतुर्मुखोऽजनि । स चतुर्मुखः जगत्सृष्टौ साधनास्मृत्या दिव्यवर्षसहस्रपर्यन्तं तपः करोति । तत्तपसा प्रसन्नो भगवान् [3]देहात् पञ्चभूतानि सृजति । ततश्चतु-र्मुखान्तर्गतः सन् तन्नामको भूत्वा पञ्चभूतैः पद्मदलैः चतुर्दश भुवनानि सृजति । पुनः सर्वदेवाद्याः अण्डान्तो जायन्ते । लक्ष्म्यादिनित्यानामपि पराधीनविशेषावाप्तिलक्षणोत्पत्तिः । ब्रह्मणः प्रतिदिनं भूर्भुवस्वरिति लोकत्रयस्य सृष्टिविनाशौ ।

चतुर्युगसहस्राणि ब्रह्मणः एकदिनम् । तत्र चतुर्दश मन्वन्तराणि । एकैकस्य मनोः सार्धाष्टादश-लक्षवर्षाधिकैकसप्ततिमहायुगाः भुक्तिकालः । एवं स्वर्गलोकाधिपतयः इन्द्राः चतुर्दश । कृतत्रेता-द्वापरकलियुगभेदेन युगचतुष्टयम् । तत्र देवतामानेन चतुःसहस्रवर्षाणि कृतयुगस्य । पूर्वोत्तरं प्रत्येकं चतुःशतवर्षाणि सन्धिकालः । तथा त्रेतायुगस्य त्रिसहस्रवर्षाणि । पूर्वोत्तरं प्रत्येकं त्रिंशतवर्षाणि सन्धिकालः । एवं द्वापरयुगस्य द्विसहस्रवर्षाणि । पूर्वोत्तरं प्रत्येकं द्विशतवर्षाणि सन्धिकालः । तथा कलियुगस्य एकसहस्रवर्षाणि । पूर्वोत्तरं प्रत्येकमेकशतवर्षाणि सन्धिकालः । तथाच द्वादशसहस्राणि

---

१. ज्ञानग्राहकसाक्षिग्राह्यत्वनैयत्यं इति पा० । २. अभ्युपगमात् इति पा० ।

३. स्वदेहतः इति पा० ।

चतुर्युगस्य एतच्चतुर्युगस्याप्यावृत्तौ एको महायुगः । सृष्टिकालविशेषः कल्पः स च द्विविधः । महाकल्पः पाद्मकल्पश्चेति । महाद्यण्डपर्यन्तं सृष्टिकालः महाकल्पः । अण्डे पद्मचतुर्मुखयोः सृष्टिकालः पाद्मकल्पः । स एव ब्रह्मकल्प इत्युच्यते ।

ब्रह्मकल्पोऽपि द्विविधः । दिनकल्पः मनुकल्पश्चेति । प्रतिदिनं सृष्टिकालः दिनकल्पः । अष्टादशसहस्रात्मकः । ब्रह्मणः एकैकस्मिन् दिने चतुर्दश मनुकल्पाः । ब्रह्मणः प्रतिदिनं राजसतामसैः जनैः सात्विकजनोपद्रवे सति मत्स्यकूर्माद्यवताराः भविष्यन्ति । तत्रापि वैवस्वतमन्वन्तरे दशावताराः । अन्यत्र अन्यावतारा अपि । एतैरवतारैरयोग्यजनसंहारः सज्जनोद्धारश्च भविष्यति ।

**इति सृष्टिप्रकरणम् ॥**

★ ★ ★

# अथ स्थितिप्रकरणम्

भगवता नानारूपैः जगत्प्रविश्य जागृदाद्यवस्थाभिः पोषणं स्थितिः । अवस्थाश्च जागृत्स्वप्नसुषुप्तिमोहतुरीयभेदात् पञ्चविधाः । देहेन्द्रियाद्यभिमानेन तत्तद्विषयानुभवात् सुखदुःखोत्पादौ जागृदवस्था । तत्प्रवर्तको विश्वनामकः परमात्मा दक्षिणाक्ष्यग्रे स्थितः । स च सप्ताङ्गएकोनविंशतिमुखः तदा हृदयस्थजीवस्य दक्षिणाक्षिस्थविश्वप्राप्तिः सांशजीवानामंशेन निरंशानां तु प्रकाशतः । सा च अवस्था ब्रह्मादिसर्वचेतनानाम् । देहेन्द्रियाद्यभिमानेन मनसः स्वाप्नपदार्थानुभवः स्वप्नावस्था । तत्प्रवर्तकः तैजसनामा भगवान् कण्ठदेशगतः मनस्संस्थः । सोऽपि सप्ताङ्ग एकोनविंशतिमुखः । स्वप्नावस्था च सर्वजीवानाम् । तत्र जीवस्य तैजसप्राप्तिः । बाह्यस्वाप्नपदार्थादर्शनेन स्वरूपानुभवः सुषुप्तिः । तत्र सर्वेन्द्रियाणामुपरमः । तत्र प्रवर्तकः प्राज्ञः । तदा जीवस्य तत्प्राप्तिः । सा चावस्था रुद्रादिसर्वजीवानाम् । जागृदवस्थायां तैजसप्राज्ञाभ्यां विश्वस्य एकीभावः । इत्यादिर्बोध्यः । मूर्च्छावस्था मोहावस्था । तदा दुःखमात्रानुभवः । तत्प्रवर्तको भगवद्रूपविशेषस्तु अस्माभिर्न ऊह्यः । महान्तः प्रष्टव्याः । सा च अवस्था रुद्रादिसर्वजीवानाम् । तत्रार्धं प्राप्तिः परमात्मना जीवस्य । तुरीयावस्था मोक्षः । सा च वक्ष्यते । तत्प्रवर्तकः तुरीयनामा भगवान् । नासिकामारभ्य द्वादशाङ्गुलपरिमितदेशगतः । एवं गर्भादावपि भगवान् पोषकः ।

**इति स्थितिप्रकरणम् ॥**

★ ★ ★

# अथ संहारप्रकरणम्

संहारस्तु प्रलयः। स च द्विविधः। महाप्रलयः अवान्तरप्रलयश्च। गुणत्रयमारभ्य ब्रह्माण्डपर्यन्तस्य तदभिमानिब्रह्मादीनां च विनाशः महाप्रलयः। तदा ईश्वरस्य सञ्जिहीर्षा भवति। तया शेषान्तर्गतस्य परमात्मनो मुखादग्निज्वाला जायते। तथाच ब्रह्माण्डस्य सावर्णस्य भस्मीभावः। कार्याणां कारणेषु लयः। प्रकृतिमात्रावस्थानम्। तदा लक्ष्म्यात्मकं महोदकं तत्र वटपत्रे लक्ष्म्यात्मके च शून्यनामा नारायणः शेते। सर्वेऽपि जीवाः तदुदरं प्रविशन्ति। श्वेतद्वीपानन्तासनवैकुण्ठेषु श्रीभागानां न नाशः। दुर्गाभागानां च नाशः। अन्धन्तमसो न नाशः। रौरवाद्यनित्यनरकाणां च विनाशः। प्रकृत्या क्षण-लवादिकालमात्रसृष्टिः। अवान्तरप्रलयस्तु द्विविधः। दैनन्दिनप्रलयो मनुप्रलयश्चेति। प्रतिदिनं ब्रह्मणः रात्र्यागमे विनाशः दैनन्दिनप्रलयः। तत्र भूरादिलोकमात्रस्य विनाशः। इन्द्रादयस्तु तदा महर्लोकादिकं गच्छन्ति। एकैकमनुभुक्तिकालसमाप्तौ यो विनाशः स मनुप्रलयः। तदा भुवरादिलोकत्रयविनाशो नास्ति। भूर्लोकस्थमनुष्यमात्रविनाशः। लोकद्वयस्थानां देवानां तु महर्लोकादिगमनम्। तदा लोक-त्रयस्य उदकेन पूर्तिः।

**इति संहारप्रकरणम्॥**

★ ★ ★

# अथ नियमनप्रकरणम्

नियमनं येन साधनेन क्रियते तत्सर्वं परमात्मप्रेरणमेव। **इति नियमनप्रकरणम्॥**

# अथ ज्ञानप्रकरणम्

येन येन साधनेन यस्य यस्य यज्ज्ञानं जन्यते तत्सर्वं परमात्मना जन्यते इति ज्ञानमपि परमात्माधीनम्। तद्द्विविधं संसारहेतुर्मोक्षहेतुश्च। देहापत्यकलत्रादिषु ममतादिरूपज्ञानं संसारहेतुः। मोक्षसाधनं च ज्ञानं योग्यापरोक्षम्। तद्बहुसाधनसम्पत्तिजन्यम्। चतुर्मुखमारभ्य मनुष्योत्तमपर्यन्तं सज्जीवानामेवापरोक्षज्ञानं जायते। न तु तमोयोग्यानां एकैकस्मिन् ब्रह्मकल्पे एकैकस्य ऋजोरपरोक्षज्ञानं एकैकस्य मुक्तिः। **इति ज्ञानप्रकरणम्॥**

★ ★ ★

# अथ साधनप्रकरणम्

एवं रुद्रादिपदयोग्यानामपि मोक्षसाधनीभूतापरोक्षज्ञानसाधनानि च विविधसांसारिकदुःख-दर्शनेन सज्जनसङ्गत्या च इहामुत्रफलभोगविरागः शमदमादिसम्पत्तिः, अध्ययनसम्पत्तिः, शरणागतिः, गुरुकुलवासः, तदुपदेशेन सच्छास्त्रादिज्ञानरूपं श्रवणं श्रुतस्य तत्त्वस्य दृढीकरणाय मीमांसापरपर्यायो विचारो मननं गुरुभक्तिर्यथायोग्यं परमात्मभक्तिः, स्वाधमेषु सत्सु दया स्वसमेषु स्वात्मवत्स्नेहः। उत्तमेषु भक्तिर्निवृत्तकर्मानुष्ठानं निषिद्धकर्मत्यागः सर्वसमर्पणं तारतम्यपरिज्ञानं पञ्चभेदज्ञानं प्रकृतिपुरुषविवेकज्ञानं अयोग्यनिन्दा उपासना चेति। ब्रह्मादिसर्वयोग्यसर्वजीवसाधारणानि ॥ **इति साधनप्रकरणम् ॥**



# अथ गुरुप्रकरणम्

गुरवोऽपि द्विविधाः। नियतगुरवोऽनियतगुरवश्चेति। शिष्यस्वरूपं सम्यज्ज्ञात्वा तद्योग्यगुण-विशिष्टभगवद्रूपविशेषविषयकविद्योपदेशकर्तारो नियतगुरवः। मनुष्योत्तमस्य ऋषयः। ऋषीणां चक्र-वर्तिनां ऋषयो देवाश्च। देवानां च स्वोत्तमा देवाः। तत्रापि सूर्यचन्द्रपदयोग्यदेवौ सुरूपशान्त-रूपनामकौ यौ तयोः सुमनोनामकगरुडपदयोग्यो देवः नियतगुरुः। तथा शक्रपदयोग्यस्य सुमन्त-(सुनन्द)नामकस्य सुमनोनामकगरुडपदयोग्य एव नियतगुरुः। सुमनोनामकगरुडपदयोग्यस्य उग्रतपो-नामकरुद्रपदयोग्यस्य ब्रह्मपदयोग्यऋजुर्लातव्यः नियतगुरुः। तत्र मनुष्यादीनां च बहुजन्मसु श्रवणम्। सूर्यपदयोग्ययोस्तु मन्वन्तरचतुष्टयं श्रवणकालः। इन्द्रपदयोग्यस्य दशमन्वन्तरं श्रवणकालः। गरुड-रुद्रपदयोग्ययोस्तु सार्धपरार्धकालः। अनियतगुरवस्तु भगवत्तत्त्वमात्रोपदेष्टारः। तेभ्योऽपि श्रोतव्यमेव। पूर्वप्राप्तगुरुः सर्वथा न त्याज्यः। उत्तमप्राप्त्यैव पूर्वानुज्ञा न मृग्यते। समप्राप्तौ विकल्पः। अधमप्राप्तौ सर्वथा न पूर्वानुज्ञानमृग्यत एव। स्वोत्तमाः सर्वेऽपि गुरवः ब्रह्मादिपर्यन्तम्। तेषु तत्तन्माहात्म्यानुसारेण भक्तिः कर्तव्या मोक्षार्थमनुज्ञाप्रदातृत्वात्। ज्ञानप्रयोजकत्वात् शिष्यानुष्ठितश्रवणादिफलभोक्तृत्वाच्च। तत्र गुरोः शिष्यापेक्षया अष्टभागाधिकफलं भविष्यति। तस्मादपि तद्गुरोस्तद्द्विगुणफलं तस्मात्सार्धं फलमन्येषाम्। तेभ्यः सहस्रगुणितं फलं देवानाम्। तेभ्यः चतुर्मुखस्य महौघगुणितफलम्। तत्र द्वात्रिंशल्लक्षणवत्वात्। ब्रह्मा उत्तमोत्तमगुरुः। रुद्रादयस्तु क्रमाल्लक्षणहीनाः। अमुख्यगुरवः। अतो गुरुभक्त्या गुरुप्रसादः सम्पादनीयः ॥ **इति गुरुप्रकरणम् ॥**



# अथ तारतम्यप्रकरणम्

तारतम्यं चास्मद्गुरुपादैः सम्यगुपपादितम् । तारतम्यस्य सङ्ग्रहः तत्रैवानुसन्धेयः ।

# अथ उपासनाप्रकरणम्

उपासना च द्विविधा । सन्ततशास्त्राभ्यासरूपा ध्यानरूपा चेति । तत्र केषाञ्चिदधिकारिणां सततं शास्त्रालोडनेन अपरोक्षज्ञानं जायते । केषाञ्चित्तु ध्यानेन । ध्यानं च इतरतिरस्कारपूर्वक-भगवद्विषयकाखण्डस्मृतिः । तदेव निदिध्यासनं तच्च श्रवणमननाभ्यां अज्ञानसंशयमिथ्याज्ञाननिरासेन इदमित्थमिति निश्चयो भवति । सा चोपासना आत्मत्वमात्रगुणविशिष्टत्वेन भगवद्विषयया एकगुणो-पासकानाम् । सच्चिदानन्द आत्मेति चतुर्गुणविशिष्टभगवद्रूपविषयः मनुष्योत्तमानाम् । देवादीनां तु यथायोग्यं बहुगुणविशिष्टव्याप्तभगवद्रूपविषया । देवेष्वपि ब्रह्मा वेदोक्तानन्तगुणक्रियाविशिष्टानन्त-रूपोपासनां करोति । सरस्वती तु क्रियांशे सामान्याकारेणैव उपासनां करोति । गरुडरुद्रौ च गुण-क्रिययोः सामान्याकारेण अनन्त[1]भगवदुपासनां कुरुतः । इन्द्रादयस्तु गुणसामान्यतः क्रियासामान्यतः रूपसामान्यतः उपासनां कुर्वन्ति । देहान्तर्बिम्बोपासना केषाञ्चित् ऋषीणाम् । अग्निप्रतिमयोः उपासना मनुष्याणाम् । व्याप्तोपासना देवानाम् । केषाञ्चित् ऋषीणां गन्धर्वाणां अप्सरसां च । सर्वैरपि बिम्ब-रूपोपासनं कर्तव्यमेव । बिम्बरूपं च प्राज्ञरूपमिति सम्प्रदायविदः । तत्त्रिविधं प्रादेशमूलेशाग्रेश-भेदात् । हृदयस्थप्रादेशोपासनयोग्याः केचन । हृत्कर्णिकामूलगत अङ्गुष्ठाग्रपरिमाणरूपमूलेशोपासकाश्च केचन । हृत्कर्णिकाग्रगताङ्गुष्ठपरिमितभगवद्रूपोपासकाश्च केचन । ऋजूनां शतब्रह्मकल्पं उपासना-कालः । रुद्रगरुडपदयोग्यस्तु चत्वारिंशद्ब्रह्मकल्पेषु मोक्षप्रयत्नः । शक्रस्य विंशतिकल्पेषु प्रयत्नः । सूर्यादीनां दशकल्पेषु प्रयत्नः । रुद्रपदयोग्यसार्धपरार्धस्य त्रिभागकालः उपासनाकालः । शक्रपद-योग्यस्य मन्वन्तरचतुष्टयमुपासनाकालः । सूर्यचन्द्रपदयोग्ययोस्तु एकमन्वन्तरं उपासनाकालः । अन्येषां तु एकमन्वन्तरं उपासनाकालः ॥ **इत्युपासनाप्रकरणम्** ॥

# अथ पञ्चभेदप्रकरणम्

पञ्चभेदास्तु । जीवेशयोर्भेदः । जीवानां च परस्परं भेदः । जडेशयोर्भेदः । जडानां च परस्परं भेदः । जडजीवयोर्भेदः । एते पञ्चभेदाः अनादिनित्याः मुक्तावप्यनुस्यूताः ॥ **इति पञ्चभेदप्रकरणम्** ॥

---

१. भगवद्रूपोपासनां

# अथ अपरोक्षज्ञानप्रकरणम्

तत्र एतत्साधनसम्पत्त्या ब्रह्मादिमनुष्योत्तमान्तानां अपरोक्षज्ञानं यथायोग्यं जायते । तत्र मनुष्योत्तमानां विद्युद्वद्ब्रह्मापरोक्षज्ञाने । सूर्यमण्डलवत्तेजःपुञ्जत्वेन भगवद्विषयं अपरोक्षज्ञानं देवानाम् । प्रतिबिम्बवद्गरुडरुद्रयोः । ब्रह्मणस्तु यावदवयवविशिष्टत्वेन [1]ब्रह्मापरोक्षज्ञानम् । व्याप्तोपासकानां केषाञ्चित् ब्रह्माण्डान्तर्गततन्मात्रपरिमितभगवद्रूपापरोक्षज्ञानम् । सूर्यावराणां देवानां ब्रह्माण्डाद्बहिरपि पञ्चभूतपर्यन्तं स्थितभगवद्रूपापरोक्षज्ञानम् । चन्द्रसूर्ययोस्तु मनस्तत्त्वपर्यन्तं व्याप्त भगवद्रूपापरोक्षज्ञानम् । स्वायंभुवमनुदक्षाद्याः बुद्धितत्त्वपर्यन्तस्थितभगवद्रूपं पश्यन्ति । इन्द्रकामौ अहङ्कारतत्त्वपर्यन्तव्याप्तभगवद्रूपं पश्यतः । उमासौपर्ण्यौ महत्तत्त्वपर्यन्तं व्याप्तभगवद्रूपं पश्यतः । गिरिशगरुडौ तमोगुणपर्यन्तं व्याप्तभगवद्रूपं पश्यतः । वारुणी त्रैगुण्यात्परतः शतगुणितं व्याप्तभगवद्रूपं पश्यति । ब्रह्मा तु यावदव्याकृताकाशव्याप्तभगवद्रूपं पश्यति । ब्रह्मणः शतब्रह्मकल्पात्पूर्वं योग्यापरोक्षज्ञानं जायते । पञ्चाशद्ब्रह्मकल्पात्पूर्वं शिवगरुडपदयोग्ययोः । इन्द्रकामयोः विंशतिब्रह्मकल्पात्पूर्वं अपरोक्षज्ञानं जायते । सूर्यादीनां तु दशब्रह्मकल्पात्पूर्वं अपरोक्षज्ञानं जायते । अन्येषां एकब्रह्मकल्पे एव ज्ञानं जायते । अपरोक्षज्ञानं मानसं अणिमाद्यैश्वर्यं देवादीनां अपरोक्षज्ञानजन्यम् । तमोयोग्यानां तु नापरोक्षज्ञानम् । किन्तु द्वेषपरिपाक एव तमःसाधनं जायते । तत्साधनानि तु विषयलोलुपता त्रिविधगुरुद्वेषः नवविधहरिद्वेषः । एवंविधस्य ज्ञानस्य परमात्माधीनत्वम् । इति ज्ञानप्रकरणम् । तथा ज्ञानमपि परमात्माधीनम् ॥ *इत्यपरोक्षज्ञानप्रकरणम् ॥*

# अथ बन्धप्रकरणम्

बन्धोऽपि जीवस्य परमात्माधीनः । बन्धस्तु ईश्वरेच्छा । अविद्याकामकर्मलिङ्गशरीरं त्रिगुणात्मकम् । मनः स्थूलशरीरमित्यादि । एवं सृष्ट्यादयः बन्धान्ताः परमात्माधीनाः ॥ *इति बन्धप्रकरणम् ॥*

# अथ मोक्षप्रकरणम्

तन्मोक्षोऽपि परमात्माधीनः । तथाहि— अपरोक्षज्ञानानन्तरं परमभक्तिर्जायते । ततो अत्यर्थप्रसादः । तस्मात्प्रकृत्यविद्यादिभ्यो मोक्षः । स चतुर्विधः । कर्मक्षये उत्क्रान्तिलयौ अर्चिरादिमार्गो भोगश्चेति । कर्मक्षयस्तु अपरोक्षज्ञाने सति तस्य सञ्चितस्य सर्वस्यापि पापस्य अनिष्टपुण्यस्य च

---

१. स्पष्टं भगवदपरोक्षज्ञानं इति पा० ।

सर्वात्मना विनाशः । विनाशो नाम अनिष्टपुण्यस्य कस्यचित् सुहृद्भ्यो दानम् । पापस्य कस्यचित् द्वेषिभ्यो दानम् । केषाञ्चित् स्वरूपत एव नाशः । प्रारब्धकर्मणस्तु भोगेनैव नाशः । ब्रह्मणः शत-कल्पपर्यन्तं पुण्यप्रारब्धफलस्य सत्यलोकाधिपत्यादेरनुभवः । गरुडशेषयोः पञ्चाशद्ब्रह्मकल्पपर्यन्तं पुण्यपापप्रारब्धानुभवः इन्द्रकामयोः विंशतिब्रह्मकल्पपर्यन्तं पुण्यपापप्रारब्धानुभवः । सूर्यचन्द्रादीनां देवानां दशकल्पपर्यन्तं प्रारब्धानुभवः । अन्येषां मनुष्योत्तमानां तु एकब्रह्मकल्पमात्रमिति ।

प्रारब्धानुभवानन्तरं च ब्रह्मनाड्या देहादुत्क्रमन्ति । सुषुम्नानाडी ब्रह्मनाडी । सा मूलाधारमारभ्य मूर्ध्निपर्यन्तं ऋजुरूपेण दीर्घशलाकावद्देहे वर्तते । सैव पञ्चप्रभेदिनी । तथा ज्ञानिनोऽपि द्विविधाः । प्रतीकालम्बना अप्रतीकालम्बनाश्चेति । देहादिप्रतीके अपरोक्षज्ञानवन्तः प्रतीकालम्बनाः । तदन्यत्र अपरोक्षज्ञानवन्तः अप्रतीकालम्बनाः । अप्रतीकालम्बनानां देवादिव्यतिरिक्तानां केषाञ्चित्सुषुम्ना-नाडिमध्यादुत्क्रमणम् । तत्काले हृदयस्याग्रं प्रद्योतते । तत्प्रकाशितद्वारा निष्क्रामति । तदा प्राज्ञेन अन्वारूढो भवति । परमात्मनोऽग्रतः वायुर्गच्छति । ततोऽर्चिरादिमार्गेण गमनं भवति । तत्र तत्र लोकेषु पूजा च भवति । ततः क्रमेण वैकुण्ठलोकप्राप्तिः । तत्र तुरीयनामकभगवत्प्राप्तिश्च । प्रतीका-लम्बनानां तु अन्तकाले नियमतो भगवत्स्मरणं जायते । सुषुम्नानाडिपार्श्वस्थः नाड्या भगवत्प्रकाश-युक्तद्वारा गमनं अर्चिरादिलोकप्राप्तिः । क्रमेण वायुलोकप्राप्तिः । वायुलोकप्राप्त्यनन्तरं च वायुरेव चतुर्मुखलोकं नयति । स च स्वशरीरलयानन्तरं वैकुण्ठं नयति ।

एवमेकगुणोपासकानामपरोक्षज्ञानानन्तरं न शरीरादुत्क्रमणम् । किन्तु शरीरस्य स्वेतीभावेन उत्सूनुता जायते । ततः क्रमेण शरीरविनाशः । तेषां पृथिव्यादावेवावस्थानम् । सर्वेषामपि सत्यलोके चतुर्मुखोपदेशः । श्वेतद्वीपे वासुदेवदर्शनम् । ध्रुवलोकस्थं शिंशुमारदर्शनं च नियतम् । तमोयोग्या-नामपि द्वेषपरिपाकानन्तरं देहादुत्क्रमणं भवति । सर्वेषां कलिप्राप्तिः । कलेस्तु ब्रह्मणा सह लिङ्गभङ्गः वायुगदाप्रहाराद्भवति । नित्यसंसारिणामपि लिङ्गभङ्गः । अन्यथा तत्स्वरूपमात्रस्य कदाप्यनुभवाभाव-प्रसङ्गः । साधनानुष्ठानवैयर्थ्यप्रसङ्गश्च । जनलोकमारभ्य ऊर्ध्वलोकं गतानां न पुनरावर्तिः । देवादीनां तु नोत्क्रमणं च । नार्चिरादिमार्गः । मानुषादिषु जातानां तु उत्क्रमणं मार्गश्च भवति । न तदा मुक्तिः किन्तूत्तमेषु देहलयानन्तरमेव ।

देहलयक्रमस्तु । मार्गौ द्वौ । गरुडमार्गो शेषमार्गश्चेति । तत्र गरुडः । सौपर्णी इन्द्रः गुरुः सूर्यः अग्निरिति गरुडमार्गः । शेषः वारुणी कामोऽनिरुद्धः सोमः वरुणः इति शेषमार्गः । अग्नेः सूर्ये लयः, सूर्यस्य गुरौ लयः, गुरोरिन्द्रे लयः, इन्द्रस्य सौपर्ण्यां लयः, सौपर्ण्याश्च गरुडे लयः । एवं वरुणस्य सोमे

लयः, सोमस्य अनिरुद्धे लयः, अनिरुद्धस्य कामे लयः, कामस्य वारुण्यां लयः । वारुण्याश्च शेषे लयः । अन्येषां तु देवानां केषाञ्चिद्गरुडमार्गे प्रवेशः । तथा हि । भृग्वादीनां दक्षे लयः । दक्षस्य इन्द्रे लय इति गरुडमार्गप्रवेशः । आकाशा-भिमानिगणेशस्य पृथिव्यभिमानिनः धरायाश्च गुरौ लयः । इति गरुडमार्गप्रवेशः । कर्मजदेवानां प्रियव्रतगययोः स्वायम्भुवमनौ लयः । स्वायम्भुवमनोश्च इन्द्रे लयः । मरुद्गणानां जयादीनामपि इन्द्रे लयः । यमस्य मनौ लयः । निर्ऋतेश्च यमे लयः । पितॄणां यमे लयः । अग्निपुत्राणां आजानजादीनां अवशिष्टानां देवानां च अग्नौ लय इति गरुडमार्गप्रवेशः ।

गन्धर्वाणां कुबेरे लयः । कुबेरस्य सोमे लयः । सनकादीनां तु कामे लयः । विष्वक्सेनस्यानिरुद्धे लयः । इति शेषमार्गप्रवेशः । गरुडशेषयोश्च सरस्वत्यां सरस्वत्याश्च चतुर्मुखस्य लक्ष्मीद्वारा परमात्मनि लयः । उमायाः रुद्रे लयः । रुद्रस्य भारत्यां लयः । भारत्याः वायौ लयः । वायोश्च लक्ष्म्यां लयः तेषां तदा न मुक्तिः । किन्तु एतद्ब्रह्मकल्पानन्तरं एष्यद्ब्रह्मकल्पे वायोः ब्रह्मपदप्राप्तिः । भारती सरस्वती भविष्यति । रुद्रस्य शेषपदप्राप्तिः । उमा वारुणी भविष्यति । इत्येवं वाय्वाद्यानां चतुर्णां ब्रह्मादि-भावानन्तरं मुक्तिः । एवं लयानन्तरं चतुर्मुखदेहे प्रविष्टानां एतत्कल्पे लिङ्गभङ्गयोग्यानां ब्रह्मणा सह विरजानदीस्नानेन लिङ्गभङ्गो जायते । विरजानदी च [1]वाय्वाकाशयोर्मध्ये वर्तते लक्ष्म्यात्मिका । लिङ्गशरीरं च दशेन्द्रियाणि सूक्ष्मरूपाणि, पञ्च प्राणाः सूक्ष्मरूपाः, मनश्च सूक्ष्मरूपम्, आहत्य षोडश-कलोपेतं तस्य भङ्गो नाम जीवसम्बन्धनाशः, स्वरूपत एव नाश इति केचित् । प्रलयकाले सर्वेषां भगवदुदरे प्रवेशः । तदा न भोगः । किन्तु पुनः सृष्ट्यनन्तरं सृष्टिकाले भोगः ।

एतद्भोगयोग्याः चतुर्विधाः । सालोक्यसामीप्यसारूप्यसायुज्यभोगवन्त इति । केचन भगवल्लोके यत्रकुत्रचित्संस्थाः यथेष्टं भोगवन्तः केचन चतुर्भुजाः शङ्खचक्रायुधवन्तो यथेष्टं भोगिनः । केचन भगवच्छरीरं प्रविश्य यथेष्टं भोगवन्तः । एवं केचन क्षीरसागरगाः । [2]केचनाश्वत्थवनगाः । केचन मध्यसरोवरगाः । केचन बाह्योपवनगाः । केचनारण्याख्यसुधासमुद्रगाः तत्र बहवो वृक्षाः । तेषु प्रति-शाखं धानापूपाः स्रवन्ति । तथा पायसकर्दमाः मांसराशयश्च । तत्र तत्र मुक्ताः तत्तत्पदार्थभोगवन्तः भविष्यन्ति । केचन स्त्रीभोगं कुर्वन्ति । केचन गजतुरगादीन् धावयन्ति । केचन दिव्याभरणवन्तस्त्रीभिः सह जलक्रीडां कुर्वन्ति । स्फटिकेन्द्रनीलमण्यादिनिर्मितविचित्रसद्मप्रासादेषु रमन्ते । केचन ऋगादि-वेदोच्चारणेन भगवन्तं स्तुवन्ति । केचन सुखोद्रेकेण हावुहावु इत्यादि शब्दानुच्चरन्ति । केचन पूर्वा-भ्यासवशेन यज्ञादिकं कुर्वन्ति । केचन आजन्ममरणं स्मृत्वा हर्षमाप्नुवन्ति । केचनेच्छामात्रेण

---

१. प्रधानाव्याकृताकाशयोर्मध्ये ।

२. ग्रन्थभागोऽयं क्वचिद्दृश्यते ।

पित्रादिदर्शनवन्तः भवन्ति । केचन सर्वलोकसञ्चारिणः भवन्ति । केचन शुद्धसत्त्वनिर्मितलीला-शरीराण्युपादाय क्रीडन्ति । केचन भगवद्गुणकर्माणि गायन्ति । केचन नृत्यं कुर्वन्ति । केचन वाद्यानि वादयन्ति । सर्वेऽपि तारतम्यवन्तः ईर्ष्यासूयादिरहिताः मोदन्ते । अपरोक्षज्ञानानन्तरं अनुष्ठित-कर्मोपासनादिवशात् आनन्दातिशयवन्तो भवन्ति । अन्यथा तदनुष्ठानवैयर्थ्यापातः । अनुतिष्ठन्ति च रुद्रादयः ।

तथा हि लवणार्णवे रुद्रेण दशकल्पं तपश्चीर्णम् । शक्रेण वर्षकोटिधूमः पीतः । सूर्येण अयुतवर्षं अवाक्शिरसा तपश्चीर्णम् । आकाशशायिना धर्मेण सहस्रवर्षं मरीचयः पीताः । अतः आनन्दाति-शयः । स्वर्णकारः स्वर्णवत् परमात्मा मुक्तानां स्वेच्छयैव भोगार्थं कल्याणतमं महद्रूपं करोति । वैकुण्ठादौ विद्यमानाः सर्वेऽपि पदार्थाः लक्ष्म्यात्मकाः । मुक्तब्रह्मादीनां जगत्सृष्ट्यादिव्यापारो नास्ति । मुक्तानां स्वकीयावरनियामकत्वं चास्त्येव । पुनः संसारे नावर्तन्ते मुक्ताः । परमात्मा चात्र सकल-भोगयुक्तः मुक्तब्रह्मादिभिरीड्यमानः । लक्ष्म्यात्मके [१]विमलाख्ये पर्यङ्के शेते । तत्र प्रियकर्म गायति । बहुविधा विभूतिर्बहुमानं करोति महालक्ष्मीः इत्यशेषमतिमङ्गलम् ॥

*॥ इति श्रीविजयीन्द्रभिक्षुविरचितः*
*पदार्थसङ्ग्रहः समाप्तः ॥*



---

१. विमिताख्ये इति पा० ।

॥ श्रीः ॥

## श्रीमद्विजयीन्द्रतीर्थविरचितम्

# नारायणशब्दार्थनिर्वचनम्

सत्यानन्दरथमध्वरथव्यासं नत्वा गुरूनपि ।
नाम्नो नारायण इति निरुक्तिः क्रियते मया ॥

(दोषदूरं गुणोपेतं नरसिंहं श्रियः पतिम् ।
दैत्यसूदनमत्युग्रं श्रये सङ्कल्पसिद्धये ॥ १ ॥

नारायणेतिसन्नाम्नः शताधिकनिरुक्तयः ।
विजयीन्द्रेण तन्यन्ते हरिगुर्वोः प्रसत्तितः ॥ २ ॥)

१. अराः दोषाः तद्विरुद्धाः गुणाः नाराः । तेषामयनमाश्रयो नारायणः ।

२. अरायणो न भवतीति वा नारायणः ।

३. रधिगतावित्यतो (धा.सं.११०) भावे डप्रत्ये टिलोपे रः ज्ञानं, तदभावः अरः, तदभावो नारः पूर्णज्ञानम् । 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत' इति न्यायात् । तस्याश्रय इति वा नारायणः ।

४. रमु क्रीडायामित्यतो भावे डप्रत्यये टिलोपे रः रमणं सुखं, तदभावो अरः तदभावो नारः पूर्णसुखम् । द्वौ नञाविति न्यायात् । तस्याश्रय इति वा नारायणः ।

५. पूर्ववत् रः ज्ञानं, तद्विरुद्धमज्ञानं अरः, तदाश्रयो न भवतीति वा नारायणः ।

६. पूर्ववत् रः सुखं, तद्विरुद्धं दुःखं अरः, तदाश्रयो न भवतीति वा नारायणः ।

७. रीङ् क्षय इत्यतो भावे डप्रत्यये टिलोपे रः नाशः, आरः चतुर्विधरूपसम्यङ्नाशः, तदभावो नारः, तदयनत्वाद्वा अरायणो न भवतीति नाराः । 'अनित्यत्वं देहहानिः' इति वचनात्।

८. न विद्यते अरो दोषो ययोस्तौ नारौ, अय गतावित्यतो भावे घञर्थे कविधानमिति कप्रत्यये अयः ज्ञानम्। गत्यर्थानां ज्ञानार्थत्वात्। 'णश्च निर्वृतिवाचकः' इति वचनात् णः सुखम्। अयश्च णश्च अयणौ, नारौ अयणौ यस्य सः इति वा नारायणः ज्ञानस्य निर्दोषत्वमयथार्थत्वशून्यमित्यादि। आनन्दस्य दुःखासम्भिन्नत्वमित्यादि।

९. न विद्यते अरः दोषः ययोस्तौ नारौ, अयः गतिः, णः बलं, 'णकारो बलमि'ति श्रुतेः। नारौ अयणौ यस्यासौ इति वा नारायणः। गतिबलयोः निर्दोषत्वं क्वापि प्रतिबन्धशून्यत्वम्।

१०. अराः दोषाः एषां सन्तीति आराः दोषिणः, अर्श आद्यजन्तोऽयम्, तैरयनः ज्ञेयः अरायणः, तादृशो न भवतीति वा नारायणः। गत्यर्थादयतेः कर्मणि 'कृत्यल्युटो बहुलमि'ति (पा.सू.३-३-११३) ल्युट्प्रत्यये अनादेशः। 'विज्ञेयो भक्तैरेव न चान्यथे'ति वचनात्।

११. उक्तरीत्या अराणां दोषिणां अयनं मार्गः भजनरूपः अरायणः, न विद्यते अरायणो यस्मिन् स इति वा नारायणः। 'मैवारुण्य' इति वचनात्।

१२. आ अत्यन्तं अराणां दोषिणां द्वेषिणां आ समीचीनौ स्वरूपभूताविति यावत्। अयणौ ज्ञानानन्दौ अरायणौ। न विद्येते अरायणौ यस्मात्स इति वा नारायणः। अत्यन्तद्वेषादिरूपदोषयुक्तानां ज्ञानानन्दस्वरूपत्वं नास्तीति यावत्।

१३. न विद्यन्ते अराः दोषाः यस्मात्तन्नारं अपरोक्षज्ञानं, तादृशमयनं ज्ञानं यस्मात् सः इति वा नारायणः। 'भिद्यते हृदयग्रन्थिरि'त्यादेः। तज्ज्ञानस्य सकलदोषनिवर्तकत्वात्।

१४. न विद्यते रः नाशः यस्मिन् मोक्षे सः नरः, तत्साधनत्वेन तत्सम्बन्धि नारं, तादृशमयनं ज्ञानं यस्य सः इति वा नारायणः। 'तमेवं विद्वान्' इत्यादेः तज्ज्ञानस्य मोक्षसाधनत्वात्।

१५. वक्ष्यमाणरीत्या नाराः ज्ञानिनः, तेषामायः पुरुषार्थः नारायः, तस्य ज्ञानं तत्साधनं ज्ञानं यस्य स इति वा नारायणः। ज्ञानिनां सकलपुरुषार्थसाधनज्ञानविषय इति यावत्। 'पुरुषार्थोऽतः शब्दादिति बादरायणः' इति सूत्रात्।

१६. न विद्यन्ते अराः दोषाः दुःखज्ञानादयः यस्याः सा नारा लक्ष्मीः तस्या आश्रय इति वा नारायणः।

१७. उक्तरीत्या नारा लक्ष्मीः अयनमाश्रयो यस्य स इति वा नारायणः। तत्प्रेरकत्वेन तदन्तःस्थत्वात् तस्या एव मुख्याधिष्ठानत्वाच्च।

१८. नारा लक्ष्मीः तस्याः अयणौ ज्ञानानन्दौ यस्मात्स इति वा नारायणः ।

१९. नारा लक्ष्मीः तस्याः आयः पुरुषार्थः, 'आयस्तु फलमुद्दिष्टं' इति वचनात् । णः बलं यस्मात् स इति वा नारायणः ।

२०. नारा लक्ष्मीः तस्याः अयनं सन्मार्गः, सर्वदा ईश्वराराधनरूपो यस्मात् स इति वा नारायणः।

२१. नारा लक्ष्मीः तस्याः यं मिश्रणं आलिङ्गनमिति यावत् । णः चुम्बनं यस्मात् स इति वा नारायणः । यु (धातुसं. ११०७) मिश्रण इत्यतो भावे डप्रत्ययः, णिसि (धातुसं. १०९७) चुम्बन इत्यतो भावे डः, उभयत्र टिलोपश्च ।

२२. नारा लक्ष्मीः तस्याः आसमन्तात् सर्वदेशकालयोः यं संयोगं स्वसम्बन्धं नयतीति वा । तस्याः आ सर्वगः, 'आकारः सर्वगो भावः' इति वचनात् । सर्वदेशकालगः स्वयं तादृशेन स्वेन आसमन्तात् सर्वदेशकालयोः यं संयोगसम्बन्धं नयतीति वा नारायणः । 'समना चासृत्युपक्रमादि'ति सूत्रात् तयोः सर्वदेशकालव्याप्तिमत्त्वात् ।

२३. न विद्यते अरमणं येषामिति वा न विद्यन्ते अराः दोषाः येषामिति वा न विद्यते अरः योग्यज्ञाननाशो येषामिति वा नाराः मुक्ताः त एव अयनं आश्रयो यस्यासौ प्रेरकत्वेन तदन्तःस्थ इति वा नारायणः ।

२४. नाराः मुक्ताः तेषामयनमिति वा नारायणः । 'मुक्तानां परमा गतिरि'ति वचनात् ।

२५. नाराः मुक्ताः तेषामासमीचीनौ अयणौ ज्ञानानन्दौ स्वरूपभूतज्ञानानन्दाविति यावत् । यस्मात् स इति वा नारायणः ।

२६. नाराः मुक्ताः तेषामायः फलं, णः बलं च यस्मात् स इति वा नारायणः ।

२७. नाराः मुक्ताः तेषामयनं सन्मार्गः ईश्वराराधनरूपो यस्मात् स इति वा नारायणः ।

२८. नाराः मुक्ताः तेषामयः गतिप्रवृत्त्यादि, णः शुद्धिः, अमुक्तकर्तृकादर्शनं वा यस्मात् स इति वा नारायणः । अय गतावित्यतो भावे कप्रत्ययः । णिजि शुद्धौ (धातुसं. १०९८) णश अदर्शन इत्यतो वा डः, टिलोपः ।

२९. नरः शेषांशः तत्राविष्टत्वेन तत्सम्बन्धित्वान्नारो वायुः, तस्याश्रय इति वा नारायणः ।

३०. नारो वायुः स एवायनं यस्य स इति वा नारायणः । वायोः मुख्याधिष्ठानत्वात् प्रेरकत्वेन तदन्तःस्थत्वाच्च ।

३१. नारो वायुः तस्य अयणौ ज्ञानानन्दौ यस्मात् स इति वा नारायणः ।

३२. नारो वायुः तस्य आयः पुरुषार्थः, णः बलं यस्मात् स इति वा नारायणः ।

३३. नारो वायुः तस्य आ अयनम् ईश्वराराधनरूपसन्मार्गो यस्य सः इति वा नारायणः ।

३४. नारो वायुः तस्यायः गतिः, णः बन्धः संसारो यस्मात् स इति वा नारायणः ।

३५. नारो वायुः तस्यायः शुभप्रापकादृष्टम् । 'अयः शुभावहो विधिः' इत्यभिधानात् । णः शुद्धिः, अच्छिन्नभक्तत्वरूपशुद्धत्वं यस्मात्स इति वा नारायणः ।

३६. रः शरीरम् । 'रश्च कायेऽनिले' इत्येकाक्षरवचनात् । न विद्यते रः शरीरं यस्य सः अरः अशरीरो वायुः । 'अशरीरो यथा वायुः सामान्यागम्यदेहत' इति वचनात् । तस्यायः ज्ञानं तत्सम्बन्धी तत्प्रवाहः अयः तस्य णः अदर्शनं लोप इति यावत् । 'अदर्शनं लोपः' (पा.सू.१-१-६०) इति सूत्रात् । न विद्यते अरायणः वायुवृत्तिज्ञानप्रवाहलोपो यस्मात् स इति वा नारायणः ।

३७. न विद्यन्ते अराः दोषाः येषां ते नाराः वेदाः तेषामयनः प्रतिपाद्यतया आश्रय इति वा नारायणः ।

३८. नाराः वेदाः त एवायनमाश्रयो यस्य स इति वा नारायणः प्रेरकत्वेन तदन्तःस्थित इति यावत् ।

३९. नरसूनुत्वान्नाराः आपः ताः अयनमाश्रयो यस्य सः, प्रलयोदके वटपत्रशायीति वा । आपो नारा इति वचनात् ।

४०. नाराः आपः तेषामाश्रय इति वा नारायणः ।

४१. नाराः आपः त एवायनमाश्रयो यस्य सः प्रेरकत्वेन तदन्तःस्थित इति वा नारायणः ।

४२. नरः शेषांशः तदंशित्वेन तत्सम्बन्धित्वेन नरः शेषः स एवायनं यस्य सः इति वा नारायणः । शेषशायीति प्रसिद्धः ।

४३. नारः शेषः तस्यायनमाश्रय इति वा नारायणः ।

*४४. नारः शेषः तस्यायः ईश्वराराधनरूपौ ज्ञानानन्दौ यस्मात्स इति वा नारायणः ।

४४. नारः शेषः तस्यायः शुभप्रापकादृष्टं णः बलं च यस्मात् सः इति वा नारायणः ।

४५. नारः शेषः तस्यायणौ, ज्ञानानन्दौ यस्मात् सः इति वा नारायणः ।

४६. नारः शेषः तस्य अयनं ईश्वराराधनरूपसन्मार्गः यस्मात् स इति वा नारायणः ।

४७. नारः शेषः तस्य आयः गतिः प्रवृत्त्यादिरूपः, णः बन्धः संसारा यस्मात् स इति वा नारायणः ।

४८. नरः शेषांशः तद्युक्तत्वात् तत्सम्बन्धित्वात् नारः अर्जुनः । तस्यायः युद्धादौ प्रवृत्तिकारणः ज्ञानकारणो वा नारायणः । गत्यर्थादयतेः करणे ल्युट् । एतदुभयं च गीतायां प्रसिद्धम् ।

४९. नारः अर्जुनः, स एवायनं यस्य सः प्रेरकत्वेन तदन्तःस्थ स इति वा नारायणः ।

५०. नारः अर्जुनः, तस्याश्रय इति वा नारायणः ।

५१. नारः अर्जुनः, तस्यायणौ ज्ञानानन्दौ यस्मात् स इति वा नारायणः ।

५२. नारः अर्जुनः, तस्यायः शुभप्रापकादृष्टं णः बलं च यस्मात् स इति वा नारायणः ।

५३. नारः अर्जुनः, तस्याययनमीश्वराराधनरूपसन्मार्गो यस्मात् स इति वा नारायणः ।

५४. नारः अर्जुनः, तस्यायः गतिः प्रवृत्त्यादिरूपः, णः बन्धः संसारो यस्मात् स इति वा नारायणः ।

५५. रः नाशः, अरः तदभावः, न विद्यते अरः नाशाभावः येषां ते नाराः स्वरूपत एव नाशवन्तः। 'द्वौ नञाविति' न्यायात् । तेषामयनः विनाशि समस्तपदार्थाश्रय इति वा नारायणः।

५६. नारा अनित्याः, त एवायनं यस्य सः, प्रेरकत्वेन तदन्तःस्थ इति वा नारायणः । 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतेः ।

५७. न विद्यते अरः सम्यङ् नाशः स्वरूपत एव नाशो येषां ते नाराः नित्याः, तेषामयनं समस्तनित्यपदार्थाश्रय इति वा नारायणः ।

---

१. अधिकः पाठः दृश्यते ।

५८. नाराः नित्याः त एवायनं यस्य सः, प्रेरकत्वेन तदन्तःस्थ इति वा नारायणः । 'नित्यं नित्यात्मना यत' इत्यादेः ।

५९. रः ज्ञानं, अरः ज्ञानात्यन्ताभावः, न विद्यते अरो दोषो येषां ते नाराः चेतनाः, तेषामयन इति वा नारायणः ।

६०. नाराः चेतनाः, त एवायनं यस्य इति वा नारायणः । 'चेतनश्चेतनानां' इत्यादेः । प्रेरकत्वेन तदन्तःस्थ इति यावत् ।

६१. ऋगताविति धातोः भावे घञ्प्रत्यये ऋकारस्य वृद्धौ रपरत्वे आरं ज्ञानं, न विद्यते आरं येषां ते आराः अचेतनाः, तेषामयन इति वा नारायणः ।

६२. नाराः अचेतनाः, त एवायनं यस्य प्रेरकत्वेन तदन्तःस्थ इति वा नारायणः ।

६३. नराणां मनुष्याणां अयनो नरायणः, स एव नारायण इति वा ।

६४. (नराः) नाराः मनुष्याः अयनं यस्य प्रेरकत्वेन तदन्तःस्थः नारायणः । स एव नारायण इति वा ।

६५. नराणां मनुष्याणां सम्बन्धि तदुपकारभूतत्वेन विद्यमानं शरीरेन्द्रियं तद्विषयादिरूपं वस्तु-जातं नारं, तस्यायनः तत्सत्तादिप्रद इति वा नारायणः ।

६६. उक्तरूपं नारमयनं यस्य सः प्रेरकत्वेन तदन्तःस्थ इति वा नारायणः ।

६७. नरसम्बन्धि तत्प्रेरकत्वेन विद्यमानं देवजातं नारं, तदेवायनं यस्य सः प्रेरकत्वेन तदन्तःस्थ इति वा नारायणः ।

६८. उक्तरीत्या नारं देवजातं तस्याश्रय इति वा नारायणः ।

६९. नरसम्बन्धित्वान्नारं ज्ञानं विषयतया तदाश्रय इति वा नारायणः ।

७०. नारं ज्ञानं तदेवायनं यस्य सः प्रेरकत्वेन तदन्तःस्थ इति वा नारायणः ।

७१. अयः ज्ञानं, णः सुखं, अयणौ नारौ मनुष्यसम्बन्धिनौ अयणौ यस्मात् स इति वा नारायणः ।

७२. अयः पुरुषार्थः, णः बलं, अयणे नारे वा मनुष्यसम्बन्धिनी अयणे यस्मात् स इति वा नारायणः ।

७३. नरसम्बन्धित्वान्न रीयतेऽनेनेति न भेदोऽपायोऽनेनेति वा निर्दोषवेदोत्पन्नत्वाद्वा नारं ज्ञानं तद्वन्तः नारा ज्ञानिनः अर्श आद्यजन्तोऽयम् । नारं सज्ज्ञानं तद्वाचकाद्गोत्रापत्ये नडादिभ्यः फगिति फक्प्रत्यये फस्य आयन्नादेशो ज्ञानिगोत्रोत्पन्न इति वा नारायणः । 'यस्तद्वेद स पितुः पितासदि'त्यादेः ।

७४. नाराणां ज्ञानिनामयनौ ज्ञानानन्दौ यस्मात् स इति वा नारायणः ।

७५. नाराणां ज्ञानिनां अयः शुभप्रापकादृष्टं णः बलं यस्मात् स इति वा नारायणः ।

७६. नाराणां ज्ञानिनां आ अयनमीश्वराराधनरूपसन्मार्गो यस्मात् स इति वा नारायणः ।

७७. नाराणां ज्ञानिनामयः फलं ज्ञानोत्तरकृतपुण्यजनितं, णः शुद्धिः ज्ञानोत्तरकृतपापफलाशुचित्वाद्यभावो यस्मात् स इति वा नारायणः ।

७८. नाराणां ज्ञानिनामयः गतिः प्रवृत्त्यादिरूपा, णः बन्धः संसारो यस्मात् स इति वा नारायणः ।

७९. नाराः ज्ञानिनः तान् अयं समाधिं सम्प्रज्ञातमसम्प्रज्ञातं वा नयतीति वा नारायणः । युज समाधावित्यतो भावे डः टिलोपश्च ।

८०. रः सुखम्, आरः सम्यक् दुःखं दुःखासम्भिन्नं दुःखं न विद्यते आरो येषां ते नाराः दुःखमिश्रितसुखवन्तः नित्यसंसारिण इति यावत् । तेषां यं मिश्रितं संशयरूपं अणं, ज्ञानं यस्मात् स इति वा नारायणः । यु मिश्रण इत्यतः कर्मणि क्विप् अण गतावित्यतो भावे कः नित्यसंसारिणां मिश्रज्ञानप्रद इति यावत् ।

८१. नाराः नित्यसंसारिणः तान् यं मिश्रणं सुखदुःखमिश्रत्वं नयतीति वा नारायणः । यु मिश्रणे इत्यतो भावे डः टिलोपश्च । णीञ् प्रापण इत्यतः कर्तरि डः टिलोपश्च । प्रापणं चात्रागमनमेव । तथाच नित्यसंसारिणां सुखदुःखमिश्रत्वप्रापक इति यावत् ।

८२. उक्तरीत्या नाराः नित्यसंसारिणः त एवायनं यस्य स प्रेरकत्वेन तदन्तःस्थ इति वा नारायणः ।

८३. रः ज्ञानं आरः सम्यग्ज्ञानम् । न विद्यते आरो येषां ते नाराः केवलायथार्थज्ञानिनः त एव प्राप्ततमस्काः तेषामयः गतिः णः सुखं यस्मात् स इति वा नारायणः । अयगतावित्यतो घञर्थे क इति कर्मणि कः प्राप्ततमस्कानां सुखनिरासक इति यावत् ।

८४. नाराः प्राप्ततमस्काः तान् यं जुगुप्सां केवलं दुःखरूपं तमः नयतीति वा नारायणः । यु जुगुप्सायामित्यतो भावे डः टिलोपश्च । णीञ् प्रापण इत्यतः कर्तरि डः टिलोपश्च । प्रापणं गमनमेव । तथाच प्राप्ततमस्कानां केवलदुःखप्रापक इति यावत् ।

८५. उक्तरीत्या नाराः प्राप्ततमस्काः त एवायनं यस्य सः प्रेरकत्वेन तदन्तःस्थ इति वा नारायणः । 'तत्रापि च तद्व्यापारादविरोध' इति सूत्रात् ।

८६. नारायणं प्राप्ततमस्कानां अयनं हरिगुरुद्वेषादिरूपं दुर्मार्गो यस्मात् स इति वा नारायणः ।

८७. अरस्तन्नामकः समद्रः तस्य अयनमाश्रयो लोकः यस्य सः अरायणः, ना परमपुरुश्चासौ अरायणश्चेति वा नारायणः । 'अरश्च वै ण्यश्च अर्णवौ ब्रह्मलोक' इति श्रुतेः ।

८८. अरः समुद्रः स एवायनं यस्य सः अरायणः ना चासौ अरायणश्चेति वा नारायणः । 'यमन्तः समुद्रे कवयोऽवयन्ति' इति श्रुतेः ।

८९. अरः समुद्रः तस्याश्रयो अरायणः, ना चासावरायणश्चेति वा नारायणः ।

९०. नाराः उक्तरीत्या नित्यानित्याश्चेतनाचेतनाश्च, तेषां सर्वेषां यं सर्जनं नयतीति वा नारायणः । यु सर्जन इत्यतो भावे डः टिलोपश्च । सर्वसृष्टिकर्तेति यावत् ।

९१. अयः गतिः तदभावो आयः स्थितिरिति यावत् । ष्ठा गतिनिवृत्तावित्यतः गत्यभावस्यैव स्थितित्वात् । तथाच उक्तरीत्या नाराणां सर्वेषामायः स्थितिः तां नयतीति वा नारायणः। सर्वस्थितिकर्तेति यावत् ।

९२. उक्तरीत्या नारान् सर्वान् अस्य समुद्रस्य येन प्रयत्नेन नद्यो नदाः तान् अयति अदर्शनं प्रापयति न दर्शयतीति विलापयतीति नारायणः । (नार+अ+य+अन) यावत् ।

९३. 'वेद्यो विष्णुर्महेशानः न कर्मस्वनिकृजयोः । अकारः कथितः' इत्येकाक्षरवचनात् अः रुद्रः यसु प्रयत्न इत्यतो भावे डप्रत्यये टिलोपे यः प्रयत्नः णश अदर्शन इत्यतो कर्तरि डप्रत्यये टिलोपे णः लयकर्ता, अदर्शनस्यैव लयत्वात् । तथाच रुद्रद्वारा सर्वलयकर्तेति वा नारायणः ।

९४. नरान् सर्वान् आ सम्यक् येन वायुना तद्वारा प्रेरयतीति णः । यो वायुरितिशब्दित (एकाक्षरकोशः, अभिधानसङ्ग्रहः) इत्यभिधानात् । णुद प्रेरण इत्यतः कर्तरि डः टिलो-

पश्च । तथाच वायुद्वारा सर्वप्रेरक इति वा नारायणः । प्रेरणमेव च नियमनं, नियमनं व्यापारेषु प्रेरणमिति टीकोक्तेः ।

९५. नारान् उक्तरीत्या चेतनान् आ सम्यक् जुगुप्सयति अज्ञान् करोति इति । यः यु जुगुप्सायामित्यतः कर्तरि डप्रत्यये टिलोपे यः णः बन्धकः णह बन्धने इत्यतो कर्तरि डः । तथाच चेतनानां सम्यक् अज्ञानबन्धकर्तेति वा नारायणः ।

९६. नाराणां मुक्तियोग्यचेतनानां आ सम्यक् यः ज्ञापकः । णः मोचकः या प्रापणे, प्रापणं ज्ञानमित्यतो गोद इत्यादिवत् कर्तरि कप्रत्यये 'आतो लोप इटि चे'त्याकारलोपे (पा.सू. ६-४-२४) यः ज्ञापकः । णिचि शुद्धावित्यतः कर्तरि डप्रत्यये टिलोपे णः मोचकः ज्ञानानन्दस्वरूपाविर्भावकस्यैव मोचकत्वात् । तथाच योग्यचेतनानां ज्ञानमोक्षदातेति नारायणः । यद्वा या प्रापणे इत्यतो भावे कप्रत्यये आकारलोपे यः ज्ञानं णः सुखरूपमोक्षो यस्मात् स इति ज्ञानसुखरूपमोक्षदातृत्वात् नारायणः ।

९७. (अथवा) नाराणाम् आ सम्यक् येन वायुना णीञ् प्रापणे प्रापणं ज्ञानमित्यतो भावे डप्रत्यये टिलोपे णः ज्ञानं णश्च निवृत्तिवाचक इति यावत्, मोक्षो वा यस्मात् स इति वा नारायणः। 'विष्णुर्हि दाता मोक्षस्य वायुश्च तदनुज्ञया' इति वचनात् ।

९८. उक्तरीत्या नारा लक्ष्मीः तया आ सम्यक् बलमिश्रितः आयणः सुखरूपश्चेति वा नारायणः, लक्ष्मी वामभागे, नारायणो दक्षभाग इति लक्ष्म्या सह अर्धनारीनरात्मकरूपः ।

९९. उक्तरीत्या नारो वायुः तेन आ सम्यक् मिश्रितः आयणरूपश्चेति वा नारायणः । स वामभागे वायुर्दक्षभाग इति वायुना सह मिश्रितैकरूपः ।

१००. प्रेरकत्वेन नरसम्बन्धित्वात् नाराः देवाः । सर्वदेवैः मिलितैकरूपप्रदः नारायणः ।

१०१. प्रेरकत्वेन नरसम्बन्धित्वात् नाराः शङ्करेतरदेवाः तैरस्य रुद्रस्य यं मिश्रणं नयतीति वा नारायणः । तत्र शङ्करेतरे सर्वे देवाः वामभागे शङ्करो दक्षभाग इति एतादृशमिलितैकरूपप्रदः ।

१०२. उक्तरीत्या नारो वायुः पदैक्यात् तेन चतुर्मुखो ग्राह्यः । अः रुद्रः तयोः यं मिश्रणं नयतीति वा नारायणः । तत्र चतुर्मुखो दक्षभागे रुद्रो वामभाग इति तयोरेतादृशैकरूपप्रदः । एवञ्च त्रिपञ्चविधमिलितसद्भावे बहुग्रन्थान्तरे निरूपणमिति ऐतरेयभाष्यं मानम् ।

१०३. न विद्यन्ते अराः पारतन्त्र्यादि सर्वदोषाः यस्यासौ नारो भगवान् स्वयं स्वेन अस्य रुद्रस्य यं मिश्रणं नयतीति वा नारायणः । तत्र स्वयं वामभागे रुद्रो दक्षभागे एतादृशरूपप्रदः ।

१०४. उक्तरीत्या नाराः मुक्ताः सर्वे देवाः सस्त्रीकाः तेषां आ सम्यक् यं मिश्रणं अर्धनारीनरत्वरूपं नयतीति वा नारायणः । तत्र स्त्रियो वामभागे पुरुषो दक्षभागे एतादृशरूपप्रदः ।

१०५. अः कारणं, अन्तःपुरे भूषणे च चरणे कारणे रणे । अकारः कथितः' इत्येकाक्षरवचनात्, रः देहः प्राकृतो भौतिको वा । 'रश्च कायोऽनिले सूर्ये' इत्येकाक्षरवचनात् । अयः शुभप्रापकं दिष्टम् । 'अयः शुभावहो विधिरि'त्यभिधानात् । णः प्रेरकः णुद प्रेरण इत्यतः कर्तरि डः टिलोपश्च । अश्च रश्च अयश्च णश्च अरायणाः, न विद्यन्ते अरायणाः यस्य सः इति वा नारायणः ।

१०६. न विद्यते आ सवर्गो यस्मात् स इति ना । 'आकारः सर्वगे भावे परिताप' इत्येकाक्षरवचनात् स्वापेक्षया अधिकपरिमाणशून्य इति यावत् । 'महतो महीयान्' इत्युक्तेः । सः नारः शरीरं 'रश्च कायेऽनिल' इति वचनात् । अः वेधाः चतुर्मुखः । 'वेधा विष्णुर्महीशानो कमठेष्वनिकेज्ययोः । अकारः कथितः' इत्येकाक्षरवचनात् । यो यमः 'यकारः पुंसि यवने यमे दातरि यातरि' इति वचनात् । रश्च अश्च यश्च रायाः, तेषां नः नियामकः । णीञ् प्रापणे इत्यतः कर्तरि डः । ना चासौ रायणश्चेति वा नारायणः ।

१०७. न विद्यते आ परितापो यस्मात् सः । 'ना आकारः सर्वग' इति पूर्वोक्तवचनात् । रः सूर्यः अः ईशानः यो वायुः रश्च अश्च यश्च रायाः, तेषां नः नियामकः । नश्चासौ रायणश्चेति नारायणः । पक्षद्वयेऽपि 'भीषास्माद्वातः पवत' इति श्रुतिः प्रमाणम् ।

१०८. न विद्यते अरः शीघ्रगामी यस्मात् सः नारः । 'अरः शीघ्रे च चक्राङ्गे शीघ्रगामिनि किल्बिषे' इत्यभिधानात् । 'आसीनो दूरं व्रजति' इति वचनात् । आ सम्यक् यः दाता णस्य सुखस्येति आयणः 'यकारः पुंसि यवन' इति पूर्वोक्तवचनात् । णय इति वक्तव्ये यण इति वचनं 'राजदन्तादिषु परं' इति (पा.सू.२-२-३९) साधु । नारश्चासावयणश्चेति नारायणः ।

१०९. न विद्येते औ चरणौ यस्यासौ ना । 'अः अन्तःपुरे भूषणे चरणे कारणे रणे' इति पूर्वोक्तवचनात् । अरः शीघ्रगामी ना चासावरश्चेति नारः । 'अपाणिपादो जवनो ग्रहीते'ति

वचनात् । अः स्वल्पार्थः अः स्यादभावे स्वल्पार्थे' इति विश्वः । तस्य याः दातारः । 'यकारः पुंसि' इत्यादिवचनात्, तेषां नः नियामकः नारश्चासावयणश्चेति नारायणः । भगवदन्येष्वपेक्षितसर्वदातृत्वं नास्त्येव । अल्पदातृत्वमपि ईश्वराधीनमित्युक्तं भवति ।

११०. न स्वातन्त्र्यादिकम् । 'नकारः स्वगते वृक्षे' इति वचनात् । आराति सम्यक् ददातीति नारः । आ सम्यक् यस्य दातुः भक्तिपूर्वकं हविरादिदातुर्यजमानस्य णः सुखं यस्मात् स इति आयणः नारश्चासावायणश्चेति नारायणः । आङ् पूर्वात् रा दान इत्यतः पचाद्यच्प्रत्यये तस्यार्धधातुकत्वेन 'आतो लोप इटि चे'ति आकारलोपे आरः सम्यक् आदाता यकारः पुंसीति उक्तत्वात् यकारो दातृवचनः योग्यतया हविरादेः सम्बन्धः । तथाच यजमानदत्त-हविरादिकमादाय तस्य सुखदातेत्युक्तं भवति । 'रातिर्दातुपरायणमि'त्युक्तेः ।

१११. नरस्य स्वागतस्य अतिथिरूपेण स्वात्मानं प्राप्तस्य आ सम्यक् सम्पूर्णं राः 'रा द्रविणं धनमि'ति धनञ्जयः । तस्य यः दाता णः तेन स्तुत्यश्चेति वा नारायणः ।

११२. नाराः आपः तत्र अयः गतिः णः सुखं यस्य स इति वा नारायणः । मत्स्यरूपी नारा-यणः । 'मत्स्यकरूपलयोदविहारिन्' इति वचनात् । एवमेव कूर्मरूपो वा नारायणः । 'कूर्मस्वरूपकमन्दरधारिन्' इति वचनात् ।

११३. पूर्ववत् नारः शेषः कूर्मरूपो वायुः अयः ताभ्यां णः स्तुत्यः कूर्मरूपः । णु स्तुतौ कर्मणि डः । 'वेधाः विष्णुर्महीशानो' इति पूर्वोक्तवचनात् । अकारः, (उभयत्र वाचकः) तथाच शेषकूर्मरूपवायुभ्यां स्तुत्यः स यः कूर्मरूपश्चेति वा नारायणः ।

११४. णश अदर्शन इत्यतः कर्मणि डः । अः स्त्रियां टाप् आ इति रूपं इति विवेक्तव्यम् । आ अदर्शनं प्राप्ता, गर्भोदके निमज्जितेति यावत् । 'रा भूमिः रा भुवि ख्याताविल्येकाक्षरवच-नात् । आच सा राच अश्च राः नीताः अश्वराः येन सः नारः हिरण्याक्षः, तस्य यः सम्प्रहारकः (धा.सं.१२४९) यु सम्प्रहारे कर्तरि डः णश अदर्शने अदर्शनप्रापकः संहारक इति यावत् । णशेः कर्तरि डः तथाच गर्भोदके भूमिं निमज्जयन्तं हिरण्याक्षं कर्णताडनेन संहृतवान् वराहरूप इति वा नारायणः । 'सूकररूपक दानवशत्रो भूमिविदारक' इत्युक्तेः ।

११५. केसरिणः सिंहस्य आकारः कैसरः नरस्याकारः नारः कैसरश्च नारश्च नारौ । 'विरूपाणामपि समानार्थानाम्' (वार्तिकम् २४१ सिद्धान्तकौमुदी गुटका) । वक्रदण्डश्च कुटिलदण्डश्च

वक्रदण्डौ कुटिलदण्डौ 'विरूपाणामप्येकशेषो वक्तव्य' इति वार्तिकात्। अत एव 'मनोबुद्धी तु द्वादशी' इति प्रयोगः, तावस्य स्त इति नारो नरसिंहः। अर्श आद्यजन्तोऽयम्। तेन रूपेण यं मिश्रितं सदसजीवरूपं हिरण्यकशिपुम्। णः चुम्बति स्वौष्ठपुटाभ्यां शोणितपानं करोतीति णः। णिसि (धातु.१०९७) चुम्बन इति कर्तरि डः। नरसिंहरूपो हिरण्यकशिपुसंहर्तेति नारायणः। 'देव नृसिंह हिरण्यकशत्रो' इत्युक्तेः।

*टिप्पणी*— ब्रह्मसूत्रभाष्ये द्वितीयाध्यायस्य चतुर्थपादे एकादशे 'त इन्द्रियाणी'त्यधिकरणे 'द्वादशैवेन्द्रियाण्याहुः मनोबुद्धी तु द्वादशे' इति च काषायणश्रुतिः इत्यत्र *टीका*— 'द्वादशे एकादश द्वादशे' इति। तत्र *भावदीपः*— 'श्रुतौ सम्भूय द्वादशत्वोक्तेः इतरेन्द्रियाणां दशत्व एव पर्यवसानात् एकादशाभावेन द्वादशैवेति श्रुतिः कथमिन्द्रियद्वादशत्वे मानमित्यत आह द्वादशे इति। अन्यथा द्विवचनप्रयोगो न स्यादिति भावः। – इति।

एवं च एकादशं च द्वादशं च तयोरेकशेषः। 'द्वादशे' इति विग्रहः सूचितो भवति। एवं च द्वादशे इति द्विवचने एदन्त पाठ एव, तस्य च ईदूदेद् द्विवचनं प्रगृह्यमिति प्रगृह्यसंज्ञायां प्रकृतिभावे 'द्वादशे इति च काषायणश्रुतिः' इत्येव पाठः। एवं प्रकृतेऽपि कैसरश्च नारश्च नारौ इति विरूपैकशेषः इति।

११६. अः अन्तःपुरम्। रा भूमिः द्रव्यं वा अः भूषणानि। अश्च रा च अश्च अराः, नीताः अपहृताः अराः येन सः नारो बलिः तस्मात् अयः दानात् णः स्तुत्यश्चेति वा वामनत्रिविक्रमरूपो नारायणः। 'वसुस्पार्हमुत जेतो दाते'ति श्रुतेः।

११७. राजृ दीप्तावित्यतो भावे डप्रत्यये टिलोपे रः दीप्तिः तदभावः अरः तदभावो नारः अत्युत्कृष्टदीप्तिः। द्वौ नञाविति न्यायात्, तस्याः अयनं आश्रयः अत्युत्कृष्टदीप्तियुक्तः परशुरामरूपो वा नारायणः।

११८. अरं दीर्घे च चक्राङ्गे इत्युक्तेः अराणि शीघ्रगामीनि (गामिन्यः याः) याः यानानि रथाः येषां ते अरायाः क्षत्रियाः, रथित्वस्य क्षत्रियलिङ्गत्वात्, सूत्रकारेण पौत्रायणस्य रथित्वलिङ्गेन क्षत्रियत्वस्य साधितत्वात्। तेषां णः अदर्शनप्रापकः संहारक इति यावत्। ना परमपुरुषश्चासौ अरायणश्चेति सकलक्षत्रियसंहारकः परशुराम इति वा नारायणः। 'रामभृगूद्वह सूर्जितदीप्ते क्षत्रकुलान्तक' इत्युक्तेः।

११९. नरस्य दशरथस्यापत्यं पुमान् नारः रामः तस्मात् आ परितापो यस्यासौ नारा। स चासौ यश्च सुरारिस्वरूपो रावणादिः एवं च नारो रावणादिः नारो यः तं बन्धयतीति वा रामरूपो वा नारायणः। 'राघव राघव राक्षसशत्रो' इति वचनात्।

१२०. नारः अर्जुनः तस्य यः यशः रायत इति प्रापयतीति कृष्णरूपो नारायणः। 'यशो यः कथितः प्राज्ञैः (शिष्टैः)' इत्यभिधानात्।

१२१. नारः अर्जुनः, अः चतुर्मुखपदैक्यात्तेन भीमो ग्राह्यः, यो यमः तदवतारो युधिष्ठिरः, तेषां णः सुखं यस्मात् स इति वा कृष्णरूपो नारायणः।

१२२. नारः अर्जुनः, तस्य आ सम्यक् यं यानं रथं नयतीति, अर्जुनसारथ्ये कृष्णरूप इति वा नारायणः। 'याने यातरि यस्त्यागे' इत्येकाक्षरोक्तेः। 'पाण्डवबन्धो इन्द्रसुतावक' इति वचनात्।

१२३. प्रेरकत्वेन नरसम्बन्धित्वान्नाराः दैत्याः, तेषु तद्विषये अयः गतः णः शुद्धिराप्तिरूपा यस्य, दैत्यविप्रलम्भे बुद्धरूपः इति वा नारायणः। 'दैत्यविमोहक नित्यसुखादे' इत्युक्तेः।

१२४. नः स्वागतः, अरं शीघ्रं, अः रमणं तस्मिन् तस्मिन् या हर्ता रति वा नारायणः। 'दुष्ट-कुलान्तक कल्किस्वरूप इति वचनात्।

१२५. पूर्वोक्तरीत्या नाराः वेदाः तान् अस्य चतुर्मुखस्य यः दाता णः तेन स्त्युत्यश्चेति हयग्रीव-रूपो वा नारायणः।

१२६. नारान् वेदान् आ सम्यक् यान् मिश्रितान् अपपाठादिसंयुतान् इति यावत्, शोधयति सम्यक् करोतीति णः। णिजि (१०९८) शुद्धौ इत्यतः कर्तरि डः। व्यासरूपेण वेदोद्धारक इति वा नारायणः। ननु सप्तम्यां जनेर्डः इत्यादिना सप्तम्यन्तादुपपदात् जनेर्डप्रत्ययो विहितः। प्रकृते सर्वेषु पक्षेषु तदभावात् कथं डप्रत्यय इति चेन्न। 'अन्येष्वपि दृश्यते' (पा.सू. ३-२-११) इत्यनेन अन्योपपदात् धात्वन्तरादपि कस्मिंश्चिदर्थेऽपि डप्रत्ययस्य विहित-त्वात् अत्र सर्वत्र तेनैव डप्रत्ययोत्पत्तिः। उक्तं च काशिकायां अन्येष्वपि दृश्यते इति सूत्रे। अपिशब्दः सर्वोपाधिव्यभिचारार्थः। तेन धात्वन्तरादपि भवति। कारकान्तरेषु परितः खाता परिखा (आख्या) इति॥

*॥ इति श्रीमद्विजयीन्द्रभिक्षुविरचितं नारायणशब्दार्थनिर्वचनं सम्पूर्णम् ॥*

*॥ श्रीकृष्णार्पणमस्तु ॥*

॥ श्रीः ॥

॥ श्रीमन्मूलरामो विजयते ॥

श्रीमद्विजयीन्द्रतीर्थविरचितः

# ब्रह्मसूत्रन्यायसङ्ग्रहः

॥ श्रीः ॥

## श्रीमद्विजयीन्द्रतीर्थविरचितः

# ब्रह्मसूत्रन्यायसङ्ग्रहः

श्रीशं श्रीमध्वमौनीन्द्रानानम्याखिलसद्गुरून् ।
क्लृप्त्यर्थं क्रियते ब्रह्मसूत्रेषु न्यायसङ्ग्रहः ॥ १ ॥

| *न्यायसङ्ग्रहः* | *अधिकरणम्, सूत्रसङ्ख्या* | |
|---|---|---|
| जीवान्यद् ब्रह्म जिज्ञास्यं | १) १-१-१ | |
| सृष्ट्याद्यष्टविधायि यत् । | २) १-१-२ | |
| शास्त्रैकगम्यं तद् | ३) १-१-३ | |
| ब्रह्मोपक्रमादिसमन्वयात् ॥ | ४) १-१-४ | ॥ २ ॥ |
| नावाच्यमीक्षणीयत्वाद् | ५) १-१-५ तः १-१-११ | |
| ब्रह्मानन्दमयादिकम् । | ६) १-१-१२ तः १-१-१९ | |
| अन्तस्स्थमब्धिचारादेः | ७) १-१-२० तः १-१-२१ | |
| आकाशोऽनन्ततादितः ॥ | ८) १-१-२२ | ॥ ३ ॥ |
| प्राणः श्रीलक्ष्म्यधीशत्वात् | ९) १-१-२३ | |
| ज्योतिः कर्णादिदूरतः । | १०) १-१-२४ | |
| गायत्री त्राणगानादेः | ११) १-१-२५ तः १-१-२७ | |
| प्राणो देहरथादितः ॥ | १२) १-१-२८ तः १-१-३१ | |
| | | ॥ ४ ॥ |

इति प्रथमः पादः ॥

| | |
|---|---|
| द्वादशाद्याद्याङ्गिनयाः | |
| तद् द्वितीये तु सप्त ते । | १) १-२-१ तः १-२-८ |
| सर्वगो(त्र) ब्रह्मशब्दादेः | |
| अत्ता सर्वादनाद्धरिः ॥ | २) १-२-९ तः १-२-१० |
| | ॥ ५ ॥ |
| ऋतं पिबन्तौ | ३) १-२-११ तः १-२-१२ |
| हृस्थत्वाद् अमृतत्वादितोऽन्तरः | ४) १-२-१३ तः १-२-१७ |
| अन्तर्याम्यन्तरादेः | ५) १-१२-१८ तः १-२-२० |
| सोऽदृश्यादिः परविद्यतः | ६) १-२-२१ तः १-२-२३ |
| | ॥ ६ ॥ |
| वैश्वारनश्चात्मशब्दात् | ७) १-२-२४ तः १-२-३२ |

इति द्वितीयः पादः ॥

| | |
|---|---|
| द्युभ्वादेराश्रयोऽप्यतः । | १) १-३-१ तः १-३-७ |
| भूमा पूर्णसुखादेः | २) १-३-८ तः १-३-९ |
| अक्षरमम्बरपूर्वधृत् ॥ | ३) १-३-१० तः १-३-१२ |
| | ॥ ७ ॥ |
| सदीक्षितृत्वाद् हृत्खस्थो | ४) १-३-१३ |
| हतपाप्मत्वपूर्वकैः । | ५) १-३-१४ तः १-३-२१ |
| कथञ्चित्वानुकूल्येन | |
| ग्राह्यं सर्वप्रकाशनात् ॥ | ६) १-३-२२ तः १-३-२३ |
| | ॥ ८ ॥ |

| | |
|---|---|
| ईशानो वामनश्रुत्या | ७) १-३-२४ तः १-३-२५ |
| देवा विद्याधिकारिणः । | ८) १-३-२६ तः १-३-३३ |
| नासंस्कारादितः शूद्राः | ९) १-३-३४ तः १-३-३८ |
| कम्पनाद्वज्रमीश्वरः ॥ | १०) १-३-३९ |

॥ ९ ॥

| | |
|---|---|
| ज्योतिः सावधृतिश्रुत्या | ११) १-३-४० |
| ऽऽकाशो नामाद्यभावतः । | १२) १-३-४१ |
| स्वप्नादिद्दगसङ्गत्वाद् ब्राह्मणः | १३) १-३-४२ |
| पतिपूर्वतः | १४) १-३-४३ |

॥ १० ॥

इति तृतीयः पादः ॥

| | |
|---|---|
| नयाश्चतुर्दशाऽऽद्यस्य | |
| तृतीये षट्तदुत्तरे । | १) १-४-१ तः १-४-९ |
| अव्यक्तं | |
| तत्स्वतन्त्रत्वात् | |
| ज्योतिस्तावा इति श्रुतेः ॥ | २) १-४-१० तः १-४-११ |

॥ ११ ॥

| | |
|---|---|
| रूपनानात्वतः | ३) १-४-१२ तः १-४-१४ |
| पश्चाऽवान्तरं कारणं च सः । | ४) १-४-१५ तथा |
| | ५) १-४-१६ तः १-४-२३ |
| प्रकृतिश्च प्रतिज्ञादेः | ६) १-४-२४ तः १-४-२८ |
| शून्यादिश्चोक्तहेतुतः | ७) १-४-२९ |

॥ १२ ॥

आद्याध्यायगता न्यायाः धीगाः ॥ ३९ ॥
सूत्राणि मालयाः ॥ १३५ ॥
जिज्ञास्ये जीवभेदायाऽनन्तसद्गुणलक्षणम् ॥ १३ ॥

ब्रह्मेत्युक्तं तत्प्रसिद्ध्यै जन्माद्यस्येति सूत्रितम् ।
अनतिव्याप्तये तस्य शास्त्रयोनित्वमीरितम् ॥ १४ ॥

तल्लक्षणद्वयोपेते मुख्याऽशेषागमार्थता ।
समोक्तोपक्रमादिस्तद्धेतुस्तुर्ये प्रतिश्रुतः ॥ १५ ॥

समर्थसिद्ध्यै वाच्यत्वगतिसाम्ये निरूपिते ।
पञ्चमेऽथ प्रतिज्ञातसमन्वयसमर्थनम् ॥ १६ ॥

शब्दाश्चतुर्विधास्तत्रान्यत्रान्यत्रैव चोभयोः ।
प्रसिद्धा इति ते सर्वे नामलिङ्गात्मना द्विधा ॥ १७ ॥

तत्रप्रसिद्धो विष्णवैकनिष्ठो विष्णवादिगीर्यथा ।
तदेकनिष्ठतासिद्धेर्न कार्यस्तत्समन्वयः ॥ १८ ॥

यत्रान्यवृत्तिरेकैव समन्वयविरोधिनी ।
उभयत्रप्रसिद्धं तदक्षरादिवचो यथा ॥ १९ ॥

ब्रह्मावृत्त्यन्यवृत्ती द्वे विरोधिन्यौ समन्वये ।
यत्रान्यत्रप्रसिद्धं तदिन्द्राकाशादिगीर्यथा ॥ २० ॥

उक्तद्वयं ब्रह्मवृत्तौ बाधकं च त्रयं यदा ।
अन्यत्रैवप्रसिद्धं तद्दुःखिबद्धादिगीर्यथा ॥ २१ ॥

आपातरुढिरहितधर्मद्वारा च धर्मिगम् ।
लिङ्गमन्यत्ततो नामान्तर्यामीन्द्रादिगीर्यथा ॥ २२ ॥

अन्यत्रैव प्रसिद्धानां दुःशकावगतित्वतः ।
सर्वाधिकारवैधुर्याच्चान्त्याङ्घ्रौ तत्समन्वयः ॥ २३ ॥

अन्येष्वपि महामल्लभीरुभङ्गनयात्कृतः ।
आद्येऽन्यत्र प्रसिद्धानां नाम्नां तत्रापि मुख्यतः ॥ २४ ॥

अमुख्यत्वादन्यगतलिङ्गानां तु द्वितीयगः ।
उभयत्र प्रसिद्धानां नामलिंगात्मनामपि ॥ २५ ॥

समन्वयस्तृतीयेऽङ्घ्रौ कृतोऽत्रैव प्रसङ्गतः ।
देवशूद्राधिकारैतदभावौ तु विचारितौ ॥ २६ ॥

छन्दोभिधसमाकर्षौ द्वावन्तर्गणकौ नयौ ॥ २७ ॥

*इति श्रीब्रह्मसूत्रन्यायसङ्ग्रहे श्रीविजयीन्द्रयतिविरचिते प्रथमोऽध्यायः ॥*

ॐ श्रीकृष्णार्पणमस्तु ॥

★ ★ ★

# अथ द्वितीयोऽध्यायः

विरोधो युक्तिसमयश्रुतियुक्तियुतागमैः ।
समन्वयेऽपाक्रियते द्वितीयेऽङ्घ्रिषु च क्रमात् ॥ १ ॥

उक्ते समन्वयेऽत्राविरोधोक्तेस्तस्य हेतुता ।
समन्वयस्य सिद्ध्यैवाविरोध इति हेतुता ॥ २ ॥

पत्त्यादेरिव भङ्गेऽश्वगजादीनां प्रवर्तनम् ।
भङ्गे दुर्बलयुक्त्यादेः समयादेरतिक्रमः ॥ ३ ॥

द्वितीये बहिरङ्गत्वात् तद्विरोधोऽथवा हृतः ।
स्मृतीनां चतुरात्मत्वात् सर्वादौ तन्निराकृतिः ॥ ४ ॥

नान्यस्मृतिस्तद्विरोधान्मानं नित्याश्रुतिस्तुमा ।
मृदुक्त्याद्यभि मान्यर्थं प्रागभावेन कर्तृता ॥ ५ ॥

न जीवैक्यं वाक्यबलाद् ज्ञोयानन्यस्वतन्त्रता ।
जीवोऽकर्ताऽहितकृतेर्नान्यसाम्यं श्रुतेर्हरेः ॥ ६ ॥

न फलार्थेशितुः सृष्टिर्न वैषम्याद्यपेक्षणात् ।
स्वातन्त्र्यात् सर्वगुणयुग्द्वितीयाद्ये नयाः पयाः [१](ॐ) ॥ ७ ॥

नाचेतनं जगत्कर्तृनेशोऽनुग्रहमात्रकृत् ।
फलाभावान्न सिद्धान्तोऽकर्तृ जीवान्वितं जडम् ॥ ८ ॥

प्रधानयुङ् न जीवो वाऽऽरम्भोऽणुत्वादितो न किम् ।
नाणुपुञ्जोऽप्यतत्प्राप्तेर्नासद्धेतुरदर्शनात् ॥ ९ ॥

न ज्ञानताऽस्यादृष्टत्वान्नादृष्टेः सप्तभङ्गिता ।
रुद्रो न कर्ता दोषित्वान्न शक्तिः पुरुषा युता (ॐ) ॥ १० ॥

वियदुत्पत्तिमच्छ्रुत्या वायुश्चाजन्यसम्भवात् ।
स्वातन्त्र्यान्नेश्वरोत्पत्ति[२]र्वायोर्वा तेजसो जनिः ॥ ११ ॥

आपोग्निद्वारतो [३]जन्या अन्नं भूर्बहुयुक्तितः ।
लय ईशादेव लिङ्गाद् व्युत्क्रमाद्युज्यते लयः ॥ १२ ॥

विज्ञानमनसोश्चैवं नाश्रुतेर्ब्रह्मणो लयः ।
ब्रह्मजन्यः श्रुतेर्जीव उत्क्रान्त्यादेरणुश्च सः ॥ १३ ॥

१. (ॐ) पादसमाप्तिसूचना । २. वायुध्वस्तेजसोजनौ । ३. रेषा ।

जीवोऽभिन्नांशः पार्थक्यः ब्रह्मान्यश्चोपदेशतः ।
नित्योपाधित्वतो नित्योऽभिव्यक्तेर्धीसुखात्मकः ॥ १४ ॥

कर्ता शास्त्रस्यार्थवत्त्वादंशोऽभेदभिदा श्रुतेः ।
विद्यादिभेदाद्देवादिनया एकोनविंशतिः (ॐ) ॥ १५ ॥

श्रुतेरेवेन्द्रियोत्पत्तिर्विशिष्य श्रवणान्मनः ।
मनोजन्याश्रुतेर्वाक् च धीन्द्रियेष्वेव सप्तता ॥ १६ ॥

व्याप्तेः प्रकाशतोऽणुत्वं मुख्यश्चोत्पत्तिमान् श्रुतेः ।
प्राणवच्चेशवशगो मनोवत्पञ्चरूपवान् ॥ १७ ॥

बहिर्व्याप्नोति देहेणुर्न प्राणाजीवसाधनम् ।
श्रुत्यानिन्द्रियता मुख्ये संज्ञामूर्तिकृदीश्वरः ॥ १८ ॥

आत्मदेहेऽधिकं त्वेकं नयास्तुर्ये त्रयोदश ॥ १९ ॥

*इति श्रीब्रह्मसूत्रन्यायसङ्ग्रहे श्रीविजयीन्द्रयतिविरचिते*
*द्वितीयोऽध्यायः ॥*

ॐ श्रीकृष्णार्पणमस्तु ॥

★ ★ ★

# अथ तृतीयोऽध्यायः

जिज्ञासासूत्रगब्रह्मशब्दार्थः प्राङ्निरूपितः ।
अथेत्याद्यवशिष्टार्थ उत्तरद्विकगोचरः ॥ १ ॥

एवञ्च सिद्धसाध्यार्थं द्विकद्वयमिति स्थितिः ।
तृतीये साधनं साध्यं चतुर्थे तत्क्रमात्क्रमः ॥ २ ॥

वैराग्यभक्त्युपासातद्दृष्टिमाहात्म्यमङ्घ्रिषु ।
वैराग्याद्भक्तिदार्ढ्यं सत्युपासातोऽपरोक्षधीः ॥ ३ ॥

पूर्वपूर्वस्य हेतुत्वमुत्तरत्रेति तत्क्रमः ।
भूतयुग् याति देहार्थं प्रश्नादेर्मूर्तिमान् पुमान् ॥ ४ ॥

त्र्यात्मभूयस्त्वतोऽप्शब्दस्तथात्वं [१]प्राणयुग् गतेः ।
अंशतोऽग्न्यादिगत्युक्तिः श्रद्धापोऽग्नावथादिमे ॥ ५ ॥

अर्थादुक्तेश्च तत्सिद्धिः कर्म्यमुख्यामृतो मतः ।
श्रुतेनाशेषभुक् स्वर्गेऽन्यथा चागतिरागमात् ॥ ६ ॥

गतागती कर्मणैव चानिष्टादिकृतामपि ।
सप्तेति नित्यनिरयोऽत्रापीश व्यापृतिश्रुतेः ॥ ७ ॥

नैतयोरिति साध्योक्तिर्नहितोः ससुखं तमः ।
नाविद्वत्वाद्धूमतादि न चिराद्गर्भभाक्छ्रुतेः ॥ ८ ॥

व्रीह्यादिस्थितिरेवोक्तेः पितरं प्रविशत्पुरा ।
योनिं प्रविश्यैव देही वैराग्याङ्घ्रौ तु विंशतिः (ॐ) ॥ ९ ॥

ईशसृष्टः श्रुतेः स्वप्नः तत एव तिरोहितः ।
न कालाज्जाग्रदप्यस्मात्सुप्तिर्नाडीस्थितात्मनि ॥ १० ॥

प्रबोधोऽप्यत एवास्मात्सर्वावस्थाः सदा हरेः ।
मोह ईशेऽर्धप्रवेशो नेशरूपेषु भिन्नता ॥ ११ ॥

ईशोऽप्राकृतरूपोऽन्योऽ[२]जीवो यत्प्रतिबिम्बकः ।
नाभक्तौ साम्यसुव्यक्तिस्तद्वैचित्र्यं तथा फलात् ॥ १२ ॥

---

१. भूतेतः – पा०  २. प्राग्जीवो नैक्यसाम्यतः– पा०

पातान्नदानादिनेशोऽव्यक्तोऽप्याविर्भवेत्स्वतः ।
कालवत्स्वानन्यधर्मा लौकिका[1]स्तत्सुखादयः ॥ १३ ॥

स्थानभेदेऽप्यभिन्नांशो ध्येयादन्यो निषेधतः ।
सदा सर्वं चेशसृष्टं फलं चास्माद्धि युज्यते (ॐ) ॥ १४ ॥

भक्त्यङ्गौ विंशतिनया द्विचत्वारिंशदुत्तरे ।
सर्ववेदैर्विचार्योऽसौ विधेर्ध्येयोऽखिलैर्गुणैः ॥ १५ ॥

केषाञ्चिदेव माहात्म्यात् फलं तेषामतो महत् ।
आनन्दाद्यास्तु सर्वेषां प्रियशीर्षादिकं तु न ॥ १६ ॥

चतुः सर्वेतरैर्देवैर्ध्यानाध्याने द्वयोर्मते ।
आनन्दाद्यप्यात्मशब्दो यथार्थं सोऽपि तान् वदेत् ॥ १७ ॥

ध्येयास्तेऽलौकिकाः कार्या वाण्या सामान्यतः क्रियाः ।
युगपन्नात्मशब्दास्ते न सम्भृत्यादिनिर्जरैः ॥ १८ ॥

नैकैकत्रापक्षितोक्तिर्यत्त्यचिन्त्यं छिदादिकम् ।
स्वेच्छयोपासते मुक्ताः कर्माण्यातन्वते न वा ॥ १९ ॥

नापरोक्षदृशोऽमुक्तिः साधिकारानुसारिणी ।
प्राणः सर्वाधिकार्यग्र्योऽध्याहृतेरीश्वरावरः ॥ २० ॥

सत्यादिरीश एवैकोऽबद्धैव श्रीर्भजत्यमुम् ।
श्रवणाद्यखिलं दृष्ट्यै तदङ्गं गुर्वनुग्रहः ॥ २१ ॥

स्वयत्नात्सबली लिङ्गैः विकल्पः प्राक्समे गुरौ ।
दृष्ट्यैवावधृतेर्मुक्तिः श्रुत्यादिः प्रबलोऽत्र च ॥ २२ ॥

---

१. स्तेन्याताादितः – पा०        २. प्राग्जीवो नैक्यसाम्यतः– पा०

भक्त्याद्यपि ज्ञानहेतुरीक्षानानैव मोक्षदा ।
बिम्बवीक्षैव मोक्षार्था भक्त्या ब्रह्मैव मोक्षदम् ॥ २३ ॥

नांशन्योंऽशस्तत्तनुस्थोऽङ्गत्वेनान्यामरार्चनम् ।
भूमोपास्योऽखिलैः श्रैष्ठ्यात्तद्धीर्नानाप्रकारतः[१] ॥ २४ ॥

बिम्बान्यस्योपास्यतापि काम्योपासाविकल्पिता ।
देवश्रितां गता ध्येया न देवान्यैः सहाश्रुतेः (ॐ) ॥ २५ ॥

दृष्ट्या सर्वपुमर्थाप्तिः नास्यां सर्वाधिकारिता ।
न साविशेषाद्देवादौ कामचारोऽविधिः स्तुतिः ॥ २६ ॥

नैवायोग्यो लभेतेक्षां नेच्छेद्ब्राह्मपदाद्यपि ।
मुख्यज्ञानफला देवाः न्यासः सर्वाश्रमोत्तमः ॥ २७ ॥

रहस्येवोपदेशः स्यात् तज्जन्मन्येव नेक्षणम् ।
मुक्तिश्चैवं ज्ञानजन्मन्येकादशातुरीयगाः ॥ २८ ॥

*इति श्रीब्रह्मसूत्रन्यायसङ्ग्रहे श्रीविजयीन्द्रयतिविरचिते*
*तृतीयोऽध्यायः ॥*

ॐ श्रीकृष्णार्पणमस्तु ॥

★ ★ ★

# अथ चतुर्थोऽध्यायः

कर्मक्षयो देवलयान्योत्क्रान्तीगम्ययुक्स्मृतिः ।
भोगश्चोक्ता मोक्षभेदास्तुर्येऽङ्घ्रिषु जनिक्रमात् ॥ १ ॥

---

१. नानाधिकारतः – पा०

मोक्षान्तरं गता ज्ञस्या आदावत्र निगद्यते ।
आवश्यकं नित्यमपि यत्कार्यं ज्ञानसाधनम् ॥ २ ॥

प्रायिकत्वात्प्रधानत्वान्मोक्षाध्यायादिताऽनयोः ।
श्रुत्याद्यावर्त्यमभ्यासात्स्वामित्वोपासनं सदा ॥ ३ ॥

न ब्रह्मतान्यदेवेषु ध्येयोत्कर्षाच्च सात्मनि ।
स्वोत्पादकां गता देवैरासीनेनैव सम्भवात् ॥ ४ ॥

आमुक्त्यावश्यकं ध्यानमारब्धान्यक्षयाद्यतः ।
चतुर्थाद्ये नया अष्टौ तद्द्वितीये तु ते दश ॥ ५ ॥

दृष्ट्यादेर्वाङ्मनोलीना मनःप्राणे तदुत्तरात् ।
प्राणः परस्मिन् श्रुत्यादेर्भूतेष्वन्ये श्रुतेः सुराः ॥ ६ ॥

नाग्नावेव श्रुतेः सर्वे न मुक्तत्वाच्छ्रियो लयः ।
प्राणद्वारेशलीनास्ते सत्येच्छाश्वेशयन्त्रिताः ॥ ७ ॥

ज्ञान्युत्क्रान्तिर्नाज्ञवत्स्याद्भावि[1]विद्यागतिस्मृती ।
मार्गोऽर्चिरादिरेवैकोऽर्चिषावायुमहस्ततः ॥ ८ ॥

तटितो वरुणः पश्चात्प्राक्प्राणो ह्यातिवाहिकः ।
मुख्यवायुर्नयेद्ब्रह्माऽप्रतीकालम्बना[2]न्पुरा (ॐ) ॥ ९ ॥

नयास्तुर्यतृतीये षडेकादश तदुत्तरे ।
मुक्तो भुङ्क्तेऽविहायेशं जक्षन्नान्यो ह्यसम्भवात् ॥ १० ॥

ज्योतिः प्रकरणाच्चेशः [3]सुखभुक्तैकभुक्सयुक् ।
सयुजो ब्रह्मचिद्देह सङ्कल्पादेव भोगिनः ॥ ११ ॥

---

१. भाव्ये – पा० २. परं – पा० ३. तद्भोगेषु बहिः क्वचित् – पा०

नोत्तमान्याधिपतयो मुक्ताः स्वेच्छात्तविग्रहाः ।
न जगद्व्यापृतिजुषो न वृद्धिह्रासभागिनः ॥ १२ ॥

नावर्तन्ते विमुक्तास्ते सत्यसङ्कल्पतादितः ।
चतुरध्यायगा न्याया धीगाः मेशाबुधामगाः ॥ १३ ॥

अर्काद्रीन्द्रारिरुद्रार्कधीयोति जगती नखाः ।
नखरम्भेशाष्टदशारीशाः सर्वाङ्घ्रिगा नयाः ॥ १४ ॥

योगीरागगवीधीराजालमेघागमागिरः ।
धीरारवाजितपणाधियो रुद्रास्तयो गिरः ॥ १५ ॥

शम्बयो धीमयोऽध्यायसूत्राणां नाधियोनदाः ।
श्रीरुद्रा ब्रह्ममीमांसान्यायाः सूत्राणि भूषणम् ॥ १६ ॥

श्रीमदानन्दतीर्थेड्यश्रीशप्रीत्या अकार्ययम् ।
विजयीन्द्रेण यतिना सूत्राणां न्यायसङ्ग्रहः ॥ १७ ॥

*इति श्रीब्रह्मसूत्रन्यायसङ्ग्रहे श्रीविजयीन्द्रयतिविरचिते चतुर्थोऽध्यायः ॥*

ॐ श्रीकृष्णार्पणमस्तु ॥

★ ★ ★

अत्र चिह्निताः अङ्काः कटपयादिभङ्ग्या 'अङ्कानां वामतो गतिः' इत्यादिनैव द्रष्टव्याः ॥

★ ★ ★

॥ श्रीः ॥

## श्रीमद्ब्रह्मसूत्राधिकरणम्

| *अध्यायाः* | *नयाः* | *प्रथमपादे* | *द्वितीयपादे* | *तृतीयपादे* | *चतुर्थपादे* |
|---|---|---|---|---|---|
| प्रथमाध्याये | ३९ | १२ | ७ | १४ | ६ |
| द्वितीयाध्याये | ५५ | ११ | १२ | १९ | १३ |
| तृतीयाध्याये | ९३ | २० | २० | ४२ | ११ |
| चतुर्थाध्याये | ३५ | ८ | १० | ६ | ११ |

सर्वे न्यायाः – २२२

॥ श्रीः ॥

## श्रीमद्ब्रह्मसूत्राणि

| *अध्यायाः* | *सूत्राणि* | *प्रथमपादे* | *द्वितीयपादे* | *तृतीयपादे* | *चतुर्थपादे* |
|---|---|---|---|---|---|
| प्रथमाध्याये | १३५ | ३१ | ३२ | ४३ | २९ |
| द्वितीयाध्याये | १५९ | ३८ | ४५ | ५३ | २३ |
| तृतीयाध्याये | १९० | २९ | ४२ | ६८ | ५१ |
| चतुर्थाध्याये | ८० | १९ | २२ | १६ | २३ |

सर्वसूत्राणि – ५६४

॥ श्रीः ॥

॥ श्रीमन्मूलरामो विजयते ॥

श्रीमद्विजयीन्द्रतीर्थगुरुसार्वभौमविरचितः

# श्रीमत्तात्पर्यचन्द्रिकाकुचोद्यकुठारः

॥ श्रीः ॥

॥ श्रीगुरुभ्यो नमः ॥

॥ हरिः ॐ ॥

## श्रीमद्विजयीन्द्रतीर्थगुरुसार्वभौमविरचितः

# श्रीमत्तात्पर्यचन्द्रिकाकुचोद्यकुठारः

एकैकपदविन्यासविजितद्रोहिमण्डलम् ।
अप्रतिद्वन्द्वमानन्दभाष्यभूपमुपास्महे ॥

इह हि भाष्येऽनुभाष्ये च अन्यत्रप्रसिद्धानां शब्दानां परमात्मनि समन्वयः प्रदर्श्यते अस्मिन् पादे इत्यानन्दमयाधिकरणे[1], लिङ्गात्मकानां[2] शब्दानामिति लिङ्गपादादौ, तत्र चान्यत्र[3] च प्रसिद्धानामिति तृतीयपादादौ, श्रुतिलिङ्गादिभिरिति[4] तुरीयपादादौ, 'तत्रान्यत्र[5]प्रसिद्धानां विष्णावेव समन्वयम् । शब्दानां प्रथमे पादे' इत्यानन्दमयाधिकरणे, 'लिङ्गात्मकानां[6] शब्दानां वृत्तिर्नारायणे परे । चिन्त्यते' इति द्वितीयपादादौ, 'तत्रान्यत्रप्रसिद्धानां[7] लिङ्गनाम्नां पुनर्हरिः' इति तृतीयपादादौ,[8] निर्देक्ष्यमाणावान्तरभेद-भिन्नशब्दसमन्वयस्य समन्वयसूत्रे हेतुत्वेन सिद्धवदुपन्यस्तसमन्वयव्युत्पादनस्य, 'आनन्दमयो-ऽभ्यासात्' इत्यादिना आध्यायसमाप्तिकरिष्यमाणस्य का पूर्वसङ्गतिरित्यतः समन्वयसमर्थनार्थत्वात् तस्य प्रपञ्च्यप्रपञ्चकभाव इत्यभिप्रेत्य तमेवेत्यादि, (भाष्ये) (अनुभाष्ये) च तन्नेति च भाषितमनु-

---

१. सूत्रभाष्ये = आनन्दमयाधिकरणे ।

२. अन्यत्रप्रसिद्धानां लिङ्गात्मकानामित्यादिना प्रथमाध्याये द्वितीयपादे सूत्रभाष्ये ।

३. प्रथमाध्याये तृतीयपादे 'तत्र चान्यत्र चे'त्यादि सूत्रभाष्ये ।

४. प्रथमाध्याये चतुर्थपादे सूत्रभाष्ये श्रुतिलिङ्गादिभिरिति ।

५. अनुव्याख्याने प्रथमाध्याये प्रथमपादे आनन्दमयाधिकरणे ।

६. अनुव्याख्याने प्रथमाध्याये द्वितीयपादे 'लिङ्गात्मकानां शब्दानामि'त्यादि दृश्यते ।

७. अनुव्याख्याने प्रथमाध्याये तृतीयपादे 'तत्रान्यत्रप्रसिद्धानामि'त्यादिः ।

८. अनुव्याख्याने चतुर्थपादे 'दुःखिबद्धावराद्यास्तु तदधीनत्वहेतुतः । शब्दा ब्रह्मणि वर्तन्ते राज्ञि यद्वत्पराजयः' इति चोक्तम् ।

भाषितं चेति स्थिते, उपदर्शितावान्तरप्रभेदोपन्यासस्यापि किं फलमित्यतः पादभेदादिज्ञापनं तत् (फलम्) । न चैवं जिज्ञास्यब्रह्मणः शास्त्रविषयत्वसिद्ध्यर्थत्वेन उक्तानन्तकल्याणगुणपरिपूर्णत्व-तत्सम्भावकजगज्जन्मादिकारणत्वरूपद्विविधलक्षणस्यानुमानादिना अतिव्याप्तिपरिहाय तत्र प्रमाणीकृतस्य स्वरवर्णपदवाक्यमहावाक्यात्मकाशेषशास्त्रस्य अन्यपरत्वाशङ्कानिरासाय, उक्तस्याशेषशब्द-समन्वयस्यैव समर्थनीयत्वेन अत्र च तत्रप्रसिद्धशब्दसमन्वयस्य असमर्थनेन न्यूनतामाशङ्क्य तस्य अविप्रतिपन्नत्वेन समर्थनानभ्यर्थनेन तद्व्यतिरिक्तविप्रतिपन्नाशेषशब्दसमन्वयसमर्थनस्यैव न्याय्यत्वा-दित्यभिप्रेत्य, फलीभूतपादभेदतत्क्रमप्रतीतिसौकर्याय च अन्यत्रप्रसिद्धानामित्यादिभाष्यार्थपीठत्वेन शब्दावान्तरभेद एव 'शब्दास्तावच्चतुर्विधा' इत्यनेन टीकितः ।

(याः पुनरत्र अन्यत्रप्रसिद्धाः अन्यत्रैवप्रसिद्धाः इतिवत् तत्रप्रसिद्धाः तत्रैवप्रसिद्धा इति द्वैविध्य-स्यापि सम्भवेन पाञ्चविध्यापत्त्या[९] अन्यत्रैवप्रसिद्धाः उभयत्रप्रसिद्धाः अन्यत्रप्रसिद्धाः तत्रप्रसिद्धाः इति चातुर्विध्यटीका कथं घटनामाटीकेत[१०] इत्यादिशङ्काः तास्तु चन्द्रिकायां तत्रप्रसिद्धानां तत्रैवप्रसिद्धानां च अव्युत्पाद्यसमन्वयत्वेन अभेदविवक्षेत्यादिवाक्यशैल्या परिहृताः ।

यदत्र पुनः भाष्यटीकाचन्द्रिकादिशैलीमनधिगच्छन् तद्विमर्शाय चानवकल्पमानः स्वकीय-दुरुत्प्रेक्षामूलकानेवार्थान् कल्प्यमानः

"सम्प्रदायमवमत्य गर्वतः सर्वतः स्वरसनां निवेशयेत्[११] ।
कण्टकारिदशरामशरादिन्यायतः स परिहास्यते बुधैः ॥"

इत्यादिन्यायविषयतामनुरुन्धानः पाण्डित्यातिशयविचिख्यापयिषया, उपासिततममहच्चरणैरपि श्रवण-मननादिना परिशीलितसत्सम्प्रदायैरपि दुरवगाहप्रौढतमग्रन्थदूषणायोत्सहमानः भङ्ग्यन्तराणि तत्र निवेशयानः क्षुद्रमतिः "शब्दास्तावच्चतुर्विधाः तत्रप्रसिद्धाः अन्यत्रप्रसिद्धाः उभयत्रप्रसिद्धाः अन्यत्रैवप्रसिद्धा इति यदुक्तं— तत्रेदं वक्तव्यं, तत्रप्रसिद्धेष्वपि तत्रप्रसिद्धाः तत्रैवप्रसिद्धा इति द्वैविध्यसम्भवेन पाञ्चविध्ये वक्तव्ये चातुर्विध्योक्तिरयुक्ता । न च अव्युत्पाद्यसमन्वयत्वेन तयोरेकी-करणान्नायं दोष इति वाच्यम् । तथासति व्युत्पाद्यसमन्वयत्वेन त्रयाणामप्येकीकाराच्चातुर्विध्यमपि न स्यात् । किञ्चाकाशेन्द्रप्राणादिपदानां प्रथमपादीयानां, वज्रब्राह्मणादिपदानां तृतीयपादीयानां, जीवाव्यक्तादिपदानां चतुर्थपादीयानां अन्यत्रप्रसिद्धत्वाविशेषे पादभेदव्युत्पादनमप्यसमीचीनम् ।

---

९. अन्यत्रप्रसिद्धाः, उभयत्रप्रसिद्धाः, अन्यत्रैवप्रसिद्धाः तत्रप्रसिद्धाः तत्रैवप्रसिद्धाः इति पाञ्चविध्यापत्त्या ।

१०. घटनाय आटीकते इत्यादि – पाठान्तरम् । ११. प्रवेशयेत् ।

एतेन लोकतोऽन्यत्रप्रसिद्धाः प्रथमपादीयाः श्रुतिलिङ्गादिभिरन्यत्रप्रसिद्धाः चतुर्थपादीयाः इति वैलक्षण्योपपादनमपि निरस्तं भवति । वज्रब्राह्मणजीवाव्यक्तादिशब्दानां (पदानां) तृतीयचतुर्थपादीयानामपि लोकतोऽन्यत्रप्रसिद्धेरविशेषात् । आकाशप्राणेन्द्रादिपदानामपि श्रुत्यादिभिरन्यत्रप्रसिद्धेरविशेषाच्च । आनन्दमयशब्दे प्रथमपादीये लौकिकप्रसिद्धेरन्यत्राभावेन अव्याप्त्यापत्तेश्च । किञ्च नामात्मकत्वलिङ्गात्मकत्वाभ्यां पादोपाधिभेदवर्णनं न युक्तम् । पादोपाधितावच्छेदकस्य लोकतोऽन्यत्रप्रसिद्धत्वस्याविशेषे तदवान्तरभेदस्य विद्यमानस्यापि पादभेदं प्रत्यप्रयोजकत्वात् । अन्यथा अन्यत्रैवप्रसिद्धेषु उभयत्रप्रसिद्धेषु च तदवान्तरभेदसत्त्वेन पादषाड्विध्यापत्तेः । विद्यमानस्यापि तत्राविवक्षायां प्रथमपादादौ विवक्षायां च न किञ्चिन्निमित्तं पश्यामः । अतो नामात्मकत्वलिङ्गात्मकत्वाभ्यां द्वैपाद्यं वा लोकतोऽन्यत्रप्रसिद्धत्वश्रुतिलिङ्गादिप्रयुक्तान्यत्रैवप्रसिद्धत्वोभयत्रप्रसिद्धत्वैः त्रैपाद्यं वा स्यादिति पादचातुर्विध्यमप्ययुक्तमेव ।

किञ्च नामपादेऽपि लिङ्गानां लिङ्गपादेऽपि नाम्ना समन्वयदर्शनात् साङ्कर्यं दुर्वारम् । न च प्राधान्याप्राधान्याभ्यां विशेष इत्यपि युक्तम् । इन्द्रादिनाम्नां समुद्रशायित्वादिलिङ्गेन परमात्मपरत्वस्य अन्तरधिकरणादौ (अन्तःस्थत्वाधिकरणादौ, अन्तस्तद्धर्माधिकरणादौ) प्रतिपादनेऽपि तस्यान्तस्थत्वादृश्यत्वादिलिङ्गसमन्वयार्थत्वेन लिङ्गसमन्वयरूपत्वात् नामसमन्वयप्राधान्यासिद्धेः । आनन्दमयादिनामसमन्वयस्य सर्वस्यापि जगत्कारणत्वजिज्ञास्यत्वादिसमर्थनार्थत्वात् कारणत्वस्यापि गुणपूर्णत्वसमर्थनार्थत्वात् सर्वमपि लिङ्गसमन्वयरूपमापद्येत । एवं लिङ्गसमन्वयपरे द्वितीयपादेऽप्यादित्यादिनामसमन्वयदर्शनात् साङ्कर्यं दुर्वारम् । एवमत्तृत्वाधिकरणेऽदितिनामसमन्वयदर्शनात् गुहाधिकरणे द्विवचनसमन्वयदर्शनात् कथं लिङ्गसमन्वयः ।

एवमन्तराधिकरणे (अक्ष्यधिकरणे) पुरुषनामसमन्वयस्य वैश्वानराधिकरणे वैश्वानरनामसमन्वयस्य दर्शनात् साङ्कर्यं दुर्वारम् । लिङ्गसमन्वयस्य नामसमन्वयार्थत्वेन नामसमन्वयस्य लिङ्गसमन्वयार्थत्वेन प्रधानाप्रधानप्रतिपाद्यभेदात् इत्यर्थस्य दुरधिगमत्वात् इति'' प्रजगल्भे[१२] ।

तत्तुच्छम् । तथाहि— अन्यत्रप्रसिद्धानां अन्यत्रैवप्रसिद्धानां च शब्दानां पार्थक्येनोपन्यासस्य पादभेदतत्क्रमज्ञापनाभिप्रायकत्वस्योक्तत्वेन, तज्ज्ञापनस्य च प्रथमद्वितीययोः चतुर्थे च पृथग्व्युत्पाद्य समन्वयेष्वन्यत्रैवप्रसिद्धेष्वेव सम्भवेन अतथाविधेषु तत्र प्रसिद्धेष्वसम्भवात् । तत्र प्रसिद्धोपन्यासस्य न्यूनताशङ्कापरिहारैकफलकत्वस्योक्तत्वेन तदवान्तरभेदोपन्यासस्य वैफल्याच्च । न च लोकतोऽन्यत्र-

१२. गल्भ धार्ष्ट्ये आत्मने. कर्तरि लिट् । क्षुद्रमतिः प्रजगल्भे इत्यन्वयः ।

प्रसिद्धानामपि प्रथमद्वितीययोर्भेदेनैव व्युत्पाद्यसमन्वयत्वात् तथैवोपन्यासः स्यादिति वाच्यम् । ते प्रत्येकं द्विविधाः नामात्मका लिङ्गात्मकाश्चेति तथैव विभजिष्यमाणत्वेनेष्टापादना(नत्वा)त् । न च अन्यत्र-प्रसिद्धादीनां व्युत्पाद्यसमन्वयानां त्रयाणामपि नामलिङ्गात्मकत्वेन प्रत्येकं द्वैविध्यात् अन्यत्रप्रसिद्धानां उक्तद्विविधानामिव उभयत्रप्रसिद्धानां अन्यत्रैवप्रसिद्धानां च उक्तद्विविधानां पादभेदेनैव समन्वयस्य व्युत्पादनीयत्वापत्त्या षाट्पाद्यापातेन चातुष्पाद्यानुपपत्तिरिति वाच्यम् । उभयत्रप्रसिद्धानामन्यत्रैव प्रसिद्धानां चोक्तोभयविधानामपि एकैकस्मिन्नेव पादे समन्वयव्युत्पादनसौलभ्यात् । न च अन्यत्र-प्रसिद्धानामप्युभयविधानामपि तर्ह्येकस्मिन्नेव समन्वयव्युत्पादनापत्त्या त्रैपाद्यापातेन पुनः चातुष्पाद्या-नुपपत्तिरिति वाच्यम् । अन्यत्रप्रसिद्धानां वैदिकशब्दसमन्वयेऽनवतीर्णबुद्धिकाविवेचितनामलिङ्गकाधि-कारिकप्रथमपादप्रतिपाद्यत्वस्य उभयत्रप्रसिद्धानां अन्यत्रैवप्रसिद्धानां च पुनरधिगतबहुतरनामलिङ्ग-समन्वयविवेचितनामलिङ्गकाधिकारिकतृतीयचतुर्थपादप्रतिपाद्यत्वस्य विशेषकस्य टीकायामेव टीकित-त्वेनोक्तापादनानवसरात् । अत एव तत्र तत्रैव च प्रसिद्धानां तत्रप्रसिद्धत्वेनेव अन्यत्र अन्यत्रैवप्रसि-द्धानामपि अन्यत्रप्रसिद्धत्वेनैव निर्देशः स्यादित्यपि परास्तम् । अत्यशक्यव्युत्पत्तिकसमन्वयानां अन्यत्रैवप्रसिद्धानां चतुर्थ एव समन्वेतव्यतायाः इहैव टीकितत्वेनानुव्याख्यानसुधयोश्च निपुणतरमुप-पादितत्वेन च सहसमन्वयव्युत्पादनासम्भवेन यथाव्युत्पादनं पार्थक्येनैव निर्देश्यत्वात् । तत्र तत्रैव च प्रसिद्धानां पुनर्न्यूनताशङ्कापरिहारायैव निर्देष्टव्यत्वेन तस्य च तत्रप्रसिद्धानां समन्वयो न व्युत्पाद्य इत्येकेनैव वाक्येन भाव्यत्वेन तदानुगुण्याय तत्रप्रसिद्धत्वेनैव निर्देशौचित्याच्च । शब्दास्तावत् त्रिविधाः तत्रप्रसिद्धाः अन्यत्रप्रसिद्धाः उभयत्रप्रसिद्धाश्चेति । तत्रप्रसिद्धाश्च तत्र तत्रेव प्रसिद्धभेदेन द्विविधाः । अन्यत्रप्रसिद्धा अपि अन्यत्रान्यत्रैवप्रसिद्धभेदेन द्विविधा इति विभागोऽपि तत्रप्रसिद्धानामवान्तर-विभागोक्तेः अन्यत्रान्यत्रैवप्रसिद्धानां च साधारणरूपेण निर्देशस्य च वैफल्यादेव अयुक्तः । व्युत्पाद्य-समन्वयानां त्रयाणामेकीकारस्तु विवेचनीयः । किमत्र त्रयाणामनुगतं[१३] साधारणं रूपमिति । व्युत्पाद्य-समन्वयत्वमेवेति चेन्न । सन्दर्भाशुद्धेः । तत्र तत्रैवप्रसिद्धानां च अव्युत्पाद्यसमन्वयत्वेनैकीकारभ्रममूलकं हि त्रयाणां व्युत्पाद्यसमन्वयत्वेनैकीकारापादनम् । न चाव्युत्पाद्यसमन्वयत्वं निर्देश्यतावच्छेदकतया विवक्षितम् । तत्र तत्रैवप्रसिद्धत्वस्यैव तथात्वस्य व्यक्तत्वात् । अव्युत्पाद्यसमन्वयत्वस्य तु निर्देश्यता-वच्छेदकबहिर्भूतस्यैव तत्र तत्रैवप्रसिद्धत्वरूपसाधारणरूपेण निर्देशे उपपत्तित्वस्यैव व्यक्तत्वाच्च । अस्तु तर्हि अन्यत्रप्रसिद्धत्वमेवात्र तथाविधमिति चेन्न । अन्यत्राप्यन्यत्रैव बहिर्भूतान्यत्रप्रसिद्धानामभावेन तृतीयसाधारण्यस्य दुर्निरूपत्वात् । कथं तर्हि प्रथमद्वितीयपादसमन्वितानां तृतीयचतुर्थपादसमन्वेत-

१३. त्रयानुगतमिति पाठः ।

व्योभयत्रप्रसिद्धान्यत्रैवप्रसिद्धेभ्योऽतिरिक्तानामेव अन्यत्रप्रसिद्धानामभ्युपगमः शास्त्रे दृश्यते इति चेन्न। अन्यत्रैवप्रसिद्धेभ्यो बहिर्भावाभ्युपगमदर्शनस्यैवासिद्धेः। तर्हि चतुर्थपादार्थसङ्करः प्रथमद्वितीयपादार्थयोरापद्यत इति चेन्न। श्रुतिलिङ्गादिभिरन्यत्रैवप्रसिद्धशब्दसमन्वयस्यैतदर्थतायाः भाष्यादित एवातिस्फुटत्वात्। प्रथमद्वितीयपादसमन्वितशब्दानां पुनर्लोकतोऽन्यत्रप्रसिद्धत्वस्य प्रत्यधिकरणमपि टीकितत्वाच्च। ननु तर्ह्यन्यत्रैवप्रसिद्धशब्दानामेव लोकतः श्रुतिलिङ्गादिभिश्च अन्यत्रैवप्रसिद्धभेदेन द्वैविध्येऽपि उक्तद्विविध-अन्यत्रैवप्रसिद्धा उभयत्रप्रसिद्धाश्चेति तत्त्रितयसाधारण्यं अन्यत्रप्रसिद्धत्वस्योक्तमिति चेन्न। तथापि साधारणरूपेणैषां त्रयाणां निर्देशस्य वैफल्यस्योक्तत्वात् पादभेदादिज्ञापनाय तद्रूपेणोक्तेरावश्यकत्वस्याप्युक्तत्वाच्च।

एतेनैतदपि निरस्तम्। वैदिकाः शब्दाः द्विविधाः व्युत्पाद्यसमन्वया अव्युत्पाद्यसमन्वयाश्च। अव्युत्पाद्यसमन्वया द्विविधाः तत्र तत्रैव प्रसिद्धा इति। व्युत्पाद्यसमन्वयास्त्रिविधाः। अन्यत्र तत्रचान्यत्र च अन्यत्रैवप्रसिद्धा इति कुतो न विभजनीयमिति। तत्र तत्रैवप्रसिद्धानां विभागानर्थक्यस्योपपादितत्वात्। अन्यत्रप्रसिद्धादीनां च व्युत्पाद्यसमन्वयत्वस्य तन्निरूपणेनैव तत्र प्रसिद्धानामव्युत्पाद्यसमन्वयत्वोक्त्यैव शिष्टानां परिशेषेणैव च सिद्ध्या तेषां व्युत्पाद्यसमन्वयत्वेनाप्युक्तेरपि तथात्वाच्च। तस्माद्विभागान्तरोत्प्रेक्षाया उपेक्षणीयत्वादपेक्षित एव विभागः टीकित इति स्थितम्।

वज्रब्राह्मणादिपदानां तृतीयपादीयानां जीवाव्यक्तादिपदानां च तुरीयपादीयानां अन्यत्रप्रसिद्धत्वं भूषणमेव। तार्तीयकानां अन्यत्रप्रसिद्धत्वाभावे उभयत्रप्रसिद्धत्वस्यैव तद्गर्भितस्यैवानापत्तेः। तौरीयकाणां च अन्यत्रप्रसिद्धप्रभेदताया एवोक्तत्वाच्च। एवमपि पादभेदस्य श्रुतिलिङ्गाद्यपेक्षतदनपेक्षप्रसिद्धिकत्वाभ्यामुक्तत्वाच्च। न च जीवाव्यक्तादिपदानां चातुर्थिकानामपि लोकतोऽन्यत्रप्रसिद्धेः प्रथमद्वितीयसङ्करश्चतुर्थस्य दुर्निवार एवेति वाच्यम्। लोकतोऽन्यत्रप्रसिद्धानामपि तेषां 'जीवा एव तु दुःखिनः', 'अव्यक्तात् पुरुषः परः' इत्यादिवाक्योक्तविष्णवसम्भविलिङ्गाद्यधीनप्रसिद्धकत्वेन तद्वारणसौलभ्यात्। श्रुतिलिङ्गाद्यनपेक्षलोकमात्राधीनप्रसिद्धिमत्त्वस्यैव लोकतोऽन्यत्रप्रसिद्धशब्दार्थत्वाच्च। न च आकाशप्राणादिपदानां तथात्वसम्भवेऽपि आनन्दमयनाम्नो मयट्श्रुत्या, अन्तःस्थत्वलिङ्गस्य इन्द्रादिश्रुतिसप्ताश्वैकचक्ररथवत्त्वादिलिङ्गैः, गायत्रीनाम्नो वाक्श्रुत्या, ऐतरेयप्राणनाम्नः इन्द्रियसंवादादिलिङ्गेन च अन्यत्रप्रसिद्धत्वात्, सर्वगतत्वलिङ्गस्यादित्यश्रुत्या, अत्तृत्वलिङ्गस्यादितिश्रुत्या, गुहांप्रविष्टत्वलिङ्गस्य द्विवचनश्रुत्या, अन्तःस्थत्वलिङ्गस्य पुरुषश्रुत्या, वैश्वानरनाम्नः पाचकत्वादिलिङ्गैश्च

१४. निरुक्तस्य इति पाठः।

अन्यत्रप्रसिद्धत्वेन निरुक्त[१५]लोकतोऽन्यत्रप्रसिद्धत्वस्य प्रथमद्वितीयपादीयशब्देष्वव्याप्तिरिति वाच्यम् । तौरीयकशब्दानां अन्यत्रप्रसिद्धिसम्पादकश्रुतिलिङ्गादीनां प्राबल्येन विशेषकस्य[१५] टीकायामेव सिद्धत्वेन अतथाविधत्वादेव मयट्श्रुत्यादीनां पाचकत्वादिलिङ्गानां प्रबलश्रुतिलिङ्गाद्यनपेक्षप्रसिद्धिकत्वरूपस्य लोकतोऽन्यत्रप्रसिद्धत्वस्य आनन्दमयादिवैश्वानरान्तशब्देषु सौघट्येन तदनवसरात् । प्राबल्यस्यापि सिद्धान्तेऽप्यन्यपरतया विनाऽनुपपद्यमानत्वरूपस्य **चन्द्रिकादौ व्यक्तत्वात् न कुचोद्यावकाशः** । दुःखित्वावरत्वादीनां तर्हि तदधीनत्वादर्थवत् 'स्वातन्त्र्यं तद्गतत्वं च शब्दवृत्तेर्हि कारणम्' इत्याद्युक्तन्यायेन भगवतो जीवाव्यक्तादिशब्दवाच्यत्वाबाधकत्वेऽपि जीवप्रधानादीनां दुःखित्वावरत्वाद्याश्रयाणामपि 'जीवा एव तु दुःखिनः', 'अव्यक्तात् पुरुषः परः' इत्यादिवाक्यघटकजीवाव्यक्तादिशब्दवाच्यत्वमापन्नमिति चेत् इष्टमनुमतं च । अन्यथा जीवानां दुःखित्वादेः मानान्तरेणासिद्धेस्तस्याप्येतत्समानयोगक्षेमत्वाच्च । अनेनैन न्यायेन तारतम्यकर्मक्रमाद्यसिद्ध्यापत्तेश्च, जीवेश्वरभेदादिसैद्धान्तिकबहुप्रमेयविप्लवापत्तेः मयट्श्रुत्यादीनां पाचकत्वादिलिङ्गान्तानां तु ब्रह्मशब्दाभ्यास-आत्मशब्द-विशेषणादिनिरवकाशवैष्णवप्रमाणैः तत्तदधिकरणविषयवाक्योक्तानन्दमयादिनामलिङ्गशब्दवाच्यत्वस्य विष्णावेवेष्टत्वेन, तत्तद्वाक्यघटकानामितरत्रानवकाशस्यापि व्यक्तत्वाच्च । वज्रब्राह्मणादिपदानां तार्तीयीकानां तु वैष्णवप्रसिद्ध्यैव पूर्वोत्तरपादासङ्करसौकर्यात् । लोकतः श्रुतिलिङ्गादिभिर्वा अन्यत्रप्रसिद्धेरप्यक्षतेश्च । ब्राह्मणशब्दस्य विरिञ्चे अजश्रुत्या प्रसिद्धत्वस्य टीकादावेवातिस्फुटत्वेन तत्र तस्य कोशादिरूपलोकाधीनप्रसिद्धिदौर्घट्येन वज्रशब्देन सह लोकतोऽन्यत्रप्रसिद्धत्वोक्तेरयुक्तत्वाच्च । आकाशतैत्तिरीयप्राणेन्द्रादिपदानां प्रतिज्ञामात्रेण श्रुत्यादिभिः अन्यत्रप्रसिद्ध्यसिद्धेश्च । तेषामन्यत्रप्रसिद्धिसम्पादकश्रुत्याद्यदर्शनाच्च । अन्तःस्थत्वलिङ्गस्यैव उदाहर्तुमुचितत्वेन इन्द्रादिपदानामनुदाहरणीयत्वाच्च । आनन्दमयनाम्नस्तु मयट्श्रुत्या लोकतोऽन्यत्रप्रसिद्धतया लोकतोऽन्यत्रप्रसिद्धत्वमुक्तम् । पञ्चमकोशे प्रसिद्धिरपि युक्ता । नामलिङ्गपादयोर्लिङ्गनामसमन्वयस्य तु गतिष्टीकात एव सुगमा । न च नामलिङ्गसमन्वयसिद्धेर्लिङ्गनामसमन्वयफलत्वस्यैव तत्त्वेन टीकितत्वात्, तस्य च नामलिङ्गसमन्वयस्यैव लिङ्गनामसमन्वयसिद्ध्युपायत्वदर्शनेन असम्भवात् टीकिता गतिः दुरधिगमेति वाच्यम् । सन्देहबीजोपस्थापकसङ्गतिप्रधानवाक्यस्थत्वफललोभेन अन्तःस्थत्वादिलिङ्गानां विचार्यत्वे स्थित एवेन्द्रादिनाम्नां पाचकत्वादिलिङ्गानां वा विष्णावुपपत्त्यसमर्थनेन अन्तःस्थत्वलिङ्गवैश्वानरनाम्नोर्वैष्णवत्वासिद्धेः, तयोः तत्सिद्ध्यर्थमेव तेषां विष्णौ समर्थनेन तत्समन्वयफलकविचारौपयिकसिषाधयिषावतोरन्तःस्थत्वलिङ्गवैश्वानरनामसमन्वययोः नामलिङ्गसमन्वयफलकत्वस्य अनवद्यत्वात् । अन्तःस्थत्वादिलिङ्गसमन्वयस्य मुख्यफलं तु अदृश्यत्वादिसमर्थनद्वारा आनन्दमयत्वादिसमर्थनमेवेति[१६] टीकायामेव व्यक्तम् ।

१५. विशेषणस्य इति पाठः ।

१६. स्थापनम् इति पाठः ।

समुद्रशायित्वादिलिङ्गस्य इन्द्रादिनामसमन्वये हेतुत्वोत्प्रेक्षा तूपेक्षणीया । अन्तःस्थत्वादिलिङ्गसमन्वय एव तस्योपक्षीणत्वात् । सन्देहबीजोपस्थापकसङ्गतिप्रधानवाक्यस्थत्वफलानां विनिगमकत्वस्योक्तत्वेन वैपरीत्यस्याशक्यशङ्कत्वाच्च । लोकप्रसिद्ध्यभावेन इन्द्रादिनाम्नां विष्णावनवकाशशङ्कायाः महायोगविद्वद्रूढिभ्यां विष्णुनिष्ठत्वव्युत्पादनेनैव सुपरिहरत्वाच्च । पाचकत्वादिलिङ्गानामपि विष्णोः सर्वस्वातन्त्र्योपपादनेनैव अनवकाशशङ्कापरिहारसौकर्याच्च । विप्रतिपद्यमानं प्रति तत्रैव प्रमाणानामुपन्यसनीयत्वाच्च । सूत्रभाष्यटीकादौ तथैव दर्शनाच्च । अदृश्यत्वादिलिङ्गं तु नान्तरधिकरणादिप्रमेयम् । किन्तु तथाविधान्तस्थत्वादिसिद्धिनान्तरीयकसिद्धिकं तत् ।

एतेन आनन्दमयादिनामसमन्वयस्य जिज्ञास्यत्वादिसमर्थनार्थत्वेन नामपादस्यापि लिङ्गपादत्वं स्यादित्यपहस्तितम् । जिज्ञास्यत्वादेरानन्दमयादिनामपादीयाधिकरणप्रमेयनामसमन्वयसिद्धिनान्तरीयस्थेमकत्वेऽपि तत्प्रमेयत्वाप्रसक्तेः । अत एव असूत्रयत् सूत्रकारः 'ॐ आनन्दमयोऽभ्यासात् ॐ', 'ॐ अन्तस्तद्धर्मोपदेशात् ॐ', इत्यादि । स्वयमपि सङ्गतिलोभेन पूर्वाधिकरणप्रमेयस्थापकत्वस्य वाच्यतया व्याहतत्वाच्च । मीमांसकंमन्येन एवमापादयितुमशक्यत्वाच्च । आनन्दमयादिनामसमन्वयस्य[१७] जगत्कारणत्वसमर्थनार्थत्वोक्तिस्तु अनुक्तोपालम्भ एव । भाष्यटीकादौ आनन्दमयाधिकरणे तदस्पर्शात् । साक्षाज्जिज्ञास्यत्वाक्षेपपरिहारार्थत्वसौलभ्ये तदाक्षेपपरिहारार्थत्वस्यानपेक्षणीयत्वाच्च । तदाक्षेपपरिहारस्य अशक्योपपादनत्वाच्च । तदुपपादनार्थं स्वयमप्रयतनाच्च । अत एव कारणत्वस्य गुणपूर्णत्वसमर्थनार्थत्वकथनमनुपयुक्तम् । जन्मादिसूत्रस्य कारणत्वार्थकत्वस्येव गुणपूर्णत्वार्थकत्वस्याप्यभ्युपगमेन कारणत्वस्येव गुणपूर्णत्वस्यापि जन्माधिकरणप्रमेयत्वादयुक्तं च । नामसमन्वयस्यापि लिङ्गसमन्वयसिद्धिफलकत्वं त्वनुकूलमनुमतं च, पुरतः 'यच्छब्दाः योगवृत्तयः', 'तस्मान्महागुणो विष्णुर्नाम्नामपुनरुक्तितः' इत्यादिना भगवत्पादैरेवाज्ञापितत्वात् । सिद्धान्तमुखनिरीक्षणानपेक्षया स्वरसत एव धर्मोपस्थापकानामेव लिङ्गात्मकत्वाच्च । तेषामेव लिङ्गपादसमन्वेतव्यत्वाच्च । लिङ्गपादेऽपि सर्वगतत्वात्तृत्वगुहाप्रविष्टत्वाक्षिस्थत्वाधिकरणेषु आदित्यादितिद्विवचनान्तशब्दपुरुषशब्दवाच्यत्वस्यापि सिद्धेः । तेषां नामपादेऽन्तर्भावः स्यादिति तु निरस्तम् । बाधकपरिहारविधया आदित्यादिनाम्नां विष्णावपि सम्भवव्युत्पादनेऽपि तत्समन्वयस्याधिकरणप्रमेयत्वासिद्धेः । स्वयमपि निर्युक्तिकपूर्वपक्षनिरासार्थमधिकरणान्तरावतरणासम्भवेन पूर्वपक्षयुक्त्यनिरासकत्वेन सिद्धान्तसमर्पकत्वासम्भवेन च प्रत्यधिकरणं पूर्वपक्षयुक्तित्वेन श्रुतिलिङ्गाद्युपन्यासस्य सर्वाधिकरणानां तन्निरासकत्वस्याप्यावश्यकत्वेन व्याहतत्वाच्च । तदर्थचिन्ताविषयस्य अधिकरणप्रमेयत्वापादनस्य अपूर्वमीमांसाकौशलसूचकत्वाच्च ।

---

१७. समन्वयरूपस्य इति पाठः ।

वैश्वानरनामसमन्वयस्य च गतिरुदितैव । पाचकत्वाद्यनेकलिङ्गसमन्वयस्य वैश्वानरनामसमन्वयसिषाधयिषोपजीवकविचारसाध्यत्वेन तत्फलस्योक्तत्वादित्यलं प्रपञ्चेन ।

पञ्चपञ्चाननावासपञ्चाधिकरणाननम् ।
तीर्थमानन्दतीर्थीयं भजे पञ्चाघनाशनम् ॥

यदपि सर्वगतत्वाधिकरणे स एव प्रललाप— ॐ सर्वत्र प्रसिद्धोपदेशात् ॐ । तस्यैतस्य 'असावादित्यो रस' इत्यारभ्य 'एवं सर्वेषु भूतेष्वि'ति श्रूयमाणं सर्वगतत्वं जीवगतं परमात्मगतं वेति संशये आदित्यश्रुतिवशाज्जीवगतमिति पूर्वपक्षे, 'एतमेव ब्रह्मेत्याचक्षते' इति ब्रह्मश्रुत्या प्रसिद्धया परमात्मगतमिति सिद्धान्तमाहुः ।

तत्रेदं विचारणीयम् । लिङ्गसमन्वयो ह्यस्मिन् प्रतिपाद्यः । न हि सर्वगतत्वं लोकतो जीवे प्रसिद्धम् । तस्य प्रत्येकं जीवेषु लोकतोऽप्रसिद्धत्वात् । नाप्यादित्ये तत्सिद्धम् । तत्प्रभायाः सर्वगतत्वेऽपि तस्य सर्वगतत्वस्य प्रत्यक्षविरुद्धत्वात् । न चादित्यश्रुतिबलात् तत्प्रसिद्धिरिति युक्तम् । श्रुतेः तत्रप्रसिद्धत्वेऽपि तथा लिङ्गे तत्प्रसिद्ध्यनुपपादनात् । तत्सामानाधिकरण्यात् तत्प्रसिद्धिरित्यपि न युक्तम् । सामानाधिकरण्यस्य श्रुतिगतत्वेन लोकतः तत्प्रसिद्ध्यनुपपादनात् । किंचैवं नामसमन्वयाधीनत्वाल्लिङ्गसमन्वयस्य नामसमन्वयपरमेवेदमधिकरणं स्यात् ।

ननु अन्तःस्थत्वरूपलिङ्गसमन्वयस्य इन्द्रादिनामसमन्वयमवलम्ब्य अन्तरधिकरणस्य नामपादे इव आदित्यनामसमन्वयस्य सर्वगतत्वरूपलिङ्गसमन्वयाधीनत्वात् अस्याधिकरणस्य लिङ्गपादीयत्वं युक्तमिति चेन्न । तत्रेन्द्रादिनाम्नामिव अत्र सर्वगतत्वस्य लोकतोऽन्यत्रप्रसिद्ध्यभावेनैव वैषम्यात् । अपि च रसशब्दो 'रसो वै सः । रसँ ह्येवायं लब्ध्वाऽऽनन्दीभवती'त्यादौ परमात्मपरः प्रसिद्धः । अतः तत्समानाधिकरणादित्यशब्दस्य कथं जीवपरत्वशङ्का । कथं वा प्रथमद्वितीयाधिकरणयोः परमात्मासाधारणतया प्रसिद्धब्रह्मशब्दे जाग्रति जीवपरत्वशङ्का । न चोपक्रमगतादित्यश्रुतिप्राबल्यं शङ्क्यम् । उपसंहारप्राबल्यवादिनां तदयोगात् । उपक्रमेऽपि रसशब्दस्य श्रवणेन तदयोगाच्च । किञ्च सर्वगतत्वस्य सर्वान्तर्यामित्वरूपत्वात् तस्य च परमात्मधर्मत्वात् कथं तद्वान् आदित्यः स्यात् । न च एतच्छब्दस्य प्रागुक्तपरामर्शित्वात् आदित्यस्यैव तथात्वं युक्तमिति वाच्यम् । 'एतदुक्तं भवति' [1]इत्यादाविव वक्ष्यमाणपरामर्शित्वस्यापि सम्भवाच्च । आदित्यशब्दस्य 'आदित्यं हविः' इत्यादाविव आदित्यसम्बन्धिसाधारणतया तेन तत्प्रत्यायनायोगाच्च इति दिक् इति ।

---

१. इत्यादिविवरणपरामर्शित्वस्यापि ।

तदप्यशुद्धम् । सर्वगतत्वस्य सर्वजीवेषु तद्विशेषे आदित्ये वा स्वारसिकलोकाधीनप्रसिद्ध्यभावेऽपि तादृशप्रसिद्धिमच्चक्षुर्मयत्वादित्यश्रुतिभ्यां तत्र प्रसिद्धेः टीकायामेव उपपादितत्वात् । सर्वे जीवाः सर्वगतत्वशब्दप्रतिपाद्याः तत्समानाधिकृतचक्षुर्मयत्वादिशब्दप्रतिपाद्यत्वात् । आदित्य एव तथा । तथाविधादित्यश्रुतिवाच्यत्वाद्वा, सर्वगतत्वशब्दो वा सर्वजीववाचकः, आदित्यवाचक एव वा तद्वाचकचक्षुर्मयत्वादिशब्दसमानाधिकृतत्वात् । तथाविधादित्यश्रुतिसमानाधिकृतत्वाद्वा । चक्षुर्मयत्वादिशब्दः आदित्यश्रुतिरेव वा सर्वगत(त्व)वाचिका एतदभिधायकशब्दसमानाधिकृतत्वात् । सर्वगतत्वं वा सर्वजीवनिष्ठमादित्यनिष्ठमेव वा तद्वाचकचक्षुर्मयत्वादिशब्दसमानाधिकृतशब्दबोध्यत्वात् । यो यत्समानाधिकृतशब्दवाच्यः सः तच्छब्दप्रतिपाद्यः, यो यद्वाचकशब्दसमानाधिकृतः स तत्प्रतिपादकः, यो यदभिधायकशब्दसमानाधिकृतः सः तद्वाचकः, यत् यद्वाचकशब्दसमानाधिकृतशब्दबोध्यं तत् तन्निष्ठं सम्प्रतिपन्नवत् । विपक्षे श्रुत्यादिप्रमाणकत्वप्रमाणविरोधः । न चासिद्धिः सर्वजीवानां वा आदित्यस्यैव वा चक्षुर्मयत्वादिशब्दवाच्यस्य आदित्यश्रुतिवाच्यत्वस्यैव वा लोकत एवाप्रसिद्धेरिति । लिङ्गादिगतलोकप्रसिद्धेः सर्वगतत्वप्रसिद्ध्युपपादकत्वस्यापि सूपपादत्वाच्च । साक्षात्पारम्पर्यसाधारण्येन लोकाधीनप्रसिद्धिमत्त्वस्यैव लोकप्रसिद्धत्वशब्दार्थत्वाच्च । पूर्ववाक्ये एव प्रत्येकमित्यस्यैव सामञ्जस्येन उत्तरवाक्यानुत्थानाच्च । अनतिभिन्नार्थत्वेन पूर्ववाक्यार्थहेतुसमर्पकत्वासम्भवाच्च । प्रभायाः सर्वगतत्वे तस्याः 'स्वरूपे च युज्यते प्रचुरप्रकाशो रविरितिवत्' इत्युक्तन्यायेन तस्याः आदित्यस्वरूपस्य सुप्रसिद्धत्वेन तत एवादित्यस्यापि तदवश्यम्भावेन तस्यास्तदभ्युपगमेन आदित्यस्य तस्य प्रत्यक्षविरुद्धत्वोक्तेर्लोकविरुद्धत्वाच्च । आदित्यप्रभाया एतं चन्द्रमसि एतं नक्षत्रेषु इत्याद्युक्तचन्द्रादिसर्वगतत्वोत्प्रेक्षाया एवापूर्वत्वाच्च । सामानाधिकरण्यस्य श्रुतिगतत्वेत्यनेन हीदमुक्तं भवति । आदित्यश्रुतिघटितश्रुतिघटकत्वरूपादित्यश्रुतिसामानाधिकरण्यस्य श्रौतप्रसिद्ध्युपपादकत्वेऽपि लौकिकप्रसिद्धावनुपयोग इति । न चैतद्युक्तम् । उक्तसामानाधिकरण्यमात्रस्य सर्वगतत्वशब्दस्य आदित्यविषयत्वेऽप्रयोजकत्वेन आदित्यवाचकश्रुतिघटितश्रुतिघटकत्वरूपस्यैव तस्य तत्र हेतुत्वस्य वाच्यतया आदित्यश्रुतेः तद्वाचकत्वासिद्धिशङ्कापरिहारार्थं च कोशादिरूपलोकप्रसिद्धेरपेक्षणीयतया तद्विशिष्टहेत्वधीनप्रसिद्धेरपि सर्वगतत्वशब्दस्य आदित्यविषयत्वविषयिण्यां लोकाधीनत्वानिवारणात् । प्रथमप्रयोगे सर्वगतत्वसमानाधिकृतादित्यशब्दवाच्यत्वस्यैव हेतुत्वाच्च । तृतीये तु प्रथमद्वितीयचतुर्थेष्विव विशेष्यविशेषणप्रसिद्धिसम्पादनद्वारकविशिष्टहेतुप्रसिद्धिसम्पादनमुखेन सर्वगतत्वप्रसिद्धेर्लोकाधीनत्वस्य दुरधिगमत्वेऽपि सर्वगतस्यादित्यशब्दवाच्यत्वे सिद्धे तस्य विष्णुत्वे आदित्यशब्दस्य आदित्यशब्द-

वाचकत्वविषयकलोकप्रसिद्धिवैमुख्यापातेन सत्साम्मुख्याय आदित्यत्वमेवेति पूर्ववादिनो मनोरथसम्भवेन, सर्वगतत्वरूपलिङ्गात्मकशब्दस्य विष्णवन्यादित्यनिष्ठसर्वगतत्वार्थकत्वरूपान्यत्रिकप्रसिद्धेर्लोकाधीनत्वानपायात् । आन्यत्रिकप्रसिद्धेः लोकाधीनत्वे साक्षात्त्वविवक्षानपेक्षायाः उक्तत्वाच्च । एवं तर्हि जीवाव्यक्तादिशब्दानां तेषामन्यपरत्वप्रापकदुःखित्वावरत्वादीनां च लोकतः प्रसिद्धत्वसौलभ्यात् अव्यक्ताद्यधिकरणानां चारम्भिकाणां प्रथमद्वितीयपादान्तर्भावः स्यादिति **कुचोद्यं तु अस्मदीय-आनन्दमयाधिकरणीयकुचोद्यकुठारेणैवोन्मूलितम्** । सिद्धान्तेऽप्यन्यपरतया विनाऽनुपपद्यमानत्वरूपप्राबल्यस्य चतुर्थपादीयजीवाव्यक्तादिशब्देषु तदुपपादकदुःखित्वावरत्वादिशब्देषु च 'जीवा एव तु दुःखिनः', 'अव्यक्तात् पुरुषः' इत्यादिवाक्यघटकेषूपलम्भेन प्रथमद्वितीयपादसमन्वेतव्यशब्देषु तदुपपादकश्रुतिलिङ्गादिषु वा तदभावस्यैव विवक्षितत्वेन तदनवकाशस्य तत्रैव उक्तत्वात् । सर्वगतत्वस्यापि लोकतोऽन्यत्रप्रसिद्धत्वादेव किञ्चेत्यादिप्रलापोऽपि अनवकाशितः । सर्वगतत्वलिङ्गसमन्वयस्यैवादित्यनामसमन्वयप्रयोज्यत्वेन आदित्यनामसमन्वयस्य सर्वगतत्वलिङ्गसमन्वयाधीनत्वोक्तेरयुक्तत्वाच्च । इन्द्रादिनामसमन्वयमवलम्ब्येत्यनेन तु किमुक्तं भवति । यद्यन्तःस्थलिङ्गसमन्वयस्येन्द्रादिनामसमन्वयाधीनत्वात् तदर्थं तस्य व्युत्पाद्यत्वादिति, तदा योगक्षेमसाम्येन सर्वगतत्वलिङ्गसमन्वयस्यैव आदित्यनामसमन्वयाधीनत्वस्य वक्तव्यतया व्यत्यासेनोक्तिरयुक्ता । तस्या अन्तःस्थत्वलिङ्गसमन्वयव्युत्पाद्यत्वार्थत्वाशाया अपि सङ्गतिफलादिनैव तत्सौकर्येण अनवकाशात् । यदि च अन्तःस्थत्वलिङ्गसमन्वयाधीनत्वात् इन्द्रादिनामसमन्वयस्येति तदा आदित्यनामसमन्वयस्य सर्वगतत्वाधिकरणस्य लिङ्गपादान्तर्भावाविरोधित्वे अन्तःस्थत्वलिङ्गसमन्वयस्य अन्तराधिकरणस्य नामपादान्तर्भावाविरोधित्वस्य दृष्टान्तत्वासामञ्जस्यम्, प्रयोज्यप्रयोजकभावव्यत्यासदोषश्च । नामपाद [1]इव लिङ्गपादीयत्वमित्यनन्वयाच्च । आदित्यनामसमन्वयाधीनत्वात् सर्वगतत्वरूपलिङ्गसमन्वयस्येति, आदित्यनामसमन्वयस्य सर्वगतत्वलिङ्गसमन्वयाधीनत्वादिति चोक्तिमात्रस्य परस्परव्याहतस्यानुमत्तेन कर्तुमशक्यत्वाच्च । **अत्र विशेषस्तु आनन्दमयाधिकरणकुचोद्यकुठारे व्यक्तः ॥**

आनन्दमये श्रुतस्य रसशब्दस्य आनन्दमयत्वसाधकप्रमाणैः भगवत्परत्वे साधितेऽपि निरवकाशवैष्णवमानाभावेन आदित्यप्रापकक्षित्यादिगतत्वोक्तिसहितादित्यगतत्वानुक्तिसौरमन्त्रोदाहरणाद्युपष्टब्धादित्यश्रुतिसमानाधिकृतस्य आदित्य एव युक्तत्वाच्च । न हि ज्योतिष्टोमप्रकरणे 'वसन्ते वसन्ते ज्योतिषा यजेत' इति श्रुतस्य ज्योतिश्शब्दस्य ज्योतिष्टोमार्थकत्वमित्येतावता, 'ज्योतिषा बाधते तमः'

---

१. नामपादवत् – पा० ।

इत्यादौ श्रुतस्य अन्यपरत्वं नेष्यते । किञ्च अन्तराधिकरण एव आधिदैविकाशेषशब्दसमन्वयस्य सिद्धत्वात् आदित्यपर्यायसवितृशब्दस्य अन्तःस्थे श्रुतस्य समन्वयावश्यंभावाच्च । आदित्यशब्दः तत्र समन्वित इति कथं तस्य सर्वगतत्वस्य आन्यत्रिकप्रसिद्धिहेतुत्वं, कथं च तेन आदित्यो विष्णवन्य एव सर्वगत इति पूर्वपक्षश्च **इत्येव कुतो न कुचोदितम्** । तस्य तत्र समन्वितप्रायत्वेऽपि अन्यत्रप्रसिद्धेः अनिवारणात् निरवकाशवैष्णवमानाभावे निरवकाशोक्तेतरमानसद्भावे च तदुपबद्धेन तेन सर्वगतत्वस्य अन्यत्रप्रसिद्धिः अन्यस्यैव तत् इति पूर्वपक्षश्च युक्तौ इत्यनुसंहितत्वात् नेति चेत् समं सर्वं रसशब्देऽपि इति जोषमास्यताम् । यदा तु अन्नादिशब्दोपस्थापितान्नमयादिशब्दा इव रसशब्दोपस्थापितान्नमयादिशब्द एव 'रसँ ह्येवे'त्यादौ भगवदुपस्थापक इति मतम्, तदा परिचोदनैवानवकाशा । ब्रह्मशब्दस्य तु विष्णावेव मुख्यत्वेऽप्यल्पौकस्त्वचक्षुर्मयत्वादिबाधकवशेन सा भाक्तार्थतां नेतव्या इति शब्दविशेषसूत्रभाष्यसम्बन्धटीकायामेव व्यक्तम् । आगामिसूत्रार्थ एव शिष्यहितैषिणा भगवता भाष्यकृता 'ब्रह्मशब्दश्च विष्णावेव' इत्यादिना भाषित इति टीकायामेव व्यक्तत्वात् । प्रथमाधिकरणे ब्रह्मशब्दस्य भगवदसाधारण्योक्तिभ्रमो निर्मूलः । द्वितीयाधिकरणे तु तस्य तदुक्तावपि 'यतो वा' इत्यादि पूर्ववाक्योक्तानितरसाधारणतल्लक्षणबलेनैव 'तद्विजिज्ञासस्व तद्ब्रह्मे'ति जिज्ञास्ये श्रुतस्यैव तदुक्तमिति तज्ज्ञापकाभावेन तद्विरुद्धज्ञापकसद्भावे च सर्वगते श्रुतब्रह्मशब्दो न जीवविषयकपूर्वपक्षनिरोधनक्षमः । गुणपूर्णार्थकब्रह्मशब्दस्य विष्णावेव मुख्यत्वं शिरसा ऊढ्वैव बाधकवशेनामुख्यार्थत्वमेवाभ्युपेयमिति पूर्वपक्षिणो मनोरथः इत्युक्तत्वात् न कश्चित् क्षुद्रोपद्रवः । अत एवादित्यशब्दस्य उपक्रमगतत्वं, अनपेक्षितमनुक्तं, अनभिमतं चेति निरनुयोज्यानुयोगः अनुक्तोपालम्भः छलं च । अन्तर्याम्यधिकरणादिप्रमेयविविक्तमेव सर्वगतत्वमिह विचार्यमिति सुधायामेव व्यक्तत्वात् न पूर्वपक्षक्षतिः । तत्सम्भावनाया अपि आगाम्यन्तर्याम्यधिकरण एवान्तर्यामित्वरूपसर्वगतत्वस्य सर्वगतत्वाधिकरणे निर्णीतत्वमुपजीव्य युक्तत्वेन सर्वगतत्वाधिकरणेऽसम्भवाच्च । एतच्छब्दस्योक्तवक्ष्यमाणचर्चा तु आदित्यशब्दस्योपक्रमोपसंहारगतत्वचर्चया समीकर्तव्या । आदित्यशब्दस्य पूर्वन्यायेन विष्णाववकाशमाशङ्क्यैव इह क्षित्यादिगतत्वोक्तिसहितादित्यगतत्वानुक्तिः । अर्भकौकस्त्वक्चक्षुर्मयत्वादिनिरवकाशबाधकवशेन सौरमन्त्रोदाहरणसहकृतब्रह्मादित्यश्रुतीनां तदसम्भवव्युत्पादनमुखेनैव पूर्वपक्षोत्थानात् आदित्यशब्दस्य विष्णौ अवकाशसम्भावनार्थं तस्य देवतार्थकतद्धितान्तत्वादिकुसृष्टिकल्पना निर्मूला । सूक्तहविषोरित्यधिकृत्य सास्य देवता इति आम्नातत्वेन आदित्यं हविरिति क्लीबत्वं हविश्शब्दसामानाधिकरण्यानुरोधेन च । आदित्यशब्दस्य तत्र तदाश्रयणेऽपि श्रेष्ठार्थकरसशब्दसमानाधिकृतस्य पुल्लिङ्गस्य प्रकृति-

प्रत्यभिज्ञापकादरशब्दोपबृंहितस्य तदसम्भवाच्च – **इत्यलमपहसनीयप्रक्रियया क्रियाविस्तरे अस्माकमेव जायते लज्जेति दिक्** ॥

एकैकपदविन्यासविजितद्रोहिमण्डलम् ।
अप्रतिद्वन्द्वमानन्दभाष्यभूपमुपास्महे ॥

*॥ इति श्रीविजयीन्द्रतीर्थविरचितः चन्द्रिकाकुचोद्यकुठारः समाप्तः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



